आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४२

पदपाठयुता

# कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेता ।

( तत्र प्रथमकाण्डस्थादिमप्रपाठकमारभ्य प्रथमकाण्डस्थचतुर्थप्रपाठकान्तर्गतद्वादशानुवाकाश्चेत्येवंरूपः प्रथमो भागः )

एतत्पुस्तकम्

वे० शा० रा० रा० "काशीनाथशास्त्री आगाशे" इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२२

खिस्ताब्दाः १९००



मूल्यं रूपकषट्कम् ( रु० ६ ) ।

# आदर्शपुस्तकोल्लेखपत्रिका।

अथास्याः श्रीमत्सायणाचार्यविरचितभाष्यसमेतायाः पदपाठयुतायाः कृष्णयजुर्वेदीयतैत्तिरीयसंहितायाः पुस्तकानि यैः पारहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

क. इति संज्ञितम्—*भाष्यं संपूर्णम्।

ख. इति संज्ञितम्—समूलं भाष्यम्, कलिकातायां मुद्रितम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां डाक्टर इत्युपपदधारिणाम् "राम-कृष्ण गोपाळ भाण्डारकर" इत्येतेषाम्।

ग. इति संज्ञितम्—भाष्यं मुद्रितम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम्।

घ. इति संज्ञितम्—भाष्यं प्रथमकाण्डस्थप्रथमप्रपाठकरहितम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां श्रीयुत "बाळासाहेब नातु" इत्येतेषाम्।

ङ. इति संज्ञितम्—भाष्यं पूर्णम्, तत्र २, ३, ७ काण्डपरिमितं साताराग्रामनिवासिनां वे० शा० रा० रा० "वासुदेवशास्त्री अभ्यंकर" इत्येतेषाम्। तथा १, ४, ५ काण्डपरिमितं वैराटग्रामनिवासिभिः वे० शा० रा० रा० "जनुकाका अभ्यंकर" इत्येतैः प्रदत्तम्।

च. इति संज्ञितम्—समूलं भाष्यं पूर्णम्, एतत्पुस्तकम्, अग्रग्रामनिवासिनां रा० रा० "गोविन्दराव लिमये" इत्येतेषाम्।

छ. इति संज्ञितम्—संहितामात्रं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां कैलासवासिनां वे० शा० रा० रा० "दामोदरशास्त्री साठे" इत्येतेषाम्।

ज. इति संज्ञितम्—संहितामात्रं पूर्णम्, मोहमय्यां तत्त्वविवेचक-नाम्नि मुद्रणालये मुद्रितम्, एतत्पुस्तकम्, आनन्दाश्रमसंस्कृतग्रन्थसंग्रहालयस्थम्।

---

* एतत्स्वामिनो नाम न ज्ञायते।

झ. इति संज्ञितम्—संहितामात्रं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां वे० शा० रा० रा० " रामभट्ट खरे " इत्येतेषाम्।

ञ. इति संज्ञितम्—पदपाठमात्रं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां वे० शा० रा० रा० " रामभट्ट खरे " इत्येतेषाम्।

ट. इति संज्ञितम्—पदपाठमात्रमपूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां वे० शा० रा० रा० " गोपाळ रामचन्द्रशास्त्री बापट " इत्येतेषाम्।

ठ. इति संज्ञितम्—संहितामात्रमपूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां वे० शा० रा० रा० " गोपाळ रामचन्द्रशास्त्री बापट " इत्येतेषाम्।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका।

तत्सद्ब्रह्मणे नमः ।

# पदपाठयुता

# कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

## श्रीसायणाचार्यविरचितभाष्यसमेता ।

### आदिमं काण्डम् ।

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः )

( भाष्यकारोपोद्घातः )

(*गजवदनमचिन्त्यं तीक्ष्णदन्तं त्रिनेत्रं
बृहदुदरविशेषं भूतराजं पुराणम् ।
अमरवरसुपूज्यं रक्तवर्णं सुरेशं
पशुपतिसुतमीशं विघ्नराजं नमामि ॥ १ ॥
मूलाधारे चतुष्पत्रे पद्मकिञ्जल्कशोभिते ।
दाडिमीकुसुमप्रख्ये तरुणादित्यसंनिभे ॥ २ ॥
भगाख्ये कुण्डलीचक्रे पूजयेत्परमेश्वरीम् ।
अङ्कुशं चाक्षसूत्रं च पाशपुस्तकधारिणीम् ॥
मुक्ताहारसमायुक्तां देवीं ध्यायेच्चतुर्भुजाम् ॥ ३ ॥
कपिलसटमुदञ्चत्कर्णमग्नीन्दुनाक्षं
विवृतवदनविद्युज्जिह्वमुत्फुल्लनासम् ।
अरिदरकरयुग्मं योगपट्टाञ्चितानु-
स्थितकरमरुणाङ्घ्रिं श्रीनृसिंहं नतोऽस्मि ॥ ४ ॥
नमामि विष्णुं विधियज्ञरूपं सरस्वतीं चापि तदीयजिह्वाम् ।
त्रैविद्यवृद्धान्विदुषो गुरूंश्च +बौधायनाचार्यपदद्वयं च ॥ ५ ॥)

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति । + पुस्तकेषु प्रायो यत्र यत्र बौधायनपदमा-
तत्र तत्र क्वचिद्बोधायनेति क्वचिच्च बोधायनेत्युभयविधं वर्तते । अस्माभिस्तु सर्वत्र बौधायने-
त्येवमेव स्थापितम् ।

१ ङ. च. भूत[illegible] । २ क. 'लड्डुकम्' ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ ६ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ ७ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
अन्वशान्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ८ ॥
*स प्राह नृपतिं राजन्सायणार्यो ममानुजः ।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम् ॥ ९ ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः ।
अन्वशात्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ १० ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुर्माधवाचार्यो[1] वेदार्थं वक्तुमुद्यतः ॥ ११ ॥
ब्राह्मणं कल्पसूत्रे[2] द्वे मीमांसां व्याकृतिं तथा ।
उदाहृत्याथ तैः सर्वैर्वेदार्थः[3] स्पष्टमीर्यते ॥ १२ ॥

ननु कोऽयं वेदो नाम किं च तल्लक्षणं के वा तस्य विषयसंबन्धप्रयोजनाधिकारिणः कथं वा तस्य प्रामाण्यं न खल्वेतस्मिन्सर्वस्मिन्नसति वेदो व्याख्यानयोग्यो भवति । अत्रोच्यते—इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते । अनुभूयमानस्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्वमौषधसेवादेरनिष्टपरिहारहेतुत्वं च प्रत्यक्षतः सिद्धम् । स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यम् । एवं तर्हि भाविजन्मगतसुखादीनामप्यनुमानगम्यतेति चेत् । न । तद्विशेषस्यानवगमात् । न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यनुमातुं शक्नोति । तस्मादलौकिकोपायबोधको वेद इति न लक्षणस्यातिव्याप्तिः ।

अत एवोक्तम्—

" प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता " इति ॥

---

* एतत्प्रभृति श्लोकद्वयं ख. पुस्तके नास्ति ।

---

१ ख. °तिः । आदिशन्मा° । २ क. ङ. च. च । ३ ख. °वैर्मन्त्रार्थः ।

( भाष्यकारोपोद्घातः )

स एवोपायो वेदस्य विषयः । तद्बोध एव प्रयोजनम् । तद्बोधार्थी चाधिकारी । तेन सहोपकार्योपकारकभावः संबन्धः । नन्वेवं सति स्त्रीशूद्रसहिताः सर्वेऽधिकारिणः स्युः । इष्टं मे भवत्वनिष्टं मे मा भूदित्याशिषः सर्वजनीनत्वात् । मैवम् । स्त्रीशूद्रयोः सत्युपायबोधार्थित्वे हेत्वन्तरेण वेदाधिकारप्रतिषेधात् । उपनीतस्यैवाध्ययनाधिकारं ब्रुवच्छास्त्रमनुपनीतयोस्तयोर्वेदाध्ययनमनिष्टप्राप्तिहेतुरिति बोधयति । कथं तर्हि तयोस्तदुपायावगमः । पुराणादिभिरिति ब्रूमः ।

अत एवोक्तम्—

" स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम् " इति ॥

तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य संबन्धः । तत्प्रामाण्यं तु बोधकत्वात्स्वत एव सिद्धम् । पौरुषेयवाक्यं तु बोधकमपि सत्पुरुषगतभ्रान्तिमूलत्वसंभवात्तत्परिहाराय मूलप्रमाणमपेक्षते न तु वेदस्तस्य नित्यत्वेने वक्तृदोषशङ्कानुदयात् । एतदेव जैमिनिना सूत्रितम्—" तत्प्रमाणं बादरायणस्यानपेक्षितत्वात् " [ जै० मी० अ० १ पा० १ अ० ४ सू० ५ ] इति । ननु वेदोऽपि कालिदासादिवाक्यवत्पौरुषेय एव ब्रह्मकार्यत्वश्रवणात् । " ऋचः सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत " इति श्रुतेः । अत एव भगवान्बादरायणः " शास्त्रयोनित्वात् " [ ब्र० सू० १-१-३ ] इति सूत्रे ब्रह्मणो वेदकारणत्वमवोचत् । मैवम्, श्रुतिस्मृतिभ्यां नित्यत्वावगमात् । " वाचा विरूपनित्यया " इति श्रुतिः । " अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा " इति स्मृतिः । बादरायणोऽपि देवताधिकरणे सूत्रयामास " अत एव च नित्यत्वम् " [ ब्र० सू० १-३-२९ ] इति । तर्हि परस्परविरोध इति चेत् । न । नित्यत्वस्य व्यावहारिकत्वात् । सृष्टेरूर्ध्वं संहारात्पूर्वं व्यवहारकालः । तस्मिन्नुत्पादविनाशादर्शनात् । कालाकाशादयो यथा नित्या एवं वेदोऽपि व्यवहारकाले कालिदासादिवाक्यवत्पुरुषविरचितत्वाभावेन नित्यः । आदिसृष्टौ तु कालाकाशादिवदेव ब्रह्मणः सकाशाद्वेदोत्पत्तिराम्नायते । अतो विषयभेदान्न परस्परविरोधः । ब्रह्मणो निर्दोषत्वेन वेदस्य वक्तृदोषासंभवात्स्वतः सिद्धं प्रामाण्यं तदवस्थम् । तस्माल्लक्षणप्रमाणसद्भावाद्विषयप्रयोजनसंबन्धाधिकारिसद्भावाच्च प्रामाण्यस्य सुस्थितत्वाद्वेदो व्याख्यातव्य एव । यथोक्तविषयादिसद्भावमभिप्रेत्य "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनं विधीयते । पाठमात्रस्याध्ययनशब्दवा-

१ क. ङ. च. 'दिति । २ ख. 'न कर्तृतो' । ३ ख. श्रुतः । ४ ख. स्मृतेश्च । वा' ।

न्यत्वेनार्थावबोधस्याविहितत्वाद्वेदव्याख्यानमप्रसक्तमिति चेत् । न । विधेर्बोधपर्यवसायित्वात् । एतच्च भट्टमतानुसारिभिर्बहुधा प्रपञ्चितम् ।

आम्नायते च—

"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" ॥

"स्थाणुरयं भारहारः किलाभूत् । अधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा" ॥

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति। एवं तर्हि ज्ञानस्य पृथग्विधानादध्ययनं तस्य पाठमात्रमिति चेत् । अस्तु नाम, वर्णयन्ति चैवमेव शांकरदर्शनानुसारिणः । क्रतुविधिभिरेवानुष्ठानान्यथानुपपत्त्या वेदार्थज्ञानस्य प्रापितत्वान्नैतद्विधेयमिति चेत् । तर्हि तद्विधिबलाद्वेदनमात्रेण स्वतन्त्रं किंचिदपूर्वमस्तु । श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक्फलम्—"सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति । अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थं स्यादिति चेन्न । तरणीयाया ब्रह्महत्याया मानसवाचिकत्वादिभेदेन तारतम्योपपत्तेः। मनसा संकल्पिता वाचाऽभ्यनुज्ञाता परहस्तेन कारिता स्वयंकृता पुनः पुनः कृता चेत्येवं तारतम्येन व्यवस्थिता ब्रह्महत्याऽनेकविधा । अतस्तत्तरणमप्यनेकविधम्, यथा स्वर्गो बहुविधस्तद्वत् । "अग्निहोत्रं जुहुयात्स्वर्गकामः" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्याद्युच्चावचकर्मणामेकविधफलासंभवात्स्वर्गो बहुविधः । यत्तु कर्मानुष्ठानकालीनं वेदनं तत्कर्मफल एवातिशयं जनयति । "उभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इति विद्वदविद्वत्प्रयोगौ प्रकृत्य "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इत्याम्नानात् । अत्रोपास्तिविषयमेतद्वाक्यमिति चेत् । न । न्यायस्य समानत्वात् । अस्ति ह्यस्यार्थस्योपोद्बलकं लिङ्गम् । प्रजापतिः किल सोमयागेभ्योऽर्वाचीनानग्निहोत्रपौर्णमासामावास्यनामकान्परस्परमुच्चावचान्यज्ञान्ससर्ज । सोमयागांश्चाग्निहोत्रादिभ्यः श्रेष्ठानग्निष्टोमोक्थ्यातिरात्रनामकान्परस्परमुच्चावचान्सृष्ट्वा प्रथमसृष्टेष्वग्निहोत्रादिष्वभिमानविशेषेण वर्गद्वयं तुलयोदमिमीत । एवं वृत्तान्तं जानतोऽग्निहोत्रादिभिरग्निष्टोमादिफलं भवति । तथा च ब्राह्मणमाम्नायते—"प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानु-

१ ख 'ट्गुरुम' । २ क. ङ. च. यद्गृहीत' । ३ क. 'ध्येतव्यो ज्ञे' ।

दमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति य एवं विद्वान्पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति" इति। तदेतद्वेदनस्य सर्वत्र स्वतन्त्रफलत्वे लिङ्गम्। किं च तत्तद्विधिसमीपे "य एवं वेद" इति वचनानि वेदनादेव फलं ब्रुवते। तान्यर्थवादाः इति चेत्। अस्तु नाम, सहामहे एवैतमपराधं तेषां वचनानां विधेयार्थप्रशंसापरत्वात्। तर्हि यत्परः शब्दः स शब्दार्थ इति न्यायेन स्वार्थे प्रामाण्यं नास्तीति चेन्न। महातात्पर्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयत्वानिवारणात्। "ग्रावाणः प्लवन्ते" इत्यर्थवादस्यापि स्वार्थे प्रामाण्यं प्रसज्येतेति चेन्न। प्रमाणान्तरबाधितत्वात्। "द्विः संवत्सरस्य सस्यं पच्यते" इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वान्न स्वार्थे प्रामाण्यम्। वेदनफलवचनानि तु नानुवादकानि। नापि बाध्यानि। तस्मादर्थवादत्वेऽप्यस्त्येषां स्वार्थे प्रामाण्यम्। अन्यथा मन्त्रार्थवादादिभ्यो देवानां विग्रहादिमत्त्वं न सिध्येत्।

अत एवोक्तम्—

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः" इति॥

किं बहुना विद्यत एवावश्यं वेदनमात्रादपूर्वमतो वेदनाय वेदो व्याख्यायते। योऽयं विषयरूप इष्टप्राप्त्यनिष्टपरिहारोपायः सामान्यतो निर्दिष्टः स विशेषेण स्पष्टी क्रियते। वेदस्तावत्काण्डद्वयात्मकः। तत्र पूर्वत्र काण्डे नित्यनैमित्तिककाम्यनिषिद्धरूपं चतुर्विधं कर्म प्रतिपाद्यम्। "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिकं नित्यं तस्य नियतनिमित्तत्वात्। "यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादि नैमित्तिकं तस्यानियतनिमित्तत्वात्। "चित्रया यजेत पशुकामः" इत्यादि काम्यम्। "तस्मान्मलवद्वाससा न संवदेत न सहाऽऽसीत" इत्यादि निषिद्धम्। तेषु नित्यनैमित्तिकानुष्ठानेन तदकरणे प्रत्यवायरूपमनिष्टं परिह्रियते।

स च प्रत्यवायो याज्ञवल्क्येन स्मर्यते—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति॥

---

१ ख. 'दरूपाणीति। २ ख. 'वादः सिद्धानामर्थे'।

यावज्जीवादिवाक्येष्वनुक्तोऽप्यवर्जनीयतया स्वाभीष्टः स्वर्गः प्राप्यते । तथा चाऽऽपस्तम्बः—"तद्यथाऽऽम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्ममपि चर्यमाणमर्था अनूत्पद्यन्ते" इति । काम्यस्येष्टफलहेतुत्वं तद्विधिवाक्ये स्पष्टमेव । इष्टविघातरूपमनिष्टं चार्थात्परिह्रियते । निषिद्धवर्जनाच्च रागप्राप्तानुष्ठानजन्यो नरकः परिह्रियते । न केवलं नित्यनैमित्तिकाभ्यामानुषङ्गिकस्वर्गप्राप्तिः किं तु धीशुद्ध्या विविदिषोत्पादनद्वारा ब्रह्मज्ञानहेतुत्वमपि तयोरस्ति । तथा च वाजसनेयिनः समामनन्ति—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति । एवं तर्हि पूर्वकाण्ड एवाशेषपुरुषार्थसिद्धेः कृतमुत्तरकाण्डेनेति चेन्न । अपुनरावृत्तिलक्षणस्याऽऽत्यन्तिकपुरुषार्थस्य तत्रासिद्धेः । अत एवाऽऽथर्वणिकाः कर्मिणो दक्षिणमार्गेण चन्द्रप्राप्तिं पुनरावृत्तिं चाऽऽमनन्ति—"स सोमलोके विभूतिमनुभूय पुनरावर्तते" इति । अत उत्तरकाण्डस्तदर्थको द्रष्टव्यः । आत्यन्तिकपुरुषार्थश्च द्विविधः सद्योमुक्तिः क्रममुक्तिश्चेति । वर्तमानदेहपातानन्तरमेव सिध्यति सद्योमुक्तिः । उत्तरमार्गेण गत्वा ब्रह्मलोके चिरं भोगाननुभूय तत्रोत्पन्नज्ञानस्य ब्रह्मलोकावसाने सिध्यति क्रममुक्तिः । तस्मादुत्तरकाण्डे ब्रह्मोपदेशो ब्रह्मोपास्तिश्चेत्युभयं प्रतिपाद्यते । ब्रह्मोपास्तिप्रसङ्गेन ब्रह्मदृष्ट्या प्रतीकमुपास्यत्वेन सांसारिकफलकामिनमुद्दिश्य प्रतिपाद्यते । ब्रह्मोपासकप्रतीकोपासकयोः समानेऽप्युत्तरमार्गे प्रतीकोपासकस्य विद्युल्लोकादूर्ध्वं ब्रह्मलोकगमनाभावेन क्रममुक्तेरप्रसिद्धत्वादस्ति पुनरावृत्तिः । एतच्च "अप्रतीकालम्बनान्नयति" [ब्र० सू० ४ ३ १५] इत्यधिकरणे द्रष्टव्यम् । नन्वस्त्वेवं पूर्वोत्तरकाण्डयोर्विषयविशेषः प्रयोजनविशेषश्च तथाऽपि पूर्वकाण्डस्याऽऽदौ कर्मान्तरं परित्यज्य दर्शपूर्णमासेष्टिरेव कुतः प्रतिपाद्यत इति चेत् । प्रकृतित्वान्निरपेक्षत्वाच्चेति ब्रूमः । प्रकर्षेणाङ्गोपदेशो यत्र क्रियते सा प्रकृतिः । कृत्स्नाङ्गविषयत्वमुपदेशस्य प्रकर्षः । विकृतिषु तु विशेषाङ्गोपदेश एव क्रियते । अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते । अतोऽतिदेशस्य प्रकर्षाभावः । प्रकृतिस्त्रिविधा—अग्निहोत्रमिष्टिः सोमश्चेति । त्रिष्वप्येतेष्वन्यनैरपेक्ष्येण स्वाङ्गजातं सर्वमुपदिष्टम् । तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयाप्रायणीयादिषु दर्शपूर्णमासापेक्षत्वान्न पूर्वभावित्वं युक्तम् । इष्टेस्तु सोमयागनिरपेक्षत्वात्सोमात्प्राचीनत्वं युक्तम् । यद्यप्यग्निहोत्रस्य स्वरूपेऽङ्गेषु वा नान्यापेक्षा तथाऽप्यग्निसिद्ध्यपेक्षत्वादाहवनीयाद्यग्नीनां च

---

१ ख. 'प्राप्तनिषिद्धानु' । २ ख. 'ण्ड आरम्भण्यः ।

पावमानेष्टिसाध्यत्वात्पावमानेष्टीनां च दर्शपूर्णमासविकृतित्वात्परम्परयाऽग्निहोत्रस्य दर्शपूर्णमासापेक्षाऽस्तीति प्रथमभावित्वं न युक्तम्। दर्शपूर्णमासयोरप्यग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति चेन्नैवम्। नाऽऽधानमात्रेणाग्नयः सिध्यन्ति किं तु पवमानेष्टिभिरपि। ताश्चेष्टयो दर्शपूर्णमासविकृतित्वात्साक्षादेव दर्शपूर्णमासावपेक्षन्ते। दर्शपूर्णमासौ त्वग्नियोनिद्वारा पवमानेष्टिसापेक्षावपि न साक्षात्पवमानेष्टीरपेक्षेते। अतो निरपेक्षत्वाद्दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या। ऋग्वेदसामवेदयोरादौ दर्शपूर्णमासेष्टिरनाम्नातेति चेद्बाढम्। यजुर्वेदमपेक्ष्य दर्शपूर्णमासयोरादित्वमुक्तं कर्मकाण्डविषये यजुर्वेदस्यैव प्रधानत्वात्। आनुपूर्व्यात्कर्मणां स्वरूपं यजुर्वेदे समाम्नातम्। तत्र तत्र विशेषापेक्षायामपेक्षिता याज्यानुवाक्यादय ऋग्वेदे समाम्नायन्ते। स्तोत्रादीनि तु सामवेदे। तथा सति भित्तिस्थानीयो यजुर्वेदश्चित्रस्थानीयावितरौ। तस्मात्कर्मसु यजुर्वेदस्यैव प्राधान्यम्। तस्मिंश्च दर्शपूर्णमासेष्टिरादौ समाम्नाता। यद्यपि मन्त्रब्राह्मणात्मको वेदस्तथाऽपि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वान्मन्त्रा एवाऽऽदौ समाम्नाताः। ते च त्रिविधा ऋचः सामानि यजूंषि चेति। तत्र यजुषामध्वर्युवेदे बहुलत्वात्क्वचिदृचां सद्भावेऽपि यजुर्वेद इत्येवाऽऽख्यायते। अध्वर्युवेदत्वं चास्यानादिसिद्धयाज्ञिकसमाख्ययाऽवगन्तव्यम्। अस्मिन्वेदे समाम्नाता दर्शपूर्णमासेष्टिमन्त्रास्त्रिविधा आध्वर्यवा याजमाना हौत्राश्चेति। "इषे त्वा" इत्यादौ प्रपाठके पठिता आध्वर्यवाः। "सं त्वा सिञ्चामि" इत्यादौ पठिता याजमानाः। "सत्यं प्रपद्ये" इत्यादौ पठिता हौत्राः। एतेषां मध्ये याजमानानां हौत्राणां च चित्रस्थानीयत्वाद्भित्तिस्थानीयानामेवाऽऽध्वर्यवाणामादौ पाठो युक्तः। ते चाप्याध्वर्यवाः "इषे त्वा" इत्यादिषु त्रयोदशस्वनुवाकेष्वाम्नाताः। तत्र प्रथमेऽनुवाके वत्सापाकरणार्था मन्त्राः। द्वितीये बर्हिःसंपादनार्थाः। तृतीये दोहनार्थाः। चतुर्थे हविर्निर्वापार्थाः। पञ्चमे व्रीह्यवघातार्थाः। षष्ठे तण्डुलपेषणार्थाः। सप्तमे कपालोपधानार्थाः। अष्टमे पुरोडाशनिष्पादनार्थाः। नवमे वेदिकरणार्थाः। दशमे प्राधान्येनाऽऽज्यग्रहणार्थाः, प्रसङ्गात्पत्नीसंनहनार्थाः। एकादशे प्राधान्येनेध्मसंनहनार्था बर्हिरास्तरणाद्यर्थाश्च। द्वादश आघारार्थाः। अत्र सामिधेनीप्रयाजाज्यभागप्रधानयागादिमन्त्राणां प्राप्तावसरत्वेऽपि तेषां हौत्रत्वात्ताननुपेक्ष्योपरितनप्रयोगाङ्गभूता आध्वर्यवाः स्रुग्व्यूहनादिमन्त्रास्त्रयोदशे समाम्नाताः।

---

१ ख. ग्निद्वा॰। २ क. ङ. ञ. ॰र्थाः। ए॰। ३ ख स्रुगपोह॰। घ. स्रुग्प्रह॰।

एतत्सर्वं विनियोगसंग्रहकारेणेत्थं संगृहीतम्—

“ ये दर्शपूर्णमासाङ्गमन्त्रा एते समासतः ।
इषेत्वाद्यनुवाकेषु त्रयोदशसु वर्णिताः ॥
वत्सापाकरणं बर्हिर्दोहो निर्वापकण्डमे ।
पेषणं च कपालानि पुरोडाशश्च वेदिका ॥
आज्यग्रहेध्मसंनाहावाघारोपरितन्त्रके ।
इत्युक्ता अनुवाकार्थाः प्रतिमन्त्रं क्रियोच्यते ” इति ॥

किमिदं वत्सापाकरणं कथं वा तस्य प्राथम्यमिति चेत्, उच्यते—सन्ति दर्शयागे त्रीणि प्रधानानि हवींषि पूर्णमासयागे च त्रीणि । आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यैन्द्रं पय इति दर्शयागे । आग्नेयोऽष्टाकपाल आज्येन प्राजापत्य उपांशुयागोऽग्नीषोमीय एकादशकपाल इति पौर्णमासे । तत्र प्रतिपद्दिने दधिहोमे दधिसंपादनार्थममावास्यायां रात्रौ गावो दोग्धव्याः । तद्दोहार्थं प्रातःकाले लौकिकदोहादूर्ध्वं स्वमातृभिः सह संचरन्तो वत्सा मातृभ्योऽपाकरणीयाः । तदिदं वत्सापाकरणं, यथोक्तरीत्या तस्य प्राथम्यं च । तत्र वत्सापाकरणं सद्यश्छिन्नपलाशशाखया कर्तव्यमिति तच्छेदनाय “इषे त्वा” इति मन्त्र आदौ समाम्नायते । तस्य च मन्त्रस्य तच्छेदनाङ्गत्वं ब्राह्मणे द्रष्टव्यम् । अत एव सब्राह्मणो मन्त्रो ज्ञातव्य इति च्छन्दोगा अधीयते—“यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पात्यते प्रमीयते वा पापीयान्भवति तस्मादेतानि मन्त्रे विद्यात् ” इति । आर्षेय ऋषिभिः संबन्धः। अतीन्द्रियार्थद्रष्टारो हि ऋषयः। तेषां वेदद्रष्टृत्वं स्मर्यते—

“ युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ” इति ॥

इषेत्वादीनां मन्त्राणां प्रजापतिर्ऋषिः । तथा च काण्डानुक्रमणिकायामुक्तम्—

“ शाखादिं याजमानं च होतॄन्हौत्रं च दार्शिकम् ।
तद्विधीन्पितृमेधं च नवाऽऽहुः कस्य तद्विदः ” इति ॥

शाखादिः “ इषे त्वा ” इत्यादिः प्रपाठकः । याजमानाः “ सं त्वा सिञ्चामि ” इत्याद्यनुवाकषट्कमन्त्राः । होतारः “ चित्तिः स्रुक् ” इत्यादयो मन्त्राः । “ सत्यं प्रपद्ये ” इत्यादिकं दार्शिकं हौत्रम् । तद्विधयः प्रोक्तानां

१ ख. गर्ते । २ ख. 'मानं सं' । ३ ख. 'त्यादि । हो' ।

( भाष्यकारोपोद्घातः )

चतुर्विधमन्त्राणां चत्वारि ब्राह्मणानि। पितृमेधः "परे युवांसम्" इति। तान्येतानि नव काण्डानि प्रजापतिना दृष्टानि । छन्दोविशेषाश्च वेदाङ्गभूते छन्दोनामके ग्रन्थे द्रष्टव्याः। मन्त्रपदव्याख्यानादेव तत्प्रतिपाद्यार्थरूपा देवता विज्ञायते । ब्राह्मणविशेषस्तु तत्तन्मन्त्रव्याख्यानावसर एवोदाहियते । यद्यपि मन्त्रविनियोगा ब्राह्मणे सर्वेऽपि नाऽऽम्नातास्तथाऽपि कल्पसूत्रकारैर्ब्राह्मणान्तरपर्यालोचनया ते सर्वेऽभिहिताः । अतो बौधायनादिसूत्रोदाहरणपूर्वकं ब्राह्मणानुसारेण मन्त्रार्थं योजयामः ॥

इति भाष्यकारोपोद्घातः ।

---

## कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

( तत्र प्रथमाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः । )

### हरिः ॐ ।

इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आ प्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माऽघशंसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥

( इषे त्रिचत्वारिंशत् ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां *प्रथमाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

* वैदिकप्रसिद्धाऽयमष्टकशब्दः । वस्तुतस्तु भाष्यानुरोधेन काण्डशब्द एव युक्तः ।

कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठः ।

( तत्र प्रथमाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः । )

इषे । त्वा । ऊर्जे । त्वा । वायवः । स्थ । उपायव इत्युप—आयवः । स्थ । देवः । वः । सविता । प्रेति । अर्पयतु । श्रेष्ठतमायेति श्रेष्ठ—तमाय । कर्मणे । एति । प्यायध्वम् । अघ्नियाः । देवभागमिति देव—भागम् । ऊर्जस्वतीः । पयस्वतीः । प्रजावतीरिति प्रजा—वतीः । अनमीवाः । अयक्ष्माः । मा । वः । स्तेनः । ईशत । मा । अघशंस इत्यघ—शंसः । रुद्रस्य । हेतिः । परीति । वः । वृणक्तु । ध्रुवाः । अस्मिन् । गोपताविति गो—पतौ । स्यात । बह्वीः । यजमानस्य । पशून् । पाहि ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

इषे त्वोर्जे त्वा—

दर्शयागं चिकीर्षुरमावास्यायां प्रातरग्निहोत्रं हुत्वा दर्शयागार्थं "ममाग्ने वर्चः" इत्यादिभिर्मन्त्रैर्वह्निषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणार्थमन्त्रेण पलाशशाखां छिन्द्यात् ।

तदाह बौधायनः—" तामाच्छिनत्तीषे त्वोर्जे त्वा " इति ।

आपस्तम्बस्तु तदेतदभिधाय मन्त्रभेदपक्षमपि कंचिदाश्रित्य विनियोगभेदमाह—" इषे त्वोर्जे त्वेति तामाच्छिनत्त्यपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति संनमयत्यनुमार्ष्टि वा " इति ।

( वत्सापाकरणार्था मन्त्राः )

संनमनमृजुकरणम् । अनुमार्जनमानुलोम्येन संलग्नधूल्याद्यपनयनम् । सोऽयं मन्त्रभेदपक्षो जैमिनिना द्वितीयाध्यायप्रथमपादे स्वीकृतः । तत्र पलाशशाखायाः प्राशस्त्यं ब्राह्मणे समाम्नातम्—“ तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णमच्छिद्यत । तत्पर्णोऽभवत् । तत्पर्णस्य पर्णत्वम् ” [ ब्रा० का० ३ प्र० २ अ० १ ] इति । द्युशब्दस्याऽऽकाशे प्रसिद्धत्वात्तत्परित्यागेन स्वर्लोकविवक्षां दर्शयितुमितः पृथिवीत आरभ्य तृतीयस्यां दिवि सोमलता पूर्वमासीदित्युक्तम् । गायत्र्याः सोमाहरणं “ कद्रूश्च वै सुपर्णी च ” [ सं० का० ६ प्र० १ अ० ६ ] इत्यनुवाके “ सोमो वै राजा गन्धर्वेष्वासीत् ” इति बह्वृचब्राह्मणे च प्रपञ्चितम् । तदाहरणाभिघातेन सोमस्य पर्णं भूमौ पतितम् । पक्षिरूपाया गायत्र्याः पक्षः पतित इति केचित् । पतितस्य पलाशरूपेणाऽऽविर्भावात्तस्य वृक्षस्य पर्णनाम संपन्नम् । न चात्र पर्णस्य कथं वृक्षत्वं संपन्नमिति विस्मयितव्यं विधातुरीश्वरस्याचिन्त्यशक्तित्वात् । अन्यथा बीजाद्वृक्ष इत्यत्रापि क्व बीजं क्व वृक्ष इत्यपि विस्मयः केन वार्येत । सर्वत्र पर्णेभ्यो वृक्ष इत्ययमतिप्रसङ्गोऽपीश्वरसंकल्पाभावेन परिहर्तव्यः । स च संकल्पः कार्यैकसमधिगम्यः । तस्माद्वेदार्थे कुतर्कैर्न चोदनीयम् । शाखया वत्सापाकरणं विधत्ते—“ब्रह्म वै पर्णः । यत्पर्णशाखया वत्सानपाकरोति । ब्रह्मणैवैनानपाकरोति ” [ ब्रा० का० ३ प्र० २ अ० १ ] इति । यथा जगन्निष्पादकं ब्रह्म प्रशस्तं तथा यागनिष्पादकस्य पलाशस्य प्रशस्तत्वाद्ब्रह्मत्वेन स्तुतिः । वैशब्देनार्थवादान्तरोपपादिता पलाशस्य ब्रह्मसंबन्धप्रसिद्धिः सूच्यते । देवेषु परस्परं ब्रह्मतत्त्वं निरूपयत्सु पलाशवृक्षस्तत्त्वमशृणोदित्येतादृशो ब्रह्मसंबन्धः । औपानुवाक्यकाण्डे जुह्वाः पर्णमयीत्वविधिशेषेऽर्थवादे श्रूयते—“ देवा वै ब्रह्मन्नवदन्त । तत्पर्ण उपाशृणोत् । सुश्रवा वै नाम । यस्य पर्णमयी जुहूर्भवति । न पापꣳ श्लोकꣳ शृणोति ” इति । एवं यत्र यत्रार्थवादे प्रसिद्धिसूचका वैशब्दहिशब्दादयः पठ्यन्ते तत्र सर्वत्र सति संभवे लौकिकप्रसिद्धिः । अन्यथाऽर्थवादान्तरप्रसिद्धिरिति द्रष्टव्यम् । वत्सापाकरण इव गोप्रस्थापनेऽपि शाखां विनियुङ्क्ते—“ गायत्रो वै पर्णः । गायत्राः पशवः । तस्मात्त्रीणि त्रीणि पर्णस्य पलाशानि । त्रिपदा गायत्री । यत्पर्णशाखया गाः प्रार्पयति । स्वयैवैना देवतया प्रार्पयति ” [ ब्रा० का० ३ प्र० २ अ० १ ] इति । पर्णस्य गायत्रीसंबन्धो वेदगम्यः सोमाहरणद्वारतः पूर्वमुदाहृतः । अनुमानगम्योऽप्यपरः संबन्धोऽस्ति गायत्रीपादेष्विव पलाशपर्णेषु

१ ख. °ण्डे जुहूरूपं वर्णयित्वा विधिशेषोऽर्थ° ।

त्रित्वावगमात् । पशूनां च गायत्री देवतेत्ययमर्थोऽन्यत्र द्रष्टव्यः । छेद्यायां पलाशशाखायां बहुपर्णत्वमागग्रत्वादिगुणान्विधत्ते—“ यं कामयेतापशुः स्यादिति । अपर्णां तस्मै शुष्काग्रामाहरेत् । अपशुरेव भवति । यं कामयेत पशुमान्त्स्यादिति । बहुपर्णां तस्मै बहुशाखामाहरेत् । पशुमन्तमेवैनं करोति । यत्प्राचीमाहरेत् । देवलोकमभिजयेत् । यदुदीचीं मनुष्यलोकम् । प्राचीमुदीचीमाहरति । उभयोर्लोकयोरभिजित्यै ” [ ब्रा० का० ३ प्र० २ अ० १ ] इति । यं यजमानमुद्दिश्याध्वर्युः कामयेत । स्पष्टमन्यत् । यथोक्तशाखाछेदने कं मन्त्रं पठेदित्याशङ्क्योदाहरति—“इषे त्वोर्जे त्वेत्याह” [ब्रा० का० ३ प्र० २ अ० १ ] इति । अस्मिन्मन्त्रे विनियोगानुसारेण च्छिनद्मीति पदमध्याहृत्य वाक्यं पूरणीयम् । इडित्यन्नं सर्वैः प्राणिभिरिष्यमाणत्वात् । ऊर्ग्बलहेतू रसः । “ऊर्ज बलप्राणनयोः” इति धातुः । ऊर्ज्यते बलं संपाद्यतेऽनया रसरूपयेत्यूर्क् । हे पलाशशाखे देवानां भागरूपदध्यर्थं त्वामाच्छिनद्मि । तस्य हेवस्य बलप्रदरसार्थं त्वामाच्छिनद्मीति वाक्यार्थः । मन्त्रद्वित्वपक्षे विनियोगानुसारेणोर्जे त्वामनुमार्ज्मीत्यध्याहार्यम् । एतन्मन्त्रस्तावकमर्थवादमाह— “ इषमेवोर्जं यजमाने दधाति ” [ ब्रा० का० ३ प्र० २ अ० १ ] इति । एतन्मन्त्रपाठेनाध्वर्युर्भोजनायान्नं बलाय च रसं यजमाने संपादयति । न चात्र प्रत्यक्षविरोध आशङ्कनीयः । ग्रावाणः प्लवन्त इत्यादिवदस्यार्थवादस्य प्रशंसारूपगुणवादत्वाङ्गीकारात् ॥

## वायवः स्थोपायवः स्थ—

मन्त्रान्तरविनियोगमाह बौधायनः—“ तया वत्सानपाकरोति वायवः स्थोपायवः स्थेति ” इति ।

वान्ति गच्छन्तीति वायवो गन्तारः । उप समीपे यजमानगृहे पुनरायन्त्यागच्छन्तीत्युपायवः । हे वत्सास्तृणभक्षणाय प्रथमं मातृसकाशादपेत्य स्वेच्छयैवारण्ये गन्तारो भवत । सायं पुनर्यजमानगृहे समागन्तारो भवत । अथ वा वत्सानां परम्परया वायुदेवताकत्वात्तदभेदविवक्षया वायुरूपत्वं ब्रुवन्नध्वर्युस्तद्रक्षार्थं वत्सान्वायुदेवतायै समर्पयति । अनेनैव प्रकारेण मन्त्रस्य पूर्वभागो ब्राह्मणेन व्याख्यायते—“ वायवः स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान्परिददाति ” [ ब्रा० का० ३ प्र० २ अ० १ ] इति । अध्यक्षा इति वचनव्यत्ययः । वायुः स्वप्रचारेणान्त-

---

१ ख. 'धाग्रक' ।

( वत्सापाकरणार्थो मन्त्राः )

रिक्षमधितिष्ठति। अन्तरिक्षे च विस्रम्भसंचाराय बहुलमवकाशं प्रयच्छन्व-त्साल्लाँलयति। सेयं प्रत्यक्षप्रसिद्धिरर्थवादान्तरगतः स्वस्वामिभावो वायवःखलु-वैशब्दैर्द्योत्यते। तस्यैव मन्त्रभागस्य प्रकारान्तरेणाभिप्रायं आम्नायते—"प्र वा एनानेतदाकरोति। यदाह। वायवः स्थेति" [ ब्रा०का० ३ प्र० २ अ० १ ] इति। अध्वर्युरिमं भागमुच्चारयति यदेतेनोच्चारणेन वत्सान्वायुतादात्म्यलक्षण-प्रकृष्टाकारवतः करोति। उत्तरभागं व्याचष्टे—" उपायवः स्थेत्याह। यजमा-नायैव पशूनुपह्वयते" [ ब्रा० का० ३ प्र० २ अ० १ ] इति॥

देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आ प्यायध्वमघ्निया देवभागमूर्जस्वतीः पय-स्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माऽघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु—

विनियोगमाह बौधायनः—" अथैषां मातॄः प्रेरयति देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माऽघशꣳसो रुद्रस्य हेतिः परि वो वृणक्त्विति" इति।

आपस्तम्बस्तु त्रीनेतान्मन्त्रानभिप्रेत्य विनियोगत्रयमाह—" देवो वः सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति, प्रस्थितानामेकां गां शाख-योपस्पृशति दर्भैर्दर्भपुञ्जीलैर्वा—आप्यायध्वमिति, रुद्रस्य हेतिः परि वो वृण-क्त्विति प्रस्थिता अनुमन्त्रयते" इति।

हे गावः प्रेरको देवोऽन्तर्यामी परमेश्वरोऽत्यन्तश्रेष्ठायेन्द्रदधिरूपाय[1] कर्मणे युष्मानरण्ये घासमत्तुं प्रार्पयतु प्रेरयत्विति प्रथममन्त्रार्थः। तस्य मन्त्रस्य पूर्व-भागे स्थितस्य सवितृपदस्य तात्पर्यं व्याचष्टे—" देवो वः सविता प्रार्पयत्वि-त्याह प्रसूत्यै" [ ब्रा० का० ३ प्र० २ अ० १ ] इति। प्रेरणायेत्यर्थः। उत्तरभागं व्याचष्टे—" श्रेष्ठतमाय कर्मण इत्याह। यज्ञो हि श्रेष्ठतमं कर्म। तस्मादेवमाह" [ ब्रा० का० ३ प्र० २ अ० १ ] इति। द्वितीयमन्त्रस्याय-मर्थः—हेऽघ्निया गावो देवस्येन्द्रस्य दधिरूपं भागमाप्यायध्वं प्रभूतघासभक्ष-णेन प्रवृद्धं कुरुत। युष्मानपाहर्तुं स्तेनश्चोरो मेशत शक्तो मा भूत्। कीदृशीर्यु-

१ ख. 'येन्द्राय द'।

ष्मानत्यन्तरसा अधिकक्षीरा बह्वपत्याः क्रिमिदोषरहिता रोगान्तरहीनाश्च। अघशंसो भक्षणादिना तीव्रपापेन घातको व्याघ्रादिरपि शक्तो मा भूदिति। अस्य मन्त्रस्य प्रथमभागे देवभागमिति पदस्य तात्पर्यं व्याचष्टे—"आप्यायध्वमघ्निया देवभागमित्याह। वत्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाऽऽप्यायन्त। देवेभ्य एवैना इन्द्रायाऽऽप्याययति" [ब्रा० का० ३ प्र० २ अ० १] इति। यागार्थप्रवृत्तेः पूर्वं गोग्रासेन वत्सभागो मनुष्यभागश्च प्रवृद्धो भवति। ऊर्ध्वं तु क्षीराज्यरूपो देवान्तरभागो दधिरूप इन्द्रभागश्च प्रवर्धते। एवकारेण मनुष्यभागव्यावृत्तिः। द्वितीयं भागमुपपादयति—"ऊर्जस्वतीः पयस्वतीरित्याह। ऊर्जꣳ हि पयः संभरन्ति" [ब्रा० का० ३ प्र० २ अ० १] इति। प्रभूतघासभक्षणेन रसाधिक्यसंपादनं क्षीराधिक्यसंपादनं च लौकिकदोहे प्रसिद्धमिति हिशब्दस्यार्थः। तृतीयभागस्य प्रयोजनमाह—"प्रजावतीरनमीवा अयक्ष्मा इत्याह प्रजात्यै" [ब्रा० का०३ प्र०२ अ०१] इति। वन्ध्यात्वेन क्रिमिदोषेण रोगान्तरेण च नास्ति प्रजोत्पत्तिः। तदभावे तु विद्यते। चतुर्थभागस्य प्रयोजनमाह—"मा वः स्तेन ईशत माऽघशꣳस इत्याह गुप्त्यै" [ब्रा० का० ३ प्र० २ अ० १] इति। चोरव्याघ्रादेरशक्तौ गावो रक्षिता भवन्ति। तृतीयमन्त्रस्यायमर्थः—रुद्रनामकस्य क्रूरदेवस्याऽऽयुधं युष्मान्परिहरत्विति। एतन्मन्त्रपाठफलमाह—"रुद्रस्य हेतिः परि वो वृणक्त्वित्याह। रुद्रादेवैनास्त्रायते" [ब्रा० का० ३ प्र० २ अ० १] इति॥

## ध्रुवा अस्मिन्गोपतौ स्यात बह्वीः—

बौधायनः—"ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति यजमानमीक्षते" इति।

आपस्तम्बः—"ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते" इति।

हे गावो भवत्यो भवत्स्वामिनि यजमाने स्थिरा भवत, प्रीतिदानानपहारादिभिर्यजमानं मा त्यजत, अपत्यपरम्परया बह्व्यश्च भवत। एतन्मन्त्रपाठं प्रशंसति—"ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरित्याह। ध्रुवा एवास्मिन्बह्वीः करोति" [ब्रा० का० ३ प्र० २ अ० १] इति॥

## यजमानस्य पशून्पाहि॥

बौधायनः—"अथैतां शाखामग्रेणाऽऽहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमग्निष्ठेऽनस्युत्तरार्धे वाऽग्न्यागारस्योद्गूहति यजमानस्य पशून्पाहीति" इति।

( वत्सापाकरणार्था मन्त्राः )

आपस्तम्बः—"यजमानस्य पशून्पाहीत्यग्निष्ठेऽनस्यग्न्यगारे वा पुरस्तात्प्रतीचीᳲ शाखामुपगूहति पश्चात्प्राचीं वा " इति।

अग्निष्ठमनो व्रीहिरूपस्य हविषो वाहकं शकटम्। मन्त्रपाठप्रयोजनमाह— "यजमानस्य पशून्पाहीत्याह। पशूनां गोपीथाय। तस्मात्सायं पशव उपसमावर्तन्ते" [ ब्रा०का०३प्र०२अ०१ ] इति। गोपीथो रक्षणं तस्माच्छाखाया रक्षितत्वाच्छाखाया भूमौ स्थापनं निवार्यते। निवारणं तत्फलं चाऽऽह— "अनधः सादयति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः" [ ब्रा० का० ३ प्र० २ अ० १ ] इति। उच्चदेशस्थापनं तत्फलं चाऽऽह—" उपरीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै " [ ब्रा० का ३ प्र० २ अ० १ ] इति। इवशब्द एवकारार्थः। समष्टिः सम्यग्व्याप्तिः॥

अस्मिन्ननुवाके स्थितानां मन्त्राणां विनियोगः संगृह्यते—

" इषे शाखां छिनत्त्यूर्जे मार्ष्टि वायेति वत्सकान्।
अपाकृत्याथ देवो गाः प्रस्थाप्याऽऽप्येति गाः स्पृशेत्॥
रुद्रस्येत्यभिमन्त्र्यैता ध्रुवेति गृहमाव्रजेत्।
यजेति शाखोपगूह इत्यष्टावनुवाकगाः " इति॥
सूत्रद्वयं ब्राह्मणं च विबोधार्थमुदाहृतम्।
संदेहस्यापनुत्यर्थं मीमांसाऽप्यत्र वर्ण्यते॥

लोके तावद्विचारेण संदेहनिवृत्तिः प्रसिद्धा। वेदेऽपि तत्र तत्र तत्त्वविचारपूर्वकं संदेहापनयनमुपलभामहे। तथा ह्यग्न्युपस्थानविषये विवादे विचारः प्रथमकाण्डे पञ्चम[प्र]पाठके नवमेऽनुवाके श्रूयते—"उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः " इति। अस्यायमर्थः—प्रतिदिनं सायं प्रातरग्निहोत्रमनुष्ठाय " उप प्रयन्तो अध्वरम् " इत्यादिभिर्मन्त्रैरग्निप्रार्थनलक्षणमुपस्थानं कर्तव्यं न वेति संशयः। न कर्तव्यमिति तावत्प्राप्तम्। कुतः, उपस्थानेनाग्नेरुपद्रवप्रसङ्गात्। तथा हि— " आयुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाहि " इत्यादिषूपस्थानमन्त्रेष्वायुरादीनि बहूनि याच्यन्ते। तत्र यजमानः स्वल्पं हविर्दत्त्वा बहूनि याचमानः कथमग्निं न बाधेत। लोके हि यः कश्चिद्दरिद्रो मनुष्यो यत्किंचिज्जम्बीरफलादिकं मनुष्यायैव

राज्ञे प्रतिदिनमुपायनमानीय दत्त्वा तं राजानं प्रति सहस्रसंख्याकधनं याचति। स याचकस्तं राजानं पीडयत्येव। स च राजा तं कुप्यति(?)। यदा मनुष्येष्वप्येवं तदा को नामाग्न्यादिदेवानमेयप्रभावान्प्रतिदिनं याचितुं धृष्टो भवेत्। तस्मादग्निर्नोपस्थेय इति पूर्वपक्षे प्राप्ते राद्धान्तोऽभिधीयते—इदं मे भूयादिदं मे भूयादित्येवं स्वाभीष्टमखिलमाशासितुमेव यजमानः प्रजापतिरूपमिममग्निं यजते। आहिताग्नेर्यजमानस्य मन्त्रैरुपस्थानमेवाऽऽशीः। न चात्र हविषोऽल्पत्वं शङ्कनीयं मन्त्रसामर्थ्येन वर्धमानत्वात्। तथा च श्रूयते—"धान्यमसि धिनुहि देवानित्याह। एतस्य यजुषो वीर्येण। यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते। न हि तदस्ति। यत्तावदेव स्यात्। यावज्जुहोति" [ ब्रा० का० ३ प्र० २ अ० ६ ] इति। तस्मान्मनुष्याणां क्रयविक्रयाविव यजमानदेवतयोर्यागतत्फले विश्रम्भेण व्यवहर्तुं शक्यते।

अत एव भगवद्गीतायां तृतीयाध्याये कर्मानुष्ठानप्रसङ्गेन स्मर्यते—

"देवान्भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इति॥

तस्माद्धविषो जम्बीरफलादिवैषम्येणोक्तदोषाभावादग्निरुपस्थेय एवेति सिद्धान्तः। एतदेव द्रढयितुं वाक्यशेषे राज्ञ इव देवतायाः कोपप्रसङ्गो नास्तीत्यभिप्रेत्य श्रूयते—"न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठते" इति। तथा पञ्चमकाण्डस्य पञ्चमप्रपाठके प्रथमानुवाकेऽग्निचयनगतस्य कस्यचित्पशोर्देवताविशेषो विचारितः—"वायव्यः कार्या३ः प्राजापत्या ३इत्याहुर्यद्वायव्यं कुर्यात्प्रजापतेरियात्" इति। तत्रैव तृतीयानुवाके चीयमानस्याग्नेरधोमुखत्वमूर्ध्वमुखत्वं वेति विचारितम्—"ब्रह्मवादिनो वदन्ति न्यङ्ङग्निश्चेतव्या३ उत्ताना ३ इति"। षष्ठकाण्डस्य प्रथमप्रपाठके चतुर्थानुवाके होमो विचारितः—"ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा ३ इ न होतव्या ३ मिति" इति। तत्रैव नवमानुवाके क्रेतव्ये सोमे पतिततृणादिकमपनेयं न वेति विचारितम्—"ब्रह्मवादिनो वदन्ति विचित्यः सोमा ३ न विचित्या ३इति" इति। तस्मिन्नेव काण्डे तृतीयप्रपाठकेऽष्टमानुवाकेऽध्वर्युयजमानयोः पशुस्पर्शो विचारितः—"ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू ३ नान्वारभ्या ३ इति" इति। तस्यैव पञ्चमे प्रपाठके नवमानुवाके सोमयागस्य तृतीयसवने हारियोजननामकग्रहं प्रति होमो विचारितः—"तं व्यचिकित्सज्जुहवानी ३ मा हौषा ३ मिति" इति। तत्रैव षष्ठप्रपाठके द्वितीयानुवाके देवभागनामकं मुनिं प्रति सात्यहव्य-

१ क. °मुपनी°। २ क. षष्ठाष्टकस्य।

नामको मुनिः पप्रच्छ। यज्ञाङ्गे "देवा गातुविदः" इत्येतन्मन्त्रहोमे सोमयागं समापितवानपि यजमाने वेति प्रश्नार्थः। स प्रश्न एवं श्रूयते—"वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपा ३ यज्ञपता ३ विति स होवाच यज्ञपताविति" इति। सप्तमकाण्डस्य प्रथमप्रपाठके गर्गत्रिरात्रनामकस्य यागस्य दक्षिणारूपे गोसहस्रे चरमधेनोरनुगमनं न वेति विचारितम्—"सहस्रꣳ सहस्रतम्यन्वेती ३ सहस्रतमीꣳसहस्रा ३ मिति" इति। तत्रैव पञ्चमप्रपाठके सप्तमानुवाके गवामयनविकृतिरूपस्योत्सर्गिणामयनस्य संबन्धि किंचिदहः परित्याज्यं न वेति विचारितम्—"उत्सृज्यां ३ नोत्सृज्या ३ मिति मीमाꣳसन्ते ब्रह्मवादिनस्तद्वाहुरुत्सृज्यमेवेत्यमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुः" इति। एवं ब्राह्मणान्तरेऽपि विचारा उदाहरणीयाः। तदेवं वेदवादिनां विचारपूर्वकेऽर्थनिर्णये तात्पर्यातिशयदर्शनात्सर्वोऽपि वेदार्थो विचार्य निर्णेतव्य इत्यवगम्यते। तथा सति पुनः संशयो नोदेष्यति। अन्यथा कदाचित्स्वबुद्धौ पूर्वपक्षयुक्तिप्रतिभाने सति विपरीतनिर्णयः संशयो वा प्रसज्येत।

अत एवोक्तम्—

" धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति " इति॥

स्मृतिरपि—

" आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः " इति॥

आर्षं ब्रह्मज्ञानम्। तस्य जैमिनिबादरायणाभ्यां मीमांसा प्रवर्तिता। येषु वाक्येषु संशयो नास्ति तेष्वपि मीमांसया किंचिदपूर्वं व्यज्यते।

अत एव स्मर्यते—

" यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ " इति॥

तस्मादस्माभिस्तत्तदनुवाकेषु संभावितमीमांसोदाह्रियते। प्रथमं तावत्सर्ववेदसाधारणान्विचारानुदाहरिष्यामः। यदुक्तमलौकिकार्थबोधको वेद इति। तत्र वेदार्थो द्विविधो धर्मो ब्रह्म च। तयोर्धर्मं प्रति विचारितम्—

" प्रत्यक्षादिभिरप्येष गम्यते विधिनाऽथ वा।
अक्षादीनां प्रमाणत्वान्मेयो धर्मोऽवभासते॥

---

१ ख. 'मानो वे°।

वर्तमानैकविषयमक्षं धर्मस्तु भाव्यते ।
अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता " इति ॥

स्पष्टोऽर्थः ।

ब्रह्मतत्त्वं प्रत्यपि विचारितम्—

अस्त्यन्यमेयताऽप्यस्य किं वा वेदैकमेयता ॥
घटवत्सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते ।
रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता ॥
तं त्वौपनिषदेत्यादौ प्रोक्ता वेदैकमेयता " इति ॥

" तं त्वौपनिषदं पुरुषं पृच्छामि " इति याज्ञवल्क्यः शाकल्यं पप्रच्छ । तत्रोपनिषत्स्वेवाधिगतः पुरुष औपनिषदः । आदिशब्देन "नावेदविन्मनुते तं बृहन्तम्" इति श्रुतिर्विवक्षिता । तस्मादलौकिकार्थबोधको वेदः ।

तस्य प्रामाण्यं विचारितम्—

" वेदवाक्यममानं स्यान्मानं वा नास्य मानता ।
पृथक्संकेतवीक्षायामनपेक्षत्ववर्जनात् ॥
वेदेऽपि लोकवन्नैव वाक्यार्थे संगतिः पृथक् ।
ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः " इति ॥

"अग्निमीळे पुरोहितम्" "इषे त्वा" इत्यादिपदानां पृथक्संकेतापेक्षैः स्वार्थैः सह संगतिर्वृद्धव्यवहारैर्गृहीतेति पदार्था बुध्यन्ते । ज्योतिष्टोमादिवाक्यस्य सत्यज्ञानादिवाक्यस्य च स्वार्थाभ्यां धर्मब्रह्मभ्यां संगतेरगृहीतत्वादस्ति पृथक्संकेतापेक्षेत्यनपेक्षत्वलक्षणं प्रामाण्यं नास्तीति चेन्मैवम् । लोके तावद्गवादिपदानामेव स्वार्थे संगतिर्गृह्यते न तु गामानयेत्यादिवाक्यानां तथाऽपि वाक्यार्थो बुध्यत एव । तद्वद्वेदेऽपि बोधसंभवादस्त्येव नैरपेक्ष्यम् । वृद्धव्यवहारे लौकिकयोरेव पदपदार्थयोः संगतिर्गृह्यते न तु वैदिकयोरिति शङ्कां निवारयितुं विचार्यते ।

इदं विचारितम्—

" लोके पदपदार्थौ यौ न तौ वेदेऽथ वाऽत्र तौ ।
रूपभेदात्पदं भिन्नमुत्तानादिभिदा स्फुटा ॥
वर्णैकत्वात्पदैकत्वं क्वाचित्की रूपभिन्नता ।
प्रायिकेण पदैक्येन पदार्थैक्यं तथाविधम् " इति ॥

---

१ च. °ते । लो° ।

( वत्सापाकरणार्थो मन्त्रः )

वैदिकौ पदपदार्थौ लौकिकाभ्यां भिन्नौ। कुतः, रूपभेदात्। ब्राह्मणा इति लौकिकपदस्य रूपं वेदे ब्राह्मणासः पितर इत्याम्नायते। अर्थभेदोऽप्यस्ति। अश्वाश्वो लौकिका गावो वहन्ति वेदे तु "उत्ताना हि देवगवा वहन्ति" इति श्रुतम्। अत्रोच्यते—य एव लौकिकाः पदपदार्थास्त एव वैदिकाः। कुतः, प्रत्यभिज्ञानात्। यथा प्रयोक्तॄणां पुरुषाणां भेदेऽप्येकैकपुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवैते वर्णा इत्यबाधितप्रत्यभिज्ञानाद्वर्णैकत्वं तन्नित्यत्ववादिभिरभ्युपगतम्। तथा गवाग्न्यादिपदानां लोकवेदयोरबाधितप्रत्यभिज्ञानात्पदैकत्वम्। काचित्को रूपभेदो बहुतरप्रत्यभिज्ञया बाध्यते। उत्तानवहनाद्यर्थभेदश्च काचित्कः। क्वचिदुत्तानशब्दवहनशब्दयोस्तदर्थयोश्च भेदो नास्ति। तस्माद्वेदे पृथग्व्युत्पत्तिर्नापेक्षिता। तथा चोक्तम्—

"लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः" इति॥

कर्तृदोषेणाप्रामाण्यं निवारयितुमिदं विचारितम्—

"पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत्॥
समाख्यानं प्रवचनाद्वाक्यत्वं तु पराहतम्।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता" इति॥

वाल्मीकीयं वैयासिकमित्यादिसमाख्यानाद्रामायणभारतादिकं यथा पौरुषेयं तथा काठकं कौथुमं तैत्तिरीयमित्यादिसमाख्यानाद्वेदः पौरुषेयः। किं च वेदवाक्यं पौरुषेयं वाक्यत्वात्कालिदासादिवाक्यवदिति चेन्मैवम्। संप्रदायप्रवृत्त्या समाख्यानोपपत्तेः। वाक्यत्वहेतुस्त्वनुपलब्धिविरुद्धकालात्ययापदिष्टः। यथाव्यासवाल्मीकिप्रभृतयोऽत्र तत्तद्ग्रन्थनिर्माणावसरे कैश्चिदुपलब्धा अन्यैरप्यविच्छिन्नसंप्रदायेनोपलभ्यन्ते न तथा वेदकर्ता पुरुषः क्वचिदुपलब्धः। प्रत्युत वेदस्य नित्यत्वं श्रुतिस्मृतिभ्यां पूर्वमुदाहृतम्। परमात्मा तु वेदकर्ताऽपि न लौकिकः पुरुषः। तस्मात्कर्तृदोषाभावान्नास्याप्रामाण्यशङ्का। तेष्वेतेषु विचारेषु ब्रह्मणो मानान्तरागोचरत्वं वैयासिके शास्त्रे प्रथमाध्यायप्रथमपादे "शास्त्रयोनित्वात्" [ब्र० सू० अ० १ पा० १ सू० ३] इत्यस्य सूत्रस्य द्वितीयवर्णकेऽभिहितम्। अवशिष्टं तु जैमिनीये। तत्रापि लोकवेदाधिकरणं प्रथमाध्यायस्य तृतीयपादे। इतरत्प्रथमपादे। तस्यैतस्य प्रमाणभूतस्य वेदस्य भागद्वयं

१ ख. 'ना वै दे'।

कल्पसूत्रकारैरुक्तं मन्त्रब्राह्मणयोर्वेदनामधेयमिति । तयोर्मध्ये मन्त्रसामान्यस्य मन्त्रविशेषाणामृगादीनां च लक्षणं द्वितीयाध्यायस्य प्रथमपादे विचारितम्—

" अहेबुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् ।
नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते " इति ॥

आधानप्रकरण इदमाम्नायते—"अहे बुध्निय मन्त्रं मे गोपाय" इति । तत्र मन्त्रस्य लक्षणं नास्ति। कुतः। अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात्। विहितार्थस्याभिधायको मन्त्र इत्युक्ते "वसन्ताय कपिञ्जलानालभेत" इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिरिति चेन्मैवम् । याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् । तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति । "उरु प्रथस्व" इत्यादयोऽनुष्ठानस्मारकाः । "अग्निमीळे पुरोहितम्" इत्यादयः स्तुतिरूपाः । "इषे त्वा" इत्यादयस्त्वान्ताः । "अग्न आयाहि वीतये" इत्यादय आमन्त्रणोपेताः । एवमन्येऽप्युदाहार्याः । ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्वमुच्येत । तस्मात्समाख्यानं मन्त्रलक्षणम् ।

ऋगादिलक्षणे पूर्वोत्तरपक्षावाह—

" नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते ।
पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः " इति ॥

इदमाम्नायते—"अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूꣳषि" इति । त्रीन्वेदान्विदन्तीति त्रिविदस्त्रिविदां संबन्धिनोऽध्येतारस्त्रैविदाः । ते च यं मन्त्रभागमृगादिरूपेण त्रिविधं विदन्ति तं गोपायेति योजना। त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति। कुतः। सांकर्यस्य दुष्परिहार्यत्वात् । अध्यापकप्रसिद्धेष्वृग्वेदादिषु पठितो मन्त्र ऋगादिरिति हि लक्षणं वक्तव्यम् । तच्च संकीर्णम्। तथाहि—"अग्नये मथ्यमानायानुब्रूहि" "हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि" इत्यादीनि यजूꣳषि ऋग्वेदे समाम्नातानि । "देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इत्ययं मन्त्रो यजुर्वेदे संप्रतिपन्नयजुषां मध्ये पठितः । न च तस्य यजुष्ट्वमस्ति । ऋग्रूपत्वेन तद्ब्राह्मणे व्यवहृतत्वात् । "सावित्र्यर्चा" इति हि

१ ख. 'र आह म' । २ क. ङ. च. 'यस्त्रयिवि' ।

ब्राह्मणम्। "एतत्साम गायन्नास्ते" इति प्रतिज्ञाय "हा३वु हा३वु" इत्यादिकं साम यजुर्वेदे गीतम्। "अक्षितमसि" "अच्युतमसि" "प्राणसंशितमसि" इति त्रीणि यजूंषि सामवेदे समाम्नायन्ते। तस्मान्नास्ति लक्षणमिति चेन्न। पादादीनामसंकीर्णलक्षणत्वात्[1]। पादेनार्धर्चेन चोपेता वृत्तबद्धा मन्त्रा ऋचः। गीत्युपेता मन्त्राः सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषीति व्यवस्थितं लक्षणम्।

प्रथमाध्यायस्य द्वितीयपादे मन्त्रेष्वन्यद्विचारितम्—

"मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः॥
ब्राह्मणेनापि तद्भानान्मन्त्राः पुण्यैकहेतवः।
न तद्भानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः" इति॥

"उरु प्रथस्व" इत्ययं कश्चिन्मन्त्रः। तस्यायमर्थः—भोः पुरोडाश त्वमुरु विपुलं यथा भवति तथा कपालेषु प्रथस्व प्रसरेति। ईदृशा मन्त्रा यागप्रयोगेषूच्चार्यमाणा अदृष्टमेव जनयन्ति न त्वर्थप्रकाशनाय तदुच्चारणम्। पुरोडाशप्रथनरूपार्थस्य ब्राह्मणवाक्येनापि सिद्धेः[2]। "उरु प्रथस्वेति पुरोडाशं प्रथयति" इति हि ब्राह्मणवाक्यमिति चेत्। नैतद्युक्तम्। अर्थप्रत्यायनस्य दृष्टप्रयोजनस्य संभवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात्। तस्माद्दृष्टमर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्। ब्राह्मणवाक्येनाप्यर्थानुस्मरणसंभवे मन्त्रेणैवानुस्मरणीयमिति[3] यो नियमस्तस्यादृष्टं प्रयोजनमस्तु। ननु मन्त्रस्यानुष्ठेयार्थस्मारकत्वं क्वचिदनुपपन्नम्। तथा हि—"दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात्" इत्यस्मिन्मन्त्रे धनमाशास्त इत्यर्थः प्रतीयते। अनुष्ठेयार्थस्तु शकटस्थापनायाऽऽधारभूतकाष्ठस्थापनम्। तच्च ब्राह्मणेन विधीयते—"दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं निहन्ति" इति। नायं दोषः। अस्याधिकरणस्य लिङ्गविनियोगविषयत्वात्। उदाहृतस्तु मन्त्रः श्रुत्या विनियुज्यते।

द्वितीयाध्यायस्य प्रथमे पादे मन्त्रेष्वन्यद्विचारितम्।

"देवांश्च याभिर्यजत इत्याख्यातं तु मन्त्रगम्।
विधायकं न वाऽन्येन समेतत्वात्तद्विधायकम्॥

१ ख. गीतिरूपा। २ ख. आगमानत्वात्। ३ ख. 'चिदव्यभिचारितम्। ४ क. ङ. ञ.





यच्छब्दादेः क्षीणशक्तिर्न विधिस्त्रिविधं ततः।
आख्यातमभिधानं च प्रधानगुणकर्मणी" इति ॥

अयं मन्त्र आम्नायते—"देवाꣳश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह" इति। अयमर्थः—गोपतिर्यजमानो याभिर्गोभिर्देवान्यजते याश्च गा ब्राह्मणेभ्यो ददाति चिरमेव ताभिः सह परलोकेऽवतिष्ठत इति। तत्र यथा ब्राह्मणगतमाख्यातपदं प्रधानगुणकर्मणोरन्यतरस्य विधायकं तथा मन्त्रगतमपीति चेन्मैवम्। यच्छब्दादिना विधिशक्तेः क्षीणत्वात्। सति हि यच्छब्दे तस्य वाक्यस्यानुवादकत्वं प्रतीयते न तु विधायकत्वम्। यच्छब्दादेरित्यादिशब्देनाऽऽमन्त्रणोत्तमपुरुषादयः। "वायवः स्थोपायवः स्थ" इत्यामन्त्रणम्। "अग्नये जुष्टं निर्वपामि" इत्युत्तमपुरुषः। तस्मादाख्यातस्य प्रधानकर्मविधायकत्वं गुणकर्मविधायकत्वं चेत्येवं द्वावेव प्रकारौ न भवतः किं त्वभिधायकत्वमिति तृतीयोऽपि प्रकारः। ततो मन्त्रगतमाख्यातं न विधायकम्। प्रधानगुणकर्मणोस्तु लक्षणं वक्ष्यते। एवमेतैर्विचारैरयं निर्णयः प्रकृते संपन्नः। "इषे त्वोर्जे त्वा" "ब्रह्मविदाप्नोति परम्" इतिकाण्डद्वयप्रतिपाद्यार्थो न मानान्तरगम्यः। काण्डद्वयगतवाक्यस्य नास्ति पृथक्संकेतापेक्षा। तत्रत्यौ पदपदार्थौ लौकिकावेव। तद्वाक्यं च न पौरुषेयम्। अभियुक्तसमाख्यानं मन्त्रस्य लक्षणम्। प्रश्लिष्टपाठो मन्त्रविशेषस्य यजुषो लक्षणम्। निर्दोषत्वान्मन्त्रस्य स्वार्थानुष्ठानकाले स्वार्थस्मारकत्वं प्रयोजनम्। मन्त्रगतं च वायवः स्थ सविता मार्पयतु इत्यादिकं न विधायकमिति।

इत्थं मन्त्रे सामान्यं विचार्य विशेषो विचार्यते—

"इषेत्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे।
असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात्॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः" इति ॥

"इषे त्वोर्जे त्वा" इत्यत्र क्रियापदाभावेन "उरु प्रथस्व" इति मन्त्रवदर्थस्मारकत्वाभावाददृष्टार्थत्वे सत्येकादृष्टकल्पने लाघवादेक एव मन्त्र इति चेन्मैवम्। शाखान्तरे "इषे त्वेत्याच्छिनत्त्यूर्जे त्वेत्यनुमार्ष्टि" इति विनियोगभेदश्रवणात्। तदनुसारेणेषे त्वेत्याच्छिनद्म्यूर्जे त्वेत्यनुमार्ज्मीति क्रियापदेऽध्याहृते सति क्रियाभेदाद्भिन्नोऽयं मन्त्रः।

१ ख. 'ति अर्थद्वयस्मारकत्वाद्भि'।

( वत्सापाकरणार्था मन्त्राः )

अथ ब्राह्मणविषयविचारः। तल्लक्षणं द्वितीयाध्यायप्रथमपादे विचारितम्—

" नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथ वा।
नास्तीयन्तो वेद भागा इति क्लृप्तेरभावतः॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः।
अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् " इति॥

चातुर्मास्येष्विदमाम्नायते—" एतद्ब्राह्मणान्येव पञ्च हवींꣳषि " इति। तत्र ब्राह्मणस्य लक्षणं नास्ति। कुतः। वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योर्निराकर्तुमशक्यत्वात्, इति चेन्न। भागद्वयाङ्गीकारेण मन्त्रव्यतिरिक्तो भागो ब्राह्मणमिति लक्षणस्य निर्दोषत्वात्। ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयोऽपि भागा आम्नायन्ते—" यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशꣳसीः" इति। मैवम्। विप्रपरिव्राजकन्यायेन ब्राह्मणावान्तरभेदानामेवेतिहासादीनां पृथगभिधानात्। "देवासुराः संयत्ता आसन्" इत्यादय इतिहासाः। "इदं वा अग्रे नैव किंचनाऽऽसीत्" "न द्यौरासीत्" इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम्। कल्पस्त्वारुणकेतुकचयनप्रकरणे समाम्नायते—"इति मन्त्राः, कल्पोऽत ऊर्ध्वं, यदि बलिꣳ हरेत्" इति। अग्निचयने "यमगाथाभिः परिगायति" इति विहिता मन्त्रविशेषा गाथाः। मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः। तस्मान्मन्त्रब्राह्मणव्यतिरिक्तभागाभावाल्लक्षणं सुस्थितम्। तच्च ब्राह्मणं द्विविधं विधिरूपमर्थवादरूपं चेति। "यत्पर्णशाखया वत्सानपाकरोति" इति विधिः। "तृतीयस्यामितो दिवि सोम आसीत्" इत्यादिकोऽर्थवादः।

तत्र विधेः प्रामाण्यं प्रथमाध्याये प्रथमपादे प्रतिपादितम्—

" अबोधको बोधको वा न तावद्बोधको विधिः।
शक्तेरलौकिके धर्मे ग्रहणं दुर्घटं यतः॥
समभिव्याहृते धर्मे शक्तिग्रहणसंभवात्।
बोधकस्य विधेर्मानत्वमनपेक्षतया स्थितम् " इति॥

धर्मो नामानुष्ठानजन्यापूर्वं तद्धेतुर्यागो वा। तस्यालौकिकत्वेन गवाद्यर्थवद्वृद्धव्यवहाराविषयत्वात्संगतिग्रहणं नास्ति। ततो विधेरबोधकत्वादप्रामाण्यमिति चेन्मैवम्। प्रसिद्धार्थैः पर्णशाखादिपदैः समभिव्याहृतस्यापाकरोतीति

पदस्यापूर्वपर्यवसायिन्यर्थे शक्तिग्रहणसंभवात्। यथा प्रभिन्नकमलोदरे मधुकरो मधूनि पिबतीत्यत्र मधुकरशब्दस्यार्थमजानान इतरपदार्थानामर्थमवगत्य तत्समभिव्याहारात्कमलमध्यगते मधुपानं कुर्वति भ्रमरे मधुकरशब्दस्य शक्तिं गृह्णाति तद्वत्। अतो बाधकत्वान्मूलप्रमाणानपेक्षत्वाच्च विधिः स्वत एव प्रमाणम्। न च "वत्सानपाकरोति" इत्यत्र विधायकानां लिङ्लोट्तव्यप्रत्ययानामभावादविधित्वमिति शङ्कनीयम्। क्रत्वङ्गोपवीतवदपूर्वार्थत्वे सति पञ्चमलकाराश्रयणेन विधित्वसंभवात्।

एतच्च तृतीयाध्यायस्य चतुर्थपादे विचारितम्—

" उपव्यानेऽनुवादो वा विधिर्वाऽऽद्यो यतः स्मृतौ।
प्राप्तं मैवमपूर्वत्वात्क्रतौ लेटा विधीयते " इति॥

दर्शपूर्णमासप्रकरणे क्रत्वङ्गत्वेन वस्त्रस्योपवीतत्वमाम्नायते—"देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते " इति। तदिदं वाक्यमुपवीतत्वस्यानुवादकं वा विधायकं वेति संशयः। "नित्योदकी नित्ययज्ञोपवीती" इति स्मृत्या प्राप्तत्वाद्विधायकानां लिङादीनामभावाच्चानुवादकमिति प्राप्ते ब्रूमः—पुरुषार्थस्य स्मृत्या प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात्पञ्चमलकारेण दर्शपूर्णमासाङ्गतया विधीयत इति राद्धान्तः। तेनैव न्यायेन "वत्सानपाकरोति" इत्ययं न प्रथमलकारः किं तु पञ्चमलकारः। तस्य च विधायकत्वं "लिङर्थे लेट्" [पा० सू० अ० ३ पा० ४ सू० ७] इतिसूत्रसिद्धम्। नन्वेवमपि "यत्पर्णशाखया" इत्यनुवादत्वगमकेन यच्छब्देन विधिशक्तिप्रतिघातः "देवाश्च याभिर्यजते" इत्यादिवदिति चेन्मैवम्। उपरिधारणन्यायेन यच्छब्दस्य बाधितत्वात्।

स च न्यायस्तस्मिन्नेव पादेऽभिहितः—

" धारयत्युपरिष्टाद्धि देवेभ्य इति संस्तवः।
विधिर्वाऽऽद्यो धृतेः पित्र्ये प्रोक्तायाः पूर्ववत्स्तुतिः॥
ऊर्ध्वं विधारणं प्राप्तं समिधो नान्यमानतः।
अतो हिशब्दसंत्यागादपूर्वार्थो विधीयते " इति॥

प्रेताग्निहोत्रे श्रूयते—" अधस्तात्समिधं धारयन्ननुद्रवेदुपरिष्टाद्धि देवेभ्यो धारयति " इति। अत्र पित्र्यं हविर्होतुं हस्ते धारयन्यदा मन्त्रं पठति तदानीमुद्धृतस्याधस्तात्समिधं धारयेत्, इति यद्विधीयते तदेतद्दैविकेनोपरिधारणेन स्तूयते। कुतः। हिशब्दादनुवादत्वप्रतीतेः। तत्रत्ये पूर्वाधिकरणे—"प्राची-

१ ख. संगीत। २ ख. °शक्तिः प्रतिपाद्यते दे°।

( वत्सापाकरणार्था मन्त्राः )

नावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रान्स्तृणीयात् " इत्यस्मिन्नुदाहरणद्वये यज्ञोपवीतित्वोदगग्रत्ववाक्ययोर्हिशब्दयच्छब्दयुक्तयोर्विधायकत्वमपोह्यार्थवादत्वं निर्णीतं तद्वदत्रापीति प्राप्ते ब्रूमः—विषमो दृष्टान्तः । दैविके यज्ञोपवीतित्वोदगग्रत्वयोर्मानान्तरप्राप्तत्वाद्धिशब्दयच्छब्दावबाधित्वा तत्रार्थवादत्वं वक्तुमुचितम् । उपरिधारणे त्वप्राप्तत्वाद्धिशब्दं परित्यज्य विधिरेवाभ्युपगन्तव्यः। एवं सति वत्सापाकरणस्याप्यपूर्वार्थत्वाद्यच्छब्दपरित्यागेन विधिरेव युक्तः । ननु लोके सायंदोहार्थिभिः प्रातर्वत्सा गोभ्योऽपाक्रियन्तेऽतो लोकत एव प्राप्तत्वान्न वत्सापाकरणं विधेयमिति चेन्मैवम् । अवघातवन्नियमापूर्वहेतुत्वेन विधेयत्वात् ।

अवघातन्यायश्च द्वितीयाध्यायस्य प्रथमपादे वर्णितः—

" अवघातादिनाऽपूर्वमुत्पाद्यं विद्यते न वा ।
यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा ॥
दृष्टे तुषविमोकेऽस्ति नापूर्वं द्रव्यतन्त्रता ।
स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्वचः " इति ॥

यथा "समिधो यजति" इत्यत्र यागजन्यमपूर्वमस्ति तथा "व्रीहीनवहन्यात्" इत्यत्रापि तदभ्युपेयमन्यथा विधिवाक्यवैयर्थ्यप्रसङ्गादिति चेन्न। दृष्टे संभवत्यदृष्टकल्पनस्यान्याय्यत्वात् । न चात्र यजत्यादिविधिसाम्यमस्ति, गुणकर्मत्वेनावघातस्य द्रव्यतन्त्रत्वात् । यागस्तु प्रधानकर्म । अयं च कर्मणां भेदो जैमिनिना सूत्रत्रयेण स्पष्टीकृतः—"तानि द्वैधं गुणप्रधानभूतानि। यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् । यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् " इति । यैस्तु कर्मभिर्द्रव्यमुत्पादयितुं संस्कर्तुं वेष्यते तेषु कर्मसु गुणत्वम्। कुतः। तस्य कर्मणो द्रव्यप्रधानत्वात्। द्रव्यं प्रधानमस्येति बहुव्रीहिः । " यूपं तक्षति " " आहवनीयमादधाति " इत्यादौ यूपाहवनीयादि द्रव्यमुत्पादयितुमिष्यते । " व्रीहीनवहन्ति " "तण्डुलान्पिनष्टि " इत्यत्र व्रीह्यादि द्रव्यं संस्कर्तुमिष्टम् । " आज्येन प्रयाजा इज्यन्ते " इत्यादिषूक्तवैपरीत्यात्प्रधानकर्मत्वम् । अतो यजतिवैषम्यान्नावघातोऽपूर्वजनकः । न च विधिवाक्यवैयर्थ्यं, नखविदलनादिनाऽपि तण्डुलनिष्पत्तिसंभवे सत्यवघातेनैव तण्डुला निष्पादनीया इति तन्नियमजन्यमपूर्वं बोधयितुं विधेरपेक्षितत्वात् । तद्वच्छाखीयापाकरणेनैव सायं दोहः संपादनीय इति नियमविधिरस्तु । उक्तेषु विधिसामा-

न्यविचारेष्वेते निर्णयाः संपन्नाः—विधिरलौकिकधर्मबोधकः। पञ्चमलकारा-श्रयणेन विधायकत्वम्। अप्राप्तार्थे यच्छब्दादयो न विधिबाधकाः। संस्कार-कर्म दृष्टार्थसंभवेऽपि नियमापूर्वार्थमपीति।

शाखाहरण एव चतुर्थाध्याये विचारितं किंचिद्द्वितीयपादे—

" प्राचीमाहरतीत्यत्र दिक्शाखा वाऽस्तु दिक्श्रुतेः।
आहार्यत्वं दिशो नास्ति शाखा तेनोपलभ्यते " इति॥

" यत्प्राचीमाहरेत् " इति वाक्ये प्राचीशब्देन मुख्या दिग्विवक्षितेति चेन्न। दिश आहर्तुमशक्यत्वेन दिक्संबन्धिन्याः शाखाया उपलक्षणीयत्वात्।

तस्मिन्नेव पादेऽन्यद्विचारितम्—

" शाखां छित्त्वोपवेषं च मूले कुर्वीत शाखया।
नुदेद्वत्सान्कपालानि स्थापयेदुपवेषतः॥
द्वयं प्रयोजनं छित्तेर्वत्सापाकृतिरेव वा।
आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः॥
उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः।
पूर्यतेऽतोऽनुनिष्पादी स तस्माद्युज्यतेऽन्तिमः " इति॥

इदमाम्नायते—"मूलतः शाखां परिवास्योपवेषं करोति" इति। अस्यायमर्थः—येयम् "इषे त्वा" इति मन्त्रेणावच्छिन्ना शाखा तां पुनर्मूले छित्त्वा तं मूलभागमुपवेषं कुर्यादिति। अत्र तयोर्मूलाग्रयोः पृथग्विनियोग आम्नायते—"उपवेषेण कपालान्युपदधाति शाखया वत्सानपाकरोति" इति। अत्र कपालोपधानं वत्सापाकरणं चेत्युभयं शाखाछेदनस्य प्रयोजकम्। कुतः। अग्रमूलयोः साम्येन विभज्य विनियोगात्, इति चेन्मैवम्। उपवेषं करोतीत्ययं विधिरुपवेषस्य प्रकृतिद्रव्यमपेक्षते। सा चापेक्षा मूलेन पूर्यते। तच्च मूलं शाखार्थम्। "इषे त्वोर्जे त्वेति तामाच्छिनत्ति" इत्यत्र च्छिन्नायाः समूलायाः शाखायाः सौकर्यार्थं परिवासनवाक्येन पुनर्मूलापादानकं छेदनं श्रूयते। न चासति मूले मूलापादानकं छेदनं संभवति। तस्माच्छाखार्थमेव मूलं न तूपवेषार्थम्। अतोऽन्यार्थमूलानुनिष्पन्नोपवेषेण क्रियमाणं कपालोपधानं न शाखाछेदनस्य प्रयोजकं, किं तु वत्सापाकरणमेव तत्प्रयोजकम्। तथा सति यत्र शाखायाः प्रथमच्छेदनेनैव सौकर्यं संपद्यते तत्रोपवेषसिद्धये पुनः प्रयत्नेन मूलं न संपादनीयं, किं तु लौकिकेन केनचित्काष्ठेन कपालान्युपधेयानीति विचारस्य फलं सिद्धम्।

---

१ ख. °रणे तु च°।

ब्राह्मणे विधिभागस्य सामान्यविशेषविचाराः प्रकाशिताः।

अथार्थवादविचाराः प्रदर्श्यन्ते—

"वायुर्वा इत्येवमादेरर्थवादस्य मानता।
न विधेयेऽस्ति धर्मे किं किं वाऽसौ तत्र विद्यते॥
विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात्।
नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत्कुतः॥
विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः।
तेनैकवाक्यता तस्माद्वादानां धर्ममानता" इति॥

काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते—"वायव्यꣳ श्वेतमालभेत भूतिकामः" इति विधिः। "वायुर्वै क्षेपिष्ठा देवता" इत्यर्थवादः। तत्र वायव्यादिशब्दा अर्थवादशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधते। अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव शीघ्रगामिदेवतालक्षणं सिद्धार्थमाचक्षते। अत एवैकवाक्यत्वाभावान्नास्त्यर्थवादानां धर्मे प्रामाण्यमिति चेन्न। पदैकवाक्यत्वाभावेऽपि वाक्यैकवाक्यत्वात्। विधिवाक्येन पुरुषप्रवृत्तिसिद्धये स्तावकमर्थवादवाक्यमपेक्ष(क्ष्य)ते। अर्थवादवाक्यस्यापि पुरुषार्थपर्यवसानाय विधिवाक्यापेक्षा। अतो वाक्ययोः परस्परमन्वयादेकवाक्यत्वे सति विधिभागवदर्थवादभागेऽपि धर्मे प्रामाण्यम्। अनेनैव न्यायेन "तृतीयस्यामितो दिवि सोम आसीत्" इत्याद्यर्थवादस्य "यत्पर्णशाखया वत्सानपाकरोति" इत्येतद्विधिस्तावकत्वाद्विधिगम्ये नियमापूर्वे प्रामाण्यमस्ति। नन्वर्थवादस्य विधिस्तावकत्वं क्वचिद्व्यभिचरति "प्राचीमुदीचीमाहरति। उभयोर्लोकयोरभिजित्यै" इत्यत्र फलविधिप्रतिभानादिति चेन्मैवम्। औदुम्बराधिकरणन्यायेन स्तावकत्वात्।

स च न्यायस्तस्मिन्नेव पादेऽभिहितः—

"ऊर्जोऽवरुद्ध्या इत्येष विधिवन्निगदो न किम्।
यूपौदुम्बरतां स्तौति स्तौति वा तद्विधित्सया॥
चतुर्थ्या फलताभानाद्यूपौदुम्बरता फलम्।
ऊर्जोऽवरोधं कथयन्कथं स्तुतिपरो भवेत्॥
अस्त्वौदुम्बरत्वस्याविधानात्कस्य तत्फलम्।
अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव सः" इति॥

इदमाम्नायते—"औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै" इति। अत्रावरोधवाक्येन किं फलमेव विधी-

यते किं वा यूपौदुम्बरत्वमपि स्तूयते । नाऽऽद्यः । औदुम्बरत्वविध्यभावेन तत्फलकथनायोगात् । न चात्रौदुम्बरत्वस्य प्रत्यक्षो विधिरस्ति लिङाद्यश्रवणात् । अतः स्तुत्यैवात्र विधिरुन्नेतव्यः । न चात्र स्तुतिमङ्गी करोषि । न द्वितीयः । अर्थभेदेनाऽऽवृत्तिलक्षणवाक्यभेदापत्तेः । तस्माद्गर्गवरोधः स्तावकः। तद्वदुभयलोकाभिजयेनाप्यैशानदिक्प्रवृद्धोपेषणादिभिः(?) प्रवृत्ता शाखा विधानाय स्तूयते । तदेवं वेदसामान्यतद्विशेषयोर्मन्त्रब्राह्मणयोर्मन्त्रविशेषाणामृगादीनां ब्राह्मणविशेषयोर्विध्यर्थवादयोश्चापेक्षिताः सामान्यविशेषविचारा अस्मिन्ननुवाक उदाहृताः । वक्ष्यमाणानुवाकेष्वपि ते सर्वे यथायोगमुदाहरणीयाः ।

उदाहृत्यात्र मीमांसां प्रकृतिप्रत्ययस्थितिम् ।
अर्थं व्याकरणे सिद्धं बोद्धुं तत्प्रक्रियोच्यते ॥

न च व्याकरणप्रामाण्ये तत्प्रयोजने वा विवदितव्यं तत्प्रामाण्यस्य स्मृतिपादे निर्णीतत्वात् । तत्प्रयोजनस्य च कात्यायनेनाभिहितत्वात् ।

तथा हि—

" गोगाव्यादिषु साधुत्वे प्रयोगे वा न कश्चन ।
नियमोऽत्रास्ति वा नास्ति व्याकृतेर्मूलवर्जनात् ॥
साधूनेव प्रयुञ्जीत गवाद्या एव साधवः ।
इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः " इति ॥

निर्मूलत्वेन विगीतत्वादयः पूर्वपक्षहेतवोऽप्युपलक्ष्यन्ते—

" निर्मूलत्वाद्विगीतत्वाद्वैफल्याद्वेदबाधनात् ।
पूर्वापरविरोधाच्च नास्य प्रामाण्यसंभवः " ॥

इति हेतव उक्ताः ।

व्याकरणस्य पौरुषेयत्वान्मूलप्रमाणमपेक्षितम् । अत एव बुद्धादिवाक्यानां प्रामाण्यं दूषितम्—

" प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसंभवात् ।
चोदनानुपलब्धेश्च श्रद्धामात्रात्प्रमाणता " इति ॥

न तावत्प्रत्यक्षं मूलं गवादिशब्दा एव साधवो न गाव्यादिशब्दाः, साधूनेव प्रयुञ्जीत नापशब्दानित्यर्थद्वयस्य केनापीन्द्रियेण ग्रहीतुमशक्यत्वात् । योगिप्रत्यक्षस्यातीन्द्रियत्वात्तद्ग्राहकत्वमिति चेन्न ।

---

१ ख. च. 'द्धाद्यशोष' । २ ख. 'णतः । इ' ।

"यत्रास्यातिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
अयोग्यं नेन्द्रियग्राह्यं न रूपे श्रोत्रवृत्तिता" ॥

इत्याचार्योक्तेः ।

विगीतत्वमपि व्याकरणे बहुश उपलभ्यते । अनादिसिद्धेऽभियुक्तव्यवहारे गृहीतसंगतिका गवादिशब्दा एव साधव इति भगवतो मतम् । पाणिनिस्तु शास्त्रस्याऽऽमूलचूडं तद्विपरीतानेव शब्दाञ्जगौ । "अइउण्" "घेर्ङिति" "स्तोः श्चुना श्चुः" "ष्टुना ष्टुः" इत्यादिप्रयोगात् । न च धर्मार्थकाममोक्षादिषु किंचित्फलं व्याकरणस्य पश्यामः । वेदस्तु प्रयत्नेन व्याकरणं बाधते "तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः" इति । परस्परविरोधश्च भूयानस्ति त्रिमुनिव्याकरणमित्यभ्युपगच्छन्ति । यत्पाणिनिना प्रयुक्तम् "इन्धिभवतिभ्यां च" [पा० १ २ ६] "कर्मवत्कर्मणा तुल्यक्रियः" [पा० ३-१-८७] इति, तत्कात्यायनो दूषयति—"इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यं, सिद्धं तु प्राक्तनकर्मत्वात्" इति । क्वचित्तु पाणिनिना स्वोक्तं स्वयमेव दूष्यते—"तदशिष्यं संज्ञाप्रमाणत्वात्" [पा० १-२-५३] इति । तस्मान्न व्याकरणं प्रमाणमिति प्राप्ते ब्रूमः—न तावदिदं निर्मूलं पूर्वव्याकरणानामेव मूलत्वात् । सन्ति हि तानि, पाणिनिनैव तत्तन्मतानामुदाहृतत्वात् । "तृषिमृषिकृशेः काश्यपस्य" [पा० १-२-२५] "ऋतो भारद्वाजस्य" [पा० ७-२-६३] "त्रिप्रभृतिषु शाकटायनस्य" [पा० ८-४-५०] "लोपः शाकल्यस्य" [पा० ८-३-१९] "ओतो गार्ग्यस्य" [पा० ८ ३-२०] इति ह्युदाहृतम् । तत्तद्व्याकरणानां पूर्वपूर्वव्याकरणमूलत्वेऽपि बीजाङ्कुरवदनादित्वेन मूलक्षयाभावान्नानवस्थादोषः । न च "घेर्ङिति" इत्यादेरपशब्दत्वं, सांकेतिकानामपि गवादिपदवत्स्वविषये सुशब्दत्वात् । अन्यथा "बबरः प्रावाहणिरकामयत" इत्यादिरपशब्दः स्यात् । नापि निष्फलत्वम् । "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति साधुशब्दावगमतत्प्रयोगाभ्यां धर्मोत्पत्तिश्रवणात् । नापि वेदबाधः, "न म्लेच्छितवै" इत्यादेर्गव्याद्यपशब्दविषयत्वादिनाऽप्युपपत्तेः । "नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्" इति निषेधः समाधिनिष्ठब्रह्मयोगिविषयः । नापि परस्परविरोधः । उक्तानुक्तदुरुक्तचिन्तारूपं वार्तिकं कुर्वतः कात्यायनस्य क्वचित्क्वचिद्दूषयितुमुचितत्वात् । नापि स्वोक्तव्याहतिः । पूर्वोत्तरपक्षाभिप्रायेण तदुपन्यासात् । तस्मात्प्रमाणभूतव्याकरणानुसारेण गवादिशब्दा एव साधवस्तानेव

---

१ ख. प्राकृतक ।

प्रयुञ्जीतेति नियमद्वयं सिद्धम् । प्रकृतिप्रत्ययविभागोऽपि ज्ञातव्य इत्यनेनैवाभिप्रायेण वेदे तत्र तत्र शब्दनिर्वचनमुदाह्रियते । तथा हि ब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके श्रूयते—"प्रजापती रोहिण्यामग्निमसृजत । तं देवा रोहिण्यामादधत । ततो वै ते सर्वान्रोहानरोहन् । तद्रोहिण्यै रोहिणित्वम्" इति । तत्रैव तृतीयेऽनुवाके प्रजापतिं प्रस्तुत्य श्रूयते—"स वराहो रूपं कृत्वोपन्यमज्जत् । स पृथिवीमध आर्च्छत् । तस्या उपहत्योदमज्जत् । तत्पुष्करपर्णेऽप्रथयत् । यदप्रथयत् । तत्पृथिव्यै पृथिवित्वम् । अभूद्वा इदमिति । तद्भूम्यै भूमित्वम्" इति । एवं सर्वत्रोदाहार्यम् । व्याकरणपूर्वकस्य पदार्थज्ञानस्यावश्यंभावित्वादेव देवैः प्रार्थित इन्द्रो व्याकरणं निर्ममे । एतच्च षष्ठकाण्डे चतुर्थप्रपाठक ऐन्द्रवायवग्रहब्राह्मणे श्रूयते—"वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुच्यते" इति । पराची प्रकृतिप्रत्ययविभागरहिता । मध्यतोऽवक्रम्य विभागं कृत्वेत्यर्थः । आथर्वणिकास्तु ऋग्वेदादिवद्व्याकरणमपि वेदितव्यमित्यामनन्ति—"द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति पराचैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते" इति । कात्यायनोऽपि व्याकरणप्रयोजनान्युदाजहार—"रक्षोहागमलघ्वसंदेहाः प्रयोजनम्" इति । स्वरवर्णविपर्यासरूपो विप्लवो वेदस्य मा भूदिति व्याकरणेन वेदो रक्षणीयः । 47488

विप्लवे तु बाधं पठन्ति—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति ।

इन्द्रस्त्वष्टुः पुत्रं विश्वरूपाख्यं जघानेति त्वष्टा सोमयागे नेन्द्रमुपाह्वयत् । इन्द्रश्च यज्ञविघ्नं कृत्वा बलात्सोमं पीत्वा जगाम । अवशिष्टेन सोमरसेनेन्द्रस्याभिचारं कर्तुं [त्वष्टा] "स्वाहेन्द्रशत्रुर्वर्धस्व" इत्यनेन मन्त्रेणाजुहोत् । तत्र शत्रुशब्दो घातकमाचष्टे । भो उत्पत्स्यमानपुरुषेन्द्रस्य घातकस्त्वं वर्धस्वेति विवक्षित्वा मन्त्रमुच्चारितवान् । तदानीं तत्पुरुषसमासत्वादन्तोदात्तेन भवितव्यम् । प्रमादात्त्वनेनाऽऽद्युदात्तो मन्त्रः प्रयुक्तः । स च स्वरो बहुव्रीहौ समासे लभ्यः । ततश्चेन्द्रो घातको यस्येत्यर्थे पर्यवसानादिन्द्रेण वध्यो वृत्र उद-

१ क. °गृह्यते ।

( वत्सापाकरणार्था मन्त्राः )

पद्यत। तस्माच्च वेदस्य रक्षा कर्तव्या। तथा प्रकृतौ दर्शपूर्णमासेष्टौ "अग्नये जुष्टं निर्वपामि" इति मन्त्र आम्नातः। स च विकृतावैन्द्राग्नेष्टावतिदिष्टः। तत्र कर्मसमवेतार्थप्रकाशनायाग्निपदं परित्यज्य "इन्द्राग्निभ्यां जुष्टं निर्वपामि" इत्यूहनीयः। स चोहो व्याकरणानभिज्ञेन कर्तुमशक्यः। तथा "वेदोऽध्येयो ज्ञेयश्च" इत्यागमेन ज्ञेयत्वं विहितम्। तच्च प्रकृतिप्रत्ययादिनिर्णयं विना न संभवति। तथा बृहस्पतिनाऽध्याप्यमान इन्द्रो दिव्यं वर्षसहस्रमधीयानोऽपि यदा शब्दानामन्तं न जगाम तदानीमिन्द्रादिभिर्धातुप्रातिपदिकप्रत्ययादेशादिरूपा उपायाः कल्पिताः। उपायमन्तरेण सर्वे शब्दाः कथं ज्ञातुं शक्यन्ते। तथा "स्थूलपृषतीमालभेत" इत्यत्र स्थूला चासौ पृषती चेति विग्रहे पशुशरीरगतं स्थौल्यमुक्तं भवति, स्थूलानि पृषन्ति यस्यामित्यत्र शरीरगतवर्णविशेषरूपाणां बिन्दूनां स्थौल्यमुक्तं भवतीत्ययं संदेहः स्वरनिर्णयमन्तरेण नापैति। तस्माद्रक्षोहादीनि पञ्च प्रयोजनानि। तस्मात्प्रमाणत्वात्सप्रयोजनत्वाच्च व्याकरणमारब्धव्यम्।

इषेत्वेत्यादिशब्दानां प्रक्रियां शब्दसंग्रहे।
अवोचं स्वरमात्रं तु वैशद्याय पुनर्ब्रुवे॥

इषि प्रातिपदिके गत इकारः "फिषोऽन्त उदात्तः" [फि० पा० १ सू० १] इत्युदात्तः। फिडिति प्रातिपदिकसंज्ञा। इषित्यत्र षकारस्यान्तिमत्वेऽपि "स्वरविधौ व्यञ्जनमविद्यमानवद्भवति" इत्युक्तत्वादिकार एवान्तिमः। एकारस्य सुप्त्वात् "अनुदात्तौ सुप्पितौ" [पा० ३-१-४] इत्यनुदात्तत्वे प्राप्ते तदपवादः "सावेकाचस्तृतीयादिर्विभक्तिः" [पा० ६-१-१६८] इति। सप्तमीबहुवचने परतः स्थिते तत्प्रातिपदिकमेकाच्कं तस्मादुत्तरा तृतीयादिर्विभक्तिरुदात्ता भवति। "अनुदात्तं पदमेकवर्जम्" [पा० ६-१-१५८] उदात्तः स्वरितो वा यस्य वर्णस्य विधीयते तं वर्जयित्वा शिष्टं पदमनुदात्तं भवति। तत्रास्मिन्पद एकारस्योदात्तत्वविधानादिकारोऽनुदात्तः। नन्विकारस्यापि पूर्वमुदात्तत्वं विहितं ततस्तं वर्जयित्वा विभक्तेरनुदात्तत्वमस्त्विति चेन्न। प्रथमतः प्रातिपदिकस्वरेऽवस्थिते सति पश्चाद्विधीयमानत्वेन विभक्तिस्वरस्य प्रबलत्वात्। सति शिष्टस्वरो बलवानिति हि मर्यादा। तस्मादनुदात्तादिकमुदात्तान्तमिष इति पदम्। त्वेति पदमनुदात्तम्। युष्मच्छब्दस्याऽऽष्टमिकापादादावादेशत्वात्। "अनुदात्तं सर्वमपादादौ" [पा० ८-१-१८] इति हि तत्रानुवर्तते। संहितायामुदात्तादेकारादुत्तरत्वेन तस्य "उदात्तादनुदात्तस्य स्वरितः"

[ पा० ८-४-६६ ] इति स्वरितत्वम् । ततः स्वरितान्तमिदं वाक्यम् । एवमूर्जे त्वेति वाक्यं योज्यम् । तयोर्वाक्ययोः संहितायाम् " आद्गुणः " [ पा० ६-१-८७ ] इत्योकारे गुणे स्वरिते प्राप्ते " पूर्वत्रासिद्धम् " [ पा० ८-२-१ ] इति स्वरितत्वासिद्ध्याऽनुदात्तयोः पूर्वोत्तरवर्णयोः स्थाने विहित ओकारोऽनुदात्तः । तस्योदात्तादुत्तरत्वेन स्वरितत्वे प्राप्ते तदपवादः " उदात्तस्वरितपरस्य सन्नतरः " [ पा० १-२-४० ] इति । यस्मादनुदात्तात्परत उदात्तः स्वरितो वा वर्तते तस्यानुदात्तस्यातिनीचोऽनुदात्तो भवति । एतावता यथाम्नानमिषे त्वोर्जे त्वेति सिद्धम् । "उणादीन्यव्युत्पन्नानि प्रातिपदिकानि" इतिमते वायुशब्दस्य फिट्स्वरेणान्तोदात्तत्वादवशिष्ट आकारोऽनुदात्तः । विभक्तेः सुप्त्वादनुदात्तत्वे सत्युदात्तादुत्तरत्वेन स्वरितत्वम् । स्थशब्दस्य " तिङ्ङतिङः" [पा० ८-१-२८] इति [निघातः]। अतिङन्तात्परं तिङन्तं निहन्यते। निघातो नामानुदात्तः । "स्वरितात्संहितायामनुदात्तानाम्" [पा० १-२-३९] इति स्थशब्दगतस्यानुदात्तस्य स्वरितादुत्तरत्वेनैकश्रुतिर्भवति । तां प्रचय इत्याचक्षतेऽध्यापकाः । एवमुपायवः स्थेति वाक्यं योज्यम् । तयोर्वाक्ययोः संहितायामोकारः प्रचयः । प्रचयानुदात्तयोरुभयोः स्थाने विहितस्यापि द्वैरूप्यस्य युगपदसंभवात्पर्यायेण तथात्वे स्थानिवद्भावादेकस्मिन्पक्षे प्रचयः। पक्षान्तरे तु स्थानिवद्भावादनुदात्तत्वे स्वरितात्संहितायामिति प्रचयः । पाशब्दस्य सन्नतरत्वम् । देवशब्दस्य फिट्स्वरेणान्तोदात्तत्वात्संहितायामोकारोऽप्युदात्तः । युष्मच्छब्दादेशश्चानुदात्तः । संहितायां स्वरितः । " चितः " [ पा० ६-१-१६३ ] चित्प्रत्यययुक्तस्य समुदायस्यान्त उदात्तः स्यात् । ततः सवितृशब्दे तृचप्रत्ययस्य चकारेत्त्वात्सवितृशब्दस्य कृदन्तत्वेन प्रातिपदिकत्वाद्वाऽन्तोदात्तत्वम् । संहितायां सेत्यस्य प्रचयः । त्विशब्दस्योदात्तपरत्वादिकारः सन्नतरः । " उपसर्गाश्चाभिवर्जम् " अभिव्यतिरिक्ता उपसर्गाश्चाऽऽद्युदात्ता इति प्रशब्द उदात्तः । अर्पयत्वित्यस्य निघाते " एकादेश उदात्तेनोदात्तः " [ पा० ८-२-५ ] उदात्तेन सह य एकादेशः स उदात्तः स्यादिति सवर्णदीर्घ उदात्तः । तस्मादुत्तरेषां स्वरितप्रचयौ । तुशब्दस्य संहितायां सन्नतरत्वम् । श्रेष्ठतमायेत्यत्र " ञ्नित्यादिर्नित्यम् " [ पा० ६-१-१९७ ] ञिति निति च प्रत्यये परतः पूर्वस्याऽऽदिरुदात्तः स्यादिति श्रेष्ठशब्दगतस्येष्ठन्प्रत्ययस्य नित्त्वाच्छ्रेष्ठशब्दस्याऽऽदिरुदात्तः । प्रत्ययस्यानुदात्तस्वरितौ । तमपः पित्त्वाद्विभक्तेः सुप्त्वाच्चानुदात्तत्वे सति पश्चात्प्रचयसन्नतरत्वं पूर्ववत् ।

१ क. ग. °म् । औणा° । २ ख. °यात्वे ।

" नब्विषयस्यानिसन्तस्य " इसन्तव्यतिरिक्तस्य नपुंसकलिङ्गविषयस्य प्रातिपादिकस्याऽऽदिरुदात्तः स्यादित्यनेन कर्मशब्दस्याऽऽदिरुदात्तः। इतरयोर्यथायोगमनुदात्ते सति स्वरितप्रचयौ सन्नतरत्वं च पूर्ववत्। आप्यायध्वमित्यत्रोपसर्ग उदात्तः। शिष्टस्यानुदात्तत्वे सति स्वरितप्रचयौ। " आमन्त्रितस्य च " [पा० ८-१-१९] पदादुत्तरस्य च संबोधनान्तस्य सर्वस्यानुदात्तः स्यादिति अघ्निया शब्दस्य निघाते सति संहितायां पूर्वाभ्यां प्रचयाभ्यां सह प्रचयः। देवभागशब्दे " समासस्य " [पा० ६-१-२२३] इत्यन्तोदात्ते सति विभक्त्या सहैकादेशस्वरः। संहितायामाद्यौ द्वौ प्रचयौ। तृतीयः सन्नतरः। ऊर्जःपयःशब्दयोर्नपुंसकत्वादाद्युदात्तत्वम्। मतुपो ङीपश्च पित्त्वादनुदात्तत्वम्। ततो यथायोगं स्वरितप्रचयसन्नतराः। प्रजाशब्दे प्रातिपदिकमन्तोदात्तं टाबनुदात्तस्तयोरेकादेश उदात्तः। शेषं पूर्ववत्। " नञ्सुभ्याम् " [पा० ६-२-१७२] बहुव्रीहिसमासे नञ्सु इत्येताभ्यामुत्तरस्य पदस्यान्त उदात्तः स्यादित्यनमीवायक्ष्मशब्दयोरन्तोदात्तत्वे सति शेषमुन्नेयम्। न चात्र समासस्येत्यन्तोदात्तत्वं सिध्यति " बहुव्रीहौ प्रकृत्या पूर्वपदम् " [पा० ६-२-१] इत्युक्तपूर्वपदप्रकृतिस्वरत्वमपवदितुं नञ्सुभ्यामिति सूत्रस्यापेक्षितत्वात्। निपाता आद्युदात्ता इति माशब्द उदात्तः। व इत्येतत्पूर्ववत्। स्तेनशब्दस्य फिट्स्वरः। ईशतेत्यस्य निघातः। मेति पूर्ववत्। अघेन क्रौर्येण शंसो विशसनं वधो यस्य सोऽयमघशंसः। ततो बहुव्रीहिस्वरेणाघ इत्यन्तोदात्तः। रुद्रहेतिशब्दयोः फिट्स्वरः। परिशब्दो निपातत्वादाद्युदात्तः। वो वृणक्त्विति शब्दावनुदात्तौ। ध्रुवशब्दस्य फिट्स्वरे सति टाप्प्रत्ययेन विभक्त्या सहैकादेशस्वरः। अस्मिन्नित्यत्र विभक्तेः " सावेकाचः " [पा० ६-१-१६८] इत्युदात्तत्वम्। गोपतावित्यत्र "पत्यावैश्वर्ये" [पा० ६-२-१८] [इति] ऐश्वर्यार्थे पतिशब्दे परतः पूर्वपदस्य प्रकृतिस्वरत्वं भवति। ततो गोशब्दस्योदात्तत्वे सति शिष्टस्यानुदात्तस्वरितप्रचयाः। स्यातेत्यस्य निघातप्रचयौ। बह्वीरिति ङीष्प्रत्ययस्योदात्तत्वे सवर्णदीर्घोऽप्युदात्तः। यजमानस्येत्यत्र " धातोः " [पा० ६ १ १६२] धातोरन्त उदात्तः स्यादिति जकारात्पूर्वाकार उदात्तः। शपः पित्त्वादनुदात्तत्वम्। शानचः " चितः " [पा० ६-१-६३] इत्यन्तोदात्तत्वे प्राप्ते तदपवादः " तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" [पा० ६-१ १८६] तासिप्रत्ययादनुदात्तेतो धातोर्ङितो धातोरकारोपदेशाच्चोत्तरस्य लकारस्य स्थाने विहितं यत्सार्वधातुकं तदनुदात्तं भवति ह्नुङ्, अपह्नवे, इङ्, अध्ययने, इत्येतौ धातू वर्जयित्वा। अत्र शबन्तस्य यजेत्यस्या-

वुपदेशत्वात्तदुत्तरः शानजनुदात्तः । पशूनित्यत्र फिट्स्वर एकादेशस्वरश्च । पाहीत्यस्य निघाते सति स्वरितप्रचयौ ।

संबन्धश्च श्रुतिव्याख्यामीमांसाव्याकृतिस्वरैः ।
चतुष्प्रकारैराद्योऽयमनुवाकः समापितः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ प्रथमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

यज्ञस्य घोषदसि प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आ वहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे देवानां परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यक्पर्व ते राध्यासमाच्छेत्ता ते मा रिषं देवबर्हिः शतवल्शं वि रोह सहस्रवल्शाः (१) वि वयꣳ रुहेम पृथिव्याः संपृचः पाहि सुसंभृता त्वा सं भराम्यदित्यै रास्नाऽसीन्द्राण्यै संनहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते माऽऽस्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना हराम्युर्वन्तरिक्षमन्विहि देवंगममसि ॥

( सहस्रवल्शा अष्टात्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( बर्हिराहरणम् )

( अथ प्रथमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

यज्ञस्य । घोषत् । असि । प्रत्युष्टमिति प्रति—उष्टम् । रक्षः । प्रत्युष्टा इति प्रति—उष्टाः । अरातयः । प्रेति । इयम् । अगात् । धिषणा । बर्हिः । अच्छ । मनुना । कृता । स्वधयेति स्व—धया । वितष्टेति वि—तष्टा । ते । एति । वहन्ति । कवयः । पुरस्तात् । देवेभ्यः । जुष्टम् । इह । बर्हिः । आसद इत्या—सदे । देवानाम् । परिषूतमिति परि—सूतम् । असि । वर्षवृद्धमिति वर्ष—वृद्धम् । असि । देवबर्हिरिति देव—बर्हिः । मा । त्वा । अन्वक् । मा । तिर्यक् । पर्व । ते । राध्यासम् । आच्छेत्तेत्या—छेत्ता । ते । मा । रिषम् । देवबर्हिरिति देव—बर्हिः । शतवल्शमिति शत—वल्शम् । वीति । रोह । सहस्रवल्शा इति सहस्र—वल्शाः । ( १ ) वीति । वयम् । रुहेम । पृथिव्याः । संपृच इति सं—पृचः । पाहि । सुसंभृतेति सु—संभृता । त्वा । समिति । भरामि । अदित्यै । रास्ना । असि । इन्द्राण्यै । संनहनमिति सं—नहनम् । पूषा । ते । ग्रन्थिम् । ग्रथ्नातु । सः । ते । मा । एति । स्थात् । इन्द्रस्य । त्वा । बाहुभ्यामिति बाहु—भ्याम् । उदिति । यच्छे ।

बृहस्पतेः । मूर्ध्ना । हरामि । उरु । अन्तरिक्षम् । अन्विति । इहि । देवंगममिति देवं—गमम् । असि ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रथमानुवाके वत्सापाकरणमुक्तम् । द्वितीये[1] बर्हिराहरणमुच्यते । तयोरनुक्रमे पाठः प्रमाणमिति मीमांसिष्यते । पौर्णमास्यां[2] सांनाय्याभावे वत्सापाकरणाभावादन्वाधानस्यानन्तरममावास्यायामसंनयतोऽपि[3] बर्हिरेव प्रथमं संपादनीयम् । अत एव बौधायनः—"यद्यु वै न संनयति बर्हिः प्रतिपदेव भवति" इति । अस्मिन्ननुवाके यज्ञस्य घोषदसीत्ययमाद्यो मन्त्रः । ब्राह्मणेन[4] तु तस्मात्पूर्वमन्यो मन्त्रः शाखान्तरादिन्यायेन[5] व्याख्यातस्तस्य विनियोगमाह बौधायनः—" अथ जघनेन गार्हपत्यं तिष्ठन्नसिदं[6] वाऽश्वपर्शुं वाऽऽदत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति " इति । आपस्तम्बः—" उत्तरेण गार्हपत्यमसिदोऽश्वपर्शुरनडुत्पर्शुर्वा विहितो भवति देवस्य त्वा सवितुः प्रसव इत्यसिदमश्वपर्शुं वाऽऽदत्ते तूष्णीमनडुत्पर्शुम् " इति । असिदो दर्भच्छेदनसाधनं शस्त्रम् । पर्शुः पार्श्वगतास्थिखण्डम् । तच्च तीक्ष्णधारत्वाल्लवनसमर्थम्[7] । मन्त्रार्थस्तु—भो लवनसाधन प्रेरकस्य देवस्य प्रेरणे सति देवतासंबन्धिभ्यां बाहुभ्यां हस्ताभ्यां च त्वां स्वीकरोमीति । मणिबन्धादधस्तनौ बाहू उपरितनौ हस्तौ । अत्र ब्राह्मणम्—"देवस्य त्वा सवितुः प्रसव इत्यश्वपर्शुमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै " [ब्रा० का० ३ प्र० २ अ० २] इति । यतिर्नियतिः । यद्यद्यज्ञसाधनमुपादेयं तत्सर्वं पोषकस्य देवस्य हस्ताभ्यामेवेति नियमः । अश्वपर्शुना सह बर्हिः प्राप्तुं गच्छेदिति सार्थवादेन

---

१ ख. 'येऽनुवाके ब' । २ ख. 'स्यां तु सां' । ३ ख. 'रणप्रयोजनाभा' । ४ ख. 'णे तु । ५ ख. 'दिहाऽऽनीय ये' । ६ ख. 'सिदमश्व' । ७ ख. पार्श्वास्थि तच्च खड्गवत्तीक्ष्ण' ।

( बर्हिराहरणम् )

वाक्येन विधिरुन्नीयते, " यो वा ओषधीः पर्वशो वेद। नैनाः स हिनस्ति। प्रजापतिर्वा ओषधीः पर्वशो वेद। स एना न हिनस्ति। अश्वपर्श्वा बर्हिरच्छैति। प्राजापत्यो वा अश्वः सयोनित्वाय। ओषधीनामहिꣳसायै " [ ब्रा० का० ३ प्र० २ अ० २ ] इति। प्रजापत्यक्षिपरिणामोऽश्व इत्यश्वमेधविधौ श्रूयते—"प्रजापतेरक्ष्यश्वयत्। तत्परापतत्। तदश्वोऽभवत्। यदश्वयत्। तदश्वस्याश्वत्वम् " इति। ततोऽश्वस्य प्राजापत्यत्वात्प्रजापतेश्चौषधीषु तत्तत्पर्वाभिज्ञत्वेन पर्वणोः संधौ छेत्तुं प्रवृत्तस्य पर्वभङ्गकर्तृत्वाभावेनाश्वपर्श्वा प्रजापतिरूपया दर्भच्छेदे हिंसा न भवतीति। द्रव्यान्तरपरित्यागेनाश्वपर्शुस्वीकारस्तद्योनिभूतप्रजापतिसाहित्यार्थम्। अस्ति च तत्साहित्यं कारणस्य कार्येऽनुगतत्वात्। तस्मात्प्रजापतिद्वारेण कर्तुर्हिंसादोषाभाव उपपद्यते॥

## यज्ञस्य घोषदसि—

अश्वपर्श्वभिमन्त्रणे प्रथममन्त्रं विनियुङ्क्ते बौधायनः—" आदायाभिमन्त्रयते यज्ञस्य घोषदसीति " इति।

आपस्तम्बस्तु ब्रूते—" यज्ञस्य घोषदसीति गार्हपत्यमभिमन्त्र्य " इति।

घोषदिति धनस्य नाम। भो अश्वपर्शो त्वं यज्ञस्य साधनं द्रव्यमसि। भो गार्हपत्येति वा योजनीयम्। अत्र ब्राह्मणम्—"यज्ञस्य घोषदसीत्याह। यजमान एव रयिं दधाति " [ ब्रा० का० ३ प्र० २ अ० २ ] इति। रयिं धनम्॥

## प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः—

बौधायनः—" गार्हपत्ये प्रतितपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इति " इति।

आपस्तम्बस्तु " प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वाऽसिदं प्रतितपति न पर्शुम् " इति।

अस्मिँल्लवनसाधने निगूढं रक्षसामथ वैरिणां च स्वरूपमत्यन्तं दग्धं भवतु। मन्त्रप्रयोजनमाह—" प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह। रक्षसामपहत्यै" [ ब्रा० का० ३ प्र० २ अ० २ ] इति॥

## प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आ वहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे—

---

१ ख. विधत्ते यो। २ क. ग. °पतिप°।

बौधायनः—"आहवनीयमभिप्रैति प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिति " इति । स एव मन्त्रशेषं पृथग्विनियुङ्क्ते—" इह बर्हिरासद इति वेदिं प्रत्यवेक्षते " इति ।

आपस्तम्बस्तु कृत्स्नमन्त्रस्यैकमेव विनियोगमाह—" प्रेयमगादित्युक्त्वोर्वन्तरिक्षमन्विहीति प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति " इति ।

इयमश्वपर्शुर्विद्यारूपत्वेनाभिज्ञानवती बर्हिरा[2]गच्छति। कीदृशी सा। प्रजापतिरूपेण मनुना स्वचक्षुषो निर्मिता। अश्वभक्षितान्नलक्षणया स्वधया विशेषेण तीक्ष्णीकृता । यस्मात्ते पूर्वे कवयो विद्वांसोऽनुष्ठातारः पूर्वस्या दिशो बर्हिरानयन्ति तस्मादियं [3]प्रागच्छति। हविर्भुग्भ्यः प्रियं बर्हिरिह वेद्यामासादयितव्यम्। अस्य मन्त्रस्य प्रथमभागे पदार्थे तात्पर्यं चाऽऽह—"प्रेयमगाद्धिषणा बर्हिरच्छेत्याह। विद्या वै धिषणा। विद्ययैवैनदच्छैति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति। द्वितीयभागस्यार्थे श्रुत्यन्तरप्रसिद्धिमनुमानप्रसिद्धिं चाऽऽह—" मनुना कृता स्वधया वितष्टेत्याह। मानवी हि पर्शुः स्वधाकृता " [ ब्रा० का० ३ प्र० २ अ० २ ] इति । अन्नेनास्थ्याद्युपचयोऽन्वयव्यतिरेकसिद्धः। तृतीयभागे पदार्थे पुरस्ताच्छब्दतात्पर्यं चाऽऽह—" त आवहन्ति कवयः पुरस्तादित्याह । शुश्रुवाꣳसो वै कवयः। यज्ञः पुरस्तात्। मुखत एव यज्ञमारभते " [ ब्रा० का० ३ प्र० २ अ० २ ] इति। होमाधारस्याऽऽहवनीयस्य पूर्वदिक्स्थत्वाद्यज्ञः पुरस्ताद्वर्तत इत्युच्यते । तच्छब्दपाठेन पुरस्तादेव यज्ञ आर[4]ब्धो भवति। अपि च तत्पाठे दिगन्तरप्रयुक्तं वैकल्यं नास्तीत्याह—" अथो यदेतदुक्त्वा यतः कुतश्चाऽऽहरति । तत्प्राच्या एव दिशो भवति " [ ब्रा० का० ३ प्र० २ अ० २ ] इति। चतुर्थभाग आसद इत्यस्य तात्पर्यमाह—"देवेभ्यो जुष्टमिह बर्हिरासद इत्याह। बर्हिषः समृद्ध्यै। कर्मणोऽनपराधाय " [ ब्रा० का० ३ प्र० २ अ० २ ] इति। आसादयितव्यमित्युक्ते यावद्वेद्यास्तरणस्य युक्तं पर्याप्तं तावतः सूचितत्वादेतत्पदोच्चारणं समृद्ध्यै संपद्यते। ततो न्यूनत्वलक्षणः कर्मणोऽपराधो न भविष्यति ॥

## देवानां परिषूतमसि वर्षवृद्धमसि—

बौधायनः—" दर्भस्तम्बं [5]गृह्णीते यावन्तमलं प्रस्त[6]रणाय मन्यते देवानां परिषूतमसीत्यथैनमूर्ध्वमुन्मार्ष्टि वर्षवृद्धमसीति " इति।

---

१ ख. °नः " अथाऽऽह° । २ ख. °र्मुं प्राचीं ग° । ३ ख. प्राङ्मुखी गच्छ° । ४ क. °रभ्यो भ° । ५ ख. परिगृह्णाति । ६ ख. °स्तराय ।

आपस्तम्बस्तु द्वयोरेकमन्त्रत्वमभिप्रेत्यैकमेव विनियोगमाह—"देवानां परिषूतमसि वर्षवृद्धमसीति दर्भान्परिषौति" इति।

भो दर्भजात त्वं देवानामर्थे परिगृहीतमसि न तु मया स्वगृहाच्छादनाद्यर्थमतो न मे लवनदोषोऽस्ति। वर्षेण पुनर्वृद्धिसंभवात्तवापि न हानिः। परिगृहीतस्य सर्वस्य देवार्थत्वं न त्वेकदेशस्येत्येवं मन्त्राभिप्रायं दर्शयति—"देवानां परिषूतमसीत्याह। यद्वा इदं किंच। तद्देवानां परिषूतम्" [ब्रा० का० ३ प्र० २ अ० २] इति। अपि च यथा लोके कश्चिद्भृत्यो राजनियोगाद्ग्रामेषु गत्वा बलाद्गृह्यमाणं दधिक्षीरादिद्रव्यं वसुमत्तमाय राज्ञे न तु मदर्थमिति प्रजानामग्रे प्रतिप्रोच्य निर्भयः सर्वथेदं[1] हरिष्यामीति ब्रूते तद्वदिदमित्यभिप्रायान्तरमाह—"अथो यथा वस्यसे प्रतिप्रोच्याऽऽहेदं करिष्यामीति। एवमेव तदध्वर्युर्देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति। आत्मनोऽहिंसायै" [ब्रा० का० ३ प्र० २ अ० २] इति। स्तम्बस्य स्वीकार्यस्यैकत्वं कृत्स्नलवनं च विधत्ते—"यावतः स्तम्बान्परिदिशेत्। यत्तेषामुच्छिꣳष्यात्। अति तद्यज्ञस्य रेचयेत्। एकꣳ स्तम्बं परिदिशेत्। तꣳ सर्वं दायात्। यज्ञस्यानतिरेकाय" [ब्रा० का० ३ प्र० २ अ० २] इति। यज्ञस्य संबन्धि यद्द्रव्यं तस्य यज्ञाद्बहिर्भावोऽतिरेकः[2] स त्वयुक्तः। अकृष्टपच्यानां दर्भादीनां तटाकाद्युदकमनपेक्ष्य वर्षेण वृद्धिः प्रसिद्धेत्याह—"वर्षवृद्धमसीत्याह। वर्षवृद्धा वा ओषधयः" [ब्रा० का० ३ प्र० २ अ० २] इति॥

## देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यक्पर्व ते राध्यासम्—

बौधायनः—"असिदेनोपयच्छति देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यक्पर्व ते राध्यासमिति" इति।

विनियोगद्वयमाहाऽऽपस्तम्बः—"देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यगिति संयच्छति पर्व ते राध्यासमित्यसिदमधिनिदधाति" इति।

हे देवबर्हिस्त्वाऽन्वगपि मा हिꣳसिषं तिर्यगपि मा हिꣳसिषं किं तु ते तव पर्व पुनःप्ररोहस्थानमविनष्टं यथा स्यात्तथा संपादयामि। हिंसाया अन्वक्त्वं दैर्घ्येण द्वैधीभावः। तिर्यक्त्वं ह्रस्वानां खण्डानां सादनम्[3]। बर्हिषो देवसंबन्धस्तादर्थ्यरूप इत्यभिप्रायमाह—"देवबर्हिरित्याह। देवेभ्य एवैनत्करोति" [ब्रा० का० ३ प्र० २ अ० २] इति। निषेधो दोषपरिहारायेत्याह-"मा त्वाऽन्वङ्मा तिर्यगित्याहाहिꣳसायै" [ब्रा० का० ३ प्र० २ अ० २]

---

१ ख. 'र्वेदं। २ ख. 'र्भावोऽति'। ३ ख. संपादनम्।

इति । पुनःप्ररोहसमृद्ध्यर्थं पर्वसादनमित्याह—“ पर्व ते राध्यासमित्याहर्द्ध्यै ” [ ब्रा० का० ३ प्र० २ अ० २ ] इति ॥

## आच्छेत्ता ते मा रिषम्—

बौधायनः—“ आच्छिनत्ति आच्छेत्ता ते मा रिषमिति ” इति ।

तद्वदापस्तम्बोऽपि । इत ऊर्ध्वं यत्र द्वयोर्विशेषाभावस्तत्रान्यतरस्यैव विनियोग उदाहरिष्यते । हे देवबर्हिस्त्वाहमाच्छेत्ताऽपि मन्त्रसामर्थ्यान्मा हिंसिषम् । अत्र मा रिषमित्येतं मन्त्रं पठतस्तदर्थाभिज्ञस्य च स्वकीयं किमपि न विनश्यतीत्याह—“ आच्छेत्ता ते मा रिषमित्याह । नास्याऽऽत्मनो मीयते । य एवं वेद ” [ ब्रा० का० ३ प्र० २ अ० २ ] इति ॥

## देवबर्हिः शतवल्शं वि रोह—

कल्पसूत्रम्—“ देवबर्हिः शतवल्शं विरोहेत्यालवानभिमृशति ” इति ।

लूनावशिष्टमूलान्यालवाः । शतवल्शमनन्तशाखम् । बर्हिषः पुत्रादिवदुपकारकत्वात्तत्प्ररोहार्थं[2] यत्नः पुत्रोत्पत्त्यै भवतीति व्याचष्टे—“ देवबर्हिः शतवल्शं[1] विरोहेत्याह । प्रजा वै बर्हिः । प्रजानां प्रजननाय ” [ ब्रा० का० ३ प्र० २ अ० २ ] इति ॥

## सहस्रवल्शा वि वयꣳ रुहेम—

कल्पः—“ सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशति ” इति ।

मन्त्रस्याऽऽशीःपरत्वं स्पष्टमित्याह—“ सहस्रवल्शा वि वयꣳ रुहेमेत्याह । आशिषमेवैतामाशास्ते ” [ ब्रा० का० ३ प्र० २ अ० २ ] इति ।

## पृथिव्याः संपृचः पाहि—

कल्पः “ पृथिव्याः संपृचः पाहीत्यनधो निदधाति ” इति ॥

भोस्तृणकाष्ठाद्याधार पृथिव्याः संपर्कादिमं दर्भं रक्ष । द्रव्यान्तरस्योपरि स्थापने प्रयोजनमाह—“पृथिव्याः संपृचः पाहीत्याह प्रतिष्ठित्यै” [ब्रा० का० ३ प्र० २ अ० २] इति । यदि लूनमिमं दर्भं पृथिव्यां निदध्यात्तदानीमुच्छिष्टादिस्पर्शेन त्याज्यत्वे सति दर्भोऽप्रतिष्ठितः स्यात् । पूर्वं प्रस्तराख्यस्य दर्भमुष्टेः समन्त्रकलवनं प्रपञ्चितम् । इदानीं मुष्ट्यन्तराणां मन्त्रमन्तरेणैव लवनं विधत्ते—“ अयुङ्गायुङ्गान्मुष्टीँलुँनोति । मिथुनत्वाय प्रजात्यै ” [ ब्रा० का० ३ प्र० २ अ० २] इति । अयुङ्गत्वं युग्मरूपसमसंख्याराहित्यम् । अत्र विषमसंख्या-

---

१ ख. 'वल्शं शतशा' । २ ख. 'हार्थेयमाशीः पु' ।

पक्षाणां बहुविधत्वादशेषार्थसंग्रहार्था वीप्सा । तान्पक्षान्दर्शयति बौधायनः—"तूष्णीमत ऊर्ध्वमयुजो मुष्टीलुँनाति त्रीन्वा पञ्च वा सप्त वा नवैकादश वा" इति । अमन्त्रकलवने ब्राह्मणान्तरमुदाजहाराऽऽपस्तम्बः—"प्रस्तरमेव मन्त्रेण दाति तूष्णीमितरदिति वाजसनेयकम्" इति । समन्त्रकामन्त्रकयोश्च लवनयोर्द्वित्वेन मिथुनत्वं तेन च लौकिकस्त्रीपुरुषरूपमिथुनस्मरणात्तद्द्वाराऽऽत्मप्रजोत्पत्तये लवनद्वयं संपद्यते ॥

## सुसंभृता त्वा संभराम्यदित्यै रास्नाऽसि—

अथ दर्भमयं शुल्वं भूमौ प्रसार्य तस्मिल्लूँना मुष्टयो निधातव्याः । तत्र पाठक्रमादर्थक्रमो बलीयानिति न्यायेन मन्त्रद्वयस्य व्यत्यासेन विनियोगः कल्पे दर्शितः—

"अदित्यै रास्नाऽसीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्य" इति ।

हे रज्जो त्वं भूमेः काञ्ची गुणस्थानीया रशनाऽसि । हे दर्भमुष्टिसमुदाय त्वां सुष्ठु संग्रहितुं योग्यया रशनया संगृह्णामि । ब्राह्मणं तु पाठक्रमेणैव व्याचष्टे—"सुसंभृता त्वा संभरामीत्याह । ब्रह्मणैवैनत्संभरति । अदित्यै रास्नाऽऽसीत्याह । इयं वा अदितिः । अस्या एवैनद्रास्नां करोति" [ब्रा० का० ३ प्र० २ अ० २] इति । दर्भमयत्वेन प्रशस्तत्वाद्रज्जोर्ब्रह्मत्वम् । एनद्दर्भजातम् । एनदेनां रशनाम् ॥

## इन्द्राण्यै संनहनम्—

कल्पः—"इन्द्राण्यै संनहनमिति संनह्यति" इति[३] ।

शुल्बमूलाग्रयोर्मेखलारूपं बन्धनं संनहनम् । तस्येन्द्राणीप्रियत्वं विशदयति—"इन्द्राण्यै संनहनमित्याह । इन्द्राणी वा अग्रे देवतानाꣳ समनह्यत । साऽऽर्ध्नोत् । ऋद्ध्यै संनह्यति" [ब्रा० का० ३ प्र० २ अ० २] इति । येयमिदानीमिन्द्राणीन्द्रपत्नी देवतानां मध्ये श्रेष्ठा वर्तते सा पूर्वस्मिञ्जन्मनि शतसंख्याकान्क्रतूननुतिष्ठता यजमानेन तत्तत्क्रतौ योक्त्रेण बद्धाऽभूत्तद्बन्धनसामर्थ्यादिन्द्राणीत्वरूपां समृद्धिं प्राप्तवती । तस्मात्समृद्ध्यर्थमेवाध्वर्युर्दर्भैः संनह्येत् । किं च बर्हिषः प्रजारूपत्वादिदं संनहनं प्रजानामपरावापाय भवति । तस्माद्ब्रह्मसृष्टावपि प्रजा धमनीभिर्व्याप्ता जायन्त इत्याह—"प्रजा वै बर्हिः । प्रजानामपरावापाय । तस्मात्स्नावसंतताः प्रजा जायन्ते" [ब्रा० का० ३ प्र० २ अ० २] इति ॥

---

१ ख. °ल्लुँनोति । २ क. ग. संभरति । ३ क. °ति । दर्भशु° । ४ ख. °मशैथिल्याय ।

## पूषा ते ग्रन्थिं ग्रथ्नातु—

कल्पः—" पूषा ते ग्रन्थिं ग्रथ्नात्विति ग्रन्थिं करोति " इति ।

हे संनद्धरज्जो तव ग्रन्थिं पोषको देवः करोतु । हे दर्भेति वा योज्यम् । देवताविवक्षायां पूषशब्दस्यैव प्रयोगेऽभिप्रायमाह—"पूषा ते ग्रन्थिं ग्रथ्नात्वित्याह । पुष्टिमेव यजमाने दधाति " [ ब्रा० का० ३ प्र० २ अ० २ ] इति ॥

## स ते माऽऽस्थात्—

कल्पः—" स ते माऽऽस्थादिति पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा " इति ।

हे दर्भ तव निर्बन्धकारी स रज्जुग्रन्थिश्चिरं मा तिष्ठतु । दर्भोपद्रवपरिहाररूपनिषेधफलमाह—" स ते माऽऽस्थादित्याहाहिꣳसायै " [ ब्रा० का० ३ प्र० २ अ० २ ] इति । गूहनं विधत्ते—"पश्चात्प्राञ्चमुपगूहति । पश्चाद्वै प्राचीनꣳ रेतो धीयते । पश्चादेवास्मै प्राचीनꣳ रेतो दधाति " [ ब्रा० का० ३ प्र० २ अ० २ ] इति । तं ग्रन्थिशेषं रज्जोरग्रतो द्विगुणीकृत्य रज्जुवेष्टनस्थानात्पश्चादाकृष्य यथा प्रागग्रं भवति तथोपगूहेत् । पुरुषोऽपि पश्चादवस्थाय प्राचीनꣳ रेतः सिञ्चति । तस्मादीदृशं गूहनमपत्यार्थियजमानार्थं रेतःसिञ्चनरूपेण पर्यवस्यति ॥

## इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे—

कल्पः—" इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्युद्यच्छते " इति ।

इन्द्रशब्दप्रयोगेणेन्द्रदत्तस्य[1] सामर्थ्यस्य सिद्धिं दर्शयति—" इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्याह । इन्द्रियमेव यजमाने दधाति " [ ब्रा० का० ३ प्र० २ अ० २ ] इति ॥

## बृहस्पतेर्मूर्ध्ना हरामि—

कल्पः—" बृहस्पतेर्मूर्ध्ना हरामीति शीर्षन्नधिनिधत्ते " इति ।

प्राशस्त्याद्ब्रह्मत्वेन बृहस्पतिं स्तौति—"बृहस्पतेर्मूर्ध्ना हरामीत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनद्धरति" [ब्रा० का० ३ प्र० २ अ० २] इति ॥

## उर्वन्तरिक्षमन्विहि—

कल्पः—" एत्युर्वन्तरिक्षमन्विहीति " इति ।

एत्यागच्छेदित्यर्थः । हे दर्भ निस्तीर्णत्वादन्तरिक्षं गमनायानुकूलमतस्त्वं

---

१ ख. 'न्द्रवत्त' ।

( बर्हिराहरणम् )
गच्छ। इहीत्यस्य शब्दस्य विवक्षां दर्शयति—"उर्वन्तरिक्षमन्विहीत्याह गत्यै" [ ब्रा० का० ३ प्र० २ अ० २ ] इति॥

## देवंगममसि ॥

कल्पः—" एत्योत्तरेण गार्हपत्यमनधः सादयति देवंगममसीति " इति।

असीत्यस्याभिप्रायमाह—"देवंगममसीत्याह। देवानेवैनद्गमयति" [ ब्रा० का० ३ प्र० २ अ० २ ] इति। पलाशशाखाया इव बर्हिषो भूमौ स्थापनं निषिध्योच्चप्रदेशस्थापनं विधत्ते—" अनधः सादयति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः। उपरीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै " [ ब्रा० का० ३ प्र० २ अ० २ ] इति॥

अत्र विनियोगसंग्रहः—

यज्ञस्येत्यग्निमामन्त्र्य प्रत्यु दात्रस्य तापनम्।
प्रेयं जपति देवानां दर्भसीमाऽथ मुष्टितः॥
देवेति दर्भान्संयम्य पर्व संस्थाप्य दात्रकम्।
आच्छेच्छिन्द्यादेव मूलं स्पृशेत्स्त्रं च सहेत्यतः॥
पृथिव्युपर्यन्त्रस्थाप्यादित्यै रज्जुं प्रसारयेत्।
सुसंभृद्दर्भाः संभार्या इन्द्राण्या इति बन्धनम्॥
पूषा ग्रन्थिः स ते गूह इन्द्राग्रम्य बृहस्पतेः।
मूर्ध्न्याधायोर्वेत्य चोर्ध्वं स्थापयेद्देवमित्यतः।
अनुवाके द्वितीयेऽस्मिन्मुक्ता एकोनविंशतिः॥

अथ मीमांसा—

तत्र पाठस्यानुक्रमे प्रामाण्यमित्ययमर्थः पञ्चमाध्यायस्य प्रथमपादे विचारितः—

" प्रयाजेषु क्रमो नास्ति विद्यते वा न विद्यते।
श्रुत्यर्थाभावतो मैवं क्रमः पाठान्नियम्यते " इति॥

यथा " अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारम् " इत्यत्र क्त्वाश्रुत्या पञ्चमीश्रुत्या च क्रमः प्रतीयते न तथा प्रयाजेषु श्रुतिरस्ति। " समिधो यजति " " तनूनपातं यजति " इत्यत्र समिद्यागतनूनपाद्यागयोः क्रमवाचिनः शब्दस्यादर्शनात्। यथा वा " अग्निहोत्रं जुहोति " " यवागूं पचति " इत्यत्र यवाग्वा होमसाधनत्वेन पूर्वभावित्वमार्थिकं न तथा समिद्यागस्येतरयागसाधनत्वमस्ति। अतोऽर्थापत्तेरप्यभावा-

नास्ति क्रम इति चेत् । मैवम् । वाक्यपाठेन प्रतीतस्य क्रमस्य बाधकाभावेनाभ्युपेयत्वात् । अनेनैव न्यायेन प्रथमद्वितीयाभ्यामनुवाकाभ्यामुक्तयोर्वत्सापाकरणबर्हिःसंपादनयोः क्रमो द्रष्टव्यः ।

पाठादर्थक्रमो बलीयानित्येतदपि तत्रैव विचारितम्—

" अग्निहोत्रं जुहोतीति यवागूं पचतीति च ।
क्रमः पाठादर्थतो वा पाठात्सर्वत्र दर्शनात् ॥
होमद्रव्यसमुत्पत्त्यै पूर्वं पाकोऽवगम्यते ।
यवाग्वेति श्रुता होमद्रव्यताऽतोऽर्थतः क्रमः " इति ॥

" यवाग्वाऽग्निहोत्रं जुहोति " इति होमद्रव्यत्वं श्रुतम् । अनेनैव न्यायेन " अदित्यै रास्नाऽसि " इति मन्त्रेण रज्जुप्रसारणं पूर्वभावि " सुसंभृता त्वा संभरामि " इति मन्त्रेण दर्भसंभरणं पश्चाद्भावीति द्रष्टव्यम् ।

धिषणा बर्हिरच्छेत्यादौ बर्हिःशब्दार्थो विचारितः प्रथमाध्यायस्य चतुर्थपादे—

" बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः ।
जात्यर्था वा शास्त्ररूढेस्ते स्युः संस्कारवाचिनः ॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः ।
विनाऽपि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः " इति ॥

दर्शपूर्णमासयोः श्रूयते—" बर्हिर्लुनात्याज्यं विलापयति पुरोडाशं पर्यग्नि करोति " इति । तत्र बर्हिराज्यादिशब्दानां शास्त्रे सर्वत्र संस्कृतेष्वेव तृणादिषु प्रयोगात्पीलवादिशब्देषु शास्त्रीयरूढिप्राबल्यस्योक्तत्वाद्यूपाहवनीयादिशब्दवत्संस्कारवाचिनो बर्हिरादिशब्दा इति चेत् । मैवम् । अन्वयव्यतिरेकाभ्यां जातिवाचित्वात् । यत्र यत्र बर्हिरादिशब्दप्रयोगस्तत्र तत्र जातिरित्यस्या व्याप्तेर्लोके वेदे च नास्ति व्यभिचारः । संस्कारव्याप्तेस्तु लौकिकप्रयोगे व्यभिचारो दृश्यते । क्वचिद्देशविशेषे लौकिकव्यवहारे जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते । बर्हिरादाय गावो गताः[1], गव्यमाज्यं, पुरोडाशेन मे माता प्रहेलकं ददातीति । तस्माज्जातिवाचिनः । विचारप्रयोजनं तु बर्हिषा यूपावटमवस्तृणातीत्यत्र विना संस्कारेणाऽऽस्तरणसिद्धिः ॥

अथ व्याकरणम्—

यज्ञस्येत्यत्र फिट्स्वरशेषानुदात्तसुबनुदात्तस्वरिताः । घोषदित्यत्र फिट्स्व-

१ ख. °ताः, कव्यमा° ।

रानुदात्तसन्नतराः । असीत्यत्र निघातस्वरितप्रचयसन्नतराः । अथ विशेषमेव वदामः—प्रत्युष्टमित्यत्र "समासस्य" [ पा० ६-१-२२३ ] इत्यन्तोदात्तत्वे प्राप्ते तदपवादेनाव्ययपूर्वपदप्रकृतिस्वरत्वं प्राप्तम्। तस्याप्यपवादः "गतिकारकोपपदात्कृत्" [ पा० ६-२-१३९ ] तत्पुरुषसमासे गतेः कारकादुपपदाच्चोत्तरं कृत्प्रत्ययान्तं पदं प्रकृतिस्वरं भवतीत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते तस्याप्यपवादः "गतिरनन्तरः" [ पा० ६-२-४९ ] कर्मवाचिनि क्तान्त उत्तरपदे परतः प्रत्यासन्नः पूर्वभाविगतिसंज्ञकः शब्दः प्रकृतिस्वरो भवतीति। प्रतिशब्दस्योपसर्गाश्चाभिवर्जमित्याद्युदात्तः प्रकृतिस्वरः । रक्ष इत्यत्र नब्विषयस्येत्याद्युदात्तः। रातयो धनस्य दातारस्तद्विपरीता अरातयो धनापहारिणः शत्रवः । "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" [ पा० ६-२-२ ] तत्पुरुषसमासे तुल्यार्थतृतीयान्तं सप्तम्यन्तमुपमानवाचकमव्ययं द्वितीयान्तं कृत्यप्रत्ययान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवतीति पूर्वपदस्य प्रकृतिस्वरत्वम् । तच्च समासस्वरस्यापवादः । नञश्च निपाता आद्युदात्ता इति आद्युदात्तः। धिषणेत्यत्र "पृषोदरादीनि यथोपदिष्टम्" [ पा० ६-३-१०९ ] इति मध्योदात्तत्वम् । बर्हिःशब्दस्येसन्तत्वेन नपुंसकस्वराभावेन फिट्स्वर एव। अच्छेति निपातस्वरः। मनुनाशब्दो "वृषादीनां च" [ पा० ६-१-२०३ ] इत्याद्युदात्तः। वितष्टेति प्रत्युष्टवत् । पुरस्तादित्यत्र "आद्युदात्तश्च" [ पा० ३-१-३ ] यः प्रत्ययः स आद्युदात्तो भवतीत्यस्तातिप्रत्ययस्याऽऽदिरुदात्तः। जुष्टशब्दस्य "नित्यं मन्त्रे" [ पा०६-१-२१०] इति मन्त्रविषये "जुष्टार्पिते च च्छन्दसि" [ पा० ६-१-२०९ ] इति जुष्टार्पितशब्दौ नित्यमाद्युदात्तौ भवत इत्याद्युदात्तत्वम् । इहशब्दे हप्रत्यय उदात्तः। आसद इत्यत्र आसादयितव्यमित्यस्मिन्कृत्यप्रत्ययस्यार्थे विहितस्य केन्प्रत्ययस्य नित्वात्सद इत्येतत्पदमाद्युदात्तम् । ततः समासान्तोदात्तत्वं बाधित्वा तत्पुरुषे पूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपोद्य गतेरुत्तरस्य कृदन्तस्य प्रकृतिस्वरत्वम् । परिपूतमित्यत्र परिशब्दो निपातत्वादाद्युदात्तः । पूतशब्दः "षू प्रेरणे" इत्यतो धातोरुत्पन्नः क्तप्रत्ययान्तः। "धातोः" [ पा० ६-१-१६२ ] धातोरन्त उदात्तः। क्तप्रत्ययोऽपि "आद्युदात्तश्च" [ पा० ३-१-३ ] इत्युदात्तः । सति शिष्टत्वादयमेव शिष्यते। ततः "समासस्य" [ पा० ६-१-२२३ ] इत्यन्तोदात्तत्वे प्राप्ते तदपवादत्वेन तत्पुरुषे तुल्यार्थेति सूत्रेणाव्ययपूर्वपदप्रकृतिस्वरत्वं प्राप्तं तदपोद्य गतिकारकेति सूत्रेण कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तन्निवार्य "गतिरनन्तरः" [ पा० ६-२-४९ ] इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादः "परेरभितोभावि मण्डलम्" [ पा०

६-२-१८२] परिशब्दादभितोभाव्यर्थवाचकं पदं मण्डलपदं चान्तोदात्तं स्यात् [इति]। परितोऽभितः सर्वतः सूतं स्वीकृतमिति हि तस्य पदस्यार्थ इति । वर्षवृद्धमित्यत्र कारकादुत्तरस्य कृदन्तस्य प्रकृतिस्वरत्वे प्राप्ते तदपवादः " तृतीया कर्मणि " [ पा० ६ २-४८ ] कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं स्यात् [इति]। देवबर्हिरित्यत्र षष्ठाध्यायोक्तेन "आमन्त्रितस्य च " [ पा० ६-१-१९८ ] इति सूत्रेणाऽऽद्युदात्तः । पूर्वानुवाकगतस्याग्निया इत्यस्य पदात्परत्वेनाष्टमाध्यायोक्तेन " आमन्त्रितस्य च " [ पा० ८-१-१९ ] इति सूत्रेण निघातः । इह तु वाक्यादित्वान्न पदात्परत्वम् । आच्छेत्तेति कृदुत्तरपदप्रकृतिस्वरः । शतवल्शमित्यत्र " बहुव्रीहौ प्रकृत्या पूर्वपदम् " [ पा० ६-२-१ ] इति पूर्वपदप्रकृतिस्वरत्वम् । शतशब्दस्य फिट्स्वरः । सहस्रशब्दः पृषोदरादित्वान्मध्योदात्तः । पृथिवीशब्दे ङीषः प्रत्ययस्वरः ।" उदात्तयणो हल्पूर्वात् " [ पा० ६-१-१७४ ] उदात्तस्य स्थाने यो यण्हल्पूर्वस्तस्मादुत्तरस्य नदीसंज्ञकस्य प्रत्ययस्याजादिविभक्तेश्चोदात्तस्वरत्वं स्यात् । संपृच इत्यत्र क्विप्प्रत्ययान्तत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम् । तद्वत्सुसंभृतेति शब्देऽपि। दितिः खण्डिता न दितिरदितिः। तत्पुरुषे तुल्यार्थेत्यव्ययपूर्वपदप्रकृतिस्वरः । रास्नाशब्दो वृषादिः। इन्द्राण्या इत्यत्रोदात्तयण इति विभक्तिरुदात्ता । संनहनमित्यत्र " लिति " [ पा० ६-१-१९३ ] इत्संज्ञकलकारोपेते प्रत्यये परतः पूर्वमुदात्तं स्यात् । नह्यतिधातोरुपरि ल्युट्प्रत्ययस्यानादेशोऽपि लिद्भवति । ततः कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्रशब्दो वृषादिः। बृहस्पतेरित्यत्र " उभे वनस्पत्यादिषु युगपत् " [ पा० ६-२-१४० ] वनस्पत्यादिषु समासेषु पूर्वोत्तरपदे युगपत्प्रकृतिस्वरे भवतः । बृहच्छब्दः पतिशब्दश्च वृषादिः । मूर्ध्नेत्यत्र " अनुदात्तस्य च यत्रोदात्तलोपः " [ पा० ६-१-१६१ ] इति विभक्तिरुदात्ता । अन्तरिक्षशब्दः पृषोदरादिः । सर्वत्रागतिक आद्युदात्तो वृषादिः । अगतिकमध्योदात्तः पृषोदरादिरिति द्रष्टव्यम् । देवंगममित्यत्र प्रातिपदिकत्वात्समासत्वात्कृदुत्तरपदत्वाद्वाऽन्तोदात्तत्वम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

———

( दोहनार्था मन्त्राः )

( अथ प्रथमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

शुन्धध्वं दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वार्वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारꣳ हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मा सं पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वाऽऽ तनच्मीन्द्राय दधि विष्णो हव्यꣳ रक्षस्व ॥

( सोमेनाष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्याया इति देव—यज्यायै । मातरिश्वनः । घर्मः । असि । द्यौः । असि । पृथिवी । असि । विश्वधाया इति विश्व—धायाः । असि । परमेण । धाम्ना । दृꣳहस्व । मा ।

ह्वाः । वसूनाम् । पवित्रम् । असि । शतधारमिति शत—धारम् । वसूनाम् । पवित्रम् । असि । सहस्रधारमिति सहस्र—धारम् । हुतः । स्तोकः । हुतः । द्रप्सः । अग्नये । बृहते । नाकाय । स्वाहा । द्यावापृथिवीभ्यामिति द्यावा—पृथिवीभ्याम् । सा । विश्वायुरिति विश्व—आयुः । सा । विश्वव्यचा इति विश्व—व्यचाः । सा । विश्वकर्मेति विश्व—कर्मा । समिति । पृच्यध्वम् । ऋतावरीरित्यृत—वरीः । ऊर्मिणीः । मधुमत्तमा इति मधुमत्—तमाः । मन्द्राः । धनस्य । सातये । सोमेन । त्वा । एति । तनच्मि । इन्द्राय । दधि । विष्णो इति । हव्यम् । रक्षस्व ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

द्वाभ्यामनुवाकाभ्याममावास्यायामहनि यत्कर्तव्यं तदुक्तम् । तृतीयेन रात्रौ कर्तव्यो दोह उच्यते । आदौ तावद्ब्राह्मणेन बर्हिषः कालो विधीयते—" पूर्वेद्युरिध्माबर्हिः करोति । यज्ञमेवाऽऽरभ्य गृहीत्वोपवसति " [ ब्रा० का० १ प्र० २ अ० ३ ] इति । यद्यपि दर्शपूर्णमासेष्टिः प्रतिपदि कर्तव्या तथाऽपि पर्वण्येवेध्मं बर्हिश्च संपादयेत् । तावता यज्ञः प्रारब्ध एव भवति । न केवलं प्रारम्भः किं तु देवताश्च गृहीत्वा तासां समीपे निवासः कृतो भवति । अनेन

( दोहनार्था मन्त्राः )

देवतापरिग्रहस्यापि पूर्वेद्युरेव काल इति सूच्यते। तत्प्रकारस्तु याजमानकाण्डे वक्ष्यते। इध्ममन्त्रास्तु "यत्कृष्णो रूपं कृत्वा" इत्येवमादयः। ते चान्यत्राऽऽम्नातत्वात्तत्रैव व्याख्यास्यन्ते। अथ दोहनार्थं कुम्भीद्वयं विधत्ते—"प्रजापतिर्यज्ञमसृजत। तस्योखे अस्रꣳसेताम्। यज्ञो वै प्रजापतिः। यत्सांनाय्योखे भवतः। यज्ञस्यैव तदुखे उपदधात्यप्रस्रꣳसाय" [ब्रा० का० ३ प्र० २ अ० ३] इति। यज्ञो दर्शेष्टिः। सांनाय्यमिति दधिपयसोर्नाम। यज्ञसंबन्धिन्योः कुम्भ्योर्नाशे यज्ञस्य नष्टत्वात्तत्प्रभुः प्रजापतेरपि नाशः। कुम्भ्योः संपादने यज्ञस्य संपादितत्वात्प्रजापतेरेवाविनाशायैतत्संपद्यते। यदुखे भवत इति यदस्ति तत्तेनोखासंपादनेनेति योज्यम्॥

शुन्धध्वं दैव्याय कर्मणे देवयज्यायै—

बौधायनः—"उत्तरेण गार्हपत्यं तृणानि सꣳस्तीर्य तेषु चतुष्टयꣳ संसादयति दोहनं पवित्रं सांनाय्यतपन्यौ स्थाल्याविति, अथैनान्यद्भिः प्रोक्षति शुन्धध्वं दैव्याय कर्मणे देवयज्याया इति त्रिः" इति।

आपस्तम्बः—"सांनाय्यपात्राणि प्रक्षाल्योत्तरेण गार्हपत्यं दर्भान्सꣳस्तीर्य द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति कुम्भीꣳ शाखापवित्रमभिधानीं निदाने दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वा पिधानार्थमग्निहोत्रहवणीमुपवेषं पर्णवल्कं च तृणं च, शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्षति" इति।

हे पात्राणि देवयज्यात्मने दैव्याय कर्मणे शुन्धध्वं शुद्धानि भवत। विशेषेण प्रयोजनमाह—"शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह। देवयज्याया एवैनानि शुन्धति" [ब्रा० का० ३ प्र० २ अ० ३] इति। शोधयतीत्यर्थः। तेन दानव्रतादिरूपं स्मार्तमपि कर्म दैविकमस्ति तन्मा भूदिति विशेषणम्॥

मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वाः—

बौधायनः—"अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति मातरिश्वनो घर्मोऽसीति तेषु सांनाय्यतपनीमधिश्रयति द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वारिति" इति।

आपस्तम्बस्त्वेकमन्त्रत्वमाश्रित्याऽऽह—"मातरिश्वनो घर्मोऽसीति तेषु कुम्भीमधिश्रयति" इति।

---

१ क. ग. °त्संपाद्य°। २ क. सपाद°।

हे कुम्भ वायोः संचारस्थानप्रदानेन दीपको योऽन्तरिक्षलोकस्तद्रूपस्त्वमसि । तवोदरेऽप्यन्तरिक्षसद्भावात् । किं च द्युलोकजन्यवृष्ट्युदकाद्भूलोकस्थमृत्तिकायाश्च संपादितत्वेन लोकद्वयरूपोऽसि । किं च विशदेन बहुक्षीरधारणसामर्थ्येन विश्वधारकवृष्टिरूपोऽसि ततो दृढो भव भग्नो मा भूः। यथोक्तार्थो ब्राह्मणेन विशदी क्रियते—"मातरिश्वनो घर्मोऽसीत्याह । अन्तरिक्षं वै मातरिश्वनो घर्मः। एषां लोकानां विधृत्यै । द्यौरसि पृथिव्यसीत्याह । दिवश्च ह्येषा पृथिव्याः संभृता । यदुखा । तस्मादेवमाह । विश्वधाया असि परमेण धाम्नेत्याह । वृष्टिर्वै विश्वधायाः । वृष्टिमेवावरुन्धे । दृꣳहस्व मा ह्वारित्याह धृत्यै " [ब्रा० का० ३ प्र० २ अ० ३ ] इति । द्यौरसि पृथिव्यसीति द्वयोर्लोकयोर्वाचकशब्देनोपात्तत्वात्साहचर्येण घर्मशब्देऽन्तरिक्षपरे सति कुम्भे त्रयाणां लोकानां विशेषेण धारणं सिध्यति । विश्वधाया इत्युच्चारणाद्वृष्टेरवरोधः स्वाधीनता भवति ॥

## वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्—

कल्पः—" तस्यां प्राचीनाग्रं[2] शाखापवित्रं निदधाति वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमिति " इति ।

भोः शाखापवित्र कुम्भीमुखेऽवस्थापितं त्वं प्राणनिवासहेतूनां[3] वसूनां पवित्रं शोधकमसि । त्वद्व्यवधानेन तृणपर्णादीनां क्षीरेण सह कुम्भ्यां पततां प्रतिबध्यमानत्वात् । न च क्षीरमप्येवं प्रतिबध्येतेति शङ्कनीयम् । सूक्ष्मैः पवित्रच्छिद्रैः कुम्भ्यां पतन्तीनां शतसहस्रसंख्यानां क्षीरधाराणां सद्भावात् । शोधकत्वमादर्तुं वसूनां पवित्रमसीति द्विरुक्तिः । वसुशब्दार्थं पष्ठ्यभिप्रेतं संबन्धविशेषं चाऽऽह—" वसूनां पवित्रमसीत्याह । प्राणा वै वसवः । तेषां वा एतद्भागधेयम् । यत्पवित्रम् । तेभ्य एवैनत्करोति " [ब्रा० का० ३ प्र० २ अ० ३ ] इति । धनवाचिना वसुशब्देनेह विवक्षितानां क्षीरावयवानां प्राणनिवासलक्षणजीवनहेतुत्वात्प्राणरूपत्वम् । शोधकं पवित्रमिति यदस्ति तत्प्राणानामेव संबन्धि कुतः प्राणार्थमेव हि सर्वो जनः पिपीलिकामक्षिकाद्यपनयनेन क्षीरशोधनं करोति । शतसहस्रशब्दसूचितमर्थमाह—" शतधारꣳ सहस्रधारमित्याह । प्राणेष्वेवाऽऽयुर्दधाति सर्वत्वाय " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । शतायुर्भव सह

१ क. ग. कुम्भस्य । २ ख. प्रागग्रं । ३ ख. क्षीरांशानां ।

( दोहनार्था मन्त्राः )

स्त्वायुर्भवेत्येवमाशीर्वादो लोके प्रसिद्धः। स चापमृत्युपरिहारेणाऽऽयुषः कात्स्र्न्याय संपद्यते। गुणत्रयविशिष्टं पवित्रं विधत्ते—"त्रिवृत्पलाशशाखायां दर्भमयं भवति" [ब्रा० का० ३ प्र० २ अ० ३] इति। क्रमेण त्रीनर्थवादानाह—"त्रिवृद्धै प्राणः। त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति। सौम्यः पर्णः सयोनित्वाय। साक्षात्पवित्रं दर्भाः" [ब्रा० का० ३ प्र० २ अ० ३] इति। प्राणापानव्याननामकैरूर्ध्वाधोमध्यवृत्तिलक्षणैरवान्तरभेदैः प्राणवायोस्त्रिवृत्त्वम्। कार्ये पलाशे कारणस्य सोमस्यानुगतिर्योनिसहितत्वम्। तदर्थमेवात्र पलाशशाखायामादरः। दर्भास्तु साक्षादेव शुद्धिहेतवो न तु द्रव्यान्तरसंपादनेन। एतच्च संध्यावन्दनादिशास्त्रेषु प्रसिद्धम्। शाखापवित्रस्य निर्माणप्रकारः सूत्रे दर्शितः—"त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्रमसीति शाखायाꣳ शिथिलमवसृजति मूले मूलान्यग्रेऽग्राणि न ग्रन्थिं करोति" इति। तस्य शाखापवित्रस्य कालभेदेन कुम्भीमुखे स्थापनप्रकारभेदं विधत्ते—"प्राक्सायमधिनिदधाति। तत्प्राणापानयो रूपम्। तिर्यक्प्रातः। तद्दर्शस्य रूपम्। दार्श्यꣳ ह्येतदहः। अन्नं वै चन्द्रमाः। अन्नं प्राणाः। उभयमेवोपैत्यजामित्वाय। तस्मादयꣳ सर्वतः पवते" [ब्रा० का० ३ प्र० २ अ० ३] इति। अमावास्यादिने सायंदोहे कुम्भ्या उपरि शाखापवित्रं प्रागग्रं पश्चान्मूलं निदध्यात्। तथा सति प्राणापानसदृशं भवति। प्राणवायुः पूर्वरूपे मुखद्वारे निःसरति। अपानवायुः पश्चिमरूपेऽधोद्वारे मलं निःसारयति। तस्मादस्ति सादृश्यम्। प्रतिपदि प्रातर्दोहे तिर्यङ्निदध्यात्। प्रागग्रत्वस्य दीर्घत्वादुदगग्रत्वं तिर्यक्त्वम्। तच्च दर्शनविपर्ययेण चन्द्रेण सदृशम्। दृश्यते हि शुक्लपक्षे द्वितीयादिषु दक्षिणोत्तरवर्तिशृङ्गद्वयोपेतश्चन्द्रमाः। यद्यपि प्रतिपदि न दृश्यते तथाऽप्येकया कलया चन्द्रोत्पत्तेः शास्त्रसिद्धत्वेन दर्शनयोग्यत्वादेतदहश्चन्द्रदर्शनसंबन्धि भवति। न च चन्द्रप्राणरूपत्वे प्रयोजनाभावः। तयोरन्नरूपत्वेन सप्रयोजनत्वात्। ओषधीरनुगृह्णानश्चन्द्रमास्तद्द्वारेणान्नं भवति। प्राणस्याप्यन्नेनोपचीयमानत्वादन्नत्वम्। तर्ह्युभयोरपि कालयोः प्रागग्रत्वमेवास्तु तावतैवान्नत्वसिद्धेरिति चेत्। मैवम्। अनालस्याय विलक्षणयोः प्रागग्रत्वोदगग्रत्वयोः कर्तव्यत्वात्। यस्मादालस्यमवश्यं त्याज्यं तस्मादेवायं वायुरनलसः सर्वेषु देशेषु सर्वेषु कालेषु पवते॥

हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्—

१ ख. निवमति।

बौधायनः—“ दोह्यमानामनुमन्त्रयते हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्यामिति ” इति ।

आपस्तम्बस्तु दुग्धस्य क्षीरस्य कुम्भ्यां शाखापवित्रे सेचनकाले बहिः पततां बिन्दूनामभिमन्त्रणे मन्त्रं विनियुङ्क्ते—“ हुतः स्तोको हुतो द्रप्स इति विप्रुषोऽनुमन्त्रयते ” इति ।

अल्पो बिन्दुः स्तोकः प्रौढो बिन्दुर्द्रप्सः । तदुभयं नाकनाम्ने स्वर्गवासिने प्रौढायाग्नये हुतमस्तु । तथा द्यावापृथिवीभ्यामपि स्वाहा हुतमस्तु । अत्र हुतशब्दप्रयोगाद्धविष्टेन प्रतितिष्ठति । ततः स्कन्नदोषो न भवतीत्याह–“हुतः स्तोको हुतो द्रप्स इत्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय । न हि हुतꣳ स्वाहाकृतꣳ स्कन्दति ” [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । हविषोऽग्नौ प्रक्षिप्तत्वं हुतत्वम् । देवतोद्देशपूर्वकत्यागवाचकस्वाहाशब्दप्रयोगेण विषयीकृतत्वं स्वाहाकृतत्वम् । न च स्वाहाकारमन्तरेण हविष्प्रक्षेपो नास्तीति शङ्कनीयम् । वषट्कारेणापि तत्प्रक्षेपात् । अत एव वाजसनेयिनो वाग्धेनोरुपास्तौ समामनन्ति—“ तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च ” [ बृ० ५-८-१ ] इति । विकल्पश्च तयोः शास्त्रे चिन्तितः । एवं च सति द्विधाऽपि देवतानामुपयुक्तयोर्हुतस्वाहाकृतयोर्नास्ति नाशदोषः । न खलु लोके कश्चिदपि भुक्तमन्नं नष्टमिति ब्रूते । नाकीयविप्रुषां होममुपपादयति—“दिवि नाको नामाग्निः । तस्य विप्रुषो भागधेयम् । अग्नये बृहते नाकायेत्याह । नाकमेवाग्निं भागधेयेन समर्धयति ” [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । नाकस्य भागः कथं द्यावापृथिवीभ्यां दत्त इत्याशङ्क्य न तयोर्नाकवद्भोक्तृत्वं किं तु स्थित्याधारत्वेन पालकत्वमित्याह–“ स्वाहा द्यावापृथिवीभ्यामित्याह । द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति ” [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । सपवित्रे कुम्भे क्षीरसेचनं विधत्ते—“ पवित्रवत्यानयति । अपां चैवौषधीनां च रसꣳ सꣳसृजति । अथो ओषधीष्वेव पशून्प्रतिष्ठापयति ” [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । वर्षधाराभिरागतानामपां रसो दर्भः । गोभिर्भक्षितानामोषधीनां रसः क्षीरम् । तदुभयमत्र संसृष्टं भवत्येव । किं च दर्भोपलक्षितास्वोषधीषु क्षीरोपलक्षितान्पशून्प्रतिष्ठापयत्येव । दोहनकाले कुम्भीस्पर्शनपूर्वकं मौनं विधत्ते—“ अन्वारभ्य वाचं यच्छति । यज्ञस्य धृत्यै ” [ ब्रा० का० ३ प्र० २ अ० ३] इति । पवित्रधारणं विधत्ते—“ धारयन्नास्ते । धार-

१ क ग. 'णे वि' । २ ग. 'भय मन्त्रस' ।

( दोहनार्था मन्त्राः )

यन्त इव हि दुहन्ति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । लोके दोग्धारो वामहस्तेन वा जानुभ्यां वा पात्रं धारयन्त एव दुहन्ति । तथा पवित्रं धारयन्नेवाऽऽसीत । कुम्भीस्पर्शपवित्रधारणयोर्विकल्पः सूत्रे दर्शितः— " कुम्भीमन्वारभ्य वाचं यच्छति पवित्रं वा धारयन्नास्ते " इति । गां दुग्ध्वा कुम्भीं प्रति क्षीरमानयन्तं दोग्धारं पृच्छेदिति विधत्ते—" कामधुक्ष इत्याहाऽऽ तृतीयस्यै । त्रय इमे लोकाः । इमानेव लोकान्यजमानो दुहे " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । विद्यमानानां गवां मध्ये कां गां दुग्धवानसि । सोऽयं प्रश्नस्तृतीय[1]लोकपर्यन्तः । गोर्भूरादिलोकरूपत्वाद्गवां त्रित्वेन लोकत्रयदोहो लभ्यते । दोग्धुरुत्तरं विधत्ते—" अमूमिति नाम गृह्णाति । भद्रमेवाऽऽसां कर्माऽऽविष्करोति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । अमूमित्यङ्गुल्या निर्दिश्य तदीयं व्यावहारिकं नाम गृह्णीयात् । सन्ति हि गवां व्यवहाराय तत्तत्स्वामिभिः संकेतितानि गङ्गायमुनासरस्वतीत्यादीनि नामानि । तत्तन्नामग्रहणाद्बहुक्षीरप्रदानलक्षणमासां भद्रं कर्माऽऽविष्कृतं भवति । अथ वा मन्त्रद्वयमच्छिद्रकाण्डे समाम्नातम्—" कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियम् " इति । " अमूं यस्यां देवानां मनुष्याणां पयो हितम् " इति च । तयोरत्र प्रश्नोत्तरवाक्याभ्यां प्रतीकग्रहणमस्तु । आपस्तम्बेन तयोः पठितत्वात् ॥

## सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मा—

कल्पः " अथ पुरस्तात्प्रत्यगानयन्तं पृच्छति कामधुक्ष इति । अमूमितीतरः प्रत्या[2]ह । तामनुमन्त्रयते सा विश्वायुरिति । द्वितीयमानयन्तं [3] पृच्छति कामधुक्ष इति । अमूमित्येवेतरः प्रत्याह । तामनुमन्त्रयते सा विश्वव्यचा इति । तृतीय[4]मानयन्तं पृच्छति कामधुक्ष इति । अमूमित्येवेतरः प्रत्याह । तामनुमन्त्रयते सा विश्वकर्मेति " इति ।

विश्वं कृत्स्नमायुर्यस्याः सा विश्वायुः । विश्वस्य व्यचो व्याप्तिर्यस्याः सा विश्वव्यचाः । विश्वानि कर्माणि यस्याः सा विश्वकर्मा । पृथिव्यन्तरिक्षद्युलोकाभिमानिदेवतानां क्रमेणोक्तगुणोपेतत्वात्तदभेदेन गावः स्तूयन्त इत्यमुं मन्त्राभिप्रायं दर्शयति—" सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मेत्याह । इयं वै विश्वायुः । अन्तरिक्षं विश्वव्यचाः । असौ विश्वकर्मा । इमानेवैताभिर्लोकान्यथापूर्वं दुहे " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । दुग्ध इत्यर्थः । किं च

१ ख 'यगोप' । २ क. ग. 'त्यहान' । ३ ख. 'तीयामा' । ४ ख. 'तीयामा' ।

बहुक्षीरप्रदानेन संतुष्टो विश्वायुष्ट्वादिकमाशीर्वादं प्रयुङ्क्त इत्यभिप्रायान्तरमाह— "अथो यथा प्रदात्रे पुण्यमाशास्ते । एवमेवैना एतदुपस्तौति । तस्मात्प्रादादित्युन्नीय वन्दमाना उपस्तुवन्तः पशून्दुहन्ति" [ब्रा० का० ३ प्र० २ अ० ३] इति । यथा लोके प्रभूतं धनं दत्तवते राज्ञे चिरं जीवेत्याशीर्वादं पुरोधाः करोति । एवमेवैतेन मन्त्रेण गाः स्तौति । यस्माच्छास्त्रीयदोहने स्तुतिराम्नायते तस्माल्लौकिकदोहनेऽपि प्रभूतं क्षीरं पूर्वेद्युरदादिति निश्चित्य हस्तेन वन्दमाना वाचा मम माता मम भगिनीत्येवं गाः स्तुवन्तो दुहन्ति । एतत्काण्डगतेषु मन्त्रेष्वनाम्नातं कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते— "बहु दुग्धीन्द्राय देवेभ्यो हविरिति वाचं विसृजते । यथादेवतमेव प्रसौति । दैव्यस्य च मानुषस्य च व्यावृत्त्यै" [ब्रा० का० ३ प्र० २ अ० ३] इति । हे दोग्धस्त्वमिन्द्राय तदनुचरेभ्यश्च देवेभ्यः पर्याप्तं बहु क्षीरं संपादयितुं तिसृभ्य उत्तरा गा दुग्धि । तत्र समन्त्रकं गोत्रयदोहनमिन्द्रार्थममन्त्रकमितरगोदोहनं तदीयानुचरेभ्य इति यथादेवतत्वं प्रभूतत्वेन मानुषदोहनाद्व्यावृत्तिः । कल्पे त्वचिछद्रकाण्डोक्त एव तत्समानार्थो मन्त्रो विनियुक्तः— "बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिर्वाचं विसृजेत्" इति । ब्राह्मणेऽप्येतस्यैव मन्त्रस्य प्रतीकमस्तु । अर्थतो निर्देशाद्धविरिति पदं पाठभेदः । मन्त्रावृत्तिं विधत्ते— "त्रिराह । त्रिषत्या हि देवाः" [ब्रा० का० ३ प्र० २ अ० ३] इति । त्रिरुक्ते सत्यत्वबुद्धिर्येषां ते त्रिषत्याः । मौनं कुम्भीस्पर्शनं च विनैव तिसृभ्योऽधिका गा दोहयेदिति विधत्ते—"अवाचंयमोऽनन्वारभ्योत्तराः । अपरिमितमेवावरुन्धे" [ब्रा० का० ३ प्र० २ अ० ३] इति । उत्तरासामपि गवां दोहने बहुदेवसहितायेन्द्रायापरिमितं क्षीरं संपादितं भवति । तूष्णीमुत्तरा दोहयित्वेत्यमन्त्रकदोहनं कल्पे दर्शितम् । पूर्वपक्षत्वेन दारुपात्रं निषेधति—"न दारुपात्रेण दुह्यात् । अग्निवद्वै दारुपात्रम् । यद्दारुपात्रेण दुह्यात् । यातयाम्ना हविषा यजेत" [ब्रा० का० ३ प्र० २ अ० ३] इति । मन्थनेनाभिव्यज्यमानोऽग्निः पूर्वं गूढो दारुणि वर्तत इत्यग्निसहितं दारुपात्रं तत्रत्येनाग्निना क्षीरस्य स्वीकृतत्वाद्धविषो गतरसत्वम् । सिद्धान्तरूपत्वेन तत्पात्रं विधत्ते—"अथो खल्वाहुः । पुरोडाशमुखानि वै हवीꣳषि । नेत इतः पुरोडाशꣳ हविषो यामोऽस्तीति । काममेव दारुपात्रेण दुह्यात्" [ब्रा० का० ३ प्र० २ अ० ३] इति । पूर्वे निषेधवादिनो हविषस्तत्त्वं न जानन्ति । अतस्तद्व्यावृत्त्यर्थमथोशब्दः । अभिज्ञास्त्वेवमाहुः । लोके तावदपूपौदनादीनां

---

१ क. ग. गां ।

(दोहनार्था मन्त्राः)

क्षुन्निवर्तकत्वेन प्राधान्यं दृष्टं दधिक्षीरादीनां तु सहकारित्वमेव । ततो यागेष्वपि पुरोडाशचरुमांसान्येव सारवन्ति हवींषि न तु पुरोडाशदर्वाचीनस्य क्षीरादिहविषः कश्चित्सारोऽस्ति योऽग्निना स्वी क्रियेत। तस्माद्दारुपात्रदोहनं न विरुध्यत इति। " यदुपर्युपरि शिरो हरेत् । प्राणान्विच्छिन्द्यात्। अधोऽधः शिरो हरति " इत्यादाविव नेत इतः पुरोडाशमिति वीप्सा द्वितीया च चरुपुरोडाशादत्यन्तमर्वाचीनस्येत्यर्थे। पुनरप्यन्यं पूर्वपक्षमाह—" शूद्र एव न दुह्यात्। असतो वा एष संभूतः । यच्छूद्रः । अहविरेव तदित्याहुः । यच्छूद्रो दोग्धीति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति। असतोऽधमावयवात्पादाज्जातः। राद्धान्तमाह—"अग्निहोत्रमेव न दुह्याच्छूद्रः। तद्धि नोत्पुनन्ति। यदा खलु वै पवित्रमत्येति। अथ तद्धविरिति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति। अग्निहोत्रहविष उत्पवनाभावान्नास्ति शूद्रस्पर्शशुद्धिः। इदं तु हविरुत्पवनस्य त्रिरावृत्त्या पवित्रमतिशयेन प्राप्नोतीति शुद्धमेव ॥

संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये—

कल्पः—" दोहनेऽप आनीय संक्षालनमानयति संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातय इति " इति।

ऋतशब्देन सत्यवाचिना जलेऽवश्यंभाविक्षालनसामर्थ्यमुपलक्ष्यते । हे सामर्थ्यवत्य आपो यूयं कुम्भीगतेन क्षीरेण संपृक्ता भवत। कीदृश्यो यूयम्। ऊर्मिमत्त्वेनात्यन्तमाधुर्येण हर्षहेतुत्वेन च क्षीरसदृश्यः। किमर्थः संपर्कः, सांनाय्यलक्षणधनलाभार्थः । सामर्थ्योर्मिमाधुर्यगुणोपन्यासादत्र रससंपर्को विवक्षितः । न तु द्रव्यसंपर्कमात्रमित्याह—" संपृच्यध्वमृतावरीरित्याह। अपां चैवौषधीनां च रसꣳ सꣳसृजति। तस्मादपां चौषधीनां च रसमुपजीवामः " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । दोहपात्रक्षालनेन स्वादुतमोऽपां रसः। कुम्भीगतक्षीरस्वरूपमेव गोभिर्भक्षितानामोषधीनां रसः । तद्रसद्वयं कुम्भ्यां संसृष्टम्। यस्मादुभयमेलनं प्रशस्तं तस्माद्वयं सर्वे तदुभयमुपजीवामः। एतच्च लोकप्रसिद्धम् । छन्दोगास्तूभयोपजीवनं विशदीकृत्याऽऽमनन्ति—" अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्माꣳसं योऽणिष्ठस्तन्मनः । आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः" [छा० ६-५-१ ] इति । धनलाभोक्तिप्रयोजनं दर्शयति—" मन्द्रा धनस्य सातय इत्याह। पुष्टिमेव यजमाने दधाति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति॥

# सोमेन त्वाऽऽ तनच्मीन्द्राय दधि—

कल्पः—" अथैनत्तप्त्वोदगुद्वास्य शीतं कृत्वा तिरःपवित्रं दध्नाऽऽतनक्ति सोमेन त्वाऽऽतनच्मीन्द्राय दधीति " इति।

हे क्षीर दधिरूपेण सोमेन त्वामातनच्मि । तेनाऽऽतञ्चनेन निष्पन्नं दधीन्द्राय होष्यते। नन्वत्र सोमशब्देन मुख्यं सोमं परित्यज्य कुतो दध्युपलक्ष्यते। ब्राह्मणान्तरबलादिति ब्रूमः । तत्र ह्यातञ्चनद्रव्यविशेषैर्देवताविशेषाणां प्रीतिं ब्रुवती श्रुतिर्दध्न इन्द्रप्रियत्वं दर्शयति—" यत्पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात्सौम्यं तद्यत्कलै राक्षसं तद्यत्तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मानुषं तद्यद्दध्ना तत्सेन्द्रं तद्दध्नाऽऽतनक्ति सेन्द्रत्वाय " इति । अत्राऽऽतञ्चने मुख्यं दधिशब्दं परित्यज्य गौणस्य सोमशब्दस्योपादाने प्रयोजनमाह—" सोमेन त्वाऽऽतनच्मीन्द्राय दधीत्याह। सोममेवैनत्करोति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति। सांनाय्यस्य सोमीकरणं प्रयोजनं तस्यापि प्रयोजनमाह–" यो वै सोमं भक्षयित्वा। संवत्सरꣳ सोमं न पिबति । पुनर्भक्ष्योऽस्य सोमपीथो भवति। सोमः खलु वै सांनाय्यम्। य एवं विद्वान्सांनाय्यं पिबति। अपुनर्भक्ष्योऽस्य सोमपीथो भवति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति । सोमपीथः पातव्यत्वेन विहितः सोम इत्यर्थः । अग्निष्टोममनुष्ठाय संवत्सरमतिवाह्य यः सोमयागं न करोति तेनावश्यमसौ कर्तव्यः।"वसन्ते वसन्ते ज्योतिषा यजेत" इति तद्विधानात्। यदि द्रव्याभावादिनिमित्तेन न प्रतिपद्येत तदा तद्भावनया सोमीकृतं सांनाय्यं पिबतस्तद्वैकल्यं परिह्रियते। अस्ति ह्यनुष्ठातुमशक्तस्य सर्वत्र भावनया तत्पूर्तिः । अत एव बृहदारण्यके सृष्टिप्रकरणे ब्रह्मचारिणो गार्हस्थ्यधर्मं वाञ्छतस्तदसंभवे सत्युपासनया तत्पूर्तिराम्नायते–" एकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्याऽऽत्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवꣳ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्माऽऽत्मना हि कर्म करोति " [ बृ० १-४-१७ ] इति। आत्मा देहः। वेदगम्यं मन्त्रादिकं दैवं वित्तम्। अतः सोमभावनया वैकल्यपरिहारो युज्यते। कुम्भ्याः पिधानाय पात्रविशेषं विधत्ते—" न मृन्मयेनापिदध्यात्। यन्मृन्मयेनापिदध्यात्। पितृदेवत्यꣳ स्यात्। अयस्पात्रेण वा दारुपात्रेण वाऽपिदधाति। तद्धि सदेवम् " [ ब्रा०का०३प्र०२अ०३ ] इति। पितॄणां मृत्पात्रमुदकुम्भश्राद्धादौ सिद्धम्। दारुपात्रस्य सदेवत्वं दोहनपात्रावगतं

१ ख. ज्योतिष्टोमेन। २ ख. न प्रतिबध्येत।

मन्त्रान्तराद्वा। तत्रैवमाम्नायते—" अमृन्मयं देवपात्रं यज्ञस्याऽऽयुषि प्रयुज्यताम् " इति। अयस्पात्रस्याप्येतद्द्रष्टव्यम्। पिधानपात्रस्य सोदकत्वं विधत्ते—" उदन्वद्भवति। आपो वै रक्षोघ्नीः। रक्षसामपहत्यै " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति। स्वाभिमानिदेवतामुखेनापां रक्षोघ्नत्वम्। पिधानाय मन्त्रमुत्पाद्य व्याचष्टे—" अदस्तमसि विष्णवे त्वेत्याह। यज्ञो वै विष्णुः। यज्ञायैवैनददस्तं करोति " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति। अदस्तमनुपक्षीणम्। कल्पे तु प्रतीकमिदमित्यभिप्रेत्याच्छिद्रकाण्डमन्त्रो विनियुक्तः—" अथैनदुदन्वता कंसेन चमसेन वाऽपिदधाति—अदस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम्। अद्भिररिक्तेन पात्रेण याः पूताः परिशेरते " इति। प्रथमपक्षे हे सांनाय्य विष्णवे त्वाऽपिदधामीत्यध्याहारः॥

## विष्णो हव्यꣳ रक्षस्व॥

कल्पः—" अथैतदुपरीव निदधाति यत्र गुप्तं मन्यते विष्णो हव्यꣳ रक्षस्वेति " इति।

अत्र रक्षणार्थमेव विष्णुसंबोधनं न त्विन्द्रवद्धविःस्वीकारायेत्यमुमभिप्रायं विशदयति—" विष्णो हव्यꣳ रक्षस्वेत्याह गुप्त्यै " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति। शाखाबर्हिषोरिव सांनाय्येऽपि विधत्ते—" अनधः सादयति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः। उपरीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै " [ ब्रा० का० ३ प्र० २ अ० ३ ] इति॥

अत्र विनियोगसंग्रहः—

" शुन्ध सांनाय्यपात्राणि प्रोक्ष्य मातेति कुम्भिकाम्।
संस्थाप्याग्नौ वसू शाखापवित्रं तत्र निक्षिपेत्॥ १॥
हुत बिन्दून्सेति गाश्च दुग्धास्तिस्रोऽभिमन्त्रयेत्।
संपृ संक्षालनं क्षिप्त्वा सोमे दध्नाऽऽतनक्ति हि।
विष्णोऽनधो दधात्यस्मिंस्तृतीये दश वर्णिताः॥ २॥

अथ मीमांसा—

तत्र तृतीयाध्यायस्य तृतीयपादे विचारितम्—

" शुन्धध्वमिति मन्त्रोऽयं पौरोडाशिकशोधने।
सांनाय्यपात्रशुद्धौ वा प्रथमोऽस्तु समाख्यया॥

पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा ।
संनिध्यनुक्तितः कल्प्यः कृप्तत्वाच्चरमः क्रमात् ” इति ॥

“ शुन्धध्वं दैव्याय कर्मणे ” इत्ययं मन्त्रः पौरोडाशिकमिति याज्ञिकैः समाख्याते काण्डे पठितत्वात्समाख्यया पुरोडाशकाण्डोक्तानामुलूखलजुह्वादीनां शोधनेऽङ्गमिति चेत् । मैवम् । पौरोडाशिकमिति समाख्यायां प्रकृतिः पुरोडाशमात्रमभिधत्ते । तद्धितप्रत्ययश्च तत्संबन्धिकाण्डम् । न चैतावता पुरोडाशपात्राणां मन्त्रसंनिधिः प्रत्यक्षो भवति किं त्वर्थापत्त्या कल्प्यते । यद्युक्तः संनिधिर्न स्यात्तदा मन्त्रग्रन्थस्य पौरोडाशिकसमाख्या न स्यात् । न ह्यसंनिहितानामपि त्वादिमन्त्राणामाग्नेयकाण्डसमाख्या भवति । संनिहितानां तु “ युञ्जानः प्रथमम् ” इत्यादिमन्त्राणां भवत्येषा समाख्या । तस्मात्काण्डसमाख्यया संनिधिं परिकल्प्य तत्संनिध्यन्यथानुपपत्त्या परस्पराकाङ्क्षारूपं पौरोडाशिकपात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतीः कल्पयित्वा तया श्रुत्या विनियोग इति समाख्याया विप्रकर्षः । सांनाय्यपात्राणां शोधनमन्त्रसंनिधिस्तु प्रत्यक्षः । इध्माबर्हिःसंपादनस्य मुष्टिनिर्वापस्य चान्तरालं सांनाय्यपात्राणां देशः । उक्तमन्त्रश्चेध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते । तेन च प्रत्यक्षसंनिधिना प्रकरणादीनां चतुर्णामेव कल्पनात्संनिधिः संनिकृष्यते । तस्मात्क्रमेण समाख्यां बाधित्वा सांनाय्यपात्रशोधनशेषो मन्त्र इत्ययं चरमः पक्षोऽभ्युपेतव्यः ।

तस्मिन्नेवाध्याये षष्ठपादे विचारितम्—

“ शाखाछेदादयो दोहधर्माः सायं व्यवस्थिताः ।
प्रातश्च सन्ति वा सायं स्थानात्ते पूर्ववत्स्थिताः ॥
आनर्थक्यप्रतिहतिः पूर्ववन्नैव विद्यते ।
बलिनोऽतः प्रकरणात्प्रातर्दोहेऽपि सन्ति ते ” इति ॥

दर्शपूर्णमासप्रकरणे पलाशशाखाछेदनं तया शाखया वत्सापाकरणमित्यादयो दोहधर्माः समाम्नाताः । दोहौ च द्वौ विद्येते । अमावास्यायां रात्रावेको दोहः । प्रतिपदि प्रातरपरो दोहः । तत्र पूर्वन्यायेन स्थानबलात्प्राथमिके सायं दोहे प्रथमश्रुतास्ते धर्मा व्यवतिष्ठन्त इति चेत् । मैवम् । वैषम्यात् । पूर्वत्र हि सो[...] विशसनादिधर्माणामनन्वयात्प्रकरणमानर्थक्यप्रतिहतम् । अतोऽग्नीषोमीयपश[...] स्थानबलात्ते धर्मा व्यवस्थिताः । इह तु नास्त्यानर्थक्यप्रतिहतिः । ततः प्रक[...] रणेन स्थानं बाधित्वा द्वयोर्दोहयोस्ते धर्मा अभ्युपेयाः ।

( दोहनार्था मन्त्राः )

दशमाध्यायस्याष्टमे पादे विचारितम्—

" स्वाहेत्युक्तिर्दर्विहोमे संहारः स्यान्न वाऽग्रिमः ।
पूर्वन्यायान्न तन्मन्त्रे स्वाहाकाराविधित्वतः ॥
विधित्वेऽपि नियत्यै स्यान्न व्यत्यासवषट्कृती ।
होमान्तरे वषट्कारस्वाहाकारविकल्पनम् " इति ॥

अनारभ्य श्रूयते—" वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते " इति । दर्विहोमविशेषे श्रूयते—" पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा " इति । तत्र पूर्वाधिकरणे यथाऽनारभ्यविहितस्य साप्तदश्यस्य प्राकरणिकेन साप्तदश्यविधिनोपसंहारे सति विकृत्यन्तरे साप्तदश्यं नास्ति तथेहाप्यनारभ्यवादेन विहितस्य स्वाहाकारस्य दर्विहोमप्रकरणपठितमन्त्रगतेन स्वाहाशब्देनोपसंहारे सति होमान्तरेषु नास्ति स्वाहाकार इति प्राप्ते ब्रूमः—" पृथिव्यै स्वाहा " इति मन्त्रपाठोऽयम् । न त्वत्र स्वाहाकारोऽनारभ्याधीतब्राह्मणवाक्येनैव विधीयते । न खलु " यमादित्या अंशुमाप्याययन्ति " इत्यादिवाक्यामन्त्रगतादित्यादिशब्दाः कस्यचिदर्थस्य विधायका दृष्टाः । यथा सिद्धार्थवाचकादित्यशब्दो न विधत्ते यथा वा क्रियावाचित्वेऽपि वर्तमानार्थे आप्याययन्तीति न विधायकस्तथा वैदिकहविर्विषयो देवस्य दत्तमित्यस्मिन्नर्थे वर्तमानः स्वाहाशब्दो नोच्चारणं विदधाति । तथा सत्युपसंहार्योपसंहारकयोरेकविषयत्वशङ्काया अप्यभावान्नास्त्येवात्र पूर्वन्यायः । ननु प्रकरणादिना मन्त्रस्य होमे विनियुक्तत्वात्स्वाहाकारविधिरर्थाल्लभ्यत इति चेत्, एवमपि ब्राह्मणवाक्येन पक्षे प्राप्तः स्वाहाकारो नियम्यते—अस्मिन्नप्युपहोमे स्वाहाकारेणैवान्नं प्रदीयत इति । ततः पाक्षिको वषट्कारोऽर्थान्निवर्तते । किं च पुरस्तात्स्वाहाकारा वा अन्ये देवा उपरिष्टात्स्वाहाकारा अन्य इति ब्राह्मणोक्तन्यायेन स्वाहा पृथिव्या इत्यपि पाठः पक्षे प्राप्नोति । तत्र " पृथिव्यै स्वाहा " इत्येव पठेदिति नियम्यते । अर्थाद्व्यत्यासो निवर्तते । तस्मादविधित्वविधित्वयोरुपसंहाराभावेन होमान्तरेष्वनारभ्य विहितो वषट्कारस्वाहाकारविकल्पः सुस्थितो भवति । एवं च सति " हुतः स्तोकः " " स्वाहा द्यावापृथिवीभ्याम् " इति मन्त्रांशाभ्यां सूचितस्य स्वाहाकारविकल्पस्य न कदाचिदप्यनुपपत्तिः ।

प्रथमाध्यायस्य द्वितीयपादे किंचिद्विचारितम्—

" तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः ।
हिना श्रुता हेतुताऽतः शूर्पादन्यच्च साधनम् ॥

शूर्पसाधनता श्रौती नाश्रौतैः सा विकल्प्यते ।
अतो निरर्थको हेतुः स्तुतिस्तु स्यात्प्रवर्तिका '' इति ॥

इदमाम्नायते—" शूर्पेण जुहोति तेन ह्यन्नं क्रियते " इति । अयमर्थवादो विधेयशूर्पे हेतुत्वेनान्वेति । हिशब्दस्य हेतुवाचित्वात् । यस्मादन्नसाधनं तस्माच्छूर्पेण होतव्यमित्युक्ते यद्यदन्नसाधनं दर्वीपिठरादिकं तेन सर्वेण होतव्यमिति लभ्यते । ततः पिठरादयः शूर्पेण सह विकल्प्यन्त इति प्राप्ते ब्रूमः—शूर्पस्य होमसाधनत्वं श्रौतं तृतीयया तदवगमात्पिठरादीनां त्वानुमानिकमतोऽसमानबलत्वान्न विकल्पो युक्तस्ततो हेतुर्व्यर्थः । स्तुतिस्तु प्ररोचनायोपयुक्ता । तस्मात्स्तुतित्वेनान्वयः । अनेनैव न्यायेन प्रकृतेऽपि " अग्निहोत्रमेव न दुह्याच्छूद्रः । तद्धि नोत्पुनन्ति " इत्यत्र हिशब्दस्य हेतुत्वाद्यत्र यत्र नास्त्युत्पवनं तत्र तत्र शूद्रस्पर्शो निषिद्ध इति व्याप्तौ सत्यामुत्पवनरहितानां व्रीहियवादीनां कदाचिच्छूद्रेण स्पृष्टानां यागयोग्यत्वं न स्यादिति पूर्वः पक्षः । तद्धि नोत्पुनन्तीत्यस्यार्थवादस्य स्तावकत्वेन हेतुप्रतिपादकत्वाभावान्नोक्तो दोष इति राद्धान्तः ॥

अथ व्याकरणम्—

शुन्धध्वमित्यत्र धातुरुदात्तः । शप्प्रत्ययः पित्त्वादनुदात्तः । अनुपदेशादुत्तरं लसार्वधातुकमप्यनुदात्तम् । दैव्यशब्दो यञन्तत्वेन ञ्नित्यादिरित्याद्युदात्तः । मातरिश्वशब्दो धिषणेतिवन्मध्योदात्तः । घर्मोऽसीत्योकारस्योदात्तानुदात्तयोरोकाराकारयोः स्थाने पतितत्वादेकादेशस्वरेण नित्यमुदात्तत्वे प्राप्ते तदपवादः " स्वरितो वाऽनुदात्तेऽपदादौ " [ पा० ८-२-६ ] उत्तरपदस्याऽऽदावनुदात्ते परत उदात्तानुदात्तयोर्य एकादेशः स विकल्पेन स्वरितः स्यादित्योकारः स्वरितः । पृथिव्यसीत्यत्र " उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य " [ पा० ८-२-४ ] उदात्तस्य वा स्वरितस्य वा स्थाने यो यणतस्मादुत्तरस्यानुदात्तस्य स्वरितः स्यादित्यकारः स्वरितः । विश्वस्य धायो धारणं यस्या वृष्टेः सा विश्वधायाः । तत्र पूर्वपदप्रकृतिस्वरः प्राप्तः । विश्वशब्दश्च स्वत आद्युदात्तः । विश्वे देवा ऋतावृध इत्यादौ दर्शनात् । इह तु " बहुव्रीहौ विश्वं संज्ञायाम् " [ पा० ६-२-१०६ ] इति विश्वमित्येतत्पूर्वपदमन्तोदात्तम् । परमशब्दो नपुंसकलिङ्गोऽपि नित्यनपुंसकत्वाभावात्फिट्स्वरेणान्तोदात्तः । दृꣳहस्वेत्यत्र पृथग्वाक्यत्वेन पदात्परत्वाभावान्न निघातः । किं तु धातुस्वरशप्स्वरलसार्वधातुकस्वराः । परमेण धाम्ना दृꣳहस्वेत्येकवाक्यत्वेऽपि

( दोहनार्था मन्त्राः )

दृꣳहस्व मा ह्वाश्चेति समुच्चयविवक्षया चकारस्य लुप्तत्वेन "चादिलोपे विभाषा" [ पा० ८-१-६३ ] इति निघातस्य विकल्पो द्रष्टव्यः। वसुशब्दो वृषादिः। पवित्रमित्यत्र " पुवः संज्ञायाम् " [ पा० ३-२-१८५ ] इति पूङ्धातोरित्रप्रत्यये सतीकार उदात्तः। शतधारशब्दः शतवल्शशब्दवत्। द्रप्सोऽग्नय इत्यत्र घर्मोऽसीतिवदोकारः स्वरितः। बृहन्महतोरुपसंख्यानमिति बृहच्छब्दादुत्तरस्या अजादिविभक्तेरुदात्तत्वम्। कं सुखमकं दुःखं तन्न विद्यते यस्यासौ नाकः पूर्वपदप्रकृतिस्वरः। स्वाहाशब्दो निपातः। द्यावापृथिवीशब्दस्य " देवताद्वंद्वे च " [ पा० ६-२-१४१ ] इत्युभयपदप्रकृतिस्वरत्वादाद्यन्तावुदात्तौ। विश्वधाया इतिवद्विश्वायुरित्यादयः। ऋतावरीरामन्त्रितत्वान्निघातः। ऊर्मिशब्दस्य फिट्स्वरः। ङीबनुदात्तः। मधुशब्दो वृषादिः। मतुप्प्रत्ययावनुदात्तौ। धनशब्दो नपुंसकस्वरः। सोमेन्द्रविष्णुशब्दा वृषादिगताः। हवस्य होमस्य योग्यं हव्यं प्रत्ययस्वरः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः। )

---

कर्मणे वां देवेभ्यः शकेयं वेषाय त्वा प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा सं विक्था मा त्वा ( १ ) हिꣳसिषमुरु वाताय देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपाम्य-

---

१ ख. ह्वारिति। २ ख. °रीशब्दस्याऽऽम°।

ग्नीषोमाभ्यामिदं देवानामिदमु नः सह स्फात्यै त्वा नारात्यै सुवरभि वि ख्येषं वैश्वानरं ज्योतिर्दृꣳहन्तां दुर्या द्यावापृथिव्योरुर्वन्तरिक्षमन्विह्यदित्यास्त्वोपस्थे सादयाम्यग्ने हव्यꣳ रक्षस्व ( २ ) ॥

( मा त्वा षट्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

कर्मणे । वाम् । देवेभ्यः । शकेयम् । वेषाय । त्वा । प्रत्युष्टमिति प्रति—उष्टम् । रक्षः । प्रत्युष्टा इति प्रति—उष्टाः । अरातयः । धूः । असि । धूर्व । धूर्वन्तम् । धूर्व । तम् । यः । अस्मान् । धूर्वति । तम् । धूर्व । यम् । वयम् । धूर्वामः । त्वम् । देवानाम् । असि । सस्नितममिति सस्नि—तमम् । पप्रितममिति पप्रि—तमम् । जुष्टतममिति जुष्ट—तमम् । वह्नितममिति वह्नि—तमम् । देवहूतममिति देव—हूतमम् । अह्रुतम् । असि । हविर्धानमिति हविः—धानम् । दृꣳहस्व । मा । ह्वाः । मित्रस्य । त्वा । चक्षुषा । प्रेति । ईक्षे । मा । भेः । मा । समिति । विक्थाः ।

( हविर्निर्वापार्था मन्त्राः )

मा । त्वा । ( १ ) हिꣳसिषम् । उरु । वाताय । देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । पूष्णः । हस्ताभ्याम् । अग्नये । जुष्टम् । निरिति । वपामि । अग्नीषोमाभ्यामित्यग्नी—सोमाभ्याम् । इदम् । देवानाम् । इदम् । उ । नः । सह । स्फात्यै । त्वा । न । अरात्यै । सुवः । अभि । वीति । ख्येषम् । वैश्वानरम् । ज्योतिः । दृꣳहन्ताम् । दुर्याः । द्यावापृथिव्योरिति द्यावा—पृथिव्योः । उरु । अन्तरिक्षम् । अन्विति । इहि । अदित्याः । त्वा । उपस्थ इत्युप—स्थे । सादयामि । अग्ने । हव्यम् । रक्षस्व (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

अनुवाकत्रयेण पर्वदिनकर्तव्यं समापितमुत्तरैर्दशभिरनुवाकैः प्रतिपद्दिनकर्तव्यमभिधातव्यम् । तत्र प्रथमं तावदस्मिंश्चतुर्थेऽनुवाके हविर्निर्वापोऽभिधीयते ।

कर्मणे वां देवेभ्यः शकेयम्—

बौधायनः—“ अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयमिति ” इति ।

आपस्तम्बः—“ कर्मणे वां देवेभ्यः शकेयमिति हस्ताववनिज्य ” इति ।

---

१ क. ग. °ण पूर्वं° ।

हे हस्तौ देवानां संबन्धिने कर्मणे प्रक्षालितौ युवां प्रयोक्तुं शक्तो भूयासम्। विनाऽपि प्रक्षालनं लौकिकशक्तेः सद्भावाच्छास्त्रीयशक्त्यर्थो मन्त्रः प्रक्षालनहेतुरित्यभिप्रेत्याऽऽह—" कर्मणे वां देवेभ्यः शकेयमित्याह शक्त्यै " [ ब्रा० का० ३ प्र० २ अ० ४ ] इति। कंचिन्मन्त्रमुत्पाद्य तृणास्तरणे विनियुङ्क्ते—" यज्ञस्य वै संततिमनु प्रजाः पशवो यजमानस्य संतायन्ते । यज्ञस्य विच्छित्तिमनु प्रजाः पशवो यजमानस्य विच्छिद्यन्ते । यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येत्याहवनीयात्संतनोति । यजमानस्य प्रजायै पशूना॰ संतत्यै " [ ब्रा० का० ३ प्र० २ अ० ४ ] इति। यज्ञस्य त्वा संतत्या इत्येषां पदानामादरार्थेन द्विरभ्यासेन भूमिर्यथा न दृश्यते तथा स्तरणीयमिति सूच्यते। अत एवान्यत्राऽऽम्नातम्—"अनतिदृश्न॰ स्तृणाति"इति। स्तरणप्रदेशस्याऽऽद्यन्तौ कल्पे दर्शितौ—"गार्हपत्यात्प्रक्रम्य संततामुलपराजी॰ स्तृणात्याहवनीयात् " इति। उलपराजिस्तृणविशेषः। प्रणयनं विधत्ते—" अपः प्रणयति " [ ब्रा० का० ३ प्र० २ अ० ४ ] इति। तत्प्रकारः कल्पे दर्शितः—"अथोत्तरेण[1] गार्हपत्यमुपविश्य क॰सं वा चमसं वा प्रणीताप्रणयनमानीय तस्मि॰ स्तिरःपवित्रमप आनयन्नाह ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति[2] प्रसूतः समं प्राणैर्धारयमाणो विषिश्वन्हृत्वोत्तरेणाऽऽहवनीयं दर्भेषु सादयित्वा " इति । प्रणयनविधेरर्थवादमाह—" श्रद्धा वा आपः। श्रद्धामेवाऽऽरभ्य प्रणीय प्रचरति " [ ब्रा० का० ३ प्र० २ अ० ४ ] इति। अपां श्रद्धाजनकत्वेन श्रद्धारूपत्वमुपचर्यते । तज्जनकत्वं च श्रुत्यन्तरे समाम्नातम्—" आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे " इति। दृश्यते च स्नानाचमनोपेतस्य श्रद्धातिशयः। पूर्वोक्तमेव प्रणयनविधिं पुनः पुनरनूद्य बहुधा स्तौति—" अपः प्रणयति । यज्ञो वा आपः। यज्ञमेवाऽऽरभ्य प्रणीय प्रचरति। अपः प्रणयति। वज्रो वा आपः। वज्रमेव भ्रातृव्येभ्यः प्रहृत्य प्रणीय प्रचरति। अपः प्रणयति । आपो वै रक्षोघ्नीः। रक्षसामपहत्यै। अपः प्रणयति । आपो वै देवानां प्रियं धाम। देवानामेव प्रियं धाम प्रणीय प्रचरति। अपः प्रणयति। आपो वै सर्वा देवताः। देवता एवाऽऽरभ्य प्रणीय प्रचरति " [ ब्रा० का० ३ प्र० २ अ० ४ ] इति। यज्ञो यथाऽभीष्टस्वर्गसाधनं तद्वदपामभीष्टमीत्यादिसाधनत्वाद्यज्ञत्वम् । प्रणीताभिरद्भिः पिष्टस्य[3] संयवनं प्रचरणम्। यथा वज्रो वैरिणं वारयति तद्वदापः शत्रुं वारयन्ति। रक्षोघ्नीत्वं पुरैवोक्तम्। वृष्ट्युदकस्य देवप्रियधाम्नो द्युलोका-

१ ख. अपरेण। २ ख. °ति संप्रेष्यन्त्समं। ३ क. पिष्टे संवपनं।

दुत्पन्नत्वादपां तद्धामत्वम्। देवास्तावदग्निं प्रविश्य तद्धावं प्राप्ताः। तथा च श्रूयते–"देवासुराः संयत्ता आसन्। ते देवा बिभ्यतोऽग्निं प्राविशन्। तस्मादाहुरग्निः सर्वा देवता इति" इति। स चाग्निरप्सु प्रविष्टः। "स निलायत। सोऽपः प्राविशत्" इति श्रुतेः। तस्मादपां सर्वदेवतात्वम्। ब्राह्मणान्तराद्वा तथात्वं द्रष्टव्यम्॥

## वेषाय त्वा–

कल्पः—"आदत्ते दक्षिणेनाग्निहोत्रहवणीꣳ सव्येन शूर्पं वेषाय त्वेति" इति।

तदेतदुभयं यज्ञायुधमध्यपाति। तानि यज्ञायुधान्यन्यत्रैवमाम्नातानि—स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि" इति। तेषां प्रयोगप्रकारस्तत्रैव दर्शितः—"उत्तरेण गार्हपत्याहवनीयौ दर्भान्संस्तीर्य द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि तान्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीं प्रदन्तीमुपवेषं प्रातर्दोहपात्राणीति प्रणीताप्रणयनं पात्रसंसादनात्पूर्वमेके समामनन्ति" इति। तत्राग्निहोत्रहवण्यादाने शाखान्तरमन्त्र उदाहृतः—"वानस्पत्याऽसि दक्षाय त्वेत्यग्निहोत्रहवणीमादत्ते" इति। तस्माद्वेषाय त्वेति मन्त्रेण शूर्पमादत्ते। वेषो व्याप्तिमान्यज्ञस्तदर्थं भोः शूर्प त्वामाददे। अत्रार्थावबोधकाल एव वाक्यपूर्तये पदाध्याहारः। अनुष्ठानकाले तु न लौकिकं पदमध्याहर्तव्यम्। अनाम्नातस्योहादिवदमन्त्रत्वात्। अवबुद्धस्यार्थस्य वाक्यैकदेशेनापि संस्कारोद्बोधे सति स्मृत्युत्पत्तेः। अमन्त्रत्वादेव तद्धारकस्मृत्या नास्त्यदृष्टं किंचित्। सूर्याय जुष्टं निर्वपामीत्यूहादीनमन्त्रानपि प्रयुञ्जते। अन्यथाऽग्नये जुष्टमित्येवमाम्नातस्यैव प्रयोगे सौर्यकर्मसमवेतस्यार्थस्य स्मृत्यभावप्रसङ्गात्। शूर्पस्य यज्ञार्थत्वं निर्वापावघातादौ प्रसिद्धमित्याह—"वेषाय त्वेत्याह। वेषाय ह्येनदादत्ते" [ब्रा० का० ३ प्र० २ अ० ४] इति॥

## प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः–

कल्पः—"प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वाऽभितप्य" इति।

---

१ क. °धान्य°। २ ख. °कारः सूत्रे द°। ३ ख. °न्तीमश्मानमु°। ४ ख. °ददीत। वे°।

व्याचष्टे—" प्रत्युष्ट१ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै "
[ ब्रा० का० ३ प्र० २ अ० ४ ] इति ॥

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मा-
न्धूर्वति तं धूर्व यं वयं धूर्वामः—

कल्पः—" जघनेन गार्हपत्यमग्निप्रमनो भवति तस्यैत्योत्तरां युगधुरमभि-
मृशति धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम इति "
इति ।

व्रीहिरूपहविर्धारकशकटसंबन्धिनो युगस्य बलीवर्दवहनप्रदेशे कश्चिद्धिंस
कोऽग्निः शास्त्रदृष्टोऽस्ति तं प्रार्थयते—भो वह्ने त्वं हिंसकोऽसि । ततः पाप
रूपं हिंसकं विनाशय । किं च यो राक्षसादिर्यागविघ्नेनास्माञ्जिघांसति तमपि
विनाशय । यं वाऽऽलस्यादिरूपं वैरिणं वयं धूर्वामो जिघांसामस्तमपि विना
शय । वह्न्याधारभूताया युगधुरः संस्पर्शं विधत्ते—" धूरसीत्याह । एष
धुर्योऽग्निः । तं यदनुपस्पृश्यातीयात् । अध्वर्युं च यजमानं च प्रदहेत् । उपस्
श्यात्येति । अध्वर्योश्च यजमानस्य चाप्रदाहाय " [ ब्रा० का० ३ प्र०
अ० ४ ] इति । तं धूर्वेति वाक्ययोः पौनरुक्त्यभ्रमं निवारयति—" धूर्व
योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम इत्याह । द्वौ वाव पुरुषौ ।
चैव धूर्वति । यश्चैनं धूर्वति । तावुभौ शुचाऽर्पयाति " [ ब्रा० का० ३ प्र०
अ० ४ ] इति । शोकेन योजयतीत्यर्थः ॥

त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नि-
तमं देवहूतममह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वाः—

कल्पः—" अनोऽभिमन्त्रयते त्वं देवानामसि सस्नितमं पप्रितमं जुष्ट
वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वारिति " इति ।

भोः शकट त्वं देवानां संबन्धी भवसि । ततः शुद्धतमं व्रीहिभिः पूर्ण
प्रियतमं हविषो वाहकतमं देवानामाह्वातृतमं चासि । किं च व्रीहिभारापादि
वक्रत्वरहितं हविषो धारकमस्यतो दृढं भव भग्नं मा भूः । मन्त्रस्य प्रथमभ
स्पष्टार्थत्वं दर्शयति—" त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नि
देवहूतममित्याह । यथायजुरेवैतत् " [ ब्रा० का० ३ प्र० २ अ० ४ ] इ
मन्त्रपदैर्योऽर्थो यथा प्रतीयते स तथैव न त्वत्र कश्चिद्विवक्षाविशेषोऽरि
द्वितीयभागे व्रीहिभारप्रयुक्तं शैथिल्यं वार्यत इत्याह—" अह्रुतमसि हवि

( हविर्निर्वापार्था मन्त्राः )

नमित्याहानार्त्यै " [ब्रा० का० ३ प्र० २ अ० ४] इति । तृतीयभागे स्वयमप्यारोढुं शकटस्य धैर्यं संपाद्यत इत्याह—"दृꣳहस्व मा ह्वारित्याह धृत्यै" [ब्रा० का० ३ प्र० २ अ० ४] इति । अत एवाऽऽपस्तम्ब उत्तरस्य भागस्य मन्त्रान्तरत्वमभिप्रेत्याऽऽह—"अह्रुतमसि हविर्धानमित्यारोहति" इति ॥

## मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा सं विक्था मा त्वा हिꣳसिषम्—

कल्पः—" अथ पुरोडाशीयान्प्रेक्षते मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्था मा त्वा हिꣳसिषमिति " इति ।

हे व्रीहिसमूह जगन्मित्रस्य सूर्यस्य चक्षुषा त्वामवलोकयामि न तु वैरिचक्षुषा । ततो मा भैषीर्माऽत्र कम्पिष्ठाः । अहं तु त्वां न मारयामि । अनुकूलोऽयमितिबुद्ध्युत्पादनाय मित्रशब्दप्रयोग इत्याह—" मित्रस्य त्वा चक्षुषा प्रेक्ष इत्याह मित्रत्वाय [ब्रा० का० ३ प्र० २ अ० ४] इति । भयकम्पयोरपि हिंसावान्तरभेदत्वमित्यभिप्रेत्याऽऽह—" मा भेर्मा संविक्था मा त्वा हिꣳसिषमित्याहाहिꣳसायै " [ब्रा० का० ३ प्र० २ अ० ४] इति ॥

## उरु वाताय—

कल्पः—" उरु वातायेति परिणाहमपच्छाद्य[1] " इति ।

हे करिष्यमाणद्वार त्वमेतेन पिधानभूततृणाद्यपनयनेन वायुप्रवेशार्थं विस्तीर्णं भव । वायुप्रवेशे प्रयोजनमाह—" यद्वै किंच वातो नाभिवाति । तत्सर्वं वरुणदेवत्यम् । उरु वातायेत्याह । अवारुणमेवैनत्करोति " [ब्रा० का० ३ प्र० २ अ० ४] इति । यद्द्रव्यमावृतत्वेन वायुर्न स्पृशति तस्य सर्वस्याऽऽवरको वरुणः स्वामी । तच्च स्वामित्वं वायुना निवर्त्यते ॥

## देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि—

कल्पः—" अथ निर्वपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति " इति ।

तत्प्रकारः सूत्रे दर्शितः—" शूर्पे पवित्रे[2] निधाय तस्मिन्नग्निहोत्रहवण्या हवीꣳषि निर्वपति तया वा पवित्रवत्या " इति ।

व्याचष्टे—"देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्या-

---

१ ख. 'पवाह्य' इ° । २ ख. पावित्रं ।

मित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै। अग्नये जुष्टं निर्वपामीत्याह। अग्नय एवैनाञ्जुष्टं निर्वपति" [ब्रा० का० ३ प्र० २ अ० ४ ] इति। एनान्व्रीहीन्प्रियं हविर्यथा भवति तथा निर्वपति। आवृत्तिं विधत्ते—"त्रिर्यजुषा। त्रय इमे लोकाः। एषां लोकानामाप्त्यै। तूष्णीं चतुर्थम्। अपरिमितमेवावरुन्धे" [ब्रा० का० ३ प्र० २ अ० ४] इति ॥

## अग्नीषोमाभ्याम्—

आपस्तम्बः—"एवमुत्तरं यथादेवतमग्नीषोमाभ्यामिति पौर्णमास्याम्" इति।

तदिदं स्पष्टी चकार बौधायनः—"एतामेव प्रतिपदं कृत्वाऽग्नीषोमाभ्यामिति पौर्णमास्यामिन्द्राय वैमृधायेति चेन्द्राग्निभ्यामित्यमावास्यायामसंनयत इन्द्रायेति संनयतो महेन्द्रायेति वा यदि महेन्द्रयाजी भवति" इति।

देवस्य त्वेत्येतमेव भागमुपक्रमं कृत्वा जुष्टं निर्वपामीत्युपसंहारं कृत्वा तयोर्मध्येऽग्नीषोमाभ्यामिति प्रयोक्तव्यम्। एतत्सर्वमभिप्रेत्याऽऽह—"स एवमेवानुपूर्वं हवींषि निर्वपति" [ब्रा० का० ३ प्र० २ अ० ४ ] इति ॥

## इदं देवानामिदमु नः सह—

कल्पः—"इदं देवानामिति निरुप्तानभिमृशतीदमु नः सहेत्यवशिष्टान्" इति।

शूर्पे निरुप्तमिदं देवानामेव स्वमिदं तु शकटस्थं देवैः सहितानामस्माकं स्वं यागान्तराणामस्माभिः करिष्यमाणत्वाद्भोक्ष्यमाणत्वाच्च। भागयोरसांकर्याय मन्त्रद्वयमित्याह—"इदं देवानामिदमु नः सहेत्याह व्यावृत्त्यै" [ब्रा० का० ३ प्र० २ अ० ४ ] इति ॥

## स्फात्यै त्वा नारात्यै—

कल्पः—"स्फात्यै त्वा नारात्या इति निरुप्तानेवाभिमन्त्र्य" इति।

हे हविरभिवृद्ध्यै त्वामभिमन्त्रयामि। तत्राभिवर्धनमदानाय न भवति किं तु देवेभ्यो दातुमेव। सोऽयं मन्त्रो हविषोऽवस्कन्दनेन क्षयो मा भूदित्येवं रक्षार्थ इत्याह—"स्फात्यै त्वा नारात्या इत्याह गुप्त्यै" [ब्रा० का० ३ प्र० २ अ० ४ ] इति ॥

---

१ ख. 'थादेव'। २ ख. 'धाय चे'।

(हविर्निर्वापार्था मन्त्राः)

## सुवरभि विख्येषं वैश्वानरं ज्योतिः—

बौधायनः—"अथाऽऽहवनीयमीक्षते सुवरभि विख्येषं वैश्वानरं ज्योतिरिति" इति।

आपस्तम्बस्तु मन्त्रभेदमभिप्रेत्याऽऽह—"सुवरभि विख्येषमिति सर्वं विहारमनुवीक्षते वैश्वानरं ज्योतिरित्याहवनीयम्" इति।

स्वर्गसाधनत्वेन स्वर्गरूपं सर्वयागप्रदेशमभितो विशेषेण पश्यामि। आहवनीयाग्निं स्वर्गप्रकाशकज्योतिःस्वरूपं पश्यामि। शकटस्योपरिभागे परितः कटवेष्टिते तमस्विनि प्रदेशेऽवस्थितस्य बहिरवलोकनमप्यपेक्षितमित्याह— "तमसीव वा एषोऽन्तश्चरति। यः परीणहि। सुवरभि विख्येषं वैश्वानरं ज्योतिरित्याह। सुवरेवाभि विपश्यति वैश्वानरं ज्योतिः" [ब्रा० का० ३ प्र० २ अ० ४] इति॥

## दृꣳहन्तां दुर्या द्यावापृथिव्योः—

बौधायनः—"अथ गृहानन्वीक्षते दृꣳहन्तां दुर्या द्यावापृथिव्योरिति" इति।

आपस्तम्बः—"दृꣳहन्तां दुर्या द्यावापृथिव्योरिति प्रत्यवरुह्य" इति।

इहलोकपरलोकयोरस्मद्गृहा दृढा भवन्तु। अदार्ढ्यशङ्कायाः सद्भावाद्दार्ढ्यमाशंसनीयमित्याह—"द्यावापृथिवी हविषि गृहीत उदवेपेताम्। दृꣳहन्तां दुर्या द्यावापृथिव्योरित्याह। गृहाणां द्यावापृथिव्योर्धृत्यै" [ब्रा० का० ३ प्र० २ अ० ४] इति। गृहीतहविष्कः किं वोद्दिश्य यक्ष्यतीत्यज्ञानाल्लोकयोर्भयेन कम्पः प्राप्तः। दृꣳहन्तामित्युक्ते सत्येतद्विनाश उद्देश्यो न भवतीति निश्चयाद्धैर्यं भवति॥

## उर्वन्तरिक्षमन्विहि—

कल्पः—"उर्वन्तरिक्षमन्विहीति हरति" इति।

व्याचष्टे—"उर्वन्तरिक्षमन्विहीत्याह गत्यै" [ब्रा० का० ३ प्र० २ अ० ४] इति॥

## अदित्यास्त्वोपस्थे सादयामि—

कल्पः—"एत्योत्तरेण गार्हपत्यमुपसादयत्यदित्यास्त्वोपस्थे सादयामीति" इति।

अदितिशब्दस्य भूमिरर्थ इत्याह—"अदित्यास्त्वोपस्थे सादयामीत्याह।

---

१ क. ग. ॰वरोह्य।

इयं वा अदितिः। अस्या एवैनदुपस्थे सादयति" [ब्रा० का० ३ प्र० २ अ० ४] इति॥

## अग्ने हव्यꣳ रक्षस्व॥

कल्पः—"गार्हपत्यमभिमन्त्रयते—अग्ने हव्यꣳ रक्षस्वेति" इति।

अत्र हविषो रक्षामात्रं विवक्षितमित्याह—"अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै" [ब्रा० का० ३ प्र० २ अ० ४] इति॥

अत्र विनियोगसंग्रहः—

कर्मणे हस्तयोः शुद्धिर्वेषा शूर्पपरिग्रहः।
प्रत्युष्टमिति संतप्य धूः स्पृशेच्छकटे धुरम्॥ १॥
त्वमीषां संस्पृशेद्दृꣳह शकटं त्वधिरोहति।
उर्वन्तर्धिमपच्छाद्य मित्रेति हविरीक्षते॥ २॥
देवेति निर्वपेदग्नीत्यपि पूर्वानुषञ्जनात्।
इदं निरुप्तचच्छेषौ स्पृशेत्स्फात्यभिमन्त्रणम्॥ ३॥
सुवर्विहारं वीक्ष्याथ वैश्वा पूर्वाग्निवीक्षणम्।
दृꣳहावरुह्योरु गच्छेददि भूमौ हि सादयेत्।
अग्नेऽभिमन्त्रणं मन्त्रा उक्ता एकोनविंशतिः॥ ४॥

अथ मीमांसा—

तत्र केचित्सामान्यविचारा उच्यन्ते। यद्यपीषे त्वेत्यत्रैवैते वक्तव्यास्तथाऽपि सर्वत्र संचारव्युत्पत्तये तत्तदनुवाकेषु वर्ण्यन्ते।

द्वादशाध्यायस्य तृतीयपादे विचारितम्—

"अनध्याये मन्त्रपाठः क्रतौ नास्त्यस्ति वा न सः।
तत्पाठस्य निषिद्धत्वादस्ति तत्रानिषेधतः" इति॥

"पर्वणि नाध्येतव्यम्" इति निषिद्धत्वादनध्यायेषु क्रतुप्रयोगे मन्त्रपाठो नास्तीति चेत्, मैवम्। निषेधस्य ग्रहणार्थाध्ययनविषयत्वात्क्रतुप्रयोगे तदभावात्। अन्यथा प्रतिपद्येवेष्टेर्विहितत्वेन मन्त्रपाठाभावे तदध्ययनमनर्थकं स्यात्। तस्मात्प्रतिपदि "कर्मणे वाम्" इत्यादयो मन्त्राः पठितव्याः।

तत्रैवान्यद्विचारितम्—

"स्वरो मन्त्रे भाषिकः किं स्यात्प्रावचनिकोऽथ वा।
ब्राह्मणोक्तेरादिमोऽन्त्यस्तदुक्तेर्लक्षणत्वतः" इति॥

तत्तद्देशीयब्राह्मणस्वरो भाषिक इत्युच्यते। तदुक्तमाचार्यैः—

" छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते " इति ॥

सोऽयं भाषिकः क्रतौ मन्त्रेषु प्रयोक्तव्यः। कुतः। ब्राह्मणोक्तत्वात्। मन्त्रस्य लिङ्गविनियोज्यतया स्वरविशेषविधानायैव ब्राह्मणे मन्त्र उपादीयत इति प्राप्ते ब्रूमः—न हि ब्राह्मणे मन्त्रः पठ्यते किं तु प्रवचनप्रसिद्धस्वराद्युपेतं मन्त्रकाण्डोत्पन्नं मन्त्रमुपलक्षयितुं तदुपलक्षणसमर्थानि मन्त्रोपक्रमसदृशानि कानिचिदक्षराण्युच्चार्यन्ते, यथा—" इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते " इति। एतमेवाभिप्रायं द्योतयितुं क्वचिच्छब्दान्तरेणोपलक्ष्यते, यथा—" सावित्राणि जुहोति प्रसूत्यै" इति। यत्र लिङ्गसिद्धो विनियोगस्तत्र ब्राह्मणमनुवादकमस्तु। तस्मात्प्रावचनिकः स्वरः क्रतौ कर्मणे वामित्यादिमन्त्राणां प्रयोक्तव्यः।

तत्रैवान्यद्विचारितम्—

" ब्राह्मणोत्पन्नमन्त्रस्य त्रैस्वर्यं भाषिकोऽथ वा।
आद्योऽन्यमन्त्रवन्मैवं स्वरान्तरविवर्जनात् " इति ॥

" वानस्पत्योऽसि " इत्ययं मन्त्रो ब्राह्मण एवोत्पन्नः। तस्याप्यन्यमन्त्रवत्प्रावचनिकस्वर इति चेत्। मैवम्। मन्त्रकाण्डे तदपाठेन तत्स्वराभावात्। तस्माद्भाषिकस्वरः। यद्यपि " यज्ञस्य संततिः " इति तैत्तिरीयब्राह्मणोत्पन्नो मन्त्रस्त्रैस्वर्येणाऽऽम्नायते तथाऽपि "सोमाय राज्ञे क्रीताय प्रोह्यमाणायानुब्रूहि" इत्येवमादीनां बह्वृचब्राह्मणोत्पन्नमन्त्राणामयं भाषिकः स्वरः।

अन्यदपि तत्रैव चिन्तितम्—

" यदा कदाचिन्मन्त्रान्ते वा कर्मानियमाद्भवेत्।
आद्यो मैवं कृत्स्नजन्यस्मृतेरङ्गत्वतोऽन्तिमः " इति ॥

" इषे त्वा " इति मन्त्रः शाखाछेदे करणम्। " इमामगृभ्णन् " इति रशनादाने। तत्र संशयः–किं मन्त्रादौ कर्म कर्तव्यं किं वाऽगृभ्णन्रशनामित्येवंविधस्य कर्मप्रकाशकमन्त्रस्योच्चारणकाले किं वा यस्य कस्यचित्पदस्योच्चारणकाल आहोस्विन्मन्त्रान्तेऽथ वा ततोऽपि किंचिद्विलम्बेनेति। तत्र नियामकाभावाद्यदाकदाचिदिति प्राप्ते ब्रूमः—कृत्स्नमन्त्रजन्यमर्थस्मरणं कर्मणोऽङ्गम्। तच्च मन्त्रसमाप्तेः पूर्वं नोदेति। विलम्बे तूत्पन्नं स्मरणं विनश्यतीति परिशेषात् " कर्मणे वाम् " इत्यादिमन्त्रान्ते कर्म संनिपतेत्।

तृतीयाध्यायस्य प्रथमपादे विचारितम्—

"हस्तौ द्रावनेनिक्ते स्तृणात्युलपराजिकाम् ।
दर्भास्तरण एवाङ्गं हस्तशुद्धिरुताखिले ॥
तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्मकात्क्रमात् ।
लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता " इति ॥

दर्शपूर्णमासयोः श्रूयते—" हस्तावनेनिक्ते । उलपराजीं[१] स्तृणाति " इति । वेद्यामास्तरितुं संपादितः स्तम्ब उलपराजी । तत्र हस्तशुद्धिदर्भास्तरणवाक्ययोर्नैरन्तर्येण पाठात्क्रमप्रमाणेन हस्तशुद्धिरास्तरणमात्रस्याङ्गमिति चेन्मैवम् । अवनेजनं हस्तसंस्कारः । संस्कृतौ च हस्तौ सर्वानुष्ठानयोग्याविस्येतादृशं सामर्थ्यं लिङ्गम् । प्रकरणं च दर्शपूर्णमासयोः स्फुटम् । अतः प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रमबाधात्सर्वशेषो हस्तशुद्धिः । अयं न्यायो वाग्यमेऽपि द्रष्टव्यः ।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" मृन्मये प्रणयेत्कामी नित्येऽप्येतदुतेतरत् ।
आकाङ्क्षा संनिधिश्चास्ति तस्मान्नित्येऽपि मृन्मयम् ॥
कामार्थत्वादयोग्यत्वं सामान्यविहितेन च ।
आकाङ्क्षाया निवृत्तत्वान्नित्यार्थमितरद्भवेत् " इति ॥

अपः प्रणयतीति प्रकृत्य श्रूयते—" मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत् " इति । तत्रापां प्रणयनस्य नित्येऽपि प्रयोगे मृन्मयपात्रमेव साधनम् । कुतः, नित्येऽपि पात्रस्याऽऽकाङ्क्षितत्वात् । न च लोकसिद्धं किंचित्पात्रमुपादीयत इति वाच्यम् । श्रौते कर्मण्यश्रुताच्छ्रुतस्य संनिहितत्वादिति प्राप्ते ब्रूमः— कामार्थं मृन्मयमाम्नातम् । तच्च सति कामे योग्यम् । न हि पाक्षिकं कामं निमित्तीकृत्य प्रवृत्तं नित्यस्य योग्यं भवति । पात्राकाङ्क्षा तु सामान्यतो विहितेन निवर्तते । " अपः प्रणयति " इति हि पात्रमनुपन्यस्य विहितम् । तच्चान्यथाऽनुपपत्त्या पात्रं सामान्येनाऽऽक्षिपति । तस्मान्नित्यप्रयोगे तत्काम्यं मृन्मयं नान्वेति । किं त्वितरत्पात्रं किंचिदुपादेयम् । " चमसेनापः प्रणयेत् " इति नित्ये पात्रं विधीयत इति चेत्तर्हि कृत्वाचिन्ताऽस्तु ।

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

" देवस्य त्वेति मन्त्रस्य भिन्नत्वमथ वैकता ।
ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता ॥

१ ख. 'सप्रकरणे श्रू' ।

विभागे सति साकाङ्क्षस्यैकार्थत्वं प्रयोजकम् ।
तस्माद्वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते " इति ॥

दर्शपूर्णमासयोराम्नायते—" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि " इति । तत्र वाक्यानि भिन्नानि भवितुमर्हन्ति । कुतः । एकत्वनियामकस्य दुर्बोधत्वात् । अर्थैक्यं वाक्यैक्ये प्रयोजकमिति चेन्न । एकस्मिन्पदेऽतिव्याप्तेः । पदसमूहस्य वाक्यत्वे समूहानामत्र बहूनां संभवाद्वाक्यं नावधार्यत इति प्राप्ते ब्रूमः—यद्विभागे साकाङ्क्षमविभागे चैकार्थं तदेकं वाक्यमिति नियामकम् । विभागे साकाङ्क्षमित्येवोक्तेऽतिव्याप्तिः स्यात् । "स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः " इत्यत्र तस्मिन्त्सीदेत्यादिपदसमूहस्य साकाङ्क्षत्वमस्त्यतस्तन्निवच्छेत्तुमेकार्थमित्युक्तम् । न हि तत्रैकार्थत्वमस्ति । पूर्वसमूहस्य सदनकरणमर्थः । उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनमर्थः । स्योनं समीचीनं सुशेवं सुष्ठु सेवितुं योग्यमिति प्रथमवाक्यस्यार्थः । व्रीहीणां मेध व्रीहिसारभूत पुरोडाशेत्यर्थः । अत्र द्वयोः समूहयोर्वाक्यद्वयत्वमुभयवादिसिद्धं तदेकार्थमित्यनेन वार्यते । एकार्थमित्युक्तेऽतिव्याप्तिः । भगो वां विभजतु पूषा वां विभजत्वित्यनयोर्भिन्नमन्त्रत्वेन संमतयोः पदसमूहयोस्तात्पर्यविषयस्य द्रव्यविभागरूपस्यार्थस्यैकत्वात्तन्निवच्छेत्तुं विभागे साकाङ्क्षमित्युक्तम् । प्रकृतेऽग्नये जुष्टमित्यादिसमूहे पृथक्कृते पूर्वो देवस्य त्वेति समूहो न निराकाङ्क्षः । एकीकृते तु कृत्स्नस्यैक एवार्थो निर्वापः । एतेनैकवाक्यत्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यम् ।

तत्रैवान्यद्विचारितम्—

" या ते अग्ने रजेत्यध्याहारो यद्वाऽनुषञ्जनम् ।
तनूरित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः ॥
वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम् ।
अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः " इति ॥

ज्योतिष्टोम उपसद्धोमेष्वेवमाम्नायते—" या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहा । या ते अग्ने रजाशया । या ते अग्ने हराशया " इति । अयमर्थः—अयसा रजतेन हिरण्येन च निर्मिता अग्नेस्तिस्रस्तनवः । तास्वाद्या येयमुक्ता साऽतिशयेन प्रवृद्धा गह्वरे तीक्ष्णद्रव्ये लोहेऽवस्थिता तया तन्वा क्षुत्पिपासे गोवधाद्युपपातकं वीरहत्यादिकं च महापातकं हतवानस्मीति । तथा च ब्राह्मणम्—" उग्रं

वचो अपावधीं त्वेषं वचो अपावधीः स्वाहेति । अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः " इति । तत्र स्वाहान्तः प्रथमो मन्त्रः संपूर्णवाक्यत्वान्निराकाङ्क्षः । द्वितीयतृतीयमन्त्रयोराकाङ्क्षां पूरयितुमुचितो लौकिको वाक्यशेषोऽध्याहर्तव्यः । न हि तनूर्वर्षिष्ठेत्यादिभागस्तयोरन्वेतुं योग्यः । तस्य प्रथममन्त्रशेषत्वादिति प्राप्ते ब्रूमः—वैदिकयोर्मन्त्रयोराकाङ्क्षा वैदिकेनैव वाक्यशेषेण पूरणीया । ततस्तनूर्वर्षिष्ठेत्यादिभाग उत्तरयोर्मन्त्रयोरनुषज्यते । यद्यप्यसावन्यशेषस्तथाऽपि बुद्धिस्थः सन्कल्पनीयादध्याहारात्संनिकृष्यते । तस्मादनुषङ्गः कर्तव्यः । एवं च सति प्रकृतेऽप्यग्नीषोमाभ्यामित्यस्मिन्मन्त्रे देवस्य त्वेत्यादिपूर्वभागो जुष्टमित्याद्युत्तरभागश्चानुषञ्जनीयः ।

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

" सवित्रश्व्याद्यूहनीयं न वाऽर्थः संगतस्ततः ।
ऊहो नाविकृतस्यैव निर्वापान्वयसंभवात् " इति ॥

" देवस्य त्वा सवितुः प्रसवे " इत्यस्मिन्नेव मन्त्रे सवित्रश्विपूषशब्दाः कर्मसंगतं देवतारूपमर्थमभिधातुमर्हन्ति । तथा सति दृष्टप्रयोजनलाभात् । अग्निश्च कर्मसमवेता देवता । ततः कयाचिदपि व्युत्पत्त्या सवित्रादिशब्दैरग्निरभिधीयताम् । अथोच्यतेऽग्निशब्देनैवाग्नेरभिधानात्पुनस्तदभिधानं व्यर्थम् । किं च देवतान्तरेषु रूढास्ते शब्दा नाग्निमभिदध्युरिति । एवं तर्हि तास्तिस्रो देवता अग्निना सह कर्मणि विकल्प्यन्ताम् । ततः प्राकृतस्य मन्त्रस्य विकृतिष्वतिदेशे सति सवित्रादिशब्दस्थाने तत्तद्देवतावाचकशब्द ऊहनीय इति प्राप्ते ब्रूमः—नात्रोहः कर्तव्यः । कुतः । अविकृतस्यैव मन्त्रस्य निर्वापशेषत्वेनान्वयसंभवात् । न हि प्रकृतावग्निना सह सवित्रादिदेवतानां विकल्पो वाक्यभेदादिदोषप्रसङ्गात् । तस्मान्निर्वापस्तावकानां सवित्रादिशब्दानां कर्मण्यसमवेतार्थत्वान्नास्त्यूहः ।

तत्रैवान्यचिन्तितम्—

" तत्राग्निशब्दो नोह्यः स्यादूह्यो वा स्तावकत्वतः ।
सवित्रादिवदाद्यो नो समवेतार्थवर्णनात् " इति ॥

तस्मिन्पूर्वोक्त एव मन्त्रेऽग्नये जुष्टमित्ययमग्निशब्दो विकृतिषु नोहनीयः । कुतः । देवतान्तरवाचिसवित्रादिशब्दवदग्निशब्दस्याप्यत्र निर्वापस्तावकत्वेन पाठादिति प्राप्ते ब्रूमः–विषमो दृष्टान्तः । कर्मण्यसमवेतार्थाः सवित्रादिशब्दाः । अग्निशब्दस्त्वाग्नेये कर्मणि समवेतमर्थं ब्रूते । नन्वत्र जुष्टशब्दोऽसमवेतार्थः, निर्वापात्पूर्वं हविषो जुष्टत्वाभावात् । तद्योगादग्निशब्दोऽपि तथा स्यादिति

चेत्। मैवम्। जुष्टं यथा भवति तथा निर्वपामीति क्रियाविशेषणत्वेन भविष्यज्जोषणपरत्वे सति समवेतार्थत्वात्। तस्मात्सूर्ययागे सूर्याय जुष्टं निर्वपामीत्येवमूहनीयम्। एवं च सति प्रकृतेऽपीन्द्राय वैमृधायेत्याद्यूहः कर्तव्यः।

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

" ऊहप्रवरनाम्नां किं मन्त्रताऽस्त्यथ वा न हि।
मन्त्रास्तदेकवाक्यत्वान्न तल्लक्षणवर्जनात् " इति ॥

" अग्नये जुष्टं निर्वपामि " इत्यस्य सौर्यचरौ सूर्याय जुष्टमित्येवं पदान्तरप्रक्षेप ऊहः। अदीक्षिष्टायं ब्राह्मण इत्यस्य मन्त्रस्य शेषत्वेन प्रयोगकाले देवदत्तोऽयमिति ब्राह्मणनामधेयविशेषं पठन्ति। तथा वरणमन्त्रेषु आङ्गिरसबार्हस्पत्यभारद्वाजगोत्रं ब्राह्मणं त्वा वृणीमह इति प्रवरं पठन्ति। एतेषामूहप्रवरनामधेयानां मन्त्रत्वमस्ति। कुतः। मन्त्रेण सहैकवाक्यत्वात्, इति चेन्मैवम्। याज्ञिकप्रसिद्धिरूपस्य मन्त्रलक्षणस्योहादावभावात्। न ह्यध्येतार ऊहादीन्मन्त्रकाण्डेऽधीयते। तस्मान्नास्ति मन्त्रत्वम्। तथा सतीन्द्राय वैमृधाय जुष्टमित्याद्यूहस्य मन्त्रत्वाभावात्स्वरवैकल्येऽपि मन्त्रो हीन इत्यादिनोक्तो दोषो न भविष्यति। तदेवं मन्त्रसंभाविता विचारा दर्शिताः॥

अथ व्याकरणम्—

कर्मणे वामित्यादिशब्देषु नब्विषयस्येत्यादिकं पूर्वोक्तं यथायोगमनुसंधेयम्। वेषशब्दो वृषादिः। प्रथमद्वितीययोर्धूर्वशब्दयोर्वाक्यादित्वेन पदात्परत्वं नास्तीति निघाताभावः। तृतीयस्य तं धूर्वेत्येवं पदादुत्तरत्वादस्ति निघातः। योऽस्मान्धूर्वति यं धूर्वाम इत्यनयोर्यच्छब्दयोगान्निघातो निषिद्धः। " निपातैर्यद्यदिहन्तकुविन्नेच्चण्कच्चिद्यत्रयुक्तम् " [पा० ८-१-३] एतैर्यदादिभिर्युक्तं न निहन्यते। सन्निपम्प्रिशब्दयोः क्विन्प्रत्यस्य नित्त्वादाद्युदात्तः। जुष्टशब्दो गतः। वह्निशब्दो वृषादिः। देवानाह्वयतीति देवह्वूरित्यत्र तत्पुरुषे तुल्यार्थेति द्वितीयान्तपूर्वपदप्रकृतिस्वरः प्राप्तः। स च कृदुत्तरपदप्रकृतिस्वरेण बाध्यते। अह्रुतमित्यव्ययपूर्वपदप्रकृतिस्वरः। हविर्धानमित्यत्र ल्युट्प्रत्ययात्पूर्वस्य धाशब्दस्योदात्तत्वात्समासे कृदुत्तरपदप्रकृतिस्वरः। दृꣳहस्वेति गतम्। प्रेक्ष इत्यत्रोत्तरपदादेरनुदात्तत्वेऽपि स्वरितो वाऽनुदात्त इत्यस्य विकल्पितत्वादेकादेश इत्युदात्तः। मा भेरित्यत्र चादिलोपसूत्रेण निघातस्य विकल्पितत्वाद्धातुस्वरः। वातशब्दो वृषादिः। सवितुरित्यत्र प्रातिपदिकान्तोदात्तस्य

१ ख. मा ह्वारि॰।

विभक्त्या सहैकादेशे सत्युकार उदात्तः । प्रसव इत्यत्र सुधातोरप्प्रत्यये सति तस्य पित्त्वाद्धातुस्वर एव शिष्यते । ततः समासे कृदुत्तरपदप्रकृतिस्वरे प्राप्ते तदपवादः " थाथघञ्क्ताजबित्रकाणाम्" [ पा० ६-२-१४४ ] गतेः कारकाद्युपपदाच्चोत्तरेषां थादीनामष्टानां प्रत्ययानामन्त उदात्तः स्यात् । पूषण इत्यत्रानुदात्तस्य च यत्रेति विभक्तिरुदात्ता । अग्नीषोमाभ्यामित्यग्निशब्दस्यान्तोदात्तत्वात्सोमशब्दस्य चाऽऽद्युदात्तत्वात्समासे देवताद्वंद्वे चेति युगपदुभयोः प्रकृतिस्वरत्वम् । उशब्दस्यानुदात्तत्वं स्वरादिपाठे निपातितम् । सहशब्दस्य निपातत्वाभावेन फिट्स्वरः । स्फात्या इत्यत्र स्फायीधातोर्ण्यन्तादुत्तरस्य क्तिन्प्रत्ययस्य नित्त्वेन स्फाशब्दस्योदात्तत्वप्राप्तावप्युदात्तस्य णिचो लुप्तत्वादुदात्तनिवृत्तिस्वरेणं क्तिन्नुदात्त इति उदात्तयण इति विभक्तिरुदात्ता । अरातिशब्दस्य नञ्तत्पुरुषत्वादव्ययपूर्वपदप्रकृतिस्वरत्वम् । सुत्वरिति वृषादिः । अभीति फिट्स्वरः । वीत्युपसर्गस्वरः । दृꣳहन्तामित्यत्र वाक्यादित्वान्निघाताभावः । द्यावापृथिव्योरित्यत्रोदात्तयण इति विभक्तिरुदात्ता । उपस्थशब्दः पृषोदरादिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरापो देवीरग्रेपुवो अग्रेगुवोऽग्रं इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थाग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याꣳ शुन्धध्वं दैव्याय कर्मणे देवय-

---

१ ख. °ण वि° ।

ज्याया अवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वा ( १ ) पृथिवी वेत्त्वधिषवणमसि वानस्पत्यं प्रति त्वाऽदित्यास्त्वग्वेत्त्वग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णाम्यद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्वेषमा वदोर्जमा वद द्युमद्वदत वयꣳ संघातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयो रक्षसां भागोऽसि वायुर्वो वि विनक्तु देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु ( २ ) ॥

( त्वा भाग एकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

देवः । वः । सविता । उदिति । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरिति रश्मि—भिः । आपः । देवीः । अग्रेपुव इत्यग्रे—पुवः । अग्रेगुव इत्यग्रे—गुवः । अग्रे । इमम् । यज्ञम् । नयत । अग्रे । यज्ञपतिमिति यज्ञ—पतिम् ।

धत्त । युष्मान् । इन्द्रः । अवृणीत । वृत्रतूर्य इति वृत्र—तूर्ये । यूयम् । इन्द्रम् । अवृणीध्वम् । वृत्र-तूर्य इति वृत्र—तूर्ये । प्रोक्षिता इति प्र—उक्षिताः । स्थ । अग्नये । वः । जुष्टम् । प्रेति । उक्षामि । अग्नी-षोमाभ्यामित्यग्नी—सोमाभ्याम् । शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्याया इति देव—यज्यायै । अवधूतमित्यव—धूतम् । रक्षः । अवधूता इत्यव—धूताः । अरातयः । अदित्याः । त्वक् । असि । प्रतीति । त्वा । (१) पृथिवी । वेत्तु । अधिषवण-मित्यधि—सवनम् । असि । वानस्पत्यम् । प्रतीति । त्वा । अदित्याः । त्वक् । वेत्तु । अग्नेः । तनूः । असि । वाचः । विसर्जनमिति वि—सर्जनम् । देव-वीतय इति देव—वीतये । त्वा । गृह्णामि । अद्रिः । असि । वानस्पत्यः । सः । इदम् । देवेभ्यः । हव्यम् । सुशमीति सु—शमि । शमिष्व । इषम् । एति । वद । ऊर्जम् । एति । वद । द्युमदिति द्यु—मत् । वदत । वयम् । संघातमिति सं—घातम् । जेष्म । वर्षवृद्धमिति वर्ष—वृद्धम् । असि । प्रतीति । त्वा । वर्षवृद्धमिति वर्ष—वृद्धम् । वेत्तु । परापूतमिति परा—पूतम् । रक्षः । परापूता इति परा—पूताः ।

( व्रीह्यवघातार्था मन्त्राः )

अरा॑तयः। रक्ष॑साम्। भा॒गः। अ॒सि॒। वा॒युः। वः। वीति॑। वि॒न॒क्तु॒। दे॒वः। वः। स॒वि॒ता। हिर॑ण्यपाणि॒रिति॒ हिर॑ण्य—पा॒णिः। प्रतीति॑। गृ॒ह्णा॒तु॒ (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः। )

---

चतुर्थानुवाके व्रीहिनिर्वापः प्रोक्तो निरुप्ते तुषस्य रक्षोभागत्वात्तदपनयनार्थोऽवघातः पञ्चमेऽनुवाकेऽभिधीयते। प्रोक्षितानामेव व्रीहीणामत्रावघातयोग्यत्वात्प्रोक्षणस्य चोत्पूतोदकसाध्यत्वादुत्पवनमन्त्रस्य चाङ्गभूतस्याङ्गिन्युत्पवने साकाङ्क्षत्वादुत्पवनमन्त्रव्याख्यानात्प्रागेवोत्पवनं विधत्ते—"इन्द्रो वृत्रमहन्। सोऽपः। अभ्यम्रियत। तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत्। तदपोदक्रामत्। ते दर्भा अभवन्। यद्दर्भैरप उत्पुनाति। या एव मेध्या यज्ञियाः सदेवा आपः। ताभिरेवैना उत्पुनाति" [ब्रा०का० ३प्र०२अ०५] इति। इन्द्रेण हतस्य वृत्रस्योदकाभिमुख्येन मृतत्वादुदकस्य सारं निर्गतम्। तच्च सारं द्विविधं दैवं मानुषं च। तत्र मलप्रक्षालनोपयुक्तं मानुषम्। दैवं च द्विविधं स्नानादिना पापशोधकं प्रोक्षणादिना द्रव्यशोधकं च। तदुभयमत्र मेध्ययज्ञियशब्दाभ्यां विवक्षितम्। तच्च निर्गत्य भूमौ दर्भरूपेणाऽऽविर्बभूव। तस्माद्दर्भैरुत्पुनीयात्। दर्भसंख्यां विधत्ते—"द्वाभ्यामुत्पुनाति। द्विपाद्यजमानः प्रतिष्ठित्यै" [ब्रा० का० ३ प्र० २ अ० ५] इति। अनेन विधीयमानद्वित्वेन विरोधात्पूर्वस्मिन्वाक्ये दर्भैरिति बहुवचनं जात्यभिप्रायं व्याख्येयम्। यजमानो ह्येकेन पादेनोत्तिष्ठन्प्रतिष्ठां न लभते। द्वाभ्यां तु लभते। ततो दर्भद्वित्वमपि प्रतिष्ठित्यै भवति॥

दे॒वो वः॑ सवि॒तोत्पु॑ना॒त्वच्छि॑द्रेण प॒वित्रे॑ण॒ वसोः॒ सूर्य॑स्य र॒श्मिभिः॑—

कल्पः—"अथैतस्यामेव स्रुचि तिरःपवित्रमप आनीयोदीचीनाग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति पच्छः" इति।

अत्र स्रुक्शब्देन निर्वापहेतुरग्निहोत्रहवणी विवक्षिता। सशूकायामग्निहोत्रहवण्यामप आनीयेत्यन्यत्राभिधानात्। हे आपोऽध्वर्युहृदयेऽवस्थितः प्रेरकोऽन्तर्यामी युष्मानूर्ध्वं पुनातु। केन साधनेन। आदित्यरूपत्वभावनाबलादच्छिद्रेण दर्भपवित्रेण। पुनरपि केन। जगन्निवासहेतोः सूर्यस्य रश्मित्वेन भावितैर्दर्भावयवैः। यथोक्तं मन्त्रार्थं विशदयति–" देवो वः सवितोत्पुनात्वित्याह। सवितृप्रसूत एवैना उत्पुनाति। अच्छिद्रेण पवित्रेणेत्याह। असौ वा आदित्योऽच्छिद्रं पवित्रम्। तेनैवैना उत्पुनाति। वसोः सूर्यस्य रश्मिभिरित्याह। प्राणा वा आपः। प्राणा वसवः। प्राणा रश्मयः। प्राणैरेव प्राणान्त्संपृणक्ति" [ब्रा० का० ३ प्र० २ अ० ५] इति। उदकेनाऽऽप्यायिताः प्राणा इत्यपां प्राणत्वम्। आदित्याद्यधिष्ठातृदेवतानुग्रहैश्चक्षुरादीनां प्राणानां देहे वासितत्वाद्वसुशब्दाभिधेयानां देवतानुग्रहाणां प्राणत्वम्। आदित्यरश्मीनां प्राणव्यवहारोपकारित्वात्प्राणत्वम्। ततः सूर्यरूपप्राणत्वेन भावितैर्दर्भप्राणैः सहोदकरूपाः प्राणा उत्पवनकाले संपृक्ता भवन्ति। मन्त्रस्य सवितेत्यनेन लिङ्गेन यत्सावित्रत्वं यच्च पादबद्धत्वादृग्रूपत्वं तदुभयमत्र सप्रयोजनमित्याह— " सावित्रियर्चा। सवितृप्रसूतं मे कर्मासदिति। सवितृप्रसूतमेवास्य कर्म भवति। पच्छो गायत्रिया त्रिष्पमृद्धत्वाय " [ब्रा० का० ३ प्र० २ अ० ५] इति। ममेदं कर्म निखिलं सवित्रा प्रेरितमस्त्वित्यभिप्रेत्य सावित्रमन्त्रेणोत्पुनीयात्। तेन तत्तथैव संपद्यते। ऋग्रूपत्वेन तत्रत्यं छन्दो ज्ञातुं शक्यते। छन्दसश्चात्र लक्षणतो गायत्रीत्वाद्गायत्र्याश्च त्रिपात्त्वात्प्रतिपादमुत्पवने सति त्रिरावृत्त्या शुध्यति। अतिशयेन कर्मफलं समृद्धं भवति। आवृत्तिप्रकारः सूत्रे दर्शितः—" देवो वः सवितोत्पुनात्विति प्रथममच्छिद्रेण पवित्रेणेति द्वितीयं वसोः सूर्यस्य रश्मिभिरिति तृतीयम् " इति॥

आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नय-
ताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्र-
तूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थ—

बौधायनः—" अथैना उन्महयन्नुपोत्तिष्ठति आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्यद्भिरेवापः प्रोक्षति प्रोक्षिताः स्थेति त्रिः " इति।

---

१ क. ग. ङ. च. °क्षणं यच्छतो।

( प्रोक्षणावघातार्थां मन्त्राः )

आपस्तम्बस्तु मन्त्रैक्यमभिप्रेत्याऽऽह—“आपो देवीरग्रेपुव इत्यभिमन्त्र्य” इति।

हे जलदेव्यो यूयमिमं यज्ञमविघ्नेन परिसमाप्तिं नयत। यजमानं च स्वर्गं प्रापयत। कीदृश्य आपः शुद्धिहेतूनां दर्भादीनामपि प्रोक्षणेन शोधकत्वादग्रे पुनन्तीत्यग्रेपुवस्तेन यज्ञं समापयितुं समर्थाः। पुनः कीदृश्यः प्रवाहरूपेण शीघ्रगामित्वाद्जन्तुभ्यो मनुष्यादिभ्योऽप्यग्रे गच्छन्तीत्यग्रेगुवः। तेन यजमानं स्वर्गं नेतुं समर्थाः। किं च वृत्रासुरवधे युष्माकमिन्द्रस्य च परस्परमपेक्षा जाता। तत इन्द्रसमाना यूयं किं नाम कर्तुमसमर्थाः। अस्य मन्त्रस्य पूर्वभागे तत्रत्यशब्दस्वरूपमेवापां महिमानमभिधावृत्त्या स्पष्टयति। ततोऽत्र किंचिद्व्याख्येयं नास्तीत्याह—“आपो देवीरग्रेपुवो अग्रेगुव इत्याह। रूपमेवाऽऽसामेतन्महिमानं व्याचष्टे” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। मध्यमभागे प्रार्थितं कार्यमापो नोपेक्षन्त इत्याह—“अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह। अग्र एव यज्ञं नयन्ति। अग्रे यज्ञपतिम्” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। ब्राह्मणान्तरप्रसिद्धं परस्परसापेक्षत्वमेव तृतीयभागे दर्शयतीत्याह—“युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्याह। वृत्रꣳ ह हनिष्यन्निन्द्र आपो वव्रे। आपो हेन्द्रं वव्रिरे। संज्ञामेवाऽऽसामेतत्सामानं व्याचष्टे” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। आपो वव्र इति च्छान्दसो दीर्घः। वृत्राद्भीतायेन्द्राय प्रजापतिर्वज्रमद्भिः प्रक्षाल्य ददावित्यसाविन्द्रस्योदकापेक्षत्वप्रसिद्धिर्वृत्रꣳ हेतिशब्देन सूच्यते। अत एव श्रूयते—“तस्मादिन्द्रोऽबिभेत्स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत” इति। प्रक्षालितस्यापि वज्रस्येन्द्रेण प्रयोज्यत्वादपामिन्द्रापेक्षेत्येषा प्रसिद्धिरापो हेत्यत्र हशब्देन सूच्यते। आपो मम सहकारिण्य इत्येतदिन्द्रस्य सम्यग्ज्ञानम्। इन्द्रोऽस्माकं सहकारीत्येतदुक्तदेवतानां सम्यग्ज्ञानम्। तामेतामपां संज्ञामिन्द्रेण समानां मन्त्रः प्रख्यापयति। दीर्घव्यत्यासश्छान्दसः। मन्त्रपाठ एवापां प्रोक्षणमित्याह—“प्रोक्षिताः स्थेत्याह। तेनाऽऽपः प्रोक्षिताः” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। अद्भिरेव हवींषि प्रोक्षति। ब्रह्मणाऽप इध्माबर्हिः प्रोक्षति” इति श्रुत्यन्तरम्। ब्रह्मणाऽभिमन्त्रणमन्त्रेणेत्यर्थः॥

## अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याम्—

अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्यस्य शेषं पूरयित्वा विनियोगः

कल्पे दर्शितः—" अथ पुरोडाशीयान्प्रोक्षति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामसुष्मा अमुष्मा इति यथादेवतं त्रिः " इति ।

इदमेव तात्पर्यं दर्शयति—" अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्याह । यथादेवतमेवैनान्प्रोक्षति [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। आवृत्तिं विधत्ते—" त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो रक्षसामपहत्यै " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति । तिस्र आवृत्तयो यस्य यज्ञस्यासौ त्र्यावृत् । त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यादिश्रौतप्रसिद्धिं हिशब्दो द्योतयति । रक्षोघ्नत्वमपामसकृदुक्तम् ॥

## शुन्धध्वं दैव्याय कर्मणे देवयज्यायै—

कल्पः—" उत्तानानि पात्राणि कृत्वा प्रोक्षति शुन्धध्वं दैव्याय कर्मणे देवयज्याया इति त्रिः " इति ।

पूर्ववद्व्याचष्टे—" शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह । देवयज्याया एवैनानि शुन्धति । त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति । मेध्यत्वं यज्ञार्हत्वम् ॥

## अवधूतꣳ रक्षोऽवधूता अरातयः—

कल्पः—" कृष्णाजिनमादायावधूतꣳ रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधूनोति " इति ।

अवधूतं विनाशितम् । प्रत्युष्टमितिवद्व्याचष्टे—" अवधूतꣳ रक्षोऽवधूता अरातय इत्याह । रक्षसामपहत्यै " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति ॥

## अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु—

कल्पः—" अथ हैनत्पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणात्यदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्त्विति " इति ।

हे कृष्णाजिन त्वं भूदेवतायास्त्वक्स्वरूपमसि । ततो भूमिस्त्वां प्रतिगृह्य मदीयेयं त्वगित्येवं जानातु । मन्त्रस्योक्तार्थपरत्वं दर्शयति—" अदित्यास्त्वगसीत्याह । इयं वा अदितिः । अस्या एवैनत्त्वचं करोति । प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति । यदि स्वकीयत्वरूपेण न स्वी कुर्यात्तदानीमपसारयेत् । ततो न प्रतितिष्ठेत् । अत

(व्रीह्यवघातार्थो मन्त्राः)

प्रतिष्ठार्थोऽयं स्वीकारः । देशादिगुणविशिष्टमास्तरणं विधत्ते—" पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय । तस्मात्पुरस्तात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते । तस्मात्प्रजा मृगंग्राहुकाः " [ब्रा० का० ३ प्र० २ अ० ५] इति । यस्मादाहवनीयस्य पूर्वभागे कृष्णाजिनं पश्चिमशिरस्कमूर्ध्वलोमकमास्तृतं तस्मात्तादृशा एव सन्तो यूपे बद्धाः पशवो यज्ञं सेवन्ते । यस्मादयं पशुभिः सेव्यो यज्ञस्तस्मादेव प्रत्यवायभयरहिताः सत्यः प्रजा यज्ञार्थं मृगग्रहणशीला भवन्ति । कृष्णाजिनस्याऽऽदरे हेतुं ब्रुवंस्तद्विशिष्टमवघातं विधत्ते—" यज्ञो देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । यत्कृष्णाजिने हविरध्यवहन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । हविषोऽस्कन्दाय " [ ब्रा० का० ३ प्र० २ अ० ५ इति । यज्ञपुरुषः केनापि निमित्तेन देवेभ्यो विमुखोऽगात्तदा तिरोधाय स्वयं कृष्णमृगो भूत्वा तदीयरूपमात्मनः संपूर्णं कृतवान् । ततः कृष्णाजिनस्योपरि हविरध्यवहन्तीति यदस्ति तेन यज्ञशरीरात्कृष्णाजिनादादाय हवीरूपो यज्ञः प्रयुक्तो भवति । किंचिदधः पतितमपि विहितत्वात्कृष्णाजिनेनावरुद्धत्वाद्धविरस्कन्नमेव भवति ॥

## अधिषवणमसि वानस्पत्यं प्रति त्वाऽदित्यास्त्वग्वेत्तु—

कल्पः—" तस्मिन्नुलूखलमधिवर्तयत्यधिषवणमसि वानस्पत्यं प्रति त्वाऽदित्यास्त्वग्वेत्त्विति " इति ।

हे उलूखल त्वमधिषवणस्यावघातस्याऽऽधारभूतं वनस्पतिजन्यं चासि । तादृशं त्वां कृष्णाजिनरूपेयं भूमेस्त्वक्प्रतिगृह्य मदीयमिति जानातु । अवघाताधारं कर्तुमधिषवणविशेषणमित्याह—" अधिषवणमसि वानस्पत्यमित्याह । अधिषवणमेवैनत्करोति " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति । अविरोधेन संबन्धायेयमाशीरित्याह—" प्रति त्वाऽदित्यास्त्वग्वेत्त्वित्याह संपत्त्वाय " [ब्रा० का० ३ प्र० २ अ० ५] इति । सयः संबन्धवान् । षिञ् बन्धन इत्यस्माद्धातोरुत्पन्नत्वात् ॥

## अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि—

कल्पः—" तस्मिन्पुरोडाशीयानावपत्यग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामीति " इति ।

भोः पुरोडाशीयव्रीहिसमूह त्वमग्नेः शरीरमसि । यतो दाह्यं काष्ठमिव त्वां प्राप्य कौक्षेयोदराग्निराहवनीयाग्निश्चोपचितवपुर्भवति । किंच, वाचः प्रवृत्तिकारण-

१ ख. °धानाय ।

मासि। त्वदीयरसेनोपचिताया वाचः शब्दोच्चारणे प्रवृत्तत्वात्। अत ईदृशं त्वां देवभक्षणायोलूखले प्रक्षिपामि। यथोक्तं मन्त्रार्थं दर्शयति—“ अग्नेस्तनूरसीत्याह। अग्नेर्वा एषा तनूः। यदोषधयः। वाचो विसर्जनमित्याह। यदा हि प्रजा ओषधीनामश्नन्ति। अथ वाचं विसृजन्ते। देववीतये त्वा गृह्णामीत्याह। देवताभिरेवैनत्समर्धयति ” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। देवैर्भक्षितत्वे सति “ यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते ” इति न्यायेनाभिवृद्धिः॥

## अद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्व—

कल्पः—“ मुसलमवदधात्यद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्वेति ” इति।

हे मुसलपदार्थ त्वं वनस्पतिजन्योऽपि दार्ढ्येन पाषाणोऽसि स त्वं देवार्थमिदं हव्यं भक्षणविरोध्युग्रतुषापनयनेन सुष्ठु शान्तं यथा भवति तथा शमय। एतदेवाभिप्रेत्याऽऽह—“ अद्रिरसि वानस्पत्य इत्याह। ग्रावाणमेवैनत्करोति। स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्वेत्याह शान्त्यै ” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। मन्त्रमुत्पाद्य लिङ्गसूचितं विनियोगं प्रकटयति—“ हविष्कृदेहीत्याह। य एव देवानाꣳ हविष्कृतः। तान्ह्वयति। त्रिर्ह्वयति। त्रिषत्या हि देवाः ” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति॥

## इषमा वदोर्जमा वद द्युमद्वदत वयꣳ संघातं जेष्म—

कल्पः—“ अथ दृषदुपले वृषारवेणोच्चैः समाहन्ति—इषमा वदोर्जमा वद द्युमद्वदत वयꣳ संघातं जेष्मेति ” इति।

तत्प्रकारोऽन्यत्र स्पष्टीकृतः—“ आग्नीध्रोऽश्मानमादायेषमावदेति दृषदुपले समाहन्ति द्विर्दृषदि सकृदुपलायां त्रिः संचारयन्नवकृत्वः संपादयति ” इति।

हे पाषाण हविःस्वरूपमिदमन्नं तदीयं स्वादुतरं रसं च यजमान आनेष्यतीति देवेभ्यो वद। हे यज्ञायुधानि सर्वाणि यूयं रसाभिव्यक्तिमदिदं हविरिति देवेभ्यो वदत। वयं त्वनेन पाषाणघोषेणाविनीतं वैरिसंघातं जेष्म। अनेन मन्त्रेणेष्टप्राप्तिमनिष्टपरिहारं च दर्शयति—“इषमा वदोर्जमा वदेत्याह। इषमेवोर्जं यजमाने दधाति। द्युमद्वदत वयꣳ संघातं जेष्मेत्याह। भ्रातृव्याभिभूत्यै ” [ ब्रा० का० ३ प्र० २ अ० ५ ] इति। उपाख्यानेन भ्रातृ

व्याभिभूतिं द्रढयति—"मनोः श्रद्धा देवस्य यजमानस्यासुरघ्नी वाक्। यज्ञायुधेषु प्रविष्टाऽऽसीत्। तेऽसुरा यावन्तो यज्ञायुधानामुद्वदतामुपाशृण्वन्। ते पराभवन्। तस्मात्स्वानां मध्येऽवसाय यजेत। यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपशृण्वन्ति। ते पराभवन्ति" [ब्रा० का० ३ प्र० २ अ० ५] इति। श्रद्धालुत्वेन यागं कुर्वतो मनोः प्रभावादिदं सर्वं संपन्नम्। ततो ज्ञातीनामनुकूलानां प्रतिकूलानां च मध्ये य इमं वृत्तान्तं निश्चित्य श्रद्धालुर्यजेत तस्य भ्रातृव्याः पराभवन्ति। प्रैषमन्त्रमुत्पाद्य विनियोगं तात्पर्यं च दर्शयति—"उच्चैः समाहन्त वा आह विजित्यै। वृङ्क्ते एषामिन्द्रियं वीर्यम्। श्रेष्ठ एषां भवति [ब्रा० का० ३ प्र० २ अ० ५] इति। हे आग्नीध्र त्वदीयहस्तगतेन पाषाणेन दृषदुपलायुग्ममुच्चैस्ताडनीयमिति मन्त्रार्थः। तं मन्त्रमध्वर्युः पठेत्। स च पाषाणध्वनिर्विजयाय भवति। यजमानश्चैषां वैरिणामिन्द्रियं बलं च विनाशयति। स्वयं चैषां ज्ञातीनां मध्ये श्रेष्ठो भवति॥

## वर्षवृद्धमसि—

कल्पः—"अवहत्य वितुषान्कृत्वोत्तरतः शूर्पमुपयच्छति वर्षवृद्धमसीति" इति।

हे शूर्प वर्षवृद्धं वेणुनिष्पन्नतया त्वमपि वर्षवृद्धमसि॥

## प्रति त्वा वर्षवृद्धं वेत्तु—

कल्पः—"तस्मिन्पुरोडाशीयानुद्वपति प्रति त्वा वर्षवृद्धं वेत्त्विति" इति।

हे व्रीहिसमूह वर्षवृद्धं त्वां स्वकीयत्वेन शूर्पं प्रतिमन्यताम्। मन्त्रद्वये वृद्धशब्देन समृद्धिर्द्योत्यत इत्याह—"वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्वित्याह। वर्षवृद्धा वा ओषधयः। वर्षवृद्धा इषीकाः समृद्ध्यै" [ब्रा० का० ३ प्र० २ अ० ५] इति। इषीका वेणवः॥

## परापूतꣳ रक्षः परापूता अरातयः—

कल्पः—"अथोदङ्पर्यावृत्य परापुनाति परापूतꣳ रक्षः परापूता अरातय इति" इति।

रक्षसोऽत्र प्रसङ्गमुपन्यस्य मन्त्रं व्याचष्टे—"यज्ञꣳ रक्षाꣳस्यनुप्राविशन्। तान्यस्ना पशुभ्यो निरवादयन्त। तुषैरोषधीभ्यः। परापूतꣳ रक्षः परापूता अरातय इत्याह। रक्षसामपहत्यै" [ब्रा० का० ३ प्र० २ अ० ५] इति। देवाः पशुयागेषु रुधिरं तद्भागत्वेन बहिस्त्यक्त्वा पशुयागेभ्यो रक्षांसि निष्कासितवन्तस्तुषत्यागेन चौषध्युपलक्षितेभ्यः॥

## रक्षसां भागोऽसि—

कल्पः—" मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात्कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशं हस्तेनोपवपतीति बह्वृचब्राह्मणम्" इति ।

निष्कासनार्थं भागप्रदानमिति दर्शयति—" रक्षसां भागोऽसीत्याह । तुषैरेव रक्षाꣳसि निरवदयते " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति । विधत्ते—" अप उपस्पृशति मेध्यत्वाय " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति ॥

## वायुर्वो वि विनक्तु—

कल्पः—" वायुर्वो वि विनक्त्विति विविच्य " इति ।

हे तण्डुला वो युष्मान्वायुः कणेभ्यः पृथक्करोतु । शुद्ध्यापादकत्वेन वायावादर इत्याह " वायुर्वो वि विनक्त्वित्याह । पवित्रं वै वायुः । पुनात्येवैनान् " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति ॥

## देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु ॥

कल्पः—" देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति पात्र्यां तण्डुलान्प्रस्कन्दयित्वा " इति ।

हिरण्यमङ्गुलीयकं पाणौ यस्यासौ हिरण्यपाणिः । अन्तरिक्षात्पततां वर्षोपलादीनामिवोच्चस्थानस्थिताच्छूर्पात्पततां तण्डुलानामितस्ततः पाते सत्यप्रतिष्ठितत्वेन हविर्विनाशो मा भूदित्यभिप्रेत्य सवितुः प्रतिग्रह इत्याह—" अन्तरिक्षादिव वा एते प्रस्कन्दन्ति । ये शूर्पात् । देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय " [ ब्रा० का० ३ प्र० २ अ० ५ ] इति । प्रैषमन्त्रमुत्पादयति—" त्रिष्फली कर्तवा आह । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय " [ ब्रा० का० ३ प्र० २ अ० ५ इति । हे यजमानपत्नि त्वया तण्डुलास्त्रिवारं फलीकर्तव्याः । श्वैत्याच्छादकतुषापनयनं फलीकरणम् ॥

अत्र विनियोगसंग्रहः—

देवो व उत्पुनात्यंशैस्त्रिभिरापोऽनुमन्त्रयेत् ।
अग्नयेऽग्नी हविः प्रोक्ष्य शुन्धोक्षेद्यागपात्रकम् ॥ १ ॥

---

१ ख. 'शं वा निरस्य' इति 'इ' ।

अत्र चर्मोत्करे धुत्वा ह्यदित्याश्चर्मसंस्तृतिः ।
अध्युलूखलमादध्यादग्नेस्तत्र हविः क्षिपेत् ॥ २ ॥
अद्रिर्मुसलमादत्त इषं दृषदि वादनम् ।
वर्ष शूर्पमुपोह्यात्र प्रति त्वा हविरावपेत् ॥ ३ ॥
परा व्रीहीन्परापूय रक्षसामिति चर्मणः ।
अधस्तुषं कपालेन क्षिपेद्वायुर्विविच्यते ॥
देवः क्षिपेद्धविः पात्र्यां मन्त्राः सप्तदशेरिताः ॥ ४ ॥

अथ मीमांसा ।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" हविष्कृदेहीति मन्त्रात्रिरवघ्नन्समाह्वयेत् ।
विनियोगोऽवघाते स्यादाह्वाने वाऽवघातके ॥
ऐन्द्रीवन्मान्त्रमाह्वानं गौणं हन्तिर्वृथाऽन्यथा ।
पाठेन प्रापितं त्रित्वं ह्वयतेरुपचारगीः ॥
त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः ।
हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥
विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता ।
नैन्द्रीन्यायः श्रुत्यभावाद्धर्हिन्यायेन मुख्यगः " इति ॥

दर्शपूर्णमासयोः श्रूयते—" हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति " इति । देवानामर्थे या हविः संपादयति सा हविष्कृत्, तामेनां संबोध्याध्वर्युरेहीति ब्रूते। तथाचायं मन्त्रो ब्राह्मणेन व्याख्यायते—हविष्कृदेहीत्याह । य एव देवानाꣳ हविष्कृतः। तान्ह्वयति " इति। तमिमं मन्त्रमुच्चार्याध्वर्युस्त्रिवारमवघातं कुर्वन्नाह्वयतीत्यर्थः । अनेन वाक्येन मन्त्रोऽवघाते विनियुज्यते न त्वाह्वाने । एहीत्येतन्मन्त्रगतं पदमाह्वाने समर्थं न त्ववघात इति चेत्। न। तस्यावघातलक्षकत्वात् । यथा पूर्वोदाहृतायामैन्द्यामृचीन्द्रशब्दो गौणस्तद्वदेहीति पदं मन्त्रगतत्वेनावघाते गौणं भविष्यति । अन्यथा मन्त्रब्राह्मणयोराह्वानपरत्वाच्छ्रूयमाणमवघ्नन्निति पदमनर्थकं स्यात् । प्राप्तमवघातमुद्दिश्य तत्र मन्त्रस्य त्रित्वस्य च विधौ वाक्यभेद इति चेत् । न । त्रित्वस्य प्राप्तत्वेनानुवादकत्वात् । कस्यांचिच्छाखायामयं मन्त्रो मन्त्रकाण्डे त्रिवारमभ्यस्याऽऽम्नातः । ह्वयतिपदं त्वेहीतिवदवघातपरतयोपचारेण नेयमिति प्राप्ते ब्रूमः—त्रिरभ्यासस्य नित्यवत्प्राप्तिः पाठमात्रेण न सिध्यति कस्यांचिच्छा-

खायां द्विःपाठात्कस्यांचित्सकृत्पाठात्। अतोऽसौ नित्यवद्विधीयते। न चात्र-
ग्निल्यस्य वैयर्थ्यं तस्य काललक्षकत्वात्। कालस्यापि विधौ वाक्यभेद इति
चेन्न, प्राप्तत्वात्। न ह्यवघाते सहायाह्वानमन्यस्मिन्काले भवति। ततोऽर्थप्राप्तः
कालः। आह्वानमपि मन्त्रसामर्थ्यादेव प्राप्तत्वान्न विधेयम्। न ह्येहीति मन्त्रपाठ
आह्वानमन्तरेणोपपद्यते। मन्त्रव्याख्यानं चोदाहृतम्। तत्रायं वाक्यार्थः
संपन्नः—अवघातकाले यदाह्वानं तस्य त्रिरभ्यासः कर्तव्य इति। अत एव
शाखान्तरे विस्पष्टमाह्वानानुवादेनाभ्यासो विधीयते—" त्रिर्ह्वयति। त्रिषत्या
हि देवाः" इति। एवं सति मन्त्रस्यापि विनियोगे वाक्यभेदः स्यात्।
लिङ्गेन त्वाह्वाने विनियुज्यते नावघाते। न चैन्द्रीन्यायोऽत्र प्रसरति तृतीयाश्रु-
त्यभावात्। बर्हिर्देवसदनं दामीत्यत्रोक्तेन तु न्यायेन मुख्य एवाऽऽह्वाने
लिङ्गेन मन्त्रविनियोगो न त्ववघातरूपे गौणाह्वाने। तस्मान्नावघातशेषोऽयं
मन्त्रः।

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" सवनीये पुरोडाशे स्यादाहूतिर्हविष्कृतः।
न वाऽतिदेशात्स्यान्मैवं पश्वाह्वानात्प्रसक्तितः" इति॥

सवनीयपुरोडाशस्याऽऽग्नेयपुरोडाशविकृतित्वात्प्रकृतिवद्विकृतिः कर्तव्येत्य-
तिदेशेन हविष्कृदाह्वानं तत्र कर्तव्यमिति चेत्। मैवम्। पशौ कृतेन हविष्कृ-
दाह्वानेन तत्कालीने पुरोडाशेऽपि प्रसङ्गसिद्धत्वात्। यद्यप्यौषधार्थं हविष्कृ-
दाह्वानं पशौ नास्ति तथाऽप्येषा कृत्वाचिन्ता।

तत्रैवान्यच्चिन्तितम्—

" अस्त्याहूतिश्चरौ सौम्ये नास्ति वा पशुपाकतः।
निवृत्तत्वादस्ति मैवमनिवृत्तेः पुरोत्थितेः" इति॥

तृतीयसवनीये सौम्यचर्वादयस्तेषु हविष्कृदाह्वानं पुनः कर्तव्यं पशावाहूता-
यास्तस्याः पशुपाके निवृत्तत्वात्, इति चेत्। मैवम्। प्रकृतौ पत्नीसंयाजेभ्य
ऊर्ध्वं हविष्कृतः पत्न्या उत्थानकालत्वेन पशावपि ततः पूर्वं निवृत्त्यभावात्।
तस्मात्तत्कालीनेषु सौम्यचर्वादिषु नास्ति पुनराह्वानम्।

एकादशाध्यायस्य प्रथमपादे चिन्तितम्—

" अवघातः सकृद्भूयो वा सकृद्विधिसिद्धितः।
दृष्टा तण्डुलनिष्पत्तिस्तदन्तोऽभ्यस्यतामयम्" इति॥

व्रीहीनवहन्तीत्यत्र सकृन्मुसलघातमात्रेण विधिप्रयुक्तस्यापूर्वस्य सिद्धेर्ना-

स्त्यावृत्तिरिति चेत्। मैवम्। तण्डुलनिष्पत्तेर्दृष्टप्रयोजनत्वेन तत्पर्यन्तस्याभ्यासस्याश्रुतस्यापि कल्पनीयत्वात्। एवं तण्डुलपेषणादावपि द्रष्टव्यम्।

तत्रैवान्यच्चिन्तितम्—

" सर्वौषधावघातः किमावर्त्यः सकृदेव वा।
आवृत्तिः पूर्ववन्मैवं दृष्टार्थस्यात्र वर्जनात् " इति ॥

अग्निचयने श्रूयते—" औदुम्बरमुलूखलꣳ सर्वौषधस्य पूरयित्वाऽवहन्त्यथैनदुपदधाति " इति। अत्रादृष्टमात्रप्रयोजनत्वात्सकृदेवावघातः।

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

" अवघातार्थमन्त्रः किमसकृत्सकृदेव वा।
प्रहारभेदादावृत्तिः कर्मैक्येन(ण) सकृद्भवेत् " इति ॥

अवरक्षो दिवः सपत्नं वध्यासमित्यवहन्तीत्यवघाते विहितो मन्त्र आवर्तनीयः। कुतः। अवघातस्य प्रहाररूपत्वात्। प्रहाराणां च भिन्नत्वात्, इति प्राप्ते ब्रूमः—तण्डुलनिष्पत्तिपर्यन्तत्वेनाऽऽक्षिप्तप्रहाराभ्यासयुक्तस्यावघातस्यैकत्वात्तत्र विनियुक्तस्यावघातोपक्रमे सकृदेव पाठः।

तत्रैवान्यच्चिन्तितम्—

"नानाबीजेषु तन्मन्त्रः सकृद्भूयोऽथ वा सकृत्।
चिकीर्षैक्यात्प्रयोगाणां भिन्नत्वादसकृद्भवेत् " इति ॥

राजसूये नानाबीजेष्टिसमुदाये श्रूयते—" अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुम् " इत्यादि। तत्र सोऽवघातमन्त्रः सकृदेव वक्तव्यः। कुतः। सर्वावघातविषयायामेकस्यां चिकीर्षायां प्रवृत्तत्वात्, इति प्राप्ते ब्रूमः—समन्त्रोऽवघातश्चोदकातिदेशेन बीजेषु युज्यते। तत्तद्बीजेषु तण्डुलनिष्पत्तौ स कृतार्थः संपन्नः। पुनर्बीजान्तरे तण्डुलनिष्पत्तये समन्त्रस्यावघातस्य प्रयोक्तव्यत्वादसकृन्मन्त्रपाठः।

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

" अवघातः कृष्णलानामस्ति नो वाऽस्ति पाकवत्।
प्रत्यक्षोक्त्या चरेत्पाकमवघाते तु नास्ति सा " इति ॥

विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते—" प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः " इति। कृष्णलशब्दः सुवर्णशकलवाची। प्रकृतौ व्रीहीनवहन्तीतिपुरोडाशहेतूनां व्रीहीणामवघातो विहितः। सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशादस्ति नो वेति संशयः। अस्तीति पूर्वपक्षप्रतिज्ञा।

वितुषीकरणं तत्कृतचरूपकारः। लुप्तेऽप्युपकारे तत्सत्तायां पाकवदिति निदर्शनम्। लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः। तद्वदवघातोऽप्यस्तु। घृते श्रपयतीति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः। अवघाते तु सोक्तिर्नास्तीति वैषम्यादवघातो नास्ति।

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

"अवघाते व्रीहिरूपविवक्षोत न वा श्रुतेः।
आद्यः साधनतामात्रमवर्ज्यत्वाद्विवक्ष्यते" इति॥

व्रीहीनवहन्तीत्यत्र व्रीहीणां स्वरूपं श्रूयमाणत्वाद्विवक्षितम्। तथा सति नैवारश्चरुर्भवतीत्यत्र नीवाराणामव्रीहित्वादवघातो नास्तीत्यूहो नाऽऽरभ्येत। प्राकृतानामवघातविषयाणां व्रीहीणां परित्यागेन व्रीहिस्थानेऽवघातविषयत्वेन नीवाराणां प्रयोग ऊहः। यदा व्रीहिष्वेव नियतोऽवघातो व्रीहिनिवृत्तौ निवर्तते तदा कुत ऊहावसर इति प्राप्ते ब्रूमः—व्रीहिस्वरूपविवक्षायामपि व्रीहिगतोऽपूर्वसाधनत्वाकारो न वर्जयितुं शक्यः। अन्यथाऽवघातवैयर्थ्यापत्तेः। ततोऽपूर्वसाधनत्वाकारोऽवश्यं विवक्षितव्यः। तत्र व्रीहिरूपस्यापि विवक्षायां गौरवं स्यात्। तदविवक्षायां तु नीवाराणामपि विहितत्वेनापूर्वसाधनत्वाकारसद्भावादवघातविषयत्वेनोहः सिध्यति।

तत्रैवान्यच्चिन्तितम्—

"मुसलाद्युक्षणं हत्यै स्यादपूर्वाय वोक्तितः।
आद्यः प्रकरणादन्त्यो व्यर्थं तत्स्यादिहान्यथा" इति॥

"प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" इति श्रूयते। तत्र प्रोक्षणमुलूखलमुसलद्रव्यद्वाराऽवघातार्थम्। कुतः, वाक्येन तच्छेषत्वप्रतीतेरिति चेत्। मैवम्। प्रकरणेनापूर्वशेषत्वावगमात्। न च वाक्यं प्रकरणाद्बलीय इति वाच्यम्। अपूर्वशेषत्वाभावे वैयर्थ्यप्रसङ्गात्। पूर्वपक्षे यत्रावघातस्तत्रैव प्रोक्षणम्। तथा सति नैर्ऋतचरौ कृष्णानां व्रीहीणां नखनिर्भिन्नानामिति श्रुतेषु नखेषु प्रोक्षणं नोह्यते। सिद्धान्ते त्वपूर्वस्य प्रयोजकत्वादस्ति तत्रोहः। तदेवमवघातसंबद्धा विचारा उदाहृताः॥

अथ व्याकरणम्—

देवो व इत्यादिषु स्वरो गतः। अच्छिद्रेणेत्यत्र बहुव्रीहिपक्षे "नञ्सुभ्याम्" [ पा० ६-२-१७२ ] इत्युत्तरपदान्तोदात्तः प्राप्नोति। ततस्तत्पुरुष एव कर्तव्यः। छिद्रं छेदनोपेतं न भवतीत्यच्छिद्रं तत्राव्ययपूर्वपदप्रकृतिस्वरत्वम्। पवित्रशब्दे प्रत्ययस्वरः। वसुसूर्यशब्दौ

वृषादी । आप इत्यत्र वाक्यादित्वान्नाऽऽमन्त्रितनिघातः । देवी-रित्यादीनां सोऽस्ति । यज्ञपतिमित्यत्र "पत्यावैश्वर्ये" [पा० ६-२-१८] इति पूर्वपदप्रकृतिस्वरः । वृत्रस्तूर्यते हिंस्यतेऽस्मिन्निति वृत्रतूर्यं युद्धम् । तूरी-धातोः स्वार्थण्यन्तस्याजन्तत्वेन "अचो यत्" [पा० ३-१-९७] इति यत्प्र-त्यये सति प्रत्ययस्वरं बाधित्वा "तित्स्वरितम्" [पा० ६-१-१८५] इति स्वरिते प्राप्ते तदपवादः "यतोऽनावः" [पा० ६-१-२१३] नौशब्दव्य-तिरिक्तस्य यत्प्रयान्तस्याऽऽदिरुदात्तो भवति । ततो वृत्रेत्युपपदसद्भावात्स-मासान्तोदात्तत्वं बाधित्वा "गतिकारकोपपदात्कृत्" [पा० ६-२-१३९] इत्युत्तरपदप्रकृतिस्वरत्वम् । प्रोक्षिता इत्यत्र "गतिरनन्तरः" [पा० ६-२-४९] इति पूर्वपदप्रकृतिस्वरत्वम् । अवधूतमित्यत्रापि तद्वत् । अधिषवणमि-त्यत्र सवनशब्दस्य ल्युट्प्रत्ययान्तत्वेन "लिति" [पा० ६-१-१९३] इति प्रत्ययात्पूर्वपदस्योदात्तत्वे सति समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । वानस्पत्य-मित्यत्र वनस्पतेर्विकार इत्यस्मिन्नर्थे विहितस्तद्धितप्रत्यय उदात्तः । वाच इत्यत्र "सावेकाचः" [पा० ६-१-१६८] इति विभक्तिरुदात्ता । अधिष-वणवद्विसर्जनम् । देववीतय इत्यत्र दासीभारादित्वात् "दासीभाराणां च" [पा० ६-२-४२] इति सूत्रांशेन पूर्वपदप्रकृतिस्वरे सति समासस्वरो बाध्यते । सुशमीत्यत्रोत्तरपदस्य प्रत्ययस्वरेणान्तोदात्तत्वात्कृदुत्तरपदत्वेनापि तथैव प्राप्तौ "परादिश्छन्दसि बहुलम्" [पा० ६-२-१९९] इत्युत्तरपदाद्युदात्तत्वम् । धुमदित्यत्र मतुपः पित्त्वादनुदात्तत्वे प्राप्ते तदपवादः "ह्रस्वनुड्भ्यां मतुप्" [पा० ६-१-१७६] ह्रस्वान्तादन्तोदात्तान्नुडागमाच्चोत्तरो मतुबुदात्तः स्यात् । अवधूतवत्परापूतम् । हिरण्यपाणिरित्यत्र बहुव्रीहित्वात्पूर्वपदस्वरः । हिरण्यश-ब्दश्चाऽऽद्युदात्तेषु निपातितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ प्रथमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ।)

---

अवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्व-
गसि प्रति त्वा पृथिवी वेत्तु दिवः स्कम्भ-

निरसि प्रति त्वाऽदित्यास्त्वग्वेत्तु धिषणाऽसि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्तु धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामधि वपामि धान्यमसि धिनुहि देवान्प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु ( १ ) ॥

( प्राणाय त्वा पञ्चदश च । )

---

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

अवधूतमित्यव—धूतम् । रक्षः । अवधूता इत्यव—धूताः । अरातयः । अदित्याः । त्वक् । असि । प्रतीति । त्वा । पृथिवी । वेत्तु । दिवः । स्कम्भनिः । असि । प्रतीति । त्वा । अदित्याः । त्वक् । वेत्तु । धिषणा । असि । पर्वत्या । प्रतीति । त्वा । दिवः । स्कम्भनिः । वेत्तु । धिषणा । असि । पार्वतेयी । प्रतीति । त्वा । पर्वतिः । वेत्तु । देवस्य । त्वा ।

( तण्डुलपेषणार्था मन्त्राः )

सवितुः। प्रसव इति प्र—सवे। अश्विनोः। बाहुभ्यामिति बाहु—भ्याम्। पूष्णः। हस्ताभ्याम्। अधीति। वपामि। धान्यम्। असि। धिनुहि। देवान्। प्राणायेति प्र—अनाय। त्वा। अपानायेत्यप—अनाय। त्वा। व्यानायेति वि—अनाय। त्वा। दीर्घाम्। अन्विति। प्रसितिमिति प्र—सितिम्। आयुषे। धाम्। देवः। वः। सविता। हिरण्यपाणिरिति हिरण्य—पाणिः। प्रतीति। गृह्णातु (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः॥ ६॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः। )

---

पञ्चमेऽनुवाके व्रीह्यवघात उक्तः। अवहतानां च तण्डुलानां पेषणात्पूर्वं कपालोपधानस्य निष्प्रयोजनत्वेन तदुपधानात्पूर्वं षष्ठे पेषणमभिधीयते।

अवधूत॑ꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु—

कल्पः—" अथ प्रोक्षितेषु त्रिष्फलीकृतेषु तथैव कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदगावृत्यावधूत॑ꣳ रक्षोऽवधूता अरातय इति त्रिरथैनत्पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणात्यदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्त्विति " इति।

पूर्ववद्व्याचष्टे—" अवधूत॑ꣳ रक्षोऽवधूता अरातय इत्याह। रक्षसामपहत्यै। अदित्यास्त्वगसीत्याह। इयं वा अदितिः। अस्या एवैनत्त्वचं करोति। प्रति त्वा पृथिवी वेत्त्वित्याह प्रतितिष्ठित्यै। पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोप-

---

१ क. ग. प्रोक्षेषु।

स्तृणाति मेध्यत्वाय। तस्मात्पुरस्तात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते। तस्मात्प्रजा मृगंग्राहुकाः। यज्ञो देवेभ्यो निलायत। कृष्णो रूपं कृत्वा। यत्कृष्णाजिने हविरधिपिनष्टि। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते। हविषोऽस्कन्दाय" [ ब्रा० का० ३ प्र० २ अ० ६ ] इति। अवघातस्येवात्र पेषणस्य विशिष्टविधिः॥

## दिवः स्कम्भनिरसि प्रति त्वाऽदित्यास्त्वग्वेत्तु—

कल्पः—"तस्मिन्नुदीचीनकुम्बा५ शम्यां निदधाति दिवः स्कम्भनिरसि प्रति त्वाऽदित्यास्त्वग्वेत्त्विति" इति।

गदया समानाकारो व्यामार्धपरिमितः काष्ठविशेषः शम्या। तां कृष्णाजिनस्योपर्युदीचीनशिरस्कां निदध्यात्। सा च पेषणहेतोर्दृषदः पश्चाद्भागधारणेन तद्भागस्यौन्नत्यं करोति। हे शम्ये त्वं द्युलोकस्य धारयित्र्यसि। तस्मात्कृष्णाजिनरूपाया भूमेस्त्वगियं त्वामभिमन्यताम्। शम्याया द्युलोकाधारत्वमुपपादयति—"द्यावापृथिवी सहाऽऽस्ताम्। ते शम्यामात्रमेकमहर्व्यैता५ शम्यामात्रमेकमहः। दिवः स्कम्भनिरसि प्रति त्वाऽदित्यास्त्वग्वेत्त्वित्याह। द्यावापृथिव्योर्वीत्यै" [ ब्रा० का० ३ प्र० २ अ० ६ ] इति। प्रजापतिना सृष्टे द्यावापृथिव्यौ पूर्वं जतुकाष्ठवत्परस्परं संश्लिष्टे अभूताम्। ते पश्चादेकस्मिन्दिने शम्याप्रमाणेन परस्परं वियुक्ते अभूताम्। प्रतिदिनं तथेति विवक्षया वीप्सोक्ता। तयोः पुनः संश्लेषे यागस्यावकाशो न स्यात्। ततो विश्लेषार्था दिवः स्कम्भनिरित्युच्यते॥

## धिषणाऽसि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्तु—

कल्पः—"तस्यां प्राचीं दृषदमध्यूहति धिषणाऽसि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्त्विति" इति।

हे पेषणसाधनभूते दृषद्रूपे त्वं पेष्टुमभिज्ञतया धिषणाऽसि दृढतया पर्वतावस्थानमर्हसि। तादृशीं त्वां द्युलोकधारिका शम्याऽभिमन्यताम्। सेयं दृषद्दृढतया लोकद्वयधारणाय कल्पत इत्याह—"धिषणाऽसि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्त्वित्याह। द्यावापृथिव्योर्विधृत्यै" [ ब्रा० का० ३ प्र० २ अ० ६ ] इति॥

## धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु—

---

१ ख. °स्थाम°।

( तण्डुलपेषणार्था मन्त्राः )

कल्पः—" दृषद्युपलामध्यूहति धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्त्विति " इति।

पूर्ववत्। पर्वतिः पर्वतसंबन्धिनी दृषत्। तथैव व्याचष्टे-"धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्त्वित्याह। द्यावापृथिव्योर्धृत्यै " [ ब्रा० का० ३ प्र० २ अ० ६ ] इति॥

देवस्य त्वा सवितुः प्रसवेऽश्विनो-
र्बाहुभ्यां पूष्णो हस्ताभ्यामधि
वपामि धान्यमसि धिनुहि देवान्—

बौधायनः-" तस्यां पुरोडाशीयानुद्वपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादेवतमधिवपति धान्यमसि धिनुहि देवानिति " इति।

आपस्तम्बस्तु धान्यमसीत्यनेन सहैकमन्त्रतामाश्रित्याऽऽह-"देवस्य त्वेत्युद्वुत्याग्नये जुष्टमधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थम् " इति।

अत्र वाक्यपूरणायाग्नय इत्यादिकमध्याहृतमतो यथाम्नातमेवानूद्य व्याचष्टे—" देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। अधिवपामीत्याह। यथादेवतमेवैनानधिवपति " [ ब्रा० का० ३ प्र० २ अ० ६ ] इति। देवान्प्रीणयेति यदुक्तं तस्य नास्त्यनुपपत्तिः, आहुतीरूपस्य धान्यस्याल्पत्वेऽपि मन्त्रसामर्थ्येन तदभिवृद्धेरित्याह—" धान्यमसि धिनुहि देवानित्याह। एतस्य यजुषो वीर्येण। यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते। न हि तदस्ति। यत्तावदेव स्यात्। यावज्जुहोति " [ ब्रा० का० ३ प्र० २ अ० ६ ] इति। वीप्सा सर्वत्रानुगमार्था। यदि द्रव्यं यावज्जुहोति तावदेव देवान्प्राप्नुयात्, तदा कथमिदमल्पं देवान्प्रीणयेदित्याशङ्क्येत, न तु तावदेवेति नियमोऽस्ति किं तु यावत्काम्यते तावत्प्रवर्धते। ततः संभवत्येव प्रीणनम्॥

प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा—

---

१ ख. °नुमन्त्र्याम°।

बौधायनः—"पिंष्टि प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति" इति।

आपस्तम्बः—" प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति संततं पिनष्टि " इति।

उच्छ्वासनिश्वासतत्संधिगता वृत्तयः प्राणापानव्यानाः। अथ यः प्राणापानयोः संधिः स व्यान इति श्रुत्यन्तरात्। हे हविर्वृत्तित्रयं यजमाने चिरं स्थापयितुं त्वां पिनष्मि। एतदेव दर्शयति—"प्राणाय त्वाऽपानाय त्वेत्याह। प्राणानेव यजमाने दधाति" [ ब्रा० का० ३ प्र० २ अ० ६ ] इति॥

## दीर्घामनु प्रसितिमायुषे धाम्—

बौधायनः—"अथ बाहू अन्ववेक्षते दीर्घामनु प्रसितिमायुषे धामिति" इति।

आपस्तम्बः—" प्राचीमन्ततोऽनुप्रोह्य " इति।

प्रसितिः प्रबन्धः कर्मसंतानः। यजमानस्याऽऽयुरभिवृद्ध्यर्थमिमामविच्छिन्नकर्मसंततिहेतुरूपामुपलां धारितवानस्मि। तदेतदाह—दीर्घामनु प्रसितिमायुषे धामित्याह। आयुरेवास्मिन्दधाति " [ब्रा० का० ३ प्र० २ अ० ६] इति॥

## देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु॥

कल्पः—" देवो वः सविता हिरण्यपाणिः प्रति गृह्णात्विति कृष्णाजिने पिष्टानि प्रस्कन्दयति[1] " इति।

पूर्ववद्व्याचष्टे—" अन्तरिक्षादिव वा एतानि प्रस्कन्दन्ति। यानि दृपदः। देवो वः सविता हिरण्यपाणिः प्रति गृह्णात्वित्याह प्रतिष्ठित्यै। हविषोऽस्कन्दाय " [ ब्रा० का० ३ प्र० २ अ० ६ ] इति। पत्नीं दासीं वा प्रति प्रैषमन्त्रमुत्पाद्य व्याचष्टे—" असंवपन्ती पिंष्टाणूनि कुरुतादित्याह मेध्यत्वाय " [ ब्रा० का० ३ प्र० २ अ० ६ ] इति। तथा च सूत्रितम्—" असंवपन्ती पिंष्टाणूनि कुरुतादिति संप्रेष्यति दासी पिनष्टि पत्नी वाऽपि वा पत्न्यवहन्ति शूद्रा पिनष्टि " इति। हे दासि तण्डुलेष्वन्यद्द्रव्यं किमप्यप्रवेशयन्ती पेषणं कुरु। तानि च पिष्टानि सूक्ष्माणि कुरु। तमिमं प्रैषमध्वर्युः पठेत्। पिष्टस्य सूक्ष्मत्वे पुरोडाशद्वारा यज्ञयोग्यता भवति॥

अत्र विनियोगसंग्रहः—

" अवेति पूर्ववत्तत्र शम्यां स्थापयते दिवः।
धिषणा द्वे तथाऽश्मानौ देवेत्यधिवपेद्धविः॥ १॥

---

१ क. ख. ङ. "न्दयित्वा" इ°।

प्राणायेति त्रिभिः पिष्ट्वा दीर्घेत्यन्त उपोहति ।
देवोऽजिने स्कन्दयेत प्रोक्ता एकादश त्विह ॥ २ ॥" इति ।

अथ मीमांसा ।

यद्यप्यत्र विशेषाकारेण विचारा बहवो नोपलभ्यन्ते तथाऽपि सामान्यविचाराः पूर्वोक्ता अनुसंधेयाः । इषे त्वेत्यत्र वाक्यपूर्तये यथाऽध्याहारस्तथैवाधिवपामीत्यत्राप्यग्नये जुष्टमित्यादिकमध्याहर्तव्यम् । अध्याहृतस्य चानाम्नातत्वेनामन्त्रत्वादूहादिष्विव स्वराद्यपराधो नास्ति । किं च नवमाध्यायस्य प्रथमपादे चिन्तितम्—

" नोह्य ऊह्योऽथ वा धान्यशब्दो नासंगतोक्तितः ।
ऊह्यो लक्षणयाऽर्थस्य गोपानस्येव संगतेः " इति ॥

दृषदि पेषणाय तण्डुलावापेऽयं मन्त्रो विहितः—धान्यमसि धिनुहि देवानिति । सोऽयं धान्यशब्दोऽसमवेतार्थं ब्रूते निस्तुषाणां तण्डुलानां धान्यशब्दार्थत्वाभावात् । तदयं सवित्रादिशब्दवन्नोहनीय इति चेत् । मैवम् । लक्षणावृत्त्या धान्यशब्दस्य तण्डुलरूपेऽर्थे समवेतत्वात् । यथा गावः पीयन्त इत्यत्र मुख्यवृत्त्यभावेऽपि नासमवेतार्थत्वं लोका वर्णयन्ति किं तु पयो लक्षयित्वाऽर्थं समवेतमेव प्रतीयन्ति तद्वत् । तस्माच्छाक्यानामयने षट्त्रिंशत्संवत्सरे धान्यशब्द ऊहनीयः । तत्र ह्येवमाम्नायते—संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान्मृगान्हन्ति, तेषां तरसा सवनीयाः पुरोडाशा भवन्तीति । तत्र दृषदि पेषणाय मांसमावपन्मांसमसि धिनुहि देवानित्येवं मन्त्रमूहेत् । न च धान्यशब्दवल्लक्षको मृगशब्द ऊहे प्रयोक्तव्य इति वाच्यं, लक्षणावृत्तेः प्रकृतावार्थिकत्वेनातिदेशानर्हत्वात् । तस्मान्मांसमित्येव धान्यशब्दस्योहः ॥

अथ व्याकरणम्—

अवधूतमित्यादयो गताः । पर्वत्येत्यस्य पर्वतमर्हतीत्यस्मिन्नर्थे छन्दोविषये इकाररहितस्य यप्रत्ययस्य विधानात्प्रत्ययस्वरः । पार्वतेयीत्यत्र ङीपुदात्तः । पर्वतिरित्यत्र तदर्हतीत्यस्मिन्नर्थे छान्दस इकारप्रत्ययोऽप्युदात्तः । धान्यशब्दस्य तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामित्यन्तस्वरितत्वम् । धिनुहीत्यत्र " सेर्ह्यपिच्च " [पा० ३·४·८७] इति सिपः स्थान आदिष्टस्य हिशब्दस्य पित्त्वनिषेधात्प्रत्ययस्वरः । यद्यपि विकरणप्रत्ययस्योकारस्य स्वरः सतिशिष्टस्तथाऽपि व्यत्ययो द्रष्टव्यः । प्रसितिमित्यत्र कृदुत्तरपदप्रकृति-

---

१ ख. ततः ।

स्वरे प्राप्ते तदपवादः "तादौ च निति कृत्यतौ" [पा० ६ २ ५०] तुप्रत्ययव्य तिरिक्ते तकारादौ निति कृति प्रत्यये परतः पूर्वपदं प्रकृतिस्वरं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

धृष्टिरसि ब्रह्म यच्छापाग्नेऽग्निमामादं जहि निष्क्रव्यादꣳ सेधाऽऽ देवयजं वह निर्दग्धꣳ रक्षो निर्दग्धा अरातयो ध्रुवमसि पृथिवीं दृꣳहाऽऽयुर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह सजातानस्मै यजमानाय पर्यूह धरुणमसि दिवं दृꣳह चक्षुः ( १ ) दृꣳह श्रोत्रं दृꣳह सजातानस्मै यजमानाय पर्यूह धर्मासि दिशो दृꣳह योनिं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह चितः स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह भृगूणामङ्गिरसां तपसा तप्यध्वं यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू वि मुञ्चताम् ( २ ) ॥

( चक्षुरष्टाचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( कपालोपधानार्था मन्त्राः )

( अथ प्रथमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

धृष्टिः । असि । ब्रह्म । यच्छ । अपेति । अग्ने । अग्निम् । आमादमित्याम—अदम् । जहि । निरिति । क्रव्यादमिति क्रव्य—अदम् । सेध । एति । देवयजमिति देव—यजम् । वह । निर्दग्धमिति निः—दग्धम् । रक्षः । निर्दग्धा इति निः—दग्धाः । अरातयः । ध्रुवम् । असि । पृथिवीम् । दृꣳह । आयुः । दृꣳह । प्रजामिति प्र—जाम् । दृꣳह । सजातानिति स—जातान् । अस्मै । यजमानाय । परीति । ऊह । धर्त्रम् । असि । अन्तरिक्षम् । दृꣳह । प्राणमिति प्र—अनम् । दृꣳह । अपानमित्यप—अनम् । दृꣳह । सजातानिति स—जातान् । अस्मै । यजमानाय । परीति । ऊह । धरुणम् । असि । दिवम् । दृꣳह । चक्षुः । (१) दृꣳह । श्रोत्रम् । दृꣳह । सजातानिति स—जातान् । अस्मै । यजमानाय । परीति । ऊह । धर्म । असि । दिशः । दृꣳह । योनिम् । दृꣳह । प्रजामिति प्र—जाम् । दृꣳह । सजातानिति स—जातान् । अस्मै । यजमानाय । परीति । ऊह । चितः । स्थ । प्रजामिति प्र—जाम् । अस्मै । रयिम् । अस्मै । सजातानिति स—जातान् । अस्मै । यजमानाय । परीति ।

ऊह । भृगूणाम् । अङ्गिरसाम् । तपसा । तप्यध्वम् । यानि । घर्मे । कपालानि । उपचिन्वतीत्युप—चिन्वन्ति । वेधसः । पूष्णः । तानि । अपीति । व्रते । इन्द्रवायू इतीन्द्र—वायू । वीति । मुञ्चताम् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ।

---

षष्ठानुवाके पेषणमुक्तम् । यद्यप्यनन्तरं पुरोडाशो निष्पादनीयस्तथाऽप्यतप्तेषु कपालेषु पुरोडाशस्य श्रपयितुमशक्यत्वात्सप्तमे कपालोपधानमभिधीयते ।

धृष्टिरसि ब्रह्म यच्छ—

कल्पः—" धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय " इति ।

पलाशशाखामूले छिन्नः प्रादेशपरिमित उपवेषः । हे उपवेष त्वमङ्गाराणां धर्षणे समर्थोऽसि । अतो ब्रह्मशब्दोदितं पुरोडाशरूपं देवान्नं प्रयच्छ । धृष्टिशब्दो धैर्यद्योतनायेत्याह—"धृष्टिरसि ब्रह्म यच्छेत्याह धृत्यै" [ ब्रा० का० ३ प्र० २ अ० ७ ] इति ॥

अपाग्नेऽग्निमामादं जहि निष्क्रव्याद्ँ सेधाऽऽ देवयजं वह—

कल्पः—" अपाग्नेऽग्निमामादं जहीति गार्हपत्यादाहवनीयाद्वा प्रत्यञ्चावङ्गारौ निर्वर्त्य निष्क्रव्याद्ँ सेधेति तयोरन्यतरमुत्तरमपरमवान्तरदेशं वा निरस्याऽऽ देवयजं वहेति दक्षिणमवस्थाप्य " इति ।

हे गार्हपत्याग्ने योऽग्निः शास्त्रीयं पाकमन्तरेणाऽऽमं द्रव्यमत्ति न तु पाकार्थं स्थापितस्य पाकं करोति तमपनय मारय । यश्च लौकिकं मांसमत्ति तमपि निषेधय । यस्तु देवान्यजति तमावह । यथोक्तस्याग्न्यानयनस्य कपालोपधानार्थतां दर्शयन्प्रशंसति—"अपाग्नेऽग्निमामादं जहि निष्क्रव्याद्ँ सेधाऽऽ देवयजं वहेत्याह । य एवाऽऽमात्क्रव्यात् । तमपहत्य । मेध्येऽग्नौ कपालमुपदधाति " [ ब्रा० का० ३ प्र० २ अ० ७ ] इति ॥

( कपालोपधानार्था मन्त्राः )

निर्दग्धꣳ रक्षो निर्दग्धा अरातयो ध्रुव-
मसि पृथिवीं दृꣳहाऽऽयुर्दृꣳह प्रजां दृꣳह
सजातानस्मै यजमानाय पर्यूह—

निर्दग्धꣳ रक्षो निर्दग्धा अरातयो ध्रुवमसि पृथिवीं दृꣳहाऽऽयुर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूहेत्येतयोर्मन्त्रयोरर्थक्रमेण विनियोगः कल्पे दर्शितः—"ध्रुवमसीति तस्मिन्मध्यमं पुरोडाशकपालमुपदधाति निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय" इति।

हे कपाल त्वं दृढमस्यतः पृथिव्यादीन्दृढी कुरु। अस्य यजमानस्य ज्ञातीन्परितः सेवकान्कुरु। अस्मिन्कपालेऽवस्थितं रक्षो निःशेषेण दग्धम्। आम्नानक्रमेण निर्दग्धमन्त्रमादौ व्याचष्टे—"निर्दग्धꣳ रक्षो निर्दग्धा अरातय इत्याह। रक्षाꣳस्येव निर्दहति" [ब्रा० का० ३ प्र० २ अ० ७] इति। कपालानामुपधानं विधत्ते—"अग्निवत्युपदधाति। अस्मिन्नेव लोके ज्योतिर्धत्ते" [ब्रा० का० ३ प्र० २ अ० ७] इति। यथोक्ताङ्गारयुक्ते प्रदेशे कपालमुपदध्यात्। कपालोपर्यन्यस्याङ्गारस्य स्थापनं विधत्ते—"अङ्गारमधिवर्तयति। अन्तरिक्ष एव ज्योतिर्धत्ते" [ब्रा० का० ३ प्र० २ अ० ७] इति। कपालस्याध ऊर्ध्वं च स्थिताभ्यामङ्गाराभ्यां लोकद्वयस्य ज्योतिष्मत्त्वे ततोऽप्यूर्ध्वमङ्गारस्य स्थापनासंभवाद्दिवो ज्योतिर्न स्यादिति न शङ्कनीयमित्याह—"आदित्यमेवामुष्मिँल्लोके ज्योतिर्धत्ते" [ब्रा० का० ३ प्र० २ अ० ७] इति। एतद्वृत्तान्तज्ञानं प्रशंसति—"ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति। य एवं वेद" [ब्रा० का० ३ प्र० २ अ० ७] इति॥

धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह
सजातानस्मै यजमानाय पर्यूह धरुणमसि दिवं
दृꣳह चक्षुर्दृꣳह श्रोत्रं दृꣳह सजाता-
नस्मै यजमानाय पर्यूह धर्मासि दिशो दृꣳह
योनिं दृꣳह प्रजां दृꣳह सजातानस्मै यजमा-
नाय पर्यूह चितः स्थ प्रजामस्मै रयि-
मस्मै सजातानस्मै यजमानाय पर्यूह—

१ ख. त्वं ध्रुवम्°। २ ख. °दधाति। क°।

बौधायनः—" अथ पूर्वार्ध्यमुपदधाति धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह सजातानस्मै यजमानाय पर्यूहेत्यथ परार्ध्यमुपदधाति धरुणमसि दिवं दृꣳह चक्षुर्दृꣳह श्रोत्रं दृꣳह सजातानस्मै यजमानाय पर्यूहेत्यथ दक्षिणार्ध्यमुपदधाति धर्मासि दिशो दृꣳह योनिं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूहेत्यथ पूर्वार्ध्यमुपदधाति चितः स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूहेति " इति ।

आपस्तम्बः—" धर्त्रमसीति पूर्वं द्वितीयꣳ सꣳस्पृष्टं धरुणमसीति पूर्वं तृतीयमिति धर्मासीति सप्तमं चितः स्थेत्यष्टमम् " इति ।

तत्र धर्त्रधर्मधरुणशब्दा धारकत्वं ब्रुवन्तो दृढत्वं लक्षयन्ति । हेऽष्टमकपाल त्वमुपचितरूपोऽसि । ततो यजमानस्य प्रजादिकं परितः संपादय । प्रजादेः प्रत्येकमुपचयविवक्षया पृथग्वाक्यत्वं द्योतयितुमस्मा इति पदस्याऽऽवृत्तिः । चितः स्थेति बहुवचनमादरार्थम् । क्रमेण मन्त्रान्व्याचष्टे—" ध्रुवमासि पृथिवीं दृꣳहेत्याह । पृथिवीमेवैतेन दृꣳहति । धर्त्रमस्यन्तरिक्षं दृꣳहेत्याह । अन्तरिक्षमेवैतेन दृꣳहति । धरुणमसि दिवं दृꣳहेत्याह । दिवमेवैतेन दृꣳहति । धर्मासि दिशो दृꣳहेत्याह । दिश एवैतेन दृꣳहति " [ ब्रा० का० ३ प्र० २ अ० ७ ] इति । उपसंहरति—" इमानेवैतैर्लोकान्दृꣳहति " [ ब्रा० का० ३ प्र० २ अ० ७ ] इति । एतद्वेदनं प्रशंसति—"दृꣳहन्तेऽस्मा इमे लोकाः प्रजया पशुभिः । य एवं वेद " [ ब्रा० का० ३ प्र० २ अ० ७ ] इति । सर्वत्र विधेयार्थं केनापि प्रकारेण स्तुत्वा श्रद्धोत्पादनीयेति व्युत्पादयितुं कपालोपधानं बहुधा स्तौति । तत्रायमेकः प्रकारः—"त्रीण्यग्रे कपालान्युपदधाति । त्रय इमे लोकाः । एषां लोकानामाप्त्यै " [ ब्रा० का० ३ प्र० २ अ० ७ ] इति । मध्यमपूर्वापरकपालगतं त्रित्वमपि प्रशस्तम् । अथापरः प्रकारः—" एकमग्रे कपालमुपदधाति । एकं वा अग्रे कपालं पुरुषस्य संभवति । अथ द्वे । अथ त्रीणि । अथ चत्वारि । अथाष्टौ । तस्मादष्टाकपालं पुरुषस्य शिरः " [ ब्रा० का० ३ प्र० २ अ० ७ ] इति । प्रथमं ध्रुवमसीत्येकं कपालमुपधीयते । ततो धर्त्रमसीत्यनेन सह द्वे । धरुणमसीत्यनेन सह त्रीणि । धर्मासीत्यनेन सह चत्वारि । ततः केषांचिन्मते चितः स्थेत्यनेनैवोपरितनानि चत्वारीत्यष्टौ भवन्ति । पुरुषस्यापि गर्भे प्रथमं शिरोरूपमखण्डं कपालमुत्पद्यते । पश्चात्क्रमेण रेखाभिरष्टधा भिद्यते । कपालेषु संख्यां स्तुत्वा तदुपधानं स्तौति—" यदेवं कपालान्युपदधाति । यज्ञो वै प्रजापतिः । यज्ञमेव प्रजापतिꣳ सꣳस्करोति । आत्मानमेव तत्सꣳस्करोति । तꣳ सꣳस्कृतमात्मानम् । अमुष्मिँल्लोकेऽनुपरैति "

[ब्रा० का० ३ प्र० २ अ० ७] इति। उपधानेन कपालेषु संस्कृतेषु तद्द्वारा तत्साध्यो यागः संस्क्रियते। यज्ञद्वारा तत्स्रष्टुः प्रजापतेः संस्कारः। तेन कपालयज्ञप्रजापतिसंस्कारेण तेषां संस्कृतत्वाद्यजमानः स्वयं संस्कृतो भवति। तं च संस्कृतं स्वर्गे[1] लोके गच्छन्तमनु फलदानाय यज्ञः प्रजापतिरूपधारी कश्चिद्देवो गच्छति। अपरः प्रकारः—"यदष्टावुपदधाति। गायत्रिया तत्संमितम्। यन्नव। त्रिवृता तत्। यद्दश। विराजा तत्। यदेकादश। त्रिष्टुभा तत्। यद्द्वादश। जगत्या तत्। छन्दःसंमितानि स उपदधत्कपालानि। इमाँल्लोकाननुपूर्वं दिशो विधृत्यै दृꣳहति। अथाऽऽयुः प्राणान्प्रजां पशून्यजमाने दधाति। सजातानस्मा अभितो बहुलान्करोति" [ब्रा० का० ३ प्र० २ अ० ७] इति। त्रिवृच्छब्दः स्तोमवाची। स च स्तोम उपास्मै गायता नर इत्यादृग्भिर्नवभिः संपद्यते। छन्दःशब्दश्च स्तोममप्युपलक्षयति। गायत्रीविराट्त्रिष्टुब्जगतीनां चाष्टत्वाद्यक्षरसंख्या प्रसिद्धा। तथा संख्यया छन्दःसादृश्यम्। नन्वत्राऽऽग्नेयस्याष्टौ कपालान्यग्नीषोमीयस्य चैकादश न तु नवादिसंख्या लभ्यत इति चेद्बाढम्। तथाऽपि संख्याऽन्यत्र विद्यमाना प्रसङ्गादिह स्तूयते। त्रयोदशादिसंख्या न क्वाप्यस्ति। एकादिका सप्तपर्यन्ता संख्याऽन्यत्रास्तीति चेत्तर्हि तस्या अप्यनेन न्यायेन स्तुतिरून्नेया। ईदृशानि कपालान्युपदधानोऽध्वर्युरनुक्रमेण पृथिव्यादिलोकान्प्रागादिदिशश्च दृढी करोति। लोकबुद्ध्या कपालानां स्थापितत्वात्। अत इदमुपधानं लोकदृढ्यै भवति। किं चाऽऽयुरादीन्भ्रातृपुत्रांश्च यजमाने संपादितवान्भवति। क्रमप्राप्ते मन्त्रे स्पष्टार्थत्वं दर्शयति—"चितः स्थेत्याह। यथायजुरेवैतत्" [ब्रा० का० ३ प्र० २ अ० ७] इति॥

भृगूणामङ्गिरसां तपसा तप्यध्वम्—

कल्पः—"भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन कपालेष्वङ्गारानध्यूह्य" इति।

हे कपालानि देवतातपोरूपेणानेनाग्निना तप्तानि भवत। इममेवार्थं दर्शयति—भृगूणामङ्गिरसां तपसा तप्यध्वमित्याह। देवतानामेवैनानि तपसा तपति" [ब्रा० का० ३ प्र० २ अ० ७] इति॥

यानि घर्मे कपालान्युपचिन्वन्ति
वेधसः। पूष्णस्तान्यपि व्रत
इन्द्रवायू वि मुञ्चताम्॥, इति।

---

१ क. स्वर्गलोकं ग°। ग. स्वर्गलोके ग°।

अयं मन्त्रो यद्यपि यागसमाप्तौ पठनीयस्तथाऽपि कपालप्रसङ्गादिहाऽऽम्नातः। तद्विनियोगः सूत्रे दर्शितः—"यानि घर्मे कपालानीति चतुष्पदयर्चा कपालानि विमुच्य संख्यायोद्वासयति संतिष्ठेते दर्शपूर्णमासौ" इति।

अध्वर्युरूपा वेधसो यानि घर्मे कपालान्यादीप्ते वह्नौ ध्रुवमसीत्यादिमन्त्रैरुपस्थापितवन्तः। पूजार्थं बहुवचनम्। तादृशान्यपि कपालानि विमोक्तुं समर्थाविन्द्रवायू पोषकस्य यजमानस्य यागरूपे व्रते समाप्ते सति विमुञ्चताम्। अनेकगुणविशिष्टं विमोकं विधत्ते—"तानि ततः स्ँस्थिते। यानि घर्मे कपालान्युपचिन्वन्ति वेधस इति चतुष्पदयर्चा विमुञ्चति। चतुष्पादः पशवः। पशुष्वेवोपरिष्टात्प्रतितिष्ठति" [ ब्रा० का० ३ प्र० २ अ० ७ ] इति॥

अत्र विनियोगसंग्रहः—

"धृष्टिरादायोपवेषमपाङ्गारौ वियोजयेत्।
निष्क्रापसारयेदेकमा देवान्यं तु शेषयेत्॥ १॥
ध्रुवं कपालमाधाय निर्दाङ्गारं तथोपरि।
धर्त्रे द्वितीयं धरुणं तृतीयं धर्म सप्तमम्॥ २॥
चितोऽष्टमं भृगू तेषु सर्वेष्वङ्गाररोपणम्।
यानि स्वकाले संप्राप्ते कपालानि विमुञ्चति॥
अनुवाके सप्तमेऽस्मिन्नुक्ता द्वादश मन्त्रकाः॥ ३॥" इति।

अथ मीमांसा।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

"श्रपणं तुषवापश्च कपालस्य प्रयोजकौ।
उत श्रपणमेवाऽऽद्यो वापार्थत्वात्तृतीयया॥
पुरोडाशकपालेति नाम्ना स्याच्छ्रपणार्थता।
प्रयुक्तस्य प्रयुक्तिर्नो तस्य वापे प्रसञ्जनम्" इति॥

कपालेषु श्रपयतीति श्रपणं पुरोडाशस्य श्रुतम्। तथा पुरोडाशकपालेन तुषानुपवपतीति कपाले तुषधारणं श्रुतम्। ते च तुषाः सकपाला रक्षसां भागोऽसीति मन्त्रेण कृष्णाजिनस्याधस्तादवस्थापनीयाः। तत्र श्रपणं यथा कपालसंपादनस्य प्रयोजकं तथा तुषवापोऽपि प्रयोजकः। एकहायन्येति तृतीयया यथा गोः क्रयार्थत्वं तथा कपालेनेति तृतीयया कपालस्य तुषवापार्थत्वावगमादिति चेन्मैवम्। नात्र कपालमात्रस्य तुषोपवापसाधनत्वं श्रुतं किं तर्हि यत्कपालं पुरोडाशश्रपणायोपात्तमासादितं च तस्यैव कपालस्य साधनत्वम्। एतच्च पुरोडाशकपालेनेति सविशेषणनाम्ना तद्विधानादवगम्यते। तथा

सति प्रथमं श्रपणेन कपालं प्रयुज्यते । न च प्रयुक्तस्य पुनस्तुषवापेन प्रयुक्तिः संभवति । तस्माच्छ्रपणेनैव प्रयुक्तं कपालं तुषोपवापेऽपि प्रसङ्गात्सिध्यति । ईदृशमेवाङ्गत्वं तृतीयाश्रुत्या बोध्यते ॥

अथ व्याकरणम्—

धृष्टिशब्दः क्तिन्प्रत्ययान्तत्वादाद्युदात्तः । आमाच्छब्दे कृत्स्वरः । तथैव देवयज्शब्दः । निर्दग्धमिति प्रत्युष्टवत् । सजातानित्यत्र समानं जातं जन्म येषां ते सजाताः । " वा जाते " [ पा० ६-२-१७१ ] जातशब्द उत्तरपदे बहुव्रीहौ समासे विकल्पेनान्तोदात्तो भवति । भृग्वङ्गिरःशब्दौ वृषादी । उपचिन्वन्तीत्यत्र यानीत्यनेन यच्छब्दयोगान्निघाताभावः । विकरणप्रत्ययस्वरस्य सति शिष्टस्याप्यबलीयस्त्वेन " उदात्तयणः " [ पा० ६-१-१७४ ] इति उपरितनस्याकारस्योदात्तः । पूष्ण इत्यत्र " अनुदात्तस्य च यत्रोदात्तलोपः " [ पा० ६-१-१६१ ] इति विभक्तिरुदात्ता । इन्द्रवायू इत्यत्र " देवताद्वंद्वे च " [ पा० ६-२-१४१ ] इत्युभयपदप्रकृतिस्वरत्वे प्राप्ते तदपवादः— " नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु " [ पा० ६-२-१४२ ] अनुदात्तादौ पृथिव्यादिव्यतिरिक्त उत्तरपदे देवताद्वंद्वस्वरो न भवति । ततः समासस्येत्यन्तोदात्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

सं वपामि समापो अद्भिरग्मत समोषधयो रसेन सꣳ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वं जनयत्यै त्वा सं यौम्यग्नये त्वाऽग्नीषोमाभ्यां मखस्य शिरोऽसि घर्मोऽसि विश्वायुरुरु प्रथस्वोरु ते यज्ञपतिः प्रथतां त्वचं

गृह्णीष्वान्तरितꣳ रक्षोऽन्तरिता अरातयो देव-स्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाकेऽ-ग्निस्ते तनुवं माऽति धागग्ने हव्यꣳ रक्षस्व सं ब्रह्मणा पृच्यस्वैकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहा ( १ ) ॥

( सविता द्वाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

समिति । वपामि । समिति । आपः । अद्भिरित्यत्—भिः । अग्मत । समिति । ओषधयः । रसेन । समिति । रेवतीः । जगतीभिः । मधुमतीरिति मधु—मतीः । मधुमतीभिरिति मधु—मतीभिः । सृज्यध्वम् । अद्भ्य इत्यत्—भ्यः । परीति । प्रजाता इति प्र—जाताः । स्थ । समिति । अद्भिरित्यत्—भिः । पृच्यध्वम् । जनयत्यै । त्वा । समिति । यौमि । अग्नये । त्वा । अग्नीषोमाभ्यामित्यग्नी—सोमाभ्याम् । मखस्य । शिरः । असि । घर्मः । असि । विश्वायुरिति विश्व—आयुः । उरु । प्रथस्व । उरु । ते । यज्ञपतिरिति

(पुरोडाशनिष्पादनार्था मन्त्राः)

यज्ञ—पतिः। प्रथताम्। त्वचम्। गृह्णीष्व। अन्तरितमित्यन्तः—इतम्। रक्षः। अन्तरिता इत्यन्तः—इताः। अरातयः। देवः। त्वा। सविता। श्रपयतु। वर्षिष्ठे। अधीति। नाके। अग्निः। ते। तनुवम्। मा। अतीति। धाक्। अग्ने। हव्यम्। रक्षस्व। समिति। ब्रह्मणा। पृच्यस्व। एकताय। स्वाहा। द्वितायं। स्वाहा। त्रितायं। स्वाहा (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

(अथ प्रथमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः।)

---

सप्तमे कपालोपधानमुक्तं ततस्तेषु कपालेषु लब्धावसरत्वादष्टमे पुरोडाशश्रपणमभिधीयते।

## सं वपामि—

संवपामीत्यस्याऽऽम्नातस्य मन्त्रस्य शेषं पूरयित्वा विनियोगः कल्पे दर्शितः—"अथोत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तिरःपवित्रं पात्र्यां कृष्णाजिनात्पिष्टानि संवपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं संवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति" इति।

अपेक्षितस्थाने प्रयोक्तव्य इत्येतमर्थं दर्शयितुमेव निर्वापपेषणयोर्देवस्य त्वेति मन्त्रो द्विराम्नातः। अत्रानाम्नातमप्यनेनैवाभिप्रायेण व्याचष्टे—"देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। संवपामीत्याह। यथादेवतमेवैनानि संवपति" [ब्रा० का० ३ प्र० २ अ० ८] इति॥

( पुरोडाशनिष्पादनार्थो मन्त्राः )

## समापो अद्भिरग्मत समोषधयो रसेन सꣳ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वम्—

बौधायनः—"प्रणीताभ्यः स्रुवेणोपहत्य वेदेनोपयम्य पाणिं चान्तर्धायैवं मदन्तीभ्यस्ता उभयीरानीयमानाः प्रतिमन्त्रयते समापो अद्भिरग्मत समोषधयो रसेन सꣳ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमिति" इति।

पूर्वं चमसे संगृहीता आपः प्रणीताः। तप्ता आपो मदन्त्यः। आपस्तम्बेन तु प्रणीतामात्रेऽयं मन्त्रो विनियुक्तः—"स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति पिष्टेष्वानयति" इति। प्रणीता आपो मदन्तीभिरद्भिः संगच्छन्ताम्। पिष्टरूपा ओषधयो द्विविधोदकरसेन संगच्छन्ताम्। किं च हे आपो यूयं सर्वसस्याभिवृद्धिहेतुत्वात्तद्द्वारा धनवत्यः स्वभावतो माधुर्यवत्यश्च। ओषधयोऽपि जङ्गमरूपपश्वभिवृद्धिहेतुतया पशुरूपधनयुक्ताः स्वभावसिद्धस्वादुत्वेन माधुर्यवत्यश्च। ततः पिष्टरूपाभिस्ताभिरोषधीभिः संसृष्टा भवत। मन्त्रस्य पूर्वभागे जलौषधिसंगमस्य फलमाह—"समापो अद्भिरग्मत समोषधयो रसेनेत्याह। आपो वा ओषधीर्जिन्वन्ति। ओषधयोऽपो जिन्वन्ति। अन्या वा एतासामन्या जिन्वन्ति। तस्मादेवमाह" [ ब्रा० का० ३ प्र० २ अ० ८ ] इति। जिन्वन्ति प्रीणयन्ति। यद्यप्यचेतनानामपामोषधीनां च नास्ति प्रीतिस्तथाऽपि पुरोडाशरूपेण देवप्रियहेतुत्वात्तदुपचारः। न हि केवलेन जलेन पिष्टेन वा पुरोडाशः संभवति किं त्वन्योन्यमेलनरूपेण प्रीणनेन। यस्मात्तासामपामोषधीनां च मध्येऽन्या आपोऽन्या ओषधीः प्रीणयन्ति। अन्याश्चौषधयोऽन्या अपः प्रीणयन्ति। तस्मान्मन्त्रः समोषधयो रसेनेत्येवं ब्रूते। उत्तरभागे माधुर्यसंपादनं फलमाह—"सꣳ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह। आपो वै रेवतीः। पशवो जगतीः। ओषधयो मधुमतीः। आप ओषधीः पशून्। तानेवास्मा एकधा सꣳसृज्य। मधुमतः करोति" [ ब्रा० का० ३ प्र० २ अ० ८ ] इति॥

## अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वम्—

बौधायनः—"अथानुपरिप्लावयत्यद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वमिति" इति।

आपस्तम्बः—"अद्भ्यः परि प्रजाता इति तप्ताभिरनुपरिप्लाव्य" इति।

---

१ क. ग. 'र्वस्या'।

परिप्लावनं पिष्टस्य सर्वत आर्द्रीकरणम् । हे पिष्टरूपा ओषधयो यूयं पूर्व-मद्भ्य उत्पन्नाः स्थ । ततोऽद्याप्यद्भिः संपृक्ता भवत । मन्त्रेण परिप्लावनं विधत्ते—" अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वमिति पर्याप्लावयति । यथा सुवृष्ट इमामनुविसृत्य । आप ओषधीर्महयन्ति । तादृगेव तत् " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । यथा पर्जन्ये सुवृष्टे सत्यापो भूमिमनुप्रवि-श्यौषधीर्वर्धयन्ति तथाविधमिदं परिप्लावनं जलेन पिष्टे सर्वतः प्लाविते सति पुरोडाशनिष्पत्तेः ॥

## जनयत्यै त्वा सं यौमि—

कल्पः—" सं यौति जनयत्यै त्वा सं यौमीति " इति ।

हे परिप्लावित पिष्ट त्वां हस्ताङ्गुलिमर्दनेन सम्यङ्मिश्री करोमि । एतच्च यजमानस्य शुक्रशोणितमिश्रणेनैव प्रजोत्पत्तये संपद्यते । एतदेव विशदयति— " जनयत्यै त्वा सं यौमीत्याह । प्रजा एवैतेन दाधार " [ब्रा० का० ३ प्र० २ अ० ८ ] इति ॥

## अग्नये त्वाऽग्नीषोमाभ्याम्—

कल्पः—" संयुत्य व्यू(व्यु)ह्याभिमृशत्यग्नये त्वाऽग्नीषोमाभ्याममुष्मा अ-मुष्मा इति यथादेवतम् " इति ।

त्वामहं स्पृशामीति शेषः । असांकर्यं मन्त्रद्वयप्रयोजनमित्याह—" अग्नये त्वाऽग्नीषोमाभ्यामित्याह व्यावृत्त्यै " [ब्रा० का० ३ प्र० २ अ० ८] इति ॥

## मखस्य शिरोऽसि—

कल्पः—"पिण्डं करोति मखस्य शिरोऽसीति " इति ।

विशदीकृत्य व्याचष्टे—" मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यै-तच्छिरः । यत्पुरोडाशः । तस्मादेवमाह " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति ॥

## घर्मोऽसि विश्वायुः—

कल्पः—"घर्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयत्ये-वमुत्तरमुत्तरेषु " इति ।

हे पुरोडाश त्वं तप्तकपालावस्थानेन दीप्तो देवतायोग्यत्वेन कृत्स्नायुः-प्रदश्चासि । विश्वमायुर्यस्येति बहुव्रीहेरायुष्प्रदस्त्वमित्येवात्रार्थ इत्याह—

१ ख. ॰मिह प॰ । २ ख. ॰प्यास्तिः । क॰ ।

" घर्मोऽसि विश्वायुरित्याह । विश्वमेवाऽऽयुर्यजमाने दधाति " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति ॥

## उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्—

कल्पः—" उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयत्यतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति " इति ।

हे पुरोडाश त्वं बहु यथा भवति तथा विस्तीर्णो भव । त्वदीयो यजमानोऽपि प्रजादिभिः प्रथितोऽस्तु । यज्ञपतेर्विस्तारं दर्शयति—" उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह । यजमानमेव प्रजया पशुभिः प्रथयति " [ ब्रा० का ३ प्र० २ अ० ८ ] इति ॥

## त्वचं गृह्णीष्व—

कल्प—" त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णी करोत्यनभिक्षारयन् " इति ।

हे पुरोडाश त्वमद्भिः श्लक्ष्णीभूतां त्वचं स्वी कुरु । निम्नोन्नतभावपरिहारेण त्वक्सादृश्ये सति पुरोडाशः सदेहो भवतीत्याह—"त्वचं गृह्णीष्वेत्याह । सर्वमेवैनꣳ सतनुं करोति" [ब्रा० का० ३ प्र० २ अ० ८] इति। श्लक्ष्णीकरणं विधत्ते—" अथाप आनीय परिमार्ष्टि । माꣳस एव तत्त्वचं दधाति । तस्मात्त्वचा माꣳसं छन्नम् " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । तत्तेन मार्जनेन पिष्टरूपे मांस एव श्लक्ष्णत्वरूपत्वचं स्थापयति । ततो लोके साऽपि तथा दृश्यते ॥

## अन्तरितꣳ रक्षोऽन्तरिता अरातयः—

कल्पः—" अन्तरितꣳ रक्षोऽन्तरिता अरातय इति सर्वाणि हवीꣳषि त्रिः पर्यग्नि कृत्वा " इति ।

दर्भैर्दीप्तैः पुरोडाशस्य परितो रक्षसां संशोधनं पर्यग्निकरणम् । अनेन पर्यग्निकरणेन राक्षसजातिर्व्यवहिता । शत्रवोऽपि व्यवहिताः । तदेतद्विधत्ते—घर्मो वा एषोऽशान्तः । अर्धमासेऽर्धमासे प्रवृज्यते । यत्पुरोडाशः । स ईश्वरो यजमानꣳ शुचाऽप्रदहः । पर्यग्नि करोति । पशुमेवैनमकः । शान्त्या अप्रदाहाय " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । पुरोडाशो योऽस्ति स एष दीप्यमानोऽग्निर्भूत्वा कदाचिदपि न शाम्यति प्रतिपक्षं तप्तकपालैः संतप्यमानत्वात् । स च तापेन यजमानं प्रदग्धुं समर्थः । [1]तत्र [2]पैशुप्रचारेण पर्यग्निकरणेन

१ ख. ततश्च । २ ख. पशूपचा° ।

( पुरोडाशनिष्पादनार्था मन्त्राः )

पुरोडाशे पर्यग्नौ कृते सति प्रदीप्ताग्निरूपपरित्यागेन शान्तो भूत्वा यजमानं न प्रदहति। आवृत्तिं विधत्ते—" त्रिः पर्यग्नि करोति। त्र्यावृद्धि यज्ञः। अथो रक्षसामपहत्यै " [ब्रा० का० ३ प्र० २ अ० ८] इति। मन्त्रं व्याचष्टे—" अन्तरितꣳ रक्षोऽन्तरिता अरातय इत्याह। रक्षसामन्तर्हित्यै " [ब्रा० का० ३ प्र० २ अ० ८] इति॥

## देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाकेऽग्निस्ते तनुवं माऽति धाक्—

बौधायनः—" पुरोडाशꣳ श्रपयति देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाकेऽग्निस्ते तनुवं माऽति धागिति " इति।

आपस्तम्बो मन्त्रभेदमाह—" देवस्त्वा सविता श्रपयत्वित्युल्मुकैः प्रतितपत्यग्निस्ते तनुवं माऽति धागिति दर्भैरभिज्वलयति " इति।

हे पुरोडाश प्रवृद्धे नाकनाम्न्यग्नौ त्वामधिश्रित्य सविता देवः पक्वं करोतु। अयमग्निस्तव शरीरस्य भस्मीभावरूपमतिदाहं मा करोतु। सवितृपदस्य नाकपदस्य माऽतिधागित्यस्य चाभिप्रायमाह—"पुरोडाशं वा अधिश्रितꣳ रक्षाꣳस्यजिघाꣳसन्। दिवि नाको नामाग्नी रक्षोहा। स एवास्माद्रक्षाꣳस्यपाहन्। देवस्त्वा सविता श्रपयत्वित्याह। सवितृप्रसूत एवैनꣳ श्रपयति। वर्षिष्ठे अधि नाक इत्याह। रक्षसामपहत्यै। अग्निस्ते तनुवं माऽति धागित्याहानतिदाहाय " [ब्रा० का० ३ प्र० २ अ० ८] इति॥

## अग्ने हव्यꣳ रक्षस्व—

बौधायनः—" गार्हपत्यमभिमन्त्रयतेऽग्ने हव्यꣳ रक्षस्वेति " इति।

आपस्तम्बस्तु पूर्वमन्त्रस्यैव शेषं मन्यते। पूर्ववद्व्याचष्टे—" अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै " [ब्रा० का० ३ प्र० २ अ० ८] इति। आग्नीध्रं प्रति प्रैषमन्त्रमुत्पाद्य व्याचष्टे—" अविदहन्तः श्रपयतेति वाचं विसृजते। यज्ञमेव हवीꣳष्यभिव्याहृत्य प्रतनुते। पुरोरुचमविदाहाय शृत्यै करोति " [ब्रा० का० ३ प्र० २ अ० ८] इति। संवपनकाले यो वाङ्नियमस्तमिदानीं परित्यजेत्। विशेषेण दाहो भस्मीभावस्तं परित्यज्य सम्यक्पाकं श्रपणं कुरुत। अत एवाऽऽम्नायते—" यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतं कृत्यः सदेवत्वाय" इति। अविदहन्त इति बहुवचनं पूजार्थम्। अस्मिन्काले वाग्वि-

मोके सति यज्ञमेवाभिलक्ष्य तत्रापि प्रधानभूतानि हवींष्यभिलक्ष्य वाचमु-च्चार्य यज्ञं विस्तारितवान्भवति । किं च विशेषेण दाहनिवृत्त्यै सम्यक्पाकगुण-सिद्धये चैनं प्रैषमुच्चारयन्हविःस्वीकारात्पुरैव देवेभ्यो रुचिं कृतवान्भवति। पुरोडाशाच्छादनं विधत्ते—“ मस्तिष्को वै पुरोडाशः । तं यन्नाभिवासयेत्। आविर्मस्तिष्कः स्यात् । अभिवासयति । तस्माद्गुहा मस्तिष्कः ” [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । मस्तिष्कः शिरस्यवस्थितो मेदसः खण्डो गुहा गूढ आच्छादित इत्यर्थः । छादनयोग्यं द्रव्यं विधत्ते—“ भस्मनाऽभिवास-यति । तस्मान्मांसेनास्थि छन्नम् ” [ ब्रा० का० ३ प्र० २ अ० ८ ] इति। यस्मान्मेदःस्थानीयः पुरोडाशो मांसस्थानीयेन भस्मनाऽऽच्छादितस्तस्माल्लो-केऽप्यस्थिसंश्लिष्टं मेदो मांसेन च्छन्नं भवति । पुरोडाशस्योपरि भस्मनोऽध्यू-हने साधनं विधत्ते—“ वेदेनाभिवासयति । तस्मात्केशैः शिरश्छन्नम् ” [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । दर्भमुष्टिनिर्मितो वेदिसंमार्जनहेतु-र्वेदः । तस्मिन्दर्भाणां केशैः साम्यम् । एतद्वेदनं प्रशंसति—“ अखलतिभा-वुको भवति । य एवं वेद ” [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । केशर-हितशिरोयुक्तः खलतिस्तद्भवनशीलो न भवति ॥

## सं ब्रह्मणा पृच्यस्व—

कल्पः—“ सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यू-हति ” इति ।

हे पुरोडाश मन्त्रेण संपृक्तो भव । समन्त्रकत्वप्रकाशकं मन्त्रमन्वयव्यतिरे-काभ्यां व्याचष्टे—“ पशोर्वै प्रतिमा पुरोडाशः । स नायजुष्कमभिवास्यः। वृथेव स्यात् । ईश्वरा यजमानस्य पशवः प्रमेतोः। सं ब्रह्मणा पृच्यस्वेत्याह। प्राणा वै ब्रह्म । प्राणाः पशवः । प्राणैरेव पशून्त्संपृणक्ति । न प्रमायुका भवन्ति ” [ब्रा० का० ३ प्र० २ अ० ८] इति । पर्यग्निकरणेन पुरोडाशस्य पशूकृतत्वा-त्पशोश्च मन्त्रसंस्कार्यत्वाद्यजुषा विनाऽभिवासनमनर्थकं स्यात् । न केवलं वैयर्थ्यं किं तु यजमानस्य पशवश्च मर्तुं समर्था भवन्ति । सोऽयं व्यतिरेकः। उक्तदोषपरिहाराय मन्त्रेण संपृच्यस्वेत्येवमयं मन्त्रो ब्रूते । तत्र संपर्कप्रतियोगी मन्त्रः पशून्मरणात्पालयतीति प्राणस्वरूपः । पशवश्च प्राणाधारत्वात्प्राणस्व-रूपाः । अतो योग्यत्वात्संपर्के सति पशवो मरणशीला न भवन्ति । सोऽय-मन्वयः । मन्त्रेण यथा संपर्कस्तथा भस्मनाऽपि संपर्को युक्त एवेत्याह—

---

१ ख. ॰नोद्धूनने ।

( पुरोडाशनिष्पादनार्था मन्त्राः )

" यजमानो वै पुरोडाशः । प्रजा पशवः पुरीषम् । यदेवमभिवासयति । यजमानमेव प्रजया पशुभिः समर्धयति " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । पुरीषं भस्म ॥

## एकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहा ॥

कल्पः—" अत्रैतत्पात्रीसंक्षालनं गार्हपत्याङ्गारेणाभितप्य हृत्वाऽन्तर्वेदि प्रतीचीनं तिसृषु लेखासु निनयत्येकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहेति " इति ।

तेभ्य इदं पात्रीप्रक्षालनोदकं हुतमस्तु । एकतादीनामुत्पत्तिप्रकारमाह—" देवा वै हविर्भूत्वाऽब्रुवन् । कस्मिन्निदं म्रक्ष्यामह इति । सोऽग्निरब्रवीत् । मयि तनूः संनिधद्ध्वम् । अहं वस्तं जनयिष्यामि । यस्मिन्म्रक्ष्यध्व इति । ते देवा अग्नौ तनूः संन्यदधत । तस्मादाहुः । अग्निः सर्वा देवता इति । सोऽङ्गारेणापः । अभ्यपातयत् । तत एकतोऽजायत । स द्वितीयमभ्यपातयत् । ततो द्वितोऽजायत । स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत । यदद्भ्योऽजायन्त । तदाप्यानामाप्यत्वम् । यदात्मभ्योऽजायन्त । तदात्म्यानामात्म्यत्वम् " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । देवाः पूर्वं व्रीह्यवघातादिना हविः संपाद्य बीजवधादिपापलेपः कस्मिन्पुरुषे[1] मार्जनीय इति विचार्याग्निवचनेन स्ववीर्यमग्नौ स्थापितवन्तः । ततः सोऽग्निः सर्वदेववीर्यधारिणाऽङ्गारेणाब्देवतामभिलक्ष्य तद्वीर्यमपातयत् । तस्मादुत्पन्नानामेकतादिनामकानां देवविशेषाणामापो मातरो देवा आत्मानः पितर इत्याप्यनामकत्वमात्म्यनामकत्वं च युक्तम् । स च लेपः परम्परया व्रीह्यवघातिनि पुरुषे पर्यवसित इत्याह—"ते देवा आप्त्येष्वमृजत । आप्त्या अमृजत सूर्याभ्युदिते । सूर्याभ्युदितः सूर्याभिनिम्रुक्ते । सूर्याभिनिम्रुक्तः कुनखिनि । कुनखी श्यावदति । श्यावदन्नग्रदिधिषौ । अग्रदिधिषुः परिवित्ते । परिवित्तो वीरहणि । वीरहा ब्रह्महणि । तद्ब्रह्महणं नात्यच्यवत " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । आप्त्या एकतादयः । उदयास्तमयकालयोः सुप्तौ पुरुषावभ्युदिताभिनिम्रुक्तौ । तथा चोक्तम्—

" सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिम्रु(मु)क्ताभ्युदितौ तौ यथाक्रमम् " इति ।

नखवक्रत्वं दन्तमालिन्यं चात्र रोगविशेषकृतम् । ज्येष्ठायामनूढायां कनिष्ठामूढ्वाऽवस्थितोऽग्रदिधिषुः । ऊढवति कनिष्ठे सति विवाहरहितो ज्येष्ठः परिवित्तः । वीरस्य क्षत्रियस्य हन्ता वीरहा । ब्राह्मणस्य हन्ता

---

१ क. ग. ॰न्पुरोडाशे मा॰ ।

ब्रह्महा । एतेष्वाप्यानामेकतादीनां देवानां पापलेपमार्जनायैव सृष्टत्वात्तेषु तन्मार्जनमुचितम् । सूर्याभ्युदितादीनां ब्रह्महान्तानां पापप्रवणत्वान्निम्नगामिनो जलस्येव लेपस्यापि तेषु प्रवाहो युक्तः । ब्रह्महत्यायाः पापाधिक्यतारतम्यविश्रान्तिभूमित्वाल्लेपो ब्रह्महणं नातिक्रामति । प्रक्षालनोदकस्य लेखासु निनयनं विधत्ते—" अन्तर्वेदि निनयत्यवरुद्ध्यै " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । एतेन निनयनेन कर्मफलप्रतिबन्धकपापलेपस्यापनीतत्वात्फलसंपादनायेदं निनयनं संपद्यते । तस्य जलस्य वह्नितापं विधत्ते—" उल्मुकेनाभिगृह्णाति शृतत्वाय । शृतकामा इव हि देवाः " [ ब्रा० का० ३ प्र० २ अ० ८ ] इति । शृतं पक्वम् । यः शृतः स सदेव इति पूर्वमुदाहृतम् ॥

अत्र विनियोगसंग्रहः—

" संवपामि हविर्वापः समा तत्र जलं क्षिपेत् ।
अद्भ्यः संप्लाव्य तप्ताभिर्जलं (न) संयौत्यशेषतः ॥ १ ॥
अग्राग्री निर्दिशेद्भागौ मख पिण्डं करोति हि ।
घर्मः कपाले निक्षिप्य प्रथयेदुरुमन्त्रतः ॥ २ ॥
त्वचं श्लक्ष्णी करोत्यद्भिरन्तः पर्यग्नये कृतिः ।
श्रपयत्युल्मुकैर्देवो ह्यग्निस्ते ज्वाल्यते कुशैः ॥ ३ ॥
सं वेदेन च साङ्गारभस्मनाऽऽच्छादयेद्धविः ।
एकान्तर्वेदि लेखासु क्षालनं निनयेत्त्रिभिः ॥
अनुवाकेऽष्टमे सप्तदश मन्त्राः प्रकीर्तिताः ॥ ४ ॥ " इति ।

अथ मीमांसा ।

अत्राविदहन्तः श्रपयतेति कश्चिन्मन्त्र उक्तः । शृतकामा इव हि देवा इत्यर्थवादश्च । एतद्विषये ब्राह्मणान्तरवाक्यमपि यो विदग्ध इत्यादिकमुदाहृतम् । तत्र किंचित्तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" परुषि च्छिन्नमित्युक्त्या बर्हिषस्तु समूलताम् ।
घृतं दैवं मस्तु पित्र्यमित्युक्त्या नवनीतकम् ॥
यो विदग्धः स इत्युक्त्या पुरोडाशस्य पक्वताम् ।
स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत् " इति ॥

चातुर्मास्येषु महापितृयज्ञे श्रूयते—"यत्परुषि दितं तद्देवानाम् । यदन्तरा तन्मनुष्याणाम् । यत्समूलं तत्पितृणाम् । समूलं बर्हिर्भवति व्यावृत्त्यै " इति । परुः पर्व । दितं खण्डितम् । ज्योतिष्टोमे दीक्षाभ्यङ्गे श्रूयते—" घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणां तद्वा एतत्सर्वदेवत्यं यन्नवनीतं यन्नवनीते-

नाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति " [ सं० का० ६ प्र० १ अ० १ ] इति । मस्तु दधिभवं मण्डम् । निष्पक्वं शिरसि प्रक्षेप्तुमीषद्विलीनं नवनीतं तक्रं वा । दर्शपूर्णमासयोः पुरोडाशश्रपणे श्रूयते—" यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतं कृत्यः सदेवत्वाय" इति । विदग्धोऽतिपक्वः । अशृतोऽपक्वः । तत्र बर्हिषि समूलच्छेदनस्याभ्यङ्क्ते नवनीतस्य पुरोडाशे यथोचितपाकस्य च विधेयतया सर्वमवशिष्टं स्तावकम् । अत्र पूर्वोत्तरपक्षौ न प्रपञ्चितौ । अस्यैव पादस्य प्रथमाधिकरणे निवीतवाक्ये प्रोक्तयोरेवात्रापि योजनीयत्वात् । तस्यैवाधिकरणस्योदाहरणबाहुल्यमनेनैवाधिकरणेन प्रपञ्च्यते ॥

अथ व्याकरणम्—

संवपामीत्यादौ स्वरा गताः । आप इत्यत्र फिट्स्वरः । अद्भिरित्यत्र "ऊडिदंपदाद्यप्पुंरैद्युभ्यः"[पा०६-१ १७१]ऊडादेशादिदंशब्दात्पदन्नित्याद्यादेशेभ्योऽप्शब्दात्पुंशब्दाद्रैशब्दाद्दिवशब्दाच्चोत्तरमसर्वनामस्थानमुदात्तं भवति । यद्यपि " सावेकाचस्तृतीयादिः " [ पा० ६-१-१६८ ] इति सूत्रेणैतत्सिद्धं तथाऽपि द्वितीयाबहुवचनार्थमस्य सूत्रस्य वक्तव्यत्वादनेन विशेषसूत्रेणोदात्तो विधेयः । रेवतीरित्यत्र रेशब्दाच्चोपसंख्यानमिति मतुबाद्युदात्तः । प्रजाता इत्यत्रान्तर्भावितण्यर्थात्कर्मणि निष्ठायां " गतिरनन्तरः " [ पा० ६-२-४९ ] इति पूर्वपदप्रकृतिस्वरत्वम् । जनयत्या इत्यत्र क्तिन्प्रत्ययान्तत्वेन " ञ्नित्यादिर्नित्यम् " [ पा० ६-१-१९७ ] इत्याद्युदात्तः । उरुशब्दस्य नित्यनपुंसकत्वाभावात्फिट्स्वरः । यज्ञपतिरित्यत्र " पत्यावैश्वर्ये " [ पा० ६-२-१८ ] इति पूर्वपदप्रकृतिस्वरत्वम् । अन्तरितमित्यत्रान्तःशब्दस्य गतित्वात् " गतिरनन्तरः " [ पा० ६-२-४९ ] इति पूर्वपदप्रकृतिस्वरत्वम् । वर्षिष्ठ इत्यत्रेष्ठन्प्रत्ययस्य नित्त्वादाद्युदात्तः । एवं सर्वमुन्नेयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

आ दद इन्द्रस्य बाहुरसि दक्षिणः सहस्र-

भृष्टिः शततेजा वायुरसि तिग्मतेजाः पृथिवि
देवयजन्योषध्यास्ते मूलं मा हिꣳसिषमपह-
तोऽररुः पृथिव्यै व्रजं गच्छ गोस्थानं वर्षतु
ते द्यौर्बधान देव सवितः परमस्यां परा-
वति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं
द्विष्मस्तमतो मा मौगपहतोऽररुः पृथिव्यै
देवयजन्यै व्रजम् ( १ ) गच्छ गोस्थानं वर्षतु
ते द्यौर्बधान देव सवितः परमस्यां परावति
शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म-
स्तमतो मा मौगपहतोऽररुः पृथिव्या अदेव-
यजनो व्रजं गच्छ गोस्थानं वर्षतु ते द्यौर्ब-
धान देव सवितः परमस्यां परावति शतेन
पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो
मा ( २ ) मौगररुस्ते दिवं मा स्कान्वस-
वस्त्वा परि गृह्णन्तु गायत्रेण छन्दसा रुद्रा-
स्त्वा परि गृह्णन्तु त्रैष्टुभेन छन्दसाऽऽदि-
त्यास्त्वा परि गृह्णन्तु जागतेन छन्दसा देवस्य
सवितुः सवे कर्म कृण्वन्ति वेधस ऋतमस्यृतसद-
नमस्यृतश्रीरसि धा असि स्वधा अस्युर्वी चासि
वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्नुदा-

दार्यं पृथिवीं जीरदानुर्यामैरयञ्चन्द्रमसि स्वधा-
भिस्तां धीरासो अनुदृश्यं यजन्ते ( ३ ) ॥

( देवयजन्यै व्रजं तमतो मा विरप्शिन्नेकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

एति । ददे । इन्द्रस्य । बाहुः । असि । दक्षिणः । सहस्रभृष्टिरिति सहस्र—भृष्टिः । शततेजा इति शत—तेजाः । वायुः । असि । तिग्मतेजा इति तिग्म—तेजाः । पृथिवि । देवयजनीति देव—यजनि । ओषध्याः । ते । मूलम् । मा । हिंसिषम् । अपहत इत्यप—हतः । अररुः । पृथिव्यै । व्रजम् । गच्छ । गोस्थानमिति गो—स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् । पराव तीति परा—वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा । मौक् । अपहत इत्यप—हतः । अररुः । पृथिव्यै । देवयजन्या इति देव—यजन्यै । व्रजम् । ( १ ) गच्छ । गोस्थानमिति गो—स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् ।

परावतीति परा—वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा । मौक् । अपहत इत्यप—हतः । अररुः । पृथिव्याः । अदेवयजन इत्यदेव—यजनः । व्रजम् । गच्छ । गोस्थानमिति गो—स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् । परावतीति परा—वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा । ( २ ) मौक् । अररुः । ते । दिवम् । मा । स्कान् । वसवः । त्वा । परीति । गृह्णन्तु । गायत्रेण । छन्दसा । रुद्राः । त्वा । परीति । गृह्णन्तु । त्रैष्टुभेन । छन्दसा । आदित्याः । त्वा । परीति । गृह्णन्तु । जागतेन । छन्दसा । देवस्य । सवितुः । सवे । कर्म । कृण्वन्ति । वेधसः । ऋतम् । असि । ऋतसदनमित्यृत—सदनम् । असि । ऋतश्रीरित्यृत—श्रीः । असि । धाः । असि । स्वधेति स्व—धा । असि । उर्वी । च । असि । वस्वी । च । असि । पुरा । क्रूरस्य । विसृप इति वि—सृपः । विरप्शिन्निति वि—रप्शिन् । उदादायेत्युत्—आदाय । पृथिवीम् । जीरदानुरिति जीर—दानुः ।

( वेदिकरणार्था मन्त्राः )

याम् । ऐरंयन् । चन्द्रमंसि । स्वधाभिरितिं स्व—धाभिंः । ताम् । धीरांसः । अनुदृश्येत्यंनु—दृश्यं । यजन्ते ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः । )

---

अष्टमे पुरोडाशश्रपणमुक्तम् । अथ पक्कस्य हविषो वेद्यामासादनीयत्वान्नवमे वेदिरुच्यते ।

## आददे—

आदद इत्याम्नातस्य मन्त्रस्य शेषं पूरयित्वा विनियोगः कल्पे दर्शितः—“ अथ जघनेन वेद्यास्तिष्ठन्स्फ्यमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति ” इति ।

यथोक्तमादानं विधत्ते—“ देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति ॥

## इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजाः—

बौधायनः—“ आदायाभिमन्त्रयत इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा इत्यथैनं बर्हिषा सꣳश्यति वायुरसि तिग्मतेजा इति ” इति ।

संश्यति सम्यक्तनू करोति ।

एकमन्त्रत्वमाहाऽऽपस्तम्बः—“ इन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्रयते” इति ।

हे स्फ्य त्वमिन्द्रस्य दक्षिणो बाहुरिव समर्थोऽसि । कीदृशो बाहुः सहस्रसंख्यानां शत्रूणां भृष्टिः पाको मारणं यस्यासौ सहस्रभृष्टिः । पुनः कीदृशः । शतसंख्याकान्यायुधानि तेजोयुक्तानि यस्यासौ शततेजाः । न केवलमिन्द्रबाहुसदृशः किं तु वायुसदृशोऽप्यसि । यथा

वायुस्तीक्ष्णामग्निज्वालामुत्पादयंस्तिग्मतेजास्तथा स्फ्योऽपि वक्ष्यमाणस्तम्बच्छेदरूपं तीव्रं कर्म कुर्वंस्तिग्मतेजा इत्युच्यते । मन्त्रस्य प्रथमभाग इन्द्रशब्दविवक्षामाह—" आदद इन्द्रस्य बाहुरसि दक्षिण इत्याह । इन्द्रियमेव यजमाने दधाति " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । अत्राऽऽदद इति पदं पूर्वमन्त्रस्वरूपम् । तच्च स्पष्टार्थम् । इन्द्रस्येति मन्त्रादिः । द्वितीयभागे मन्त्रगतशब्दस्वरूपमेव बाहुसदृशस्य स्फ्यस्य महिमानं ख्यापयतीत्याह—" सहस्रभृष्टिः शततेजा इत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । तृतीयभागे तेजोजनकतया तेजोरूपेण वायुना स्फ्यरूप उपमिते सति यजमाने तेजो भवतीत्याह—"वायुरसि तिग्मतेजा इत्याह । तेजो वै वायुः । तेज एवास्मिन्दधाति " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति ॥

## पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषम्—

कल्पः—" अथान्तर्वेद्युदीचीनाग्रं दर्भं निधाय तस्मिन्स्फ्येन प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषमिति " इति ।

हे देवयागाश्रयभूते पृथिवि त्वदीयाया ओषध्या मूलं मा विनाशयामि । अत्र देवयजनीति विशेषणेन वान्तिलोहिताभ्यामापादितमशुचित्वं निवारयतीत्याह—" विषाद्वै नामासुर आसीत् । सोऽबिभेत् । यज्ञेन मा देवा अभिभविष्यन्तीति । स पृथिवीमभ्यवमीत् । साऽमेध्याऽभवत् । अथो यदिन्द्रो वृत्रमहन् । तस्य लोहितं पृथिवीमनु व्यधावत् । साऽमेध्याऽभवत् । पृथिवि देवयजनीत्याह । मेध्यामेवैनां देवयजनीं करोति " [ ब्रा०का० ३ प्र० २ अ० ९ ] इति । विषमत्तीति विषात् । इतरभागप्रयोजनमाह—" ओषध्यास्ते मूलं मा हिꣳसिषमित्याह । ओषधीनामहिꣳसायै " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति ॥

## अपहतोऽररुः पृथिव्यै—

कल्पः—" अपहतोऽररुः पृथिव्या इति स्फ्येन सतृणान्पाꣳसूनपादाय " इति ।

अररुर्नामकोऽसुरः । सोऽत्र रजोपनयनेन पृथिव्याः सकाशादपहतः ॥

## व्रजं गच्छ गोस्थानम्—

कल्पः—" व्रजं गच्छ गोस्थानमिति हरति " इति ।

अस्तु श्रौषडित्यनेन मन्त्रेणाऽऽग्नीध्रः प्रत्याश्रावणं वक्ति । सेयं वागत्र

गोशब्देन विवक्षिता। तस्या वाचः स्थानभूत उत्करदेशो व्रजः। हे तृणसहितपांसो तं व्रजं गच्छ। अपहतोऽररुः पृथिव्या इत्येवं पूर्वं मन्त्रं स्पष्टार्थत्वादुपेक्ष्योत्तरं मन्त्रं व्याचष्टे—“ व्रजं गच्छ गोस्थानमित्याह। छन्दा॑ꣳसि वै व्रजो गोस्थानः। छन्दा॑ꣳस्येवास्मै व्रजं गोस्थानं करोति ” [ ब्रा० का० ३ प्र० २ अ० ९] इति। गायत्र्यादीनि च्छन्दांस्येव गोशब्दाभिधेयानां वाचामवस्थानयोग्यो व्रजशब्दाभिधेयो देशविशेषः। तत्रार्थद्वयसाधारणशब्दोपेतं मन्त्रं पठन्नुत्करदेशं छन्दोरूपं संपादितवान्भवति ॥

## वर्षतु ते द्यौः—

कल्पः—“ वर्षतु ते द्यौरिति वेदिं प्रत्यवेक्षते ” इति।

हे वेदे तवाऽऽप्यायनाय द्युशब्दोपलक्षितः पर्जन्यो वर्षतु। पर्जन्याधारतया द्युरूपत्वोपचारो दिव इत्याह—“ वर्षतु ते द्यौरित्याह। वृष्टिर्वै द्यौः। वृष्टिमेवावरुन्धे ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। वर्षतीति वृष्टिः पर्जन्यः ॥

## बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्—

कल्पः—“ हृत्वोत्करे निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति ” इति।

हे सवितर्देवानेन सतृणपांसुरूपेणावस्थितं द्वेष्टारं द्वेष्यं च पाशशतेनात्यन्तदूरदेशे बधान तं पुरुषद्वयमतो बन्धनान्मा मुञ्च। अत्र योऽस्मान्यं चेति न पुनरुक्तिर्द्वेषं प्रति कर्तृत्वेन कर्मत्वेन च पुरुषभेदादित्याह—“ बधान देव सवितः परमस्यां परावतीत्याह। द्वौ वाव पुरुषौ। यं चैव द्वेष्टि। यश्चैनं द्वेष्टि। तावुभौ बध्नाति। परमस्यां परावति शतेन पाशैः। योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगित्याहानिर्मुक्त्यै ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। परावति दूरभूमौ। अनिर्मुक्तिरनिर्मोक्षः। व्याख्यातान्मन्त्रत्रयात्पूर्वभावी यो मन्त्रः स्पष्टार्थबुद्ध्योपेक्षितस्तं पुनः सिंहावलोकनन्यायेन स्मृत्वा व्याचष्टे—“ अररुर्वै नामासुर आसीत्। स पृथिव्यामुपम्लुप्तोऽशयत्। तं देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन्। भ्रातृव्यो वा अररुः। अपहतोऽररुः पृथिव्या इति यदाह। भ्रातृव्यमेव पृथिव्या अपहन्ति ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। उपम्लुप्तस्तिरोहितः। यज्ञविघाताय

गूढरूपेण भूमौ शयानत्वात् । अत एवायं भ्रातृव्यः शत्रुः । तं च देववन्म-
न्त्रोच्चारणपूर्वकेण सतृणानां पांसूनामपनयनेनापहन्ति ॥

अपहतोऽररुः पृथिव्यै देवयजन्यै व्रजं गच्छ
गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः
परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि
यं च वयं द्विष्मस्तमतो मा मौगपहतोऽ-
ररुः पृथिव्या अदेवयजनो व्रजं गच्छ
गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः
परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि
यं च वयं द्विष्मस्तमतो मा मौक्—

कल्पः—" द्वितीयं प्रहरति पृथिवि देवयजन्योपध्यास्ते मूलं मा हिꣳसि-
षमित्यपहतोऽररुः पृथिव्यै देवयजन्या इत्यादत्ते व्रजं गच्छ गोस्थानमिति
हरति वेदिं प्रत्यवेक्षते वर्षतु ते द्यौरिति हृत्वोत्करे निवपति बधान देव सवि-
तः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा
मौगिति तृतीयं प्रहरति पृथिवि देवयजन्योपध्यास्ते मूलं मा हिꣳसिषमित्यप-
हतोऽररुः पृथिव्या अदेवयजन इत्यादत्ते व्रजं गच्छ गोस्थानमिति हरति
वेदिं प्रत्यवेक्षते वर्षतु ते द्यौरिति हृत्वोत्करे निवपति बधान देव सवितः पर-
मस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति "
इति ।

यद्यप्यपहत इत्यनयोर्द्वितीयतृतीययोः पृथिवि देवयजनीत्ययमाद्यमन्त्रो
नाऽऽम्नातस्तथाऽपि प्रथमपर्यायादनुषञ्जनीयः । यथा वाक्यस्य परिपूर्तये
शब्दान्तरमनुषज्यते तथा प्रयोगपरिसमाप्त्यर्थं मन्त्रानुषङ्गो न्याय्यः । अररु-
शयनेनोपहतवेदिभूमिपांसवः कियन्तोऽपि प्रथमपर्यायेऽपनीतास्तावता वेदि-
भूम्येकदेशो यागयोग्यः संपन्नः । अनेनैवाभिप्रायेण द्वितीयपर्यायेऽपहतोऽररुः
पृथिव्यै देवयजन्या इति पृथिवी विशेष्यते । तृतीयपर्याये तु अदेवयजन
इत्यररुविशेषणम् । तदेवमुपहतास्तृणपांसवो यज्ञभूमेरुद्धृत्य यस्मिन्नुद्देशे
निरस्यन्ते स उत्कर उच्यते ॥

अररुस्ते दिवं मा स्कान्—

( वेदिकरणार्था मन्त्राः )

कल्पः—" अररुस्ते दिवं मा स्कानिति व्युप्तमाग्नीध्रोऽञ्जलिनाऽभिगृह्णाति " इति।

हे पांसुसमूहरूपोत्कर तव संबन्धी योऽररुः स स्वर्गं मा गच्छतु। द्वितीयतृतीयपर्याययोः प्रथमव्याख्ययाऽवबोद्धुं शक्यतया तावुपेक्ष्य मन्त्रमेतं व्याचष्टे— " तेऽमन्यन्त। दिवं वा अयमितः पतिष्यतीति। तमररुस्ते दिवं मा स्कानिति दिवः पर्यबाधन्त। भ्रातृव्यो वा अररुः। अररुस्ते दिवं मा स्कानिति यदाह। भ्रातृव्यमेव दिवः परिबाधते " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। ते देवाः केनाप्युपायेनाररुर्बन्धं छित्त्वा फलविघाताय स्वर्गं गमिष्यतीति मत्वा मन्त्रेण बन्धनं दृढीकृत्य दिवः सकाशाद्यथा परितो बाधितो भवति तथा यत्नं कृतवन्तः। तस्मादाग्नीध्राञ्जलिना पांसुराशौ निरुद्धे सति भ्रातृव्यः स्वर्गबाधितो भवति। मन्त्रान्व्याख्यायानुष्ठानं विधत्ते—" स्तम्बयजुर्हरति। पृथिव्या एव भ्रातृव्यमपहन्ति। द्वितीयꣳ हरति। अन्तरिक्षादेवैनमपहन्ति। तृतीयꣳ हरति। दिव एवैनमपहन्ति। तूष्णीं चतुर्थꣳ हरति। अपरिमितादेवैनमपहन्ति " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। यजुर्मन्त्रेण छिन्नो दर्भः स्तम्बयजुः। तच्च स्तम्बरूपं स्फ्येन छित्त्वोत्करदेशे हरेत्। त्रिवारमेवं हरणेन लोकेभ्यो भ्रातृव्यो हतो भवति। अमन्त्रकेण चतुर्थहरणेनापरिमिताद्ब्रह्माण्डात्सर्वस्माद्भ्रातृव्यावघातः॥

वसवस्त्वा परि गृह्णन्तु गायत्रेण छन्दसा रुद्रास्त्वा परि गृह्णन्तु त्रैष्टुभेन छन्दसाऽऽदित्यास्त्वा परि गृह्णन्तु जागतेन छन्दसा—

कल्पः—" अथ पूर्वं परिग्राहं परिगृह्णाति वसवस्त्वा परि गृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो रुद्रास्त्वा परि गृह्णन्तु त्रैष्टुभेन छन्दसेति पश्चादादित्यास्त्वा परि गृह्णन्तु जागतेन छन्दसेत्युत्तरतः " इति।

आहवनीयगार्हपत्ययोर्मध्ये वेदिं खनितुं वेदिमानाय स्फ्येन दिक्त्रये रेखात्रयं कर्तव्यम्। सोऽयं वेदेः परिग्राहः। परिग्रहीताऽध्वर्युर्दिक्त्रये क्रमेण भावनया वस्वादिरूपः। परिग्राहसाधनभूतः स्फ्यश्च च्छन्दस्त्रयरूपः। तमिमं परिग्राहं विधत्ते—" असुराणां वा इयमग्र आसीत्। यावदासीनः परापश्यति। तावद्देवानाम्। ते देवा अब्रुवन्। अस्त्वेव नोऽस्यामपीति। कियन्नो दास्यथेति।

१ ख. 'ति न्युप्त'। २ ख. स्वर्गाद्बाधि'।

यावत्स्वयं परिगृह्णीथेति। ते वसवस्त्वेति दक्षिणतः पर्यगृह्णन्। रुद्रास्त्वेति पश्चात्। आदित्यास्त्वेत्युत्तरतः। तेऽग्निना प्राञ्चोऽजयन्। वसुभिर्दक्षिणा। रुद्रैः प्रत्यञ्चः। आदित्यैरुदञ्चः। यस्यैवं विदुषो वेदिं परिगृह्णन्ति। भवत्यात्मना। पराऽस्य भ्रातृव्यो भवति " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । पुरा कदाचिदसुराणां विजये सति एषा पृथिवी कृत्स्नाऽपि तेषामेव स्वभूताऽऽसीत् । देवानां कोऽपि भूम्यंशभूतो नाभूत् । किं तु यो देवो यत्र यदोपविष्टो यावद्देशं पश्यति तत्र तावान्देशस्तस्य देवस्य तदा स्वाधीनोऽभवत् । ततो देवा असुरानयाचन्त युष्मदधीनायामस्यां पृथिव्यां कोऽप्यंशोऽस्माकं नियतोऽपेक्षितस्तत्र कियद्भूस्थानमस्मभ्यं दास्यथेति। ततोऽसुरैरनुज्ञाता देवा मन्त्रैर्वेदिं स्वकीयत्वेन स्वीकृतवन्तः । तस्याश्च वेदेः प्राच्यामाहवनीयोऽग्निः पालको दक्षिणादिषु वस्वादयः । ततश्चतुर्दिक्ष्ववस्थितानां देवानामग्न्यादिमुखेन विजय एव । तस्मादेवं विदुषो यस्य यजमानस्याध्वर्यवो यथोक्तमन्त्रैर्वेदिं परिगृह्णीयुः स यजमानः स्वेनैव रूपेणाभिप्रख्यातो भवति । तस्य भ्रातृव्यः पराभवति । परिगृह्णन्तीति बहुवचनं पूजार्थं प्रयोगभेदाभिप्रायेण वा ॥

## देवस्य सवितुः सवे कर्म कृण्वन्ति वेधसः—

बौधायनः—" अथ प्राचीं स्फ्येन वेदिमुद्धन्ति देवस्य सवितुः सवे कर्म कृण्वन्ति वेधस इति " इति ।

आपस्तम्बस्तु शाखान्तरमन्त्रेण भूमेरुपरिभागावस्थितायास्तृणसहिताया मृद उद्धननमभिधाय ब्रूते—" देवस्य सवितुः सव इति खनति " इति ।

परमेश्वरस्यानुज्ञायां सत्यां वेधसः समाना अध्वर्यव इदमुद्धननरूपं खननरूपं वा कर्म कुर्वन्ति । ईश्वरानुज्ञया सर्वैर्जनैः स्वाभीष्टं कर्म क्रियत इत्येतद्विदुषां प्रसिद्धमित्याह—" देवस्य सवितुः सव इत्याह प्रसूत्यै । कर्म कृण्वन्ति वेधस इत्याह । इषितꣳ हि कर्म क्रियते " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । वेदेर्दिग्द्वये निम्नतां विधत्ते—"पृथिव्यै मेध्यं चामेध्यं च व्युदक्रामताम् । प्राचीनमुदीचीनं मेध्यम् । प्रतीचीनं दक्षिणा मेध्यम् । प्राचीमुदीचीं प्रवणां करोति । मेध्यामेवैनां देवयजनीं करोति " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । व्युदक्रामतां विभागमाप्नुताम् । अंसाकारेण श्रोण्याकारेण च कोणेषु चतुर्ष्वौन्नत्यं विधत्ते—प्राञ्चौ वेद्यꣳसावुन्नयति । आहवनीयस्य परिगृहीत्यै । प्रतीची श्रोणी । गार्हपत्यस्य परिगृहीत्यै । अथो मिथुनत्वाय "

[ ब्रा० का० ३ प्र० २ अ० ९. ] इति। अंसयोः श्रोण्योश्च प्रत्येकं युग्मतया मिथुनत्वम्। यद्वा पुमानंसो योषिच्छ्रोणिरिति मिथुनत्वम्। भूमेरूर्ध्वभागस्य त्वक्स्थानीयस्य स्फ्येनापसारणं विधत्ते—“ उद्धन्ति। यदेवास्या अमेध्यम्। तदपहन्ति ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। तमेव विधिमनूद्यार्थवादान्तरमाह—“ उद्धन्ति। तस्मादोषधयः पराभवन्ति ” [ ब्रा० का० ३ प्र० २ अ ९ ] इति। तस्मादुद्धननाद्भूमिष्ठास्तृणस्तम्बा बर्हिरास्तरणहविरासादनविरोधिनो विनश्यन्ति। भूमावत्यन्तं निरूढानां तृणमूलानामुद्धननमात्रेणापगमाभावात्पृथग्यत्नेन च्छेदनं विधत्ते—“ मूलं छिनत्ति। भ्रातृव्यस्यैव मूलं छिनत्ति। मूलं वा अतितिष्ठद्रक्षाꣳस्यनूत्पिपते” [ब्रा० का० ३ प्र० २ अ० ९] इति। वैरिणो मूलं निवासाधिकरणं गृहादिकम्। यदि तृणमूलं भूमिमतीत्य किंचिदवतिष्ठेत तदा तदनु रक्षाꣳस्युद्भवेयुः। तस्मान्मूलं छेदनीयम्। छेदनसाधनं विधत्ते-“यद्धस्तेन छिन्द्यात्। कुनखिनीः प्रजाः स्युः। स्फ्येन छिनत्ति। वज्रो वै स्फ्यः। वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। स्फ्यस्य वज्रत्वमन्यत्र स्पष्टमाम्नातम्—“ इन्द्रो वृत्राय वज्रं प्राहरत्। स त्रेधा व्यभवत्। स्फ्यस्तृतीयम्। रथस्तृतीयम्। यूपस्तृतीयम् ” इति। प्रादेशपरिमितं वेदिखननं विधत्ते—“ पितृदेवत्याऽतिखाता। इयतीं खनति। प्रजापतिना यज्ञमुखेन संमिताम् ” [ब्रा० का० ३ प्र० २ अ० ९] इति। यदेयं वेदिः प्रादेशपरिमाणमतीत्य खाता स्यात्तदा पितृदेवत्यत्वादियं दैविकी न भवेत्। इयतीमिति प्रादेशपरिमाणाभिनयः। प्रजापतिसृष्टतया तद्रूपं यज्ञपुरुषस्य मुखम्। तच्च प्रादेशपरिमितम्। अतस्तत्संमितां वेदिं खनेत्। पक्षान्तरं विधत्ते—“ वेदिर्देवेभ्यो निलायत। तां चतुरङ्गुलेऽन्वविन्दन्[1]। तस्माच्चतुरङ्गुलं खेया ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। केनापि निमित्तेन देवेभ्यो विमुखीभूता वेदिदेवता भूमौ निलीना सती चतुरङ्गुलमात्रं खननेन लब्धा। तस्माच्चतुरङ्गुलं खनेत्। तं विधिमनूद्यार्थवादान्तरमाह—“ चतुरङ्गुलं खनति। चतुरङ्गुले ह्योषधयः प्रतितिष्ठन्ति ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। ओषधिमूले भूमेरन्तश्चतुरङ्गुलं प्रसृते सति ता ओषधयो वायुना नोन्मूल्यन्ते। पक्षान्तरं विधत्ते—“ आ प्रतिष्ठायै खनति। यजमानमेव प्रतिष्ठां गमयति ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। यदि चतुरङ्गुलप्रमाणेन प्रादेशप्रमाणेन वा सिकतादिप्रयुक्तशैथिल्याद्भूमिर्न लभ्येत तदा तल्लाभपर्यन्तं खनेत्। दक्षिणस्यां दिश्योन्नत्यं विधत्ते—“ दक्षिणतो वर्षीयसीं

---

[1] ख. भजन्।

करोति । देवयजनस्यैव रूपमकः ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। प्राचीमुदीचीं प्रवणां करोतीत्यनेनैव सिद्धेऽप्यौन्नत्ये पुनरपि कुड्याकारेण मृत्तिकाप्रक्षेपोऽत्र विधीयते । अकः कृतवान्भवति । लोष्टभावरहितां सिकतया सदृशीं मृदं वेद्यां सर्वत्र विकिरेदित्याह—“ पुरीषवतीं करोति । प्रजा वै पशवः पुरीषम् । प्रजयैवैनं पशुभिः पुरीषवन्तं करोति ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति ॥

## ऋतमस्यृतसदनमस्यृतश्रीरसि—

कल्पः—“ उत्तरं परिग्राहं परिगृह्णाति ऋतमसीति दक्षिणत ऋतसदनमसीति पश्चादृतश्रीरसीत्युत्तरतः ” इति ॥

ऋतं सत्यम् । तच्च सत्यत्वं त्रिष्वस्ति वेद्यां हविषि फले च । असुरदानात्पूर्वमासीनो देवो यावन्तं भूदेशं पश्यति न तस्य देवयजनत्वं नियतम् । अतोऽनृतत्वम् । वेदेरदत्तत्वात्तन्न पुनः परावर्तत इत्यृतत्वम् । ततो हे वेदे त्वमृतमसि । हविषः फलहेतुत्वं न कदाचिद्व्यभिचरतीत्यस्ति सत्यत्वम् । तच्च सत्यं हविरस्यां वेद्यां सीदति । ततो हे वेदे त्वमृतसदनमसि । फलस्यावश्यंभावित्वादस्त्यृतत्वम् । तच्च फलं हविर्द्वारेण वेद्या श्रीयते । ततो हे वेदे त्वमृतश्रीरसि । विधत्ते-“ उत्तरं परिग्राहं परिगृह्णाति । एतावती वै पृथिवी । यावती वेदिः । तस्या एतावत एव भ्रातृव्यं निर्भज्य । आत्मन उत्तरं परिग्राहं परिगृह्णाति ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । वेदिव्यतिरिक्ताया भूमेरासुरत्वेन कर्मण्यनुपयोगादुपयुक्ता भूमिर्वेदिरेव । तथा सति पूर्वपरिग्राहेण महाभूमेः संबन्धिनो वेदिरूपादेव तावतः प्रदेशाद्वैरिणं निःसार्य स्वार्थमुत्तरपरिग्राहं कुर्यात् । मन्त्रार्थो मन्त्रपदेष्वेवाभिव्यक्त इत्याह—“ ऋतमस्यृतसदनमस्यृतश्रीरसीत्याह । यथायजुरेवैतत् ” [ ब्रा० का० ३ प्र० २ अ० ९ ] इति ॥

## धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुर्यामैरयञ्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्ते—

बौधायनः—“ अथ प्रतीचीꣳ[1] स्फ्येन वेदिं योयुप्यते धा असि स्वधा

१ ख. 'तीचीं वेदिꣳ स्फ्येन यो' ।

असुर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुर्यामैरयश्चन्द्रमासि स्वधाभिस्तां धीरासो अनुदृश्य यजन्त इति'' इति।

आपस्तम्बो मन्त्रभेदमाह—" धा असि स्वधा असीति प्रतीचीं वेदिꣳ स्फ्येन योयुप्यते, उदादाय पृथिवीं जीरदानुरिति वेदिमनुवीक्षते " इति।

योयुप्यते समी करोति। विविधं रपणं शब्दनमुच्चैरुपांशुत्वादिभेदेन मन्त्रोच्चारणं विरप्। तद्वन्त ऋत्विजो विरप्शाः। लोमशशब्दवद्द्रष्टव्यम्। विरप्शा ऋत्विजो यस्यां वेद्यां सा वेदिर्विरप्शिनी। तस्याः संबोधनं छान्दसं विरप्शिन्निति। हे वेदे क्रूरस्योत्करे पाशैर्बद्धस्याररोर्विसर्पणान्निर्गमात्पुरा त्वं दैविकहविषां धारयित्र्यसि। स्वधाशब्देनैतत्ते तत ये च त्वामन्वित्यादिनोक्तं पैतृकपिण्डादिकमुपलक्ष्यते। तेनापि युक्ताऽसि। अत एव कृत्स्नधारणाद्विस्तीर्णा चासि। पुरोडाशादिरूपधनवत्त्वाद्वस्वी चासि। द्रव्यवत्यसि। जीरा जीवनशीला दानवो हविषां दातारो यावज्जीवादिशास्त्रप्रेरिता यजमाना यस्यां पृथिव्यां सा पृथिवी जीरदानुः। द्वितीयार्थे प्रथमा। यद्वा जीराश्च ते दानवश्च। छान्दसो वचनव्यत्ययः। तादृशाः पूर्वे यजमाना वेदिरूपां यां पृथिवीं कृत्स्नभूमेरासुर्याः सकाशादूर्ध्वमादाय चन्द्रमस्यमृतकिरणैः सार्धं स्थापितवन्तः, इदानींतनास्तु धीमन्तस्तामिमां वेदिं मनसाऽनुचिन्त्य तस्यां यजन्ते। समीकरणं विधत्ते—" क्रूरमिव वा एतत्करोति। यद्वेदिं करोति। धा असि स्वधा असीति योयुप्यते शान्त्यै " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। विशेषणद्वयेन कृत्स्नभूमिरूपत्वमशेषधनोपेतत्वं च संपाद्यत इत्याह—" उर्वी चासि वस्वी चासीत्याह। उर्वीमेवैनां वस्वीं करोति " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। विसृपः पुरेत्युक्त्याऽररुप्रयुक्तमशुचित्वं निवार्यत इत्याह—" पुरा क्रूरस्य विसृपो विरप्शिन्नित्याह मेध्यत्वाय " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। चन्द्रमस्यैरयन्नित्यनुसंधानस्य प्रयोजनमाह—" उदादाय पृथिवीं जीरदानुर्यामैरयश्चन्द्रमसि स्वधाभिरित्याह। यदेवास्या अमेध्यम्। तदपहृत्य। मेध्यां देवयजनीं कृत्वा। यददश्चन्द्रमसि मेध्यम्। तदस्यामेरयति" [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। एरयति आनयतीत्यर्थः। अनुदृश्येति पदस्याभिप्रायमाह—"तां धीरासो अनुदृश्य यजन्त इत्याहानुख्यात्यै" [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। अनुसंधानायेत्यर्थः। आग्नीध्रं प्रति प्रैषमुत्पादयति—प्रोक्षणीरासादय। इध्माबर्हिरुपसादय। स्रुवं च स्रुचश्च संमृड्ढि। पत्नीꣳ संनह्य। आज्येनोदेहीत्याहानुपूर्वतायै " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति। बह्वर्थविषयप्रैषोऽनुक्रमेणानुष्ठानायोपयुज्यते। आग्नी-

ध्रस्यानुष्ठानं विधत्ते—" प्रोक्षणीरासादयति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै । स्फ्यस्य वर्त्मन्त्सादयति । यज्ञस्य संतत्यै " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । प्रोक्षणीनामपां बाहुल्यं विधत्ते—" उवाच हासितो दैवलः। एतावतीर्वा अमुष्मिँल्लोक आप आसन् । यावतीः प्रोक्षणीरिति । तस्माद्बह्वीरासाद्याः " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । अस्मिन्यागे यावत्यः प्रोक्षण्य आसाद्यन्ते तावत्य एवामुष्मिँल्लोक आपो भवन्तीति देवलेनोक्तत्वाद्बाहुल्यमत्र कर्तव्यम् । उत्करे स्फ्यस्य परित्यागं ध्यानविशिष्टं विधत्ते—" स्फ्यमुदस्यन् । यं द्विष्यात्तं ध्यायेत् । शुचैवैनमर्पयति " [ ब्रा० का० ३ प्र० २ अ० ९ ] इति । यथोक्तप्रैषकाले स्फ्यस्य तिर्यग्धारणं विधत्ते—" वज्रो वै स्फ्यः । यदन्वञ्चं धारयेत् । वज्रेऽध्वर्युः क्षण्वीत । पुरस्तात्तिर्यञ्चं धारयति । वज्रो वै स्फ्यः । वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यपहन्ति। अग्निभ्यां प्राचश्च प्रतीचश्च । स्फ्येनोदीचश्चाधराचश्च । स्फ्येन वा एष वज्रेणास्यै पाप्मानं भ्रातृव्यमपहत्य । उत्करेऽधि प्रवृश्चति । यथोपधाय वृश्चन्त्येवम् " [ ब्रा० का० ३ प्र० २ अ० १० ] इति । स्फ्यस्य वज्रत्वप्रतिपादकं श्रुत्यन्तरं पूर्वमुदाहृतम् । अन्वञ्चमभिमुखम् । क्षण्वीत म्रियेत । तत्परिहाराय वेद्यां पूर्वभागे तिर्यञ्चं धारयेत् । तथा सति दक्षिणाग्रत्वेन वेदेर्दक्षिणादिश्यवस्थितानि रक्षांसि हतानि भवन्ति । आहवनीयाग्निना पूर्वदिगवस्थितानसुरान्हन्ति । गार्हपत्याग्निना पश्चिमदिगवस्थितान् । स्फ्यस्य मूलेनोत्तरदिगवस्थितानसुरान्हन्ति । स्फ्यस्याधोधारणयाऽधस्तनान् । ऊर्ध्वधारणयोपरितनानित्यपि द्रष्टव्यम् । एवं तिर्यञ्चं धारयन्नध्वर्युः पापरूपं वैरिणमस्या वेदेरपहत्योत्करे छिनत्ति । यथा काष्ठं कस्मिंश्चिदाधारेऽवस्थाप्य लोकाश्छिन्दन्ति तद्वत् । हस्तप्रक्षालनं विधत्ते—" हस्ताववनेनिक्ते । आत्मानमेव पवयते " [ ब्रा० का० ३ प्र० २ अ० १० ] इति । स्फ्यस्यापि तद्विधत्ते—" स्फ्यं प्रक्षालयति मेध्यत्वाय । अथो पाप्मन एव भ्रातृव्यस्य न्यङ्गं छिनत्ति " [ ब्रा० का० ३ प्र० २ अ० १० ] इति । प्रक्षालितः स्फ्यो यज्ञयोग्यो भवति । किं चानेन पापरूपस्य वैरिणः शरीरं छिन्नं भवति । आग्नीध्रस्यानुष्ठानं विधत्ते—" इध्माबर्हिरुपसादयति युक्त्यै । यज्ञस्य मिथुनत्वाय । अथो पुरो रुचमेवैतां दधाति । उत्तरस्य कर्मणोऽनुख्यात्यै " [ ब्रा० का० ३ प्र० २ अ० १० ] इति । इध्मस्य बर्हिषश्चोभयोः सहैव सादनं परस्परं योगाय । तेन च योगेन यज्ञसंबन्धि मिथुनं भवति । किं चैतामुपसादनरूपां दीप्तिं पुरः करोति । तया दीप्त्योत्तरं कर्तव्यं ख्यापितं भवति । तयोरुपसादने प्रागग्रत्वं विधत्ते—" न पुरस्तात्प्रत्यगुपसादयेत् । यत्पुरस्तात्प्रत्यगुपसादयेत् । अन्यत्राऽऽहुतिपथा

द्ध्मं प्रतिपादयेत् । प्रजा वै बर्हिः । अपराध्नुयाद्बर्हिषा प्रजानां प्रजननम् । पश्चात्प्रागुपसादयति । आहुतिपथेनेध्मं प्रतिपादयति । संप्रत्येव बर्हिषा प्रजानां प्रजननमुपैति " [ब्रा० का० ३ प्र० २ अ० १०] इति। इध्मस्याऽऽहुतिपथः प्रागग्रत्वम् । प्रत्यगग्रेण बर्हिषा प्रजानामुत्पत्तिर्विनश्येत् । ततः स्वयं पश्चादवस्थायोभयं प्रागग्रमुपसादयेत् । तथा सतीध्मस्याऽऽहुतिपथो नापैति । संप्रत्येव समीचीनेन बर्हिषा प्रजोत्पत्तिं प्राप्नोति। इध्मबर्हिषोः परस्परं दिग्भेदं विधत्ते—" दक्षिणमिध्मम् । उत्तरं बर्हिः । आत्मा वा इध्मः । प्रजा बर्हिः । प्रजा ह्यात्मन उत्तरतरा तीर्थे । ततो मेधमुपनीय । यथादेवतमेवैनत्प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः " [ब्रा० का० ३ प्र० २ अ० १० ] इति। पितुर्यजमानस्य दक्षिणभागो युक्तः। प्रजाया उत्तरभागः। तथा सत्युभयं तीर्थे योग्यस्थाने संपद्यते। ततस्तदुभयं यज्ञं नीत्वा तत्तद्देवतामनतिक्रम्य स्थापितवान्भवति । एतेन यजमानस्य प्रजापशुसमृद्धिर्भवति ।

अत्र विनियोगसंग्रहः—

" आददे स्फ्यं समादत्त इन्द्रस्येत्यभिमन्त्रयेत् ।
पृथिवि स्तम्बयजुश्छित्त्वा ह्यपगृह्णाति भूरजः ॥ १ ॥
व्रजं गच्छेदुदग्देशं वर्ष वेदिं समीक्षते ।
बधा धूलिं क्षिपेदेवं पुनः स्तम्बहृतिद्वयम् ॥ २ ॥
अथात्र पूर्ववन्मन्त्रा अराऽऽग्नीध्रोऽञ्जलौ धरेत् ।
वसत्रिभिर्ग्रहो वेदेर्देव वेदिं खनेदमूम् ॥ ३ ॥
ऋतोत्तरपरिग्राहो धा असीति समीकृतिः ।
उदादायेति वेदीक्षा मन्त्रोक्ताः पञ्चविंशतिः ॥ ४ ॥" इति ।

अथ मीमांसा ।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" मुख्याङ्गतैव वेद्यादेः प्रयाजाद्यङ्गताऽपि वा ।
तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बोधकम् ॥
मुख्याङ्गस्यापि वेद्यादेः प्रयाजादिषु चाङ्गता ।
मुख्यार्थत्वात्प्रयाजादेश्चापूर्वव्यवधानतः " इति ॥

दर्शपूर्णमासयोः श्रूयते—वेद्यां हवींष्यासादयति बर्हिषि हवींष्यासादयतीति। तथा तद्धर्माः श्रूयन्ते " वेदिं खनति बर्हिर्लुनाति " इत्यादयः । मुख्यानि हवींष्याग्नेयपुरोडाशादीनि। अमुख्यहवींषि तु प्रयाजाद्यर्थानि। तत्र स्वस्वधर्मसहितानि वेद्यादीनि प्रकरणबलान्मुख्यहविषामेवाङ्गानि। वेद्यां हवीं-

ष्यासादयतीति वाक्यात्सर्वहविरङ्गतेति चेन्न। प्रकरणेन वाक्यस्य संकोचनीयत्वात्। यदि वाक्यं प्रकरणनैरपेक्ष्येण स्वतन्त्रं स्यात्, तदा सादनमात्रपर्यवसानेन यागाभावे वैयर्थ्यं स्यात्। सौमिकहविषामप्येतद्वेद्यासादनं प्रसज्येत। तस्मान्मुख्यं हविरङ्गं वेद्यादिकमिति प्राप्ते ब्रूमः—अस्तु वैयर्थ्यातिप्रसङ्गपरिहारेण प्रकृतापूर्वसाधनभूतहविःषु वेद्यादेरङ्गत्वम्। प्रयाजादिहवींष्यपि स्वकीयावान्तरापूर्वद्वारा मुख्यापूर्वसाधनान्येवेति तदङ्गत्वमपि वेद्यादेर्युक्तम्। एवं सति वाक्यस्यात्यन्तसंकोचो न भविष्यति।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" पुरोडाशाभिवासान्तस्यापकर्षोऽस्ति दर्शके।
न वाऽऽद्योऽस्त्वपकृष्टाया वेदेर्वैगुण्यहानये॥
अभिवासात्परा वेदिरिति तत्क्रमबोधतः।
प्रागेव विहिता दर्शे वेदिर्नातोऽपकर्षणम् " इति॥

दर्शपूर्णमासयोः पुरोडाशस्य कपालेषु श्रपितस्याऽऽच्छादनमाम्नातम्—भस्मनाऽभिवासयतीति। तत ऊर्ध्वं वेदिराम्नाता। तेनैव क्रमेण पौर्णमासीयागे प्रतिपद्यनुष्ठानं कृतम्। दर्शयागे तु वेदेरपकर्ष आम्नातः—" पूर्वेद्युरमावास्यायां वेदिं करोति " इति। तत्र वेदेः पूर्वभाविनोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः कर्तव्योऽन्यथा वेदेर्वैगुण्यप्रसङ्गादिति प्राप्ते ब्रूमः—यदि दर्शः पूर्णमासीविकारः स्यात्तदा पौर्णमास्यां क्लृप्तः क्रमो दर्शेऽतिदिश्येत। न त्वसौ विकारः। तस्मात्कश्चित्क्रमोऽत्र स्वातन्त्र्येणोन्नेयः। क्रमोन्नयनं च सर्वेषु धर्मेष्वाम्नातेषु पश्चात्पाठादिभिः संपद्यते। वेदिपदार्थश्चाभिवासनादूर्ध्वं दर्शपूर्णमाससाधारण्येनाऽऽम्नातः। विशेषतस्तु दर्शयागे पूर्वेद्युरेवाऽऽम्नायते। तथा सत्यभिवासनवेद्योः क्रमबोधात्प्रागेव दार्शिकवेदेः पूर्वदिनसंबन्धावगमात्तदेव तस्याः स्थानमिति वेदेरपि तावन्नापकर्षः। तत्कुतोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

" प्रोक्षणीः संस्कृतिर्जातिर्योगो वा सर्वभूमिषु।
तथोक्तेः संस्कृतिर्जातिः स्याद्रूढेः प्रबलत्वतः॥
अन्योन्याश्रयतो नाऽऽद्यो न जातिः कल्प्यशक्तितः।
योगः स्यात्क्लृप्तशक्तित्वात्क्लृप्तिर्व्याकरणाद्भवेत् " इति॥

---

१ ख. °षु पदार्थेष्वा°। २ क. ख. °क्षणीसं°। ३ क. ख. ग. °थोक्ते सं°।

दर्शपूर्णमासयोः श्रूयते—"प्रोक्षणीरासादयति" इति । तत्र प्रोक्षणीशब्दस्याभिमन्त्रणासादनादिसंस्कृतिः प्रवृत्तिनिमित्तम् । कुतः । सर्वेषु वैदिकप्रयोगप्रदेशेषु संस्कृतानामेवापां प्रोक्षणीशब्देनोच्यमानत्वादित्येकः पक्षः । लोके जलक्रीडायां प्रोक्षणीभिरुद्वेजिताः स्म इत्यसंस्कृतास्वप्सु प्रयोगाद्बर्हिरादिशब्दवज्जातौ रूढत्वादुदकत्वजातिः प्रवृत्तिनिमित्तम् । न च प्रकर्षेणोक्ष्यते सिच्यत आभिरिति योगोऽत्र शङ्कनीयो रूढेः प्रबलत्वादिति पक्षान्तरम् । तत्र न तावत्संस्कारो युक्तोऽन्योन्याश्रयत्वात् । विहितेष्वभिमन्त्रणादिसंस्कारेष्वनुष्ठितेषु पश्चात्संस्कृतास्वप्सु प्रोक्षणीशब्दप्रवृत्तिः । तत्प्रवृत्तौ सत्यां प्रोक्षणीशब्देनापोऽनूद्याभिमन्त्रणादिविधिरित्यन्योन्याश्रयत्वम् । नापि जातिपक्षो युक्तः । उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्वमक्लृप्तत्वेनेतः परं कल्पनीयत्वात् । ततो गोशब्दवदश्वकर्णशब्दवच्च रूढो न भवति । योगस्तु व्याकरणेन क्लृप्तः सोपसर्गाद्धातोः करणे ल्युट्प्रत्ययेन व्युत्पादनात् । तस्मात्प्रोक्षणीशब्दो यौगिकः । घृतादेः प्रोक्षणीत्वं[1] प्रयोजनम् ।

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

"प्रोक्षणीरासादयेति निगदस्त्रिविधाद्बहिः ।
यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता ॥
परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः ।
तल्लक्षणेन युक्तत्वात्त्रैविध्यमिति सुस्थितम्" इति ॥

प्रोक्षणीरासादयेध्माबर्हिरुपसादयाग्नीदग्नीन्विहर बर्हिः स्तृणीहीत्यादयो निगदा आम्नाताः । परसंबोधनार्था मन्त्रा निगदाः । ते च पूर्वेभ्य ऋग्यजुःसामभ्यो बहिर्भूताश्चतुर्थप्रकाराः । कुतः । पादगीत्योर्ऋक्सामलक्षणयोरभावात्प्रश्लिष्टपाठस्य यजुर्लक्षणस्य सत्त्वेऽपि धर्मभेदेन यजुष्यन्तर्भावानुपपत्तेः । उपांशु यजुषोच्चैर्निगदेनेति हि धर्मभेद इति प्राप्ते ब्रूमः—बहिर्ब्राह्मणा भोज्यन्तां परिव्राजकास्त्वन्तरित्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषो यथा तथा निगदानां यजुर्लक्षणोपेतत्वाद्यजुषामेव सतां परप्रत्यायननिमित्त उच्चैस्त्वं धर्मः । ततो मन्त्राणां त्रैविध्यं सुस्थितम् ॥

अथ व्याकरणम्—

आदद इत्यादौ स्वराः प्रसिद्धाः । दक्षिण इत्यत्र स्वाङ्गाख्यायामादिर्वेत्याद्युदात्तः । पृथिवीत्यत्र वाक्यादित्वेन षाष्ठिकामन्त्रिताद्युदात्तत्वम् । अररुरि-

---

1 ख. °क्षणत्वं ।

त्यत्रार्तिधातोररुप्रत्यय आद्युदात्तः। गोस्थानमित्यत्र कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादे “ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ” [पा० ६-२-१५१ ] मन्नन्तं क्तिन्नन्तं व्याख्यानादिचतुष्टयं याजकादिगणः क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवतीत्यन्तोदात्तत्वे प्राप्ते “ परादिश्छन्दसि बहुलम् ” [पा० ६-२-१९९] इत्युत्तरपदाद्युदात्तः। वर्षत्विति वाक्यादिः। तथा बधानेत्यपि। तत्र शानजादेशस्य चित्त्वादन्तोदात्तः। पाशशब्दो घञन्तः। द्वेष्टीत्यत्र यच्छब्दयोगान्न निघातः। गायत्रशब्दस्य तृच्प्रत्ययान्तत्वात्प्रत्ययस्वरः। त्रैष्टुभजागतशब्दयोरञ्प्रत्यये सत्याद्युदात्तः। उर्वीशब्दो ङीपन्तः। बस्वीशब्दो वृषादिः। पुराशब्दस्य निपातत्वाभावादन्तोदात्तः। विसृप इत्यत्रोत्तरपदस्य कसुन्प्रत्ययान्तत्वादाद्युदात्तः। उदादायेत्यत्र ल्यपः पित्त्वाद्धातुस्वरावशेषे कृत्स्वरः। जीरदानुशब्दो दासीभारादिः। ऐरयन्नित्यत्र यच्छब्दयोगान्निघाताभावे सति आडागमस्य विहितमुदात्तत्वं सति शिष्टम्। चन्द्रपसीति पृषोदरादिः। अनुदृश्येति कृत्स्वरः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः। )

---

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ सं मार्ज्मि वाचं प्राणं चक्षुः श्रोत्रं प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ सं मार्ज्म्याशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूम्। अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कम्। सुप्रज-

---

१ ख. °त्यत्रापि शा°।

संस्त्वा वयꣳ सुपत्नीरुपं ( १ ) सेदिम । अग्ने सपत्नदम्भंनमदंब्धासो अदांभ्यम् । इमं वि ष्यांमि वरुंणस्य पाशं यमबंध्नीत सविता सुकेतः । धातुश्च योनौं सुकृतस्यं लोके स्योनं में सह पत्यां करोमि । समायुंषा सं प्रजया समंग्ने वर्चसा पुनः । सं पत्नी पत्याऽहं गंच्छे समात्मा तनुवा ममं । महीनां पयोऽस्योषंधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य निः ( २ ) वपामि महीनां पयोऽस्योषधीनाꣳ रसोऽदंब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय तेजोंऽसि तेजोऽनु प्रेह्यग्निस्ते तेजो मा वि नैदग्नेर्जिह्वाऽसिं सुभूर्देवानां धाम्नेधाम्ने देवेभ्यो यजुंषेयजुषे भव शुक्रमंसि ज्योतिंरसि तेजोंऽसि देवो वः सवितोत्पुंनात्वच्छिंद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः शुक्रं त्वां शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुंषेयजुषे गृह्णामि ज्योतिंस्त्वा ज्योतिंष्यर्चिस्त्वाऽर्चिषि धाम्नेधाम्ने देवेभ्यो यजुंषेयजुषे गृह्णामि ( ३ ) ॥

( उपनी रश्मिभिः शुक्रꣳ षोडश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ प्रथमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

प्रत्युष्टमिति प्रति—उष्टम् । रक्षः । प्रत्युष्टा इति प्रति—उष्टाः । अरातयः । अग्नेः । वः । तेजिष्ठेन । तेजसा । निरिति । तपामि । गोष्ठमिति गो—स्थम् । मा । निरिति । मृक्षम् । वाजिनम् । त्वा । सपत्नसाहमिति सपत्न—साहम् । समिति । मार्ज्मि । वाचम् । प्राणमिति प्र—अनम् । चक्षुः । श्रोत्रम् । प्रजामिति प्र—जाम् । योनिम् । मा । निरिति । मृक्षम् । वाजिनीम् । त्वा । सपत्नसाहीमिति सपत्न—साहीम् । समिति । मार्ज्मि । आशासानेत्या—शासाना । सौमनसम् । प्रजामिति प्र—जाम् । सौभाग्यम् । तनूम् । अग्नेः । अनुव्रतेत्यनु—व्रता । भूत्वा । समिति । नह्ये । सुकृतायेति सु—कृताय । कम् । सुप्रजस इति सु—प्रजसः । त्वा । वयम् । सुपत्नीरिति सु—पत्नीः । उपेति । ( १ ) सेदिम । अग्ने । सपत्नदम्भनमिति सपत्न—दम्भनम् । अदब्धासः । अदाभ्यम् । इमम् । वीति । स्यामि । वरुणस्य । पाशम् । यम् । अबध्नीत । सविता । सुकेत इति सु—केतः । धातुः । च । योनौ । सुकृतस्येति सु—कृतस्य । लोके । स्योनम् । मे । सह ।

पत्या। करोमि। समिति। आयुषा। समिति। प्रजयेति प्र—जया। समिति। अग्ने। वर्चसा। पुनः। समिति। पत्नी। पत्या। अहम्। गच्छे। समिति। आत्मा। तनुवा। मम। महीनाम्। पयः। असि। ओषधीनाम्। रसः। तस्य। ते। अक्षीयमाणस्य। निरिति। (२) वपामि। महीनाम्। पयः। असि। ओषधीनाम्। रसः। अदब्धेन। त्वा। चक्षुषा। अवेति। ईक्षे। सुप्रजास्त्वायेति सुप्रजाः—त्वाय। तेजः। असि। तेजः। अनु। प्रेति। इहि। अग्निः। ते। तेजः। मा। वीति। नैत्। अग्नेः। जिह्वा। असि। सुभूरिति सु—भूः। देवानाम्। धाम्नेधाम्न इति धाम्ने—धाम्ने। देवेभ्यः। यजुषेयजुष इति यजुषे—यजुषे। भव। शुक्रम्। असि। ज्योतिः। असि। तेजः। असि। देवः। वः। सविता। उदिति। पुनातु। अच्छिद्रेण। पवित्रेण। वसोः। सूर्यस्य। रश्मिभिरिति रश्मि—भिः। शुक्रम्। त्वा। शुक्रायाम्। धाम्नेधाम्न इति धाम्ने—धाम्ने। देवेभ्यः। यजुषेयजुष इति यजुषे—यजुषे। गृह्णामि। ज्योतिः। त्वा। ज्योतिषि। अर्चिः। त्वा। अर्चिषि। धाम्ने-

धाम्न इति धाम्ने—धाम्ने । देवेभ्यः । यजुषेयजुष इति यजुषे—यजुषे । गृह्णामि ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः । )

---

नवमे वेदिरुक्ता । दशमे वेद्यामासादनीयस्याऽऽज्यादिहविषो ग्रहणमभिधीयते ।

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयोऽग्ने-
र्वस्तेजिष्ठेन तेजसा निष्टपामि—

बौधायनः—" अथैताः स्रुचः समादत्ते दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवां प्राशित्रहरणं वेदपरिवासनानीति गार्हपत्ये प्रतितपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीति " इति ।

आपस्तम्बस्य मते प्रत्युष्टमग्नेर्व इत्येतौ द्वौ मन्त्रौ । तौ च संमार्जनात्प्राक्पश्चाच्च क्रमेण स्रुचां तापने विनियुज्येते । प्रत्युष्टमन्त्रो व्याख्यातः । हे स्रुचो युष्मानतितीक्ष्णेनाग्नेस्तेजसा निःशेषेण तपामि । अनिष्टपरिहारायेष्टसिद्धये चोभौ मन्त्रावित्याह—" प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीत्याह मेध्यत्वाय " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति ॥

गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ सं
मार्ज्मि वाचं प्राणं चक्षुः श्रोत्रं प्रजां योनिं मा
निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ सं मार्ज्मि—

कल्पः—अथ स्रुवं संमार्ष्टि गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ संमार्ज्मीत्यथ जुहूं संमार्ष्टि वाचं प्राणं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ संमार्ज्मीत्यथोपभृतं संमार्ष्टि चक्षुः श्रोत्रं मा निर्मृक्षं वाजि त्वा सपत्नसाहꣳ संमार्ज्मीत्यथ ध्रुवां संमार्ष्टि प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ संमार्ज्मीति " इति ।

( आज्यादिहविर्ग्रहणार्था मन्त्राः )

हे स्रुव गवां स्थानं मा विनाशयामीत्यभिप्रेत्याऽऽवन्तं वैरिणमभिभवितारं त्वां सम्यक्शोधयामि। एवमन्येषु योज्यम्। द्वितीयतृतीयमन्त्रयोर्मा निर्मृक्ष-मित्यादिरनुषज्यते। मन्त्राणां स्पष्टार्थत्वमभिप्रेत्य तद्व्याख्यानमुपेक्ष्यानुष्ठानं विधत्ते—" स्रुचः संमार्ष्टि " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति। तत्र क्रमं विधत्ते—" स्रुवमग्रे। पुमा्ँसमेवाऽऽभ्यः स्ँश्यति मिथुनत्वाय " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति। स्रुवः पुमाञ्जुह्वाद्याः स्त्रियः। तत-स्ताभ्यः पूर्वभावित्वं स्रुवस्य युक्तम्। स्ँश्यति सम्यक्तनू करोति विवाहार्थं संस्करोतीत्यर्थः। जुह्वादीनां पौर्वापर्यं विधत्ते—"अथ जुहूम्। अथोपभृतम्। अथ ध्रुवाम् " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति। प्रशंसति—" असौ वै जुहूः। अन्तरिक्षमुपभृत्। पृथिवी ध्रुवा। इमे वै लोकाः स्रुचः। वृष्टिः संमार्जनानि। वृष्टिर्वा इमाँल्लोकाननुपूर्वं कल्पयति। ते ततः क्लृप्ताः समेधन्ते " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति। क्रमावस्थानसाम्येन स्रुचां लोक-त्वम्। संमृज्यन्ते स्रुचो यैर्वेदाग्रैस्तानि संमार्जनानि। पूर्वं दर्भैर्वेदं कृत्वा तदग्राणि परिवास्य तानि वेदपरिवासनानि स्रुचां संमार्जनाय स्थापितानि। तेषां वृष्टिजन्यतया वृष्टिरूपत्वम्। वृष्टिरूपैर्वेदाग्रैर्लोकरूपाणां जुह्वादीनां क्रमेण संमार्जने सति वृष्टिरेवानुक्रमवर्तिनो लोकान्धान्यादिसंपन्नान्करोति। ततस्ते लोकाः संपन्नाः सम्यगभिवर्धन्ते। वेदनं प्रशंसति—" समेधन्तेऽस्मा इमे लोकाः प्रजया पशुभिः। य एवं वेद " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति। वेदपरिवासनानामग्रमूलावयवयोर्व्यवस्थां दर्शयति—" यदि कामयेत वर्षुकः पर्जन्यः स्यादिति। अग्रतः संमृज्यात्। वृष्टिमेव नियच्छति। अवा-चीनाग्रा हि वृष्टिः। यदि कामयेतावर्षुकः स्यादिति। मूलतः संमृज्यात्। वृष्टिमेवोद्यच्छति " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति। नियच्छति न्यग्भावेन प्रवर्तयति। उद्यच्छत्यूर्ध्वाकारेण वारयति। तस्मिन्नेव विषये संप्र-दायविदां मतमाह—" तदु वा आहुः। अग्रत एवोपरिष्टात्संमृज्यात्। मूल-तोऽधस्तात्। तदनुपूर्वं कल्पते। वर्षुको भवतीति " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति। उपरिष्टादिति स्रुचो बिलभागः। अधस्तादिति तद्दण्डभागः। एवं सति परिवासनानां स्रुवस्रुचां चाग्रमग्रेण संबध्यते मूलं मूलेनेत्यानुपूर्वी यथा भवति। पर्जन्यश्च वर्षति। बिलभागे विशेषमाह—" प्राचीमभ्याकारम्। अग्रैरन्तरतः। एवमिव ह्यन्नमद्यते। अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजी-वन्ति। ऊर्ज एवान्नाद्यस्यावरुद्ध्यै " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति।

---

१ ख. व्यवहारार्थं। २ क. 'कान्धयानादि'। ३ ख. 'र्ध्वाकर्षणेन वा'।

बिलभागे पश्चिमोपक्रमां प्रागवसानां स्रुक्संमार्जनक्रियां कृत्वा बिलस्याभ्यन्तरे सर्वत आकृष्याऽऽकृष्य संमृज्यात् । यथा भुञ्जानः पुमान्हस्तं पुरतः पात्रे प्रसार्याभितो भोज्यान्याकृष्याऽऽकृष्य मुखबिले प्रक्षिपति तद्वत् । किं च प्रजा ओषधीनामग्रभागादानीय रसमुपजीवन्ति तद्वत् । अत्र परिवासनाग्रैः संमार्जनं रसरूपस्यात्तुं योग्यस्यान्नस्य प्राप्त्यै भवति । दण्डभागे विशेषमाह— " अधस्तात्प्रतीचीम् । दण्डमुत्तमतः । मूलेन मूलं प्रतिष्ठित्यै " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति । अधस्तादवस्थितं दण्डं प्रति प्रागुपक्रमां पश्चिमावसानां संमार्जनक्रियामुत्तमेन दर्भभागेन(ण) कुर्यात् । तथा सति दर्भमूलेन स्रुचो मूलं संबध्यते । तच्च प्रतिष्ठित्यै भवति । बिलदण्डयोरुक्तां व्यवस्थां लौकिकलिङ्गेन द्रढयति—" तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि । प्रत्यञ्च्यधस्तात् । स्रुग्घ्येषा " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति । मणिबन्धादूर्ध्वं सूक्ष्मरोमाणि प्राङ्मुखान्यधस्तात्तु प्रत्यङ्मुखानि । एषा हि लौकिकी स्रुक्तद्दृष्टान्तेन वैदिक्यामपि स्रुचि यथोक्तप्रकारो द्रष्टव्यः । अत्र केचिदाहुः—ऊर्ध्वबिलत्वेन हस्तधृतायाः स्रुच ऊर्ध्वाधोभागौ कृत्स्नावप्युपरिष्टादधस्ताच्छब्दाभ्यां विवक्षितौ न तु बिलभागदण्डभागौ । एवं धारकहस्तेऽप्यूर्ध्वाधोदेशौ । तथा सत्युक्तं लोमलिङ्गमनुकूलमिति । तर्हि तथैवास्तु । स्रुवस्य प्रथमतः संमार्जनं रूपककल्पनायोपपादयति—"प्राणो वै स्रुवः । जुहूर्दक्षिणो हस्तः । उपभृत्सव्यः । आत्मा ध्रुवा । अन्नꣳ संमार्जनानि । मुखतो वै प्राणोऽपानो भूत्वा । आत्मानमन्नं प्रविश्य । बाह्यतस्तनुवꣳ शुभयति । तस्मात्स्रुवमेवाग्रे संमार्ष्टि । मुखतो हि प्राणोऽपानो भूत्वा । आत्मानमन्नमाविशति " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति । आत्मा हस्तयोर्मध्यवर्तिशरीरम् । मुखसंचारिणो वायोः प्राणापानाभिधेये द्वे वृत्ती । उच्छ्वासरूपेण बहिर्निर्गच्छन्ती¹ प्राणवृत्तिः । निःश्वासरूपेणान्तः प्रविशन्त्यपानवृत्तिः² । तत्र प्राणरूपो वायुः प्राणतां परित्यज्य स्वयमपानो भूत्वा मुखे प्रक्षिप्तमन्नग्रासं मध्यशरीरे प्रवेश्य बाह्यं हस्तादिरूपं शरीरं पुष्ट्या शोभितं करोति । तस्मादन्नरूपैर्वेदाग्रैः प्राणरूपस्य स्रुवस्याऽऽदौ संमार्जनं कर्तव्यम् । तथा कृते सति प्रथमतोऽन्नप्रवेशः पश्चाद्बाह्यहस्तरूपस्य जुह्वादेः शोभेत्येतदुपपन्नम् । प्रसङ्गात्प्राणापानवेदनं प्रशंसति—"तौ प्राणापानौ । अव्यर्धुकः प्राणापानाभ्यां भवति । य एवं वेद " [ ब्रा० का० ३ प्र० ३ अ० १ ] इति । प्रकर्षेण बहिरनितीति प्राणः । अपकर्षेणान्तरनितीत्यपानः । इत्येवं वृत्तिभेदात्तौ प्राणापानौ संपन्नाविति वेदितुरकाले

---

१ क. ग. 'च्छतीति प्रा' । २ क. ग. 'शतीत्य' ।

( आज्यादिहविर्ग्रहणार्था मन्त्राः )

प्राणापानाभ्यां वियोगो मृत्युरूपो न भवति। मन्त्रमुत्पाद्य विनियुङ्क्ते—"दिवः शिल्पमवततम्। पृथिव्याः ककुभि श्रितम्। तेन वयꣳ सहस्रवल्शेन। सपत्नं नाशयामसि स्वाहेति। स्रुक्संमार्जनान्यग्नौ प्रहरति" [ ब्रा० का० ३ प्र० ३ अ० २ ] इति। दिवः सकाशाद्वृष्टिरूपेणाधः प्रसृतमिदं दर्भरूपं चित्रं वस्तु भूमेरुपर्याश्रितं शतशाखेन तेन दर्भेण वयं वैरिणं नाशयामः। इदं दर्भरूपं हुतमस्तु। अनेन मन्त्रेण वेदपरिवासनान्यग्नौ प्रक्षिपेत्। अस्मिन्मन्त्रे संमार्जनानि न प्रतीयन्त इति शङ्कां वारयति—"आपो वै दर्भाः। रूपमेवैषामेतन्महिमानं व्याचष्टे" [ ब्रा० का० ३ प्र० ३ अ० २ ] इति। दिवोऽवततमित्यनेन वृष्टिरूपा आपः प्रतीयन्ते। आपश्च दर्भरूपाः। दर्भरूपेणोत्पत्तिः पूर्वमेवोत्पवनब्राह्मणे दर्शिता। तस्मादेतन्मन्त्रगतशब्दस्वरूपमेवैषां दर्भाणां दिवः शिल्पत्वादिलक्षणं महिमानं प्रख्यापयति। अस्य मन्त्रस्यानुष्टुप्छन्दस्त्वमृग्रूपत्वं चानुसंधेयमित्याह–"अनुष्टुभर्चा" [ ब्रा० का० ३ प्र० ३ अ० २ ] इति। संमृज्यादिति शेषः। विधेयमनुष्टुप्त्वं स्तौति–"आनुष्टुभः प्रजापतिः। प्राजापत्यो वेदः। वेदस्याग्रꣳ स्रुक्संमार्जनानि। स्वेनैवैनानि छन्दसा। स्वया देवतया समर्धयति" [ ब्रा० का० ३ प्र० ३ अ० २ ] इति। जगत्सृष्टौ प्रजापतेरनुष्टुप्सहकारिणीति तापनीयोपनिषदि श्रूयते—"स एतं मन्त्रराजं नारसिंहमानुष्टुभमपश्यत्। तेन वै सर्वमिदमसृजत" इति। तस्मात्प्रजापतेरानुष्टुभत्वम्। "प्रजापतेर्वा एतानि श्मश्रूणि। यद्वेदः" इति वक्ष्यति। तस्माद्वेदस्य प्राजापत्यत्वम्। तथा सति वेदाग्रस्य स्वकीयं छन्दः स्वकीया च देवतेत्युभयं समृद्धिहेतुर्भवति। न केवलं छन्दसः प्राशस्त्यं किं तु ऋचोऽपीत्याह—"अथो ऋग्वाव योषा। दर्भो वृषा। तन्मिथुनम्। मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय। प्रजायते प्रजया पशुभिर्यजमानः" [ ब्रा० का० ३ प्र० ३ अ० २ ] इति। वृषा सेचनसमर्थः पुमान्। अत्र स्रुक्संमार्जनानामुक्तमन्त्रेणाग्नौ प्रक्षेप इत्येकः पक्षः। अद्भिः प्रक्षाल्योत्करे परित्यजेदित्यपरः पक्षः। अत एव सूत्रकारोऽग्नौ प्रहरतीत्युक्त्वा पुनरप्याहोत्करे वा न्यस्यतीति। इमं पक्षं विधत्ते—"तान्येके वृथैवापास्यन्ति। तत्तथा न कार्यम्। आरब्धस्य यज्ञियस्य कर्मणः स विदोहः। यद्येनानि पशवोऽभितिष्ठेयुः। न पशुभ्यः कम्। अद्भिर्मार्जयित्वोत्करे न्यस्येत्। यद्वै यज्ञियस्य कर्मणोऽन्याऽऽहुतीभ्यः संतिष्ठते। उत्करो वाव तस्य प्रतिष्ठा। एताꣳ हि तस्मै प्रतिष्ठां देवाः समभरन्। यदद्भिर्मार्जयति। तेन शान्तम्। यदुत्करे न्यस्यति।

१ ख. न्ते। अपां च दर्भरूपे।

प्रतिष्ठामेवैनानि तद्गमयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः " [ ब्रा० का० ३ प्र० ३ अ० २ ] इति । केचिदद्भिः प्रक्षालनमकृत्वैव यत्र क्वापि परित्यजन्ति तदयुक्तम् । य एषोऽनुष्ठानप्रकारः स कर्मणो विपरीतं फलं दोग्धि । अप्रक्षालितदर्भाक्रमणेन पशूनां रोगोत्पत्त्या सुखं न भवेत् । मार्जनेन तच्छान्तं भवति । आहुतिव्यतिरिक्तस्य यज्ञियद्रव्यस्योत्करः समाप्तिस्थानमिति देवैः संपादितत्वात्तत्रैव परित्यागे प्रतिष्ठा भवति । अग्निप्रहरणपक्षमेव द्रढयितुमुत्करे परित्यागं दूषयति—" अथो स्तम्बस्य वा एतद्रूपम् । यत्स्रुक्संमार्जनानि । स्तम्बशो वा ओषधयः । तासां जरत्कक्षे पशवो न रमन्ते । अप्रियो ह्येषां जरत्कक्षः । यावदप्रियो ह वै जरत्कक्षः पशूनाम् । तावदप्रियः पशूनां भवति । यस्यैतान्यन्यत्राग्नेर्दधति " [ ब्रा० का० ३ प्र० ३ अ० २ ] इति । अथोशब्द उत्करपक्षव्यावृत्त्यर्थः । ओषधयो द्विविधाः स्तम्बरूपा नवदाव्यरूपाश्च । कोमलतृणाभावादस्वादुर्जरत्कक्षः स्तम्बः । दावाग्निदग्धप्रदेशे वृष्ट्या समुत्पन्नः कोमलस्वादुतृणसमूहो नवदाव्यः । तत्र स्रुक्संमार्जनानि स्तम्बलूनतया स्तम्बरूपाणि । यद्येतान्यग्नेरन्यत्रोत्करे त्यजे(ज्ये)रंस्तदा तत्र तत्र विकीर्णानि तानि बहुस्तम्बा ओषधयः संपद्यन्ते । तासामोषधीनां संबन्धिनि जरत्कक्षे प्रीत्यभावाज्जरत्कक्षवद्यजमानोऽपि पशूनामप्रिय इत्यपशुरेव स्यात् । अग्निप्रहरणपक्षं द्रढयति—" नवदाव्यासु वा ओषधीषु पशवो रमन्ते । नवदावो ह्येषां प्रियः । यावत्प्रियो ह वै नवदावः पशूनाम् । तावत्प्रियः पशूनां भवति । यस्यैतान्यग्नौ प्रहरन्ति । तस्मादेतान्यग्नावेव प्रहरेत् । यतरस्मिन्त्संमृज्यात् । पशूनां धृत्यै " [ ब्रा० का० ३ प्र० ३ अ० २ ] इति । नवः प्रत्यासन्नपूर्वकालभावी दावाग्निर्यस्य कोमलस्यौषधिसमूहस्य सोऽयं नवदावः । तादृशौषधिवद्यजमानोऽपि संमार्जनानामग्नौ प्रहरणे पशूनां प्रियो भवति । तस्मादाहवनीये गार्हपत्ये वा यस्मिन्नग्नौ स्रुचः प्रतितप्य संमृष्टास्तस्मिन्नेव प्रहरणं यजमानगृहे पशूनां बहूनां धारणाय भवति । स्रुक्संमार्जनप्रसङ्गादग्निसंमार्जनानामपि कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते—" यो भूतानामधिपतिः । रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिꣳसीः । एतदस्तु हुतं तव स्वाहेत्यग्निसंमार्जनान्यग्नौ प्रहरति " [ ब्रा० का० ३ प्र० ३ अ० २ ] इति । तन्तिः कर्मसंतानं तत्र चरतीति तन्तिचरः । वृषा देवेषु श्रेष्ठः । हे रुद्र स त्वमस्माकं पशून्मा हिꣳसीः । एतदग्निसंमार्जनद्रव्यं तव हुतमस्तु । तस्यैवार्थस्यानुवादकः स्वाहेति शब्दः । यैर्दर्भैरिध्मः संनद्धस्तैरेवाग्निं संमृज्य स्वकाले संप्राप्ते तानि संमार्जनान्यग्नौ प्रहरेत् । प्रथमतोऽग्नौ संमृष्टे प्रधानयागादूर्ध्वमन्वाहार्यरूपायां दक्षिणायामृत्विग्भ्यो दत्तायामनूयाजहोमात्पूर्वं द्वितीयमग्नौ

संमृष्टे सति तत्प्रहरणकालः। अग्निदग्धप्रदेशे पुनरुत्पद्य सम्यग्वर्धमानत्वादग्नौ दर्भाणां प्रहरणं युक्तमित्याह—" एषा वा एतेषां योनिः। एषा प्रतिष्ठा। स्वामेवैनानि योनिम्। स्वां प्रतिष्ठां गमयति। प्रतितिष्ठति प्रजया पशुभिर्यजमानः " [ ब्रा० का० ३ प्र० ३ अ० २ ] इति। एषा वह्निरूपा। न चाग्निप्रहरणे रुद्रविषयो मन्त्रो व्यधिकरण इति वाच्यम्। अग्नेरेवात्र रुद्रत्वात्। " रुद्रो वा एषः। यदग्निः। स एतर्हि जातः " इति श्रुत्यन्तरात्। यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति निर्वचनाच्च॥

आशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूम्।
अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कम्॥

कल्पः—" अथैनां पत्नीमन्तरेण वेद्युत्करौ प्रपाद्य जघनेन दक्षिणेन गार्हपत्यमुदीचीमुपवेश्य योक्त्रेण संनह्यति आशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूम्। अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कमिति " इति।

या पत्नी वह्नेरनुसारिणी भूत्वा सौमनस्याद्याशासाना वर्तते तामेतां शोभनकर्मणे सुखं यथा भवति तथा बध्नामि। योक्त्रबन्धनाय गार्हपत्यसमीपे पत्न्या उपवेशनं विधत्ते—" अयज्ञो वा एषः। योऽपत्नीकः। न प्रजाः प्रजायेरन्। पत्न्यन्वास्ते। यज्ञमेवाकः। प्रजानां प्रजननाय " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति। अकः कृतवान्भवति। बन्धनकालेऽप्युपवेशनमेव न तूत्थानमित्याह—" यत्तिष्ठन्ती संनह्येत। प्रियं ज्ञातिꣳ रुन्ध्यात्। आसीना संनह्यते। आसीना ह्येषा वीर्यं करोति " [ ब्रा० का० ३ प्र०३ अ०३ ] इति। रुन्ध्यान्नाशयेत्। चिरमप्यवस्थातुं शक्यत्वादासीनायाः सामर्थ्यमस्ति। दिग्देशौ विधत्ते—" यत्पश्चात्प्राच्यन्वासीत। अनया समदं दधीत। देवानां पत्निया समदं दधीत। देशाद्दक्षिणत उदीच्यन्वास्ते। आत्मनो गोपीथाय " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति। समदः कलहः। गार्हपत्यस्य पश्चाद्भागे प्राङ्मुखत्वे सति प्राचीनप्रवणया वेदिरूपया पृथिव्या सह कलहः स्यात्। पत्नीसंयाजहोमेषु तृतीयाहुतेर्या देवता देवपत्नी तस्या अपि तदेव स्थानमिति तयाऽपि सह कलहं कुर्यात्। अतो दक्षिणदेशे स्वरक्षार्थमुदङ्मुखी तिष्ठेत्। ननु सर्वा अपि योषितः सौमनस्यादिकामानाशासते तत्र को विशेषोऽस्या इत्याशङ्क्य मन्त्रे पूर्वार्धस्याभिप्रायमाह—" आशासाना सौमनसमित्याह। मेध्यामेवैनां केवलीं कृत्वा। आशिषा समर्धयति " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति। देवयजनप्रवेशेन यज्ञयोग्यां पापक्षयेण

केवलीं कृत्वाऽऽशासानेति ब्रुवन्सत्ययाऽऽशिषा समृद्धां करोति । अनुव्रतसूचितमर्थमाह—" अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कमित्याह । एतद्वै पत्नियै व्रतोपनयनम् । तेनैवैनां व्रतमुपनयति " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति । पत्न्याः स्वातन्त्र्येण कर्माधिकाराभावात्पत्न्या सह तदधिकारे सत्येतदेव योक्त्रं तस्या अनुव्रतस्वीकरणलिङ्गम् । यथा विवाहे स्त्रियाः कण्ठे मङ्गलसूत्रं लिङ्गं तद्वत् । अस्मिन्नर्थे लौकिकवैदिकप्रसिद्धिं दर्शयति—"तस्मादाहुः । यश्चैवं वेद यश्च न । योक्त्रमेव युते । यमन्वास्ते । तस्यामुष्मिँल्लोके भवतीति योक्त्रेण " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति । यस्मात्सूत्रधारणं लोकवेदयोर्नियमस्वीकारे लिङ्गम् । लोके हि दूरदेशवर्तिदेवतादर्शनं संकल्पयन्तः सूत्रं बध्नन्ति । वेदेऽप्युपनयनव्रते मौञ्जीं बध्नन्ति । तस्माद्यो यागं जानाति यश्च न जानाति तादृशाः सर्वेऽप्येवमाहुः । इयं पत्नी योक्त्रमवश्यं युते मिश्रयति बध्नाति यं पतिमन्वेषा व्रतं स्वीकृत्याऽऽस्ते तस्य संबन्धिना मङ्गलसूत्रेणामुष्मिँल्लोके युक्ता भवति । प्रकारान्तरेण योक्त्रं स्तौति—"यद्योक्त्रम् । स योगः । यदास्ते । स क्षेमः । योगक्षेमस्य क्लृप्त्यै " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति । अप्राप्तस्य वस्तुनः प्राप्तिर्योगः । प्राप्तस्य रक्षणं क्षेमः । अतो योक्त्रबन्धनमुदङ्मुखासनं चोभयसिद्धये भवति । मनसि किमभिप्रेत्यासौ बध्यत इत्याशङ्क्याऽऽह—" युक्तं क्रियाता आशीः कामे युज्याता इति । आशिषः समृद्ध्यै " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति । मया शास्त्रीयं कर्म क्रियतेऽतः सौमनस्यादिरूपा ममेयमाशीः फले युज्यताम् । अनेनाभिप्रायेणाऽऽशीः समृद्धा भवति । विधत्ते—" ग्रन्थिं ग्रथ्नाति । आशिष एवास्यां परिगृह्णाति । पुमान्वै ग्रन्थिः । स्त्री पत्नी । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । प्रजायते प्रजया पशुभिर्यजमानः । अथो अर्धो वा एष आत्मनः । यत्पत्नी । यज्ञस्य धृत्या अशिथिलंभावाय" [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति । सौमनस्याद्याशिषः सर्वा अपि योक्त्रग्रन्थिना तस्यां परिगृहीता भवन्ति । यज्ञकर्तुरर्धस्वरूपभूता पत्नी । ततस्तदीयग्रन्थिना यज्ञो ध्रियते न तु शिथिलो भवति ॥

सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम ।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ॥

कल्पः—" जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमिति " इति ।

---

१ ख. योक्त्रबन्धनं । २ ख. 'पविशति ।

( आज्यादिहविर्ग्रहणार्था मन्त्राः )

हेऽग्ने वयं त्वामुपसीदामः । कीदृश्यो वयं सुप्रजसः शोभनप्रजोपेताः । शोभनः पतिर्यासां ताः सुपत्न्यः । त्वत्प्रसादाद्दब्धासः केनाप्यतिरस्कृताः । कीदृशं त्वां सपत्नदम्भनं वैरिविनाशिनमदाभ्यं केनाप्यतिरस्कार्यम् । पत्न्या उपसी(स)दने प्रयोजनं दर्शयति—" सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिमे-त्याह । यज्ञमेव तन्मिथुनी करोति । ऊनेऽतिरिक्तं धीयाता इति प्रजात्यै " [ब्रा० का० ३ प्र० ३ अ० ३] इति । शोभनः पतिर्यस्या इत्यभिधानाद्यज्ञं मिथुनवन्तं करोति । तस्मिन्मिथुने पत्या कर्मण्यनुष्ठीयमाने सति यज्ञाङ्गं तेनाननुष्ठितं सदूनं भवति । तत्रोनप्रदेशे तदङ्गमतिरिक्तं तेनाननुष्ठितमनया पत्न्या ध्रियतेऽनुष्ठीयते । अत एव पत्नीकर्तव्यं पूर्णपात्रनिनयनमाम्नायते–" अञ्जलौ पूर्णपात्रमानयति । रेत एवास्यां प्रजां दधाति " इति । एवमन्यदपि तत्कर्त-व्यमुदाहार्यम् । अत ऊनं पत्नी परिपूरयतीति प्रयोजनेन पत्न्याः प्रवेशने सति तन्मिथुनं प्रजननाय संपद्यते ॥

यथा सप्तमेऽनुवाके कपालोपधानप्रसङ्गेन तद्विमोचनमन्त्रोऽप्याम्नात एवम-त्रापि योक्त्रबन्धनप्रसङ्गेन योक्त्रविमोकमन्त्र आम्नायते—

इमं वि ष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ॥, इति ।

विष्यामि विमुञ्चामि । सुकेतः सुज्ञानः । सवित्रा बद्धेऽस्मिन्योक्त्ररूपे वरु-णपाशे विमुक्ते सति धातुर्ब्रह्मणो योनौ स्थानेऽनुष्ठितस्य कर्मणः फलभूते लोके पत्या सह मे सुखं करोमि ।

अस्य च योक्त्रस्य विमोक्षः स्वकाले कर्तव्यः । पिष्टलेपफलीकरणहोमा-भ्यामूर्ध्वं प्रायश्चित्तहोमेभ्यः पूर्वमस्य स्वकालः । अत एव कल्पसूत्रकारस्त-स्मिन्प्रदेशे पठति–"इमं विष्यामीति पत्नी योक्त्रपाशं[1] मुञ्चते तस्याः सयोक्त्रेऽ-ञ्जलौ पूर्णपात्रमानयति समायुषा सं प्रजयेत्यानीयमाने जपति " इति ॥

सोऽपि मन्त्रोऽत्रैवानन्तरमाम्नातः—

समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याऽहं गच्छे समात्मा तनुवा मम ॥, इति ।

हेऽग्नेऽहमायुषा संगच्छे, प्रजया संगच्छे, पातिव्रत्यलक्षणेन वर्चसा संग-

१ ख. ॰शं विमु॰ ।

च्छे। अनेन पत्या पुनः पुनः पत्नी भूत्वा संगच्छे वियोगः कदाचिदपि मा भूदित्यर्थः। मम शरीरेण जीवात्मा चिरं संगच्छताम् ॥

## महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि—

कल्पः—" महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इति तस्यां पवित्रान्तर्हितायामाज्यं निरुप्य " इति।

यद्यप्यत्र मन्त्रकाण्डे देवयज्याया इति पदं नाऽऽम्नातं तथाऽपि ब्राह्मणानुसारेण तत्पठितव्यम्। महीशब्दस्य गौरित्यर्थः। अत एव सप्तमकाण्डे गां प्रस्तुत्याऽऽम्नायते—" तस्या उपोत्थाय कर्णमाजपेदिडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि" इति। हे आज्य त्वं महीनां गवां पयोऽसि साक्षात्तज्जन्यत्वात्। ओषधीनां रसश्चासि परम्परया तज्जन्यत्वात्। तादृशस्य क्षयेण रहितस्य तव स्वरूपं देवयागार्थं पात्र्यां निर्वपामि। इमं वि ष्यामि समायुपेत्यस्य मन्त्रद्वयस्यात्राप्रासङ्गिकत्वात्तद्व्याख्यानमुपेक्ष्यानन्तरस्य मन्त्रस्य पूर्वभागे स्पष्टार्थतां दर्शयति–" महीनां पयोऽस्योषधीनाꣳ रस इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे " [ ब्रा० का० ३ प्र० ३ अ० ३ ] इति। उत्तरभागस्य तेऽक्षीयमाणस्येतिपदस्याभिप्रायमाह—" तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इत्याह। आशिषमेवैतामाशास्ते " [ ब्रा० का० ३ प्र० ३ अ० ३] इति। आज्यभागाङ्गतां विधत्ते–"घृतं च वै मधु च प्रजापतिरासीत्। यतो मध्वासीत्। ततः प्रजा असृजत। तस्मान्मधुषि प्रजननमिवास्ति। तस्मान्मधुषा न प्रचरन्ति। यातयाम हि। आज्येन प्रचरन्ति। यज्ञो वा आज्यम्। यज्ञेनैव यज्ञं प्रचरन्त्ययातयामत्वाय " [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति। प्रजापतिः पूर्वं यागसाधनं सृष्टिसाधनं चाभिप्रेत्य स्वयमेव सत्यसंकल्पतया घृतमधुरूपेण परिणतोऽभूत्। यस्मादुत्पत्तिबीजत्वमभिप्रेत्य मध्वभूत्तस्मान्मधुबीजेन प्रजा असृजत। अत एव मधुना नानाबीजोत्पादनं विद्यते। तेनोत्पादनेन यतो गतसारं ततो मधुना यागं न कुर्वन्ति। सारवत्त्वादाज्येन यागं कुर्युः। सर्वयज्ञहेतुत्वादाज्यस्य यज्ञत्वं तद्धेतुत्वं च वक्ष्यते– " सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम् " इति। अतो यज्ञयोग्यसाधनेनैव यज्ञस्यानुष्ठानान्नास्ति गतसारत्वदोषः ॥

---

१ ख. 'यामाज्यस्थाल्यामा'। २ ख. 'तम्। ३ ख. 'ज्यस्य यागा'। ४ ख. 'धुनि नानाजन्तूत्पा'।

( आज्यादिहविर्ग्रहणार्था मन्त्राः )

**महीनां पयोऽस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय—**

कल्पः—" अथैनामाज्यमवेक्षयति महीनां पयोऽस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वायेति " इति।

अदब्धेन रोगानुपहतेन। विधत्ते—" पत्न्यवेक्षते। मिथुनत्वाय प्रजात्यै। यद्वै पत्नी यज्ञस्य करोति। मिथुनं तत्। अथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै " [ब्रा० का० ३ प्र० ३ अ० ४] इति। यज्ञस्य पुरुषत्वात्तेन सह पत्न्या मिथुनत्वम्। किं च पत्न्या आज्यावेक्षणरूप एष एव यजमानमनु यज्ञारम्भः। दंपत्योर्द्वयोरप्यारम्भे सति यज्ञो न विच्छिद्यते॥

**तेजोऽसि तेजोऽनु प्रेह्यग्निस्ते तेजो मा वि नैत्—**

कल्पः—" अथैनद्गार्हपत्येऽधिश्रयति तेजोऽसीति समिधमुपयत्य प्राग्घरति तेजोऽनुप्रेहीत्यथैनदाहवनीयेऽधिश्रयत्यग्निस्ते तेजो मा वि नैदिति" इति।

हे आज्य त्वं तेजोरूपमसि तेजोरूपमाहवनीयमनुप्रवेष्टुं गच्छ। अयमाहवनीयोऽग्निस्त्वदीयं तेजो माऽपनयतु। अनुष्ठानविधिपूर्वकं मन्त्रं व्याचष्टे—" अमेध्यं वा एतत्करोति। यत्पत्न्यवेक्षते। गार्हपत्येऽधिश्रयति मेध्यत्वाय। आहवनीयमभ्युद्द्रवति। यज्ञस्य संतत्यै। तेजोऽसि तेजोऽनु प्रेहीत्याह। तेजो वा अग्निः। तेज आज्यम्। तेजसैव तेजः समर्धयति। अग्निस्ते तेजो मा वि नैदित्याहाहिꣳसायै " [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति॥

**अग्नेर्जिह्वाऽसि सुभूर्देवानां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भव—**

बौधायनः—" अथैनद्यथाहृतं प्रति परिहृत्योत्तरार्धे वेद्यै निधायाध्वर्युरवेक्षते अग्नेर्जिह्वाऽसि सुभूर्देवानां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भवेति " इति।

आपस्तम्बः—" अग्नेर्जिह्वाऽसीति स्फ्यस्य वर्त्मन्सादयति " इति।

आहवनीये स्थितस्याऽऽज्यस्योदग्देशे समानेतुं स्फ्येन कांचिद्रेखां कृत्वा तस्यां सादयेत्। हे आज्य ज्वालारूपाया जिह्वाया उत्पादकत्वादग्नेर्जिह्वाऽसि। देवानां सुखाय भवतीति सुभूः। ईदृशं त्वं तत्तदाहुतिस्थानाय

---

१ ख. मन्त्रान्व्याच°। २ ख. °दृशस्त्वमसि। विधत्ते—" स्फ्यस्य वर्त्मन्त्सादयति। यज्ञस्य त्यै" [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति। त°।

तत्तन्मन्त्रपूर्वकग्रहणाय पर्याप्तं भवे । व्याचष्टे—"अग्नेर्जिह्वाऽसि सुभूर्देवानामित्याह । यथायजुरेवैतत् । धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भवेत्याह । आशिषमेवैतामाशास्ते" [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति ॥

## शुक्रमसि ज्योतिरसि तेजोऽसि—

कल्पः—"अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारमुत्पुनाति शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजोऽसीति तृतीयम्" इति ।

शुक्रं दीप्तिमत् । आज्यस्योत्पवनं विधत्ते—"तद्वा अतः पवित्राभ्यामेवोत्पुनाति । यजमानो वा आज्यम् । प्राणापानौ पवित्रे । यजमान एव प्राणापानौ दधाति" [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति । यतो योषिद्वीक्षणेनामेध्यस्याऽऽज्यस्य मेध्यत्वाय गार्हपत्याद्यधिश्रयणं कृतमत एवात्यन्तशुद्ध्यर्थमुत्पुनीयात् । प्रकारविशेषं विधत्ते—"पुनराहारम् । एवमिव हि प्राणापानौ संचरतः" [ब्रा० का० ३ प्र० ३ अ० ४] इति । आज्यस्थापिते पवित्रे प्राच्यां प्रोह्य पुनः पश्चादाहृत्य मध्यादूर्ध्वमुत्पुनीयात् । एवं त्रिवारमित्यभिप्रायेण वीप्सार्थो णमुल्प्रत्ययः प्रयुक्तः । मन्त्राणां स्पष्टार्थतां दर्शयति-"शुक्रमसि ज्योतिरसि तेजोऽसीत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे" [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति । प्रतिमन्त्रक्रियां विधत्ते—"त्रिर्यजुषा । त्रय इमे लोकाः । एषां लोकानामाप्त्यै" [ ब्रा० का० ३ प्र० ३ अ० ४] इति । त्रित्वमनूद्यार्थवादान्तरमाह—"त्रिः । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय" [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति ॥

## देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः—

कल्पः—"अथ प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति पच्छः" इति ।

तदेतदुत्पवनं पवित्रविशिष्टं विधत्ते—"अथाऽऽज्यवतीभ्यामपः । रूपमेवाऽऽसामेतद्वर्णं दधाति । अपि वा उताऽऽहुः । यथा ह वै योषा सुवर्णं हिरण्यं पेशलं बिभ्रती रूपाण्यास्ते । एवमेता एतर्हीति" [ ब्रा० का० ३ प्र० ३ अ० ४ ] इति । याभ्यां पवित्राभ्यामाज्यमुत्पूतं ताभ्यामेवाऽऽज्यलिप्ताभ्यामप उत्पुनीयात् । व्यत्ययेन स्त्रीलिङ्गत्वम् । एतदाज्यं स्वबिन्दुभिरासाम-

१ ख. °वत्विति व्या° । २ ख. °मन्त्रं पृथक्क्रियां ।

पां वर्णविशेषोपेतं रूपं संपादयति। अपि च ताम्रादिकालुष्यराहित्येन शोभनवर्णोपेतं कटकाद्याकारसौकर्येण पेशलं हिरण्यं बिभ्रती योषेवेमा आप आज्यबिन्दुयुक्ता नेत्रप्रिया भवन्ति। मन्त्रगतच्छन्दःप्रभृत्यनुसंधेयतया विधत्ते—"आपो वै सर्वा देवताः। एषा हि विश्वेषां देवानां तनूः। यदाज्यम्। तत्रोभयोर्मीमाꣳसा। जामि स्यात्। यद्यजुषाऽऽज्यं यजुषाऽप उत्पुनीयात्। छन्दसाऽप उत्पुनात्यजामित्वाय। अथो मिथुनत्वाय। सावित्रियर्चा। सवितृप्रसूतं मे कर्मासदिति। सवितृप्रसूतमेवास्य कर्म भवति। पच्छो गायत्रिया त्रिः समृद्धत्वाय। अद्भिरेवौषधीः संनयति। ओषधीभिः पशून्। पशुभिर्यजमानम्" [ब्रा० का० ३ प्र० ३ अ० ४] इति। उदकरूपेण वीर्येण देवताशरीरमुत्पद्यते। आहुतिरूपेणाऽऽज्येन तत्पोष्यते। तस्मादाज्योदकयोः सर्वदेवतारूपत्वे समे सति किमेतदुभयं यजुषैवोत्पुनीयादुताप ऋचेति मीमांसायामालस्यनिवारणार्थमृचेति युक्तम्। ऋग्यजुर्भ्यां मिथुनत्वमपि संपद्यते। त्रिवारमुत्पूनास्वप्स्वादरातिशयात्ताभिरद्भिः क्रमेणौषधीपशुयजमानाः समृद्धा भवन्ति॥

शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वाऽर्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि॥

कल्पः—"आदत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदे प्रतिष्ठाप्य तस्यां गृह्णीते शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वा संमृश्योत्प्रयच्छति। अथोपभृति गृह्णीते ज्योतिस्त्वा ज्योतिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषाऽष्टगृहीतं गृहीत्वा भूयसो ग्रहान्गृह्णानः कनीय आज्यं गृह्णीते, तथैव संमृश्योत्प्रयच्छति। अथ ध्रुवायां गृह्णीतेऽर्चिस्त्वाऽर्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वाऽभिपूर्य तथैव संमृश्योत्प्रयच्छति" इति।

अत्र मध्यममन्त्रे धाम्नेधाम्न इत्यादिकमनुषज्यते। हे आज्य दीप्तं त्वां दीप्तायां तत्तन्मन्त्रपूर्वकग्रहणाय तत्तद्धोमस्थानाय पर्याप्तं गृह्णाति। एवमितरयोर्योज्यम्। त्रिष्वपि मन्त्रेषु धामयजुःशब्दयोर्वीप्सायास्तात्पर्यमाह—"शुक्रं त्वा शुक्रायां ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वाऽर्चिषीत्याह सर्वत्वाय। पर्याप्त्या अनन्तरायाय" [ब्रा० का० ३ प्र० ३ अ० ४] इति। आहुतिबाहुल्यं

१ ख. °मुत्पाद्य°।

सर्वत्वम् । एकैकस्यामाहुतावाज्यबाहुल्यं पर्याप्तिः । आहुतेः कस्या अप्यल्पो ऽनन्तरायः । यदेतदाज्यावेक्षणं पूर्वमुक्तं तत्र विशेषं वक्तुं तत्प्रस्तौति—" देवासुराः संयत्ता आसन् । स एतमिन्द्र आज्यस्यावकाशमपश्यत् । तेनावैक्षत । ततो देवा अभवन् । पराऽसुराः । य एवं विद्वानाज्यमवेक्षते । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति " [ब्रा० का० ३ प्र० ३ अ० ५] इति । अवकाशः प्रकाशको मन्त्रः । स चाग्नेर्जिह्वाऽसीत्यादिकः । अभिघारणरूपत्वकथनेनावेक्षणं प्रशंसति—" ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवीꣳष्यभिघारयति । अथ केनाऽऽज्यमिति । सत्येनेति ब्रूयात् । चक्षुर्वै सत्यम् । सत्येनैवैनदभिघारयति " [ ब्रा० का० ३ प्र० ३ अ० ५ ] इति । वक्तुर्विप्रलम्भसंभवाच्छ्रुतोऽर्थः कदाचिद्व्यभिचरत्यपि दृष्टस्तु न तथेति । चक्षुः सत्यं, शुक्तिरजतरज्जुसर्पव्यभिचारस्तु काचकामलादिदोषप्रयुक्तः । अवेक्षणे निमीलनरूपं विशेषं विधत्ते—" ईश्वरो वा एषोऽन्धो भवितोः । यश्चक्षुषाऽऽज्यमवेक्षते । निमील्यावेक्षेत । दाधाराऽऽत्मन्चक्षुः । अभ्याज्यं घारयति " [ ब्रा० का० ३ प्र० ३ अ० ५ ] इति । आज्यस्याऽऽदित्यमण्डलवत्तेजस्वित्वान्निरन्तर्यवीक्षणेनान्धो भवितुं प्रभुर्भवति । तत्र निमीलनेन स्वात्मप्रविष्टाचक्षुषो धारणादन्धो न भवति । वीक्षणेनाऽऽज्यमभिघारयति । विधत्ते—" आज्यं गृह्णाति । छन्दाꣳसि वा आज्यम् । छन्दाꣳस्येव प्रीणाति " [ ब्रा० का० ३ प्र० ३ अ० ५ ] इति । आज्यस्य यज्ञसाधनत्वेन च्छन्दःसादृश्यम् । स्रुग्विशेषेणाऽऽवृत्तिविशेषं विधत्ते—" चतुर्जुह्वां गृह्णाति । चतुष्पादः पशवः । पशूनेवावरुन्धे । अष्टावुपभृति । अष्टाक्षरा गायत्री । गायत्रः प्राणः । प्राणमेव पशुषु दधाति । चतुर्ध्रुवायाम् । चतुष्पादः पशवः । पशुष्वेवोपरिष्टात्प्रतितिष्ठति " [ ब्रा० का० ३ प्र० ३ अ० ५ ] इति । गायत्र्या रक्षितत्वात्प्राणो गायत्रः । तथा वाजसनेयिनः समामनन्ति—" प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम" इति । स्वाधीनत्वेनावरुद्धेषु पशुषु पश्चात्प्रयोगेण प्रतितिष्ठतीति । ग्राह्यस्याऽऽज्यस्य स्रुग्विशेषेणाल्पाधिकपरिमाणं विधत्ते-" यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । चतुर्जुह्वां गृह्णन्भूयो गृह्णीयात् । अष्टावुपभृति गृह्णन्कनीयः । यजमानायैव भ्रातृव्यमुपस्तिं करोति"[ब्रा० का० ३ प्र० ३ अ० ५] इति । उप समीपे भृत्यत्वेनास्ति तिष्ठतीत्युपस्तिः । संख्यां पुनः प्रकारान्तरेण स्तौति–" गौर्वै स्रुचः । चतुर्जुह्वां गृह्णाति । तस्मा चतुष्पदी । अष्टावुपभृति । तस्मादष्टाशफा । चतुर्ध्रुवायाम् । तस्माच्चतुस्तना ।

१ ख. °पभृत् । सं° ।

गामेव तत्सꣳस्करोति। साऽस्मै सꣳस्कृतेषमूर्जं दुहे" [ब्रा० का० ३ प्र० ३ अ० ५] इति। अभिमतदोहनात्स्रुचां गोरूपत्वं संख्यया तदवयवसाम्यं च। ततः स्रुचामाज्यपूर्तिरूपो यः संस्कारस्तेन गामेव संस्करोति। सा च गौः पयोरूपमन्नमाज्यरूपं रसं च दुग्धे। गृहीतस्याऽऽज्यस्य यथोचितमाहुत्यङ्गत्वं दर्शयति—"यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत्। यदुपभृति। प्रयाजानूयाजेभ्यस्तत्। सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम्" [ब्रा० का० ३ प्र० ३ अ० ५] इति। पञ्चसु प्रयाजेषु त्रयं जौहवाज्येन निष्पाद्यं, द्वयं त्वौपभृतार्धेन, शिष्टेन त्वनूयाजाः। यत्र द्रव्यापेक्षा तत्र सर्वत्र ध्रौवम्॥

अत्र विनियोगसंग्रहः—

"प्रत्यु स्रुचस्तपेदग्रैर्मृष्टैरूर्ध्वं पुनस्तपेत्।
गोष्ठं वाचं तथा चक्षुः प्रजां मार्ष्टि क्रमात्स्रुचः॥ १॥
जुहूपभृद्ध्रुवा आशा पत्नीं योक्त्रेण नह्यति।
सुप्रेति पत्न्युपविशेदिमं काले विमोचनम्॥ २॥
समा पत्नी पूर्णपात्रं जपेदथ मही द्वयात्।
घृतं निरुप्य वीक्षेत तेजोऽधिश्रित्य पश्चिमे॥ ३॥
अग्नौ तेजो हरेदग्निः पूर्वाग्रावधिसंश्रयेत्।
अग्नेः स्फ्यवर्त्मनि क्षिप्त्वा शुज्योतेत्रिभिराज्यकम्॥ ४॥
उत्पूय देवो जलमुत्पुनात्याज्यपवित्रतः।
शुज्योर्चिस्त्रिभिराज्यस्य ग्रहो जुह्वादिके त्रये॥
दशमे त्वनुवाकेऽस्मिंस्त्रयोविंशतिरीरिताः॥ ५॥" इति।

अथ मीमांसा।

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

"संमार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता।
गुणकर्मत्वमथ वा दृष्टाभावेऽवघातवत्॥
गुणत्वं न हि संभाव्यं प्राधान्यं तु प्रयाजवत्।
अदृष्टकल्पनेनापि गुणत्वं स्याद्द्वितीयया" इति॥

दर्शपूर्णमासयोर्जुह्वादीनां दर्भैः संमार्जनमाम्नायते—स्रुचः संमार्ष्टीति। तत्र संमार्जनं प्रधानकर्म। कुतो गुणकर्मलक्षणरहितत्वात्प्रधानकर्मलक्षणयुक्तत्वाच्च। तथा हि—अवघातेन व्रीहीणां तुषविमोको दृष्टः संस्कारः। तथा संमार्जनेन जुह्वादिषु कंचिदतिशयं न पश्यामः। अतोऽवघातवद्गुणकर्मत्वं नास्ति। यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेतेति गुणकर्मलक्षणस्याभावात्। प्रयाजादिवददृ-

ष्टार्थत्वेन प्रधानकर्मत्वमस्ति। यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानी-त्येतस्य प्रधानकर्मलक्षणस्य सद्भावादिति प्राप्ते ब्रूमः—स्रुच इति द्वितीया कर्म-कारके विहिता। कर्मत्वं चेप्सिततमत्वे सति भवति। "कर्तुरीप्सिततमं कर्म" [ पा० १-४-४९ ] इति कर्मसंज्ञाविधानात्। क्रतुसाधनत्वेन च स्रुचां युक्तमीप्सिततमत्वम्। अतः प्रधानभूताः स्रुचः। तथा सति संमार्जनक्रियाया गुणकर्मत्वमवघातवद्भविष्यति। यदि स्रुक्षु दृष्टार्थो न स्यात्तर्ह्यपूर्वं कल्पनीयम्।

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

"पत्नीसंनहनं कार्यं चोदकादिति चेन्न तत्।
बन्धवासोधारणयोर्योक्त्रबन्धनसिद्धितः" इति॥

दर्शपूर्णमासविकारेषु सौमिकेषु प्रायणीयादिषु चोदकातिदेशात्पत्नीसंनहनं कार्यमिति चेन्मैवम्। प्रसङ्गसिद्धत्वात्। यद्यदृष्टाय बन्धो यदि वा वासोधारणं दृष्टं प्रयोजनमुभयथाऽपि सौमिकेन योक्त्रबन्धेनैव तत्सिध्यति। योक्त्रेण पत्नीꣳ संनह्यतीति हि सोमे विधीयते। तस्मादैष्टिकं पत्नीसंनहनं पृथङ्न कार्यम्।

नवमाध्यायस्य तृतीयपादे चिन्तितम्—

"पत्नीमिति द्विपत्न्यादावूह्यं नो वोह्यतेऽर्थतः।
नोपदेशस्य सामान्यादतिदेशाप्रवृत्तितः" इति॥

दर्शपूर्णमासयोर्मन्त्र आम्नायते—पत्नीꣳ संनह्येति। तत्रैकपत्नीकस्य यजमानस्य प्रयोगे समवेतार्थ एकवचनान्तः पत्नीशब्दः। स च द्विपत्नीकस्य बहुपत्नीकस्य च प्रयोगेऽर्थवशादूहनीय इति चेन्मैवम्। किमुपदेशप्राप्तस्योहोऽतिदेशप्राप्तस्य वा। नाऽऽद्यः। उपदेशस्य सर्वप्रयोगसाधारणत्वात्। यद्येकपत्नीकप्रयोगार्थमेवायं मन्त्रोपदेशः स्यात्तदानीमेकवचनं विवक्ष्येत। न त्वेवमस्ति। अन्यथा द्विबहुपत्नीकप्रयोगयोर्मन्त्र एव नोपदिश्येत। तत्र कुत ऊहानूहचिन्तावकाशः। साधारणोपदेशे सर्वप्रयोगसमवेतार्थतया पत्नीमिति पदे प्रातिपदिकं कर्मकारकविभक्तिश्चेत्युभयमेव विवक्षितम्। एकवचनं त्वदृष्टार्थतया सर्वप्रयोगेषु यथावस्थितमेव पठनीयम्। नाप्यतिदेशप्राप्तस्योह इति द्वितीयः पक्षः। द्विबहुपत्नीकप्रयोगयोरविकृतित्वेनातिदेशायोगात्। तस्मादत्र नास्त्यूहः।

तत्रैवान्यच्चिन्तितम्—

"ऊह्यो नो वैष विकृतावूह्योऽपाठेन पाशवत्।
नादृष्टच्छान्दसत्वाभ्यां पाशे छान्दसता न हि" इति॥

---

१ क. ख. ग. °पाठो न। २ क. ख. ग. पाठे।

एष एकवचनान्तः पत्नीमन्त्रो विकृतौ द्विबहुपत्नीकप्रयोगयोरर्थानुसारेणोहनीयः। कुतः। पाठाभावात्। प्रकृतावर्थानुसारेण प्राप्तोऽप्यूहः सर्वप्रयोगसाधारणेन मन्त्रपाठेन बाधितः। विकृतौ तु बाधकस्य पाठस्याभावेनास्मदायत्ते प्रयोगेऽर्थानुसारेणोहो युक्तः। अत एव पूर्वत्र द्विपशुयुक्तायां विकृतावदितिः पाशं प्रमुमोक्त्वदितिः पाशान्प्रमुमोक्तित्वत्येकवचनान्तो बहुवचनान्तश्च पाशमन्त्र ऊहित इति चेन्मैवम्। पत्नीमित्येकवचनस्याविवक्षितत्वेन प्रकृतावदृष्टार्थतया यथावस्थितपाठे सति विकृतावप्यदृष्टार्थे यथावस्थितस्यैव पठितव्यत्वात्। अथोच्येत प्रकृतौ छान्दसत्वेनैकवचनमेव व्यत्ययेन द्वित्वबहुत्वयोरर्थयोर्वर्तत इति। एवं तर्हि विकृतावप्यूहमन्तरेणैव द्वित्वबहुत्ववाचित्वान्मा भूदूहः। न चैवं पाशेऽप्यूहो मा भूदिति शङ्कनीयम्। प्रकृतावेकवचनबहुवचनयोरेकस्मिन्नेव पाशे वैदिकप्रयोगदर्शनाद्द्वित्वे तु तदभावात्। तस्मात्पाशस्योहो विकृतावस्ति न तु पत्नीशब्दस्य। यद्यप्यस्मिन्ननुवाके पत्नीं संनह्येत्ययं प्रैषमन्त्रो नाऽऽम्नातस्तथाऽपि पूर्वानुवाकब्राह्मणे तदाम्नानादिह पत्नीसंनहनप्रसङ्गेन विचारद्वयं दर्शितम्।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

" जुहूपभृद्ध्रुवास्वाज्यं सर्वार्थं वा व्यवस्थितम्।  
सर्वार्थमविशेषात्स्यात्प्रयाजार्थं हि जौहवम्॥  
प्रयाजानूयाजहेतुः स्यादौपभृतमाज्यकम्।  
ध्रौवमन्यार्थमित्येषा व्यवस्था वचनैर्मता " इति॥

चतुर्जुह्वां गृह्णात्यष्टावुपभृति चतुर्ध्रुवायामित्येषु ग्रहणवाक्येषु एतदर्थमिति विशेषनियामकस्याश्रवणात्पात्रत्रयगतमाज्यं सर्वार्थमिति चेन्मैवम्। यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्यादिवाक्यैर्व्यवस्थावगमात्।

तत्रैवान्यच्चिन्तितम्—

" अष्टावुपभृतीत्यत्र किमष्टैकग्रहे विधिः।  
चतुर्द्वयं ग्रहे वाऽऽद्यः स्यादष्टश्रुतिमुख्यतः॥  
चतुर्गृहीतं होमाङ्गं फलवत्त्वान्न बाध्यते।  
चतुर्द्वित्वं लक्ष्यतेऽतः सहानीत्यर्थमष्टता " इति॥

ग्रहणवाक्ये चतुर्जुह्वां गृह्णातीत्यत्र यथा चतुःसंख्याविशिष्टमेकहविर्ग्रहणं विवक्षितं तथैवाष्टावुपभृतीत्यत्राप्यष्टसंख्याविशिष्टमेकहविर्ग्रहणं विधातव्यम्।

तथा सत्यष्टत्वश्रुतेर्मुख्यत्वलाभात् । अष्टसंख्यावयवभूतयोश्चतुःसंख्ययोर्विधाने सत्यष्टशब्दस्यावयवलक्षणा प्रसज्येतेति प्राप्ते ब्रूमः—प्रसज्यतां नाम लक्षणा । मुख्यार्थस्वीकारे होमवाक्यविरोधापत्तेः । चतुर्गृहीतं जुहोतीत्यनारभ्य श्रुतं वाक्यं होममात्रोद्देशेन चतुर्गृहीतं विदधाति । यद्यप्येतत्सर्वहोमविषयतया सामान्यरूपमौपभृतं तु प्रयाजानूयाजविषयतया विशेषरूपं तथाऽपि होमस्य फलवत्त्वेन प्राधान्याद्ग्रहणस्य होमार्थत्वेनोपसर्जनत्वात्प्रधानानुसारेण चतुर्गृहीतमेव युक्तं न तूपसर्जनानुसारेणाष्टगृहीतम् । तस्मादुपभृति चतुर्गृहीतद्वयं विधीयते । तत्रैकं चतुर्गृहीतं हविश्चतुर्थपञ्चमप्रयाजार्थमपरं त्वनूयाजार्थम् । नन्वेवं सति चतुर्गृहीतस्यैव हविष्ट्वाच्चतुरुपभृतीत्येव विधातव्यं न त्वष्टावुपभृतीति विधिर्युक्त इति चेन्मैवम् । तथा सत्यनूयाजार्थं द्वितीयं चतुर्गृहीतं न सिध्येत् । अथ तदपि वाक्यान्तरेण विधीयेत तदानीमुपभृतः प्रथमेन चतुर्गृहीतेनावरुद्धत्वाद्द्वितीयस्मै पात्रान्तरमन्विष्येत । यद्युपभृति चतुर्गृहीतं विधीयेत तदा चतुर्गृहीतद्वयस्य पृथगेवानुष्ठानादुपभृत्येकप्रयत्नेनाऽऽनयनं न सिध्येत् । अत उभयस्य सहोपभृत्यानयनार्थमष्टावुपभृतीत्युच्यते । तस्मात्साहित्यार्थमष्टशब्दप्रयोगेऽपि हविष्ट्वसिद्ध्ये द्वे चतुर्गृहीते अत्र विधीयेते ॥

अथ व्याकरणम्—

प्रत्युष्टमित्यादिषु स्वरा गताः । वाजिनमित्यत्र प्रत्ययस्वरः । सपत्नान्सहत इति सपत्नसाह इत्यत्रापि प्रत्ययान्तत्वात्प्रत्ययस्वरः । सपत्नसाहीमित्यत्रोदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । आशासानेत्यत्र शानचश्चित्त्वादन्तोदात्तत्वे प्राप्ते लसार्वधातुकानुदात्तत्वे धातुस्वरशेषे समासे कृत्स्वरः । सौभाग्यशब्दस्य ष्यञ्प्रत्ययान्तस्य ञित्स्वरः । व्रतमनुगताऽनुव्रतेत्यत्राव्ययपूर्वपदप्रकृतिस्वरः । सुकृतायेत्यत्र "गतिरनन्तरः" [पा० ६-२-४९] इति गतिस्वरत्वे प्राप्ते तदपवादः—" सूपमानात्क्तः " [पा० ६-२-१४५] सु इत्येतस्मादुपमानात्परं क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुप्रजस इत्यत्रासिच्प्रत्ययान्तस्य चित्स्वरे समासे कृत्स्वरः । शोभनः पतिर्यासां ताः सुपत्नीरित्यत्र " नञ्सुभ्याम् " [पा० ६-२-१७२] इत्युत्तरपदान्तोदात्तस्यापवादः— " आद्युदात्तं द्व्यच्छन्दसि " [पा० ६-२-११९] आद्युदात्तं द्व्यच्कं यदुत्तरपदं तद्बहुव्रीहौ समासे सोरुत्तरमाद्युदात्तं भवति । सुकेत इत्यत्रापि तद्वत् । महीनामित्यत्र " ङ्याश्छन्दसि बहुलम् " [पा० ६-१-१७८] ङ्यन्ताच्छन्दसि विषये बहुलं नामुदात्तो भवति । धाम्नेधाम्न इत्यत्र " अनुदात्तं च "

( प्राधान्येनेध्मसंनहनार्थो बर्हिरास्तरणाद्यर्थाश्च मन्त्राः )

[ पा० ८-१-३ ] इत्याम्रेडितमनुदात्तम् । ज्योतिरित्यत्रेसुन्प्रत्ययान्तत्वान्नित्स्वरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा वेदिंरसि बर्हिषे त्वा स्वाहा बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छत विष्णोः स्तूपोऽस्यूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यो गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित इन्द्रस्य बाहुरसि ( १ ) दक्षिणो यजमानस्य परिधिरिड ईडितो मित्रावरुणौ त्वोत्तरतः परि धत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्या वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमह्यग्ने बृहन्तमध्वरे विशो यन्त्रे स्थो वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीद जुहूरुपभृद्ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदैता असदन्त्सुकृतस्य

लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञ-पतिं पाहि मां यज्ञनियम् ( २ ) ॥

( बाहुरसि प्रिये सदसि पञ्चदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

कृष्णः । असि । आखरेष्ठ इत्याखरे—स्थः । अग्नये । त्वा । स्वाहा । वेदिः । असि । बर्हिषे । त्वा । स्वाहा । बर्हिः । असि । स्रुग्भ्य इति स्रुक्—भ्यः । त्वा । स्वाहा । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । स्वधेति स्व—धा । पितृभ्य इति पितृ—भ्यः । ऊर्क् । भव । बर्हिषद्भ्य इति बर्हिषत्—भ्यः । ऊर्जा । पृथिवीम् । गच्छत । विष्णोः । स्तूपः । असि । ऊर्णाम्रदसमित्यूर्णा—म्रदसम् । त्वा । स्तृणामि । स्वासस्थमिति सु—आसस्थम् । देवेभ्यः । गन्धर्वः । असि । विश्वावसुरिति विश्व—वसुः । विश्वस्मात् । ईषतः । यजमानस्य । परिधिरिति परि—धिः । इडः । ईडितः । इन्द्रस्य । बाहुः । असि । ( १ ) दक्षिणः । यजमानस्य ।

परिधिरिति परि—धिः। इडः। ईडितः। मित्रावरुणाविति मित्रा—वरुणौ। त्वा। उत्तरत इत्युत्—तरतः। परीति। धत्ताम्। ध्रुवेण। धर्मणा। यजमानस्य। परिधिरिति परि—धिः। इडः। ईडितः। सूर्यः। त्वा। पुरस्तात्। पातु। कस्याः। चित्। अभिशस्त्या इत्यभि—शस्त्याः। वीतिहोत्रमिति वीति—होत्रम्। त्वा। कवे। द्युमन्तमिति द्यु—मन्तम्। समिति। इधीमहि। अग्ने। बृहन्तम्। अध्वरे। विशः। यन्त्रे इति। स्थः। वसूनाम्। रुद्राणाम्। आदित्यानाम्। सदसि। सीद। जुहूः। उपभृदित्युप—भृत्। ध्रुवा। असि। घृताची। नाम्ना। प्रियेण। नाम्ना। प्रिये। सदसि। सीद। एताः। असदन्। सुकृतस्येति सु—कृतस्य। लोके। ताः। विष्णो इति। पाहि। पाहि। यज्ञम्। पाहि। यज्ञपतिमिति यज्ञ—पतिम्। पाहि। माम्। यज्ञनियमिति यज्ञ—नियम् (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

( अथ प्रथमकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः। )

---

दशमेऽनुवाक आज्यहविषो ग्रहणमुक्तम्। एकादश इध्माबर्हिःपूर्वकं वेद्यां

हविरासादनमुच्यते। तत्र कृष्णोऽस्याखरेष्ठोऽग्नय इत्याद्यो मन्त्रः । ततः पूर्व मापो देवीरित्ययमुदकाभिमन्त्रणमन्त्र आम्नातव्य इत्यभिप्रेत्य पूर्ववद्व्याचष्टे– " आपो देवी रग्रेपुवो अग्रेगुव इत्याह । रूपमेवाऽऽसामेतन्महिमानं व्याचष्टे अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह। अग्र एव यज्ञं नयन्ति । अग्रे यज्ञपतिम्। युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्याह । वृत्रं हनिष्यन्निन्द्र आपो वव्रे। आपो हेन्द्रं वव्रिरे । संज्ञामेवाऽऽसामेतत्सामा व्याचष्टे। प्रोक्षिताः स्थेत्याह । तेनाऽऽपः प्रोक्षिताः। " [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति।

## कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा—

कल्पः—"अथेध्मं विस्रस्य प्रोक्षति कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेति' इति।

हे इध्म त्वं वह्निप्रियतमत्वात्तदभेदोपचारेण कृष्णो मृगोऽसि । तथ वनस्पतिस्थोऽसि । अतोऽग्नये प्रियं त्वां प्रोक्षामि । तदेतत्कर्तव्यमिति स्वकीया सरस्वती ब्रूते। सोऽयमर्थः स्वाहाशब्दवाच्यः । अत एवाग्निहोत्र ब्राह्मणे प्रजापतेः स्वकीयया वाचा सह संवाद एवमाम्नायते—" तं वागभ्य वदज्जुहुधीति। सोऽब्रवीत्। कस्त्वमसीति । स्वैव ते वागित्यब्रवीत्। सोऽ जुहोत्स्वाहेति " इति । अथ वा नानार्थवाची स्वाहाशब्दः प्रोक्षणं ब्रूते अथोक्तमन्त्रार्थं दर्शयति—" अग्निर्देवेभ्यो निलायत। कृष्णो रूपं कृत्वा। स वनस्पतीन्प्राविशत् । कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेत्याह। अग्नय एवै जुष्टं करोति। अथो अग्नेरेव मेधमवरुन्धे " [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति ॥

## वेदिरसि बर्हिषे त्वा स्वाहा—

कल्पः—" वेदिं प्रोक्षति वेदिरसि बर्हिषे त्वा स्वाहेति " इति ।

हे वेदे त्वं लब्धाऽसि। "तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वम्' इति श्रुतेः । अतो बर्हिर्धारयितुं त्वां प्रोक्षामि । रूपकेणाऽऽधाराधेयभा दर्शयति-" वेदिरसि बर्हिषे त्वा स्वाहेत्याह। प्रजा वै बर्हिः। पृथिवी वेदिः प्रजा एव पृथिव्यां प्रतिष्ठापयति " [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति।

## बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा—

कल्पः—" बर्हिः प्रोक्षति बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेति " इति।

हे दर्भ वेदेस्त्वं बृंहणमसि । अतस्त्वयि स्रुचः स्थापयितुं त्वां प्रोक्षामि

( प्राधान्येनेध्मसंनहनार्थो बर्हिरास्तरणाद्यर्थाश्च मन्त्राः )

पूर्ववदाधारत्वं दर्शयति—"बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेत्याह। प्रजा वै बर्हिः। यजमानः स्रुचः। यजमानमेव प्रजासु प्रतिष्ठापयति" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति ॥

## दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा—

कल्पः—" अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षति, अन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम्" इति।

बर्हिष्येव लोकत्रयं भावयित्वा लोकार्थता प्रोक्षणस्येत्याह-" दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षति । एभ्य एवैनल्लोकेभ्यः प्रोक्षति" [ब्रा० का० ३ प्र० ३ अ० ६] इति। विधत्ते—" अथ ततः सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति । प्रजा वै बर्हिः । यथा सूत्यै काल आपः पुरस्ताद्यन्ति । तादृगेव तत्" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति। अग्रादित्रयप्रोक्षणानन्तरं यः शेषस्तेन प्रोक्षणशेषेणोदकेन स्वयं हस्तस्थितप्रोक्षणपात्रेण सह बर्हिषः पुरस्ताद्धस्तं प्रसार्योदकं यथा प्रत्यक्सिच्यते तथोत्क्षिपेत्। यथा मनुष्याणां गवादीनां च प्रसूतिकाले प्रथमत आपो निर्गच्छन्ति तत्प्रोक्षणं तादृगेव भवति ॥

## स्वधा पितृभ्य ऊर्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छत—

कल्पः—" अतिशिष्टाः प्रोक्षणीर्निनयति दक्षिणायै श्रोणेरोत्तरस्यै श्रोणेः स्वधा पितृभ्य ऊर्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छतेति" इति।

हे जल मया त्वं पितृभ्यो दत्तमसि । अतो बर्हिष्यत्रस्थितेभ्यः पितृभ्यो रसरूपं भव। हे जलावयवा भवदीयोद्धतरसरूपेण पृथिवीं गच्छत । मन्त्रव्याख्यानपूर्वकं विधत्ते-" स्वधा पितृभ्य इत्याह। स्वधाकारो हि पितृणाम्। ऊर्भव बर्हिषद्भ्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति संतत्यै । मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। मासा वा ओषधीर्वर्धयन्ति । मासाः पचन्ति समृद्ध्यै। अनतिस्कन्दन्ह पर्जन्यो वर्षति। यत्रैतदेवं क्रियते । ऊर्जा पृथिवीं गच्छतेत्याह । पृथिव्यामेवोर्जं दधाति । तस्मात्पृथिव्या ऊर्जा भुञ्जते" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति । स्वधाकारः पितृणां प्रिय इत्यर्थो वाजसनेयिनां प्रसिद्धः। देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितर इति श्रुतिः पूर्वमुदाहृता । वेदेर्दक्षिणश्रोणिमारभ्योत्तरश्रोणिपर्यन्तं निनयनेन यजमानस्याविच्छिन्ना प्रजा भवति । मासाभिमानिदेवा एव बर्हिषदः पितर इति तत्प्रीतौ सत्यामभि-

मन्तव्यकालात्मका मासा ओषधीर्वर्धयित्वा फलं संपादयन्ति । ततोऽन्नसमृद्धिः । यस्मिन्देश एतन्नियमनमेवं क्रियते तस्मिन्देशे पर्जन्योऽतिवृष्ट्या सस्यमविनाशयन्यथाकालं यथोचितं वर्षति । उदकरसस्य पृथिवीगतत्वात्पृथिवीजन्येनान्नरसेन जना भोगं संपादयन्ति । शैथिल्यं विधत्ते—“ ग्रन्थि विस्रꣳसयति । प्रजनयत्येव तत् ” [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति । बन्धनरूपे गर्भेऽवस्थितस्य बर्हिषो विस्रंसनमेवोत्पादनम् । शिथिलस्य विमोचनं विधत्ते—“ ऊर्ध्वं प्राञ्चमुद्गूढं प्रत्यञ्चमायच्छति । तस्मात्प्राचीनꣳ रेतो धीयते । प्रतीचीः प्रजा जायन्ते ” [ ब्रा० का ३ प्र० ३ अ० ६ ] इति । पश्चात्प्राञ्चमुपगूहतीति हि पूर्वं विहितस्य प्राञ्चमुद्गूढस्य ग्रन्थेरग्रं धृत्वोर्ध्वमुत्कृष्य प्रत्यङ्मुखत्वेन कर्षेत् ॥

## विष्णोः स्तूपोऽसि—

कल्पः—“ विष्णोः स्तूपोऽसीति कर्षन्निवाऽऽहवनीयं प्रति प्रस्तरमुपादत्ते ” इति ।

हे प्रस्तर त्वं व्यापिनो यज्ञस्य संघातरूपो धारकोऽसि । तदेतद्दर्शयति—“ विष्णोः स्तूपोऽसीत्याह । यज्ञो वै विष्णुः । यज्ञस्य धृत्यै ” [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति । विधत्ते—“ पुरस्तात्प्रस्तरं गृह्णाति । मुख्यमेवैनं करोति ” [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति । वेदेः पूर्वभागे ब्रह्मा यजमानो वा प्रस्तरं धारयेत् । तच्च सूत्रेऽभिहितम्—“ ब्रह्मा प्रस्तरं धारयति यजमानो वा ” इति । धारणाय मुखसमानमौन्नत्यं हस्तेनाभिनीय विधत्ते—“ इयन्तं गृह्णाति । प्रजापतिना यज्ञमुखेन संमितम् ” [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति । वेदिखननवाक्य इवायमभिनयः प्रादेशमात्रपरत्वेन व्याख्येयः । तदेवानूद्य प्रशंसति—“ इयन्तं गृह्णाति । यज्ञपरुषा संमितम् । इयन्तं गृह्णाति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमितम् ” [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति । परुः पर्व । तच्च यज्ञपुरुषस्य हस्तकूर्परयोरुभयतः प्रादेशमात्रं भवति । प्रसारितयोरङ्गुष्ठकनिष्ठिकयोरङ्गुल्योर्यावन्मध्यं तावदेव पुरुषे सामर्थ्यं, हानोपादानाद्यशेषव्यापाराणां तत्रैव निष्पत्तेः । पक्षान्तरं विधत्ते—“ अपरिमितं गृह्णाति । अपरिमितस्यावरुद्ध्यै ” [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति । यावत्यौन्नत्ये स्वस्य सौकर्यं तावदेव गृह्णीयात् । तस्यापरिमितसंपत्तये भवति । उत्पवनहेत्वोः पवित्रयोः प्रस्तरे स्थापनं विधत्ते—“ तस्मि-

१ ख. ˚कसस्ययोः पृ˚ । २ क. ग. गर्ते स्थि˚ ।

( प्राधान्येनेध्मसंनहनार्था बर्हिरास्तरणाद्यर्थाश्च मन्त्राः )

न्पवित्रे अपिसृजति। यजमानो वै प्रस्तरः। प्राणापानौ पवित्रे। यजमान एव प्राणापानौ दधाति" [ब्रा० का० ३ प्र० ३ अ० ६] इति। प्रस्तरस्य यजमानवद्यज्ञसिद्धिहेतुतया तदभेदोपचारः॥

उर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः—

कल्पः—"बर्हिर्वेद्याᳲ स्तृणाति देवबर्हिरूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति" इति।

अत्र शाखान्तरानुसारेण देवबर्हिरित्येतत्पदं पूरितम्। हे देवबर्हिस्त्वं कम्बलवन्मृदुरूपं, देवानां सुखेनाऽऽसितुं स्थानरूपं त्वां वेद्यां स्तृणामि। व्याचष्टे—"ऊर्णाम्रदसं त्वा स्तृणामीत्याह। यथायजुरेवैतत्। स्वासस्थं देवेभ्य इत्याह। देवेभ्य एवैनत्स्वासस्थं करोति" [ब्रा० का० ३ प्र० ३ अ० ६] इति। विधत्ते—"बर्हिः स्तृणाति। प्रजा वै बर्हिः। पृथिवी वेदिः। प्रजा एव पृथिव्यां प्रतिष्ठापयति" [ब्रा० का० ३ प्र० ३ अ० ६] इति। तत्रैव विशेषं विधत्ते—"अनतिदृश्नᳲ स्तृणाति। प्रजयैवैनं पशुभिरनतिदृश्नं करोति" [ब्रा० का० ३ प्र० ३ अ० ६] इति। भूमिस्वरूपमत्यन्तं यथा न दृश्यते तथा बहुलं स्तृणीयात्। बहुप्रजापश्वावृतो यजमानोऽपि वैदेशिकैरदृश्यमानः प्रभुर्भवति॥

गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित इन्द्रस्य बाहुरसि (१) दक्षिणो यजमानस्य परिधिरिड ईडितो मित्रावरुणौ त्वोत्तरतः परि धत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः—

कल्पः—"अथ प्रस्तरपाणिः प्रागभिसृप्य परिधीन्परिदधाति गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित इति मध्यममिन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडित इति दक्षिणं मित्रावरुणौ त्वोत्तरतः परि धत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडित इत्युत्तरम्" इति।

हे मध्यमपरिधे त्वं विश्वावसुनामा गन्धर्वोऽसि तद्वद्रक्षकत्वात्। तेन सर्वस्माद्धिंसकाद्यजमानस्य परिपोषकोऽन्नरूपः स्तुतो भव। एवमुत्तरयोर्योज्यम्। ध्रुवेण धर्मणाऽनुष्ठीयमाननित्यकर्मनिमित्तम्। विधिपूर्वकं व्याचष्टे—"धारय-

न्प्रस्तरं परिधीन्परिदधाति। यजमानो वै प्रस्तरः। यजमान एव तत्स्वयं परिधीन्परिदधाति। गन्धर्वोऽसि विश्वावसुरित्याह। विश्वमेवाऽऽयुर्यजमाने दधाति। इन्द्रस्य बाहुरसि दक्षिण इत्याह। इन्द्रियमेव यजमाने दधाति। मित्रावरुणौ त्वोत्तरतः परि धत्तामित्याह। प्राणापानौ मित्रावरुणौ। प्राणापानावेवास्मिन्दधाति" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति॥

## सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्याः—

बौधायनः—"अथ सूर्येण पुरस्तात्परिदधाति सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्या इति" इति।

आपस्तम्बः—"आहवनीयमभिमन्त्र्य" इति।

कस्याश्चिदभिशस्त्याः सर्वस्या अपि हिंसायाः। अनेनैवाभिप्रायेण व्याचष्टे—"सूर्यस्त्वा पुरस्तात्पात्वित्याह। रक्षसामपहत्यै। कस्याश्चिदभिशस्त्या इत्याह। अपरिमितादेवैनं पाति" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति॥

## वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमह्यग्ने बृहन्तमध्वरे—

कल्पः—"ऊर्ध्वे आघारसमिधावादधाति वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमह्यग्ने बृहन्तमध्वर इति" इति।

हे विद्वन्नग्ने त्वामध्वरं निमित्तीकृत्य समिधीमहि। कीदृशं त्वां वीतये व्याप्तये समृद्धये होत्रं होमो यस्य तं वीतिहोत्रम्। एतमेवार्थं दर्शयति—"वीतिहोत्रं त्वा कव इत्याह। अग्निमेव होत्रेण समर्धयति। द्युमन्तꣳ समिधीमहीत्याह समिद्ध्यै। अग्ने बृहन्तमध्वर इत्याह वृद्ध्यै" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति॥

## विशो यन्त्रे स्थः—

कल्पः—"अन्तर्वेद्युदीचीनाग्रे विधृती तिरश्ची आसादयति विशो यन्त्रे स्थ इति" इति।

हे दर्भरूपे विधृत्यौ युवां प्रजाया नियामिके भवथः। एतदेव दर्शयति—"विशो यन्त्रे स्थ इत्याह। विशां यत्यै" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति। विधत्ते—"उदीचीनाग्रे निदधाति प्रतिष्ठित्यै" [ ब्रा० का० ३ प्र० ३ अ० ६ ] इति॥

( प्राधान्येनेध्मसंनहनार्था बर्हिरास्तरणार्थाश्च मन्त्राः )

## वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीद—

कल्पः—वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेति तयोः प्रस्तरमभ्यादधाति" इति।

विधृतिद्वयमेव सद इत्यभिप्रेत्याऽऽह—"वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेत्याह। देवतानामेव सदने प्रस्तरꣳ सादयति" [ब्रा० का० ३ प्र० ३ अ० ६] इति॥

## जुहूरुपभृद्ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद—

कल्पः—"प्रस्तरे जुहूꣳ सादयति जुहूरसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेत्युत्तरामुपभृतमुपभृदसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेत्युत्तरां ध्रुवां ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेति" इति।

प्रथमद्वितीययोरसि घृताचीत्यादिकमनुषज्यते। व्याचष्टे—"जुहूरसि घृताची नाम्नेत्याह। असौ वै जुहूः। अन्तरिक्षमुपभृत्। पृथिवी ध्रुवा। तासामेतदेव प्रियं नाम। यद्घृताचीति। यद्घृताचीत्याह। प्रियेणैवैना नाम्ना सादयति" [ब्रा० का० ३ प्र० ३ अ० ६] इति॥

## एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम्॥

कल्पः—"अथ स्रुचः सन्ना अभिमृशत्येता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमिति" इति।

लोकेऽवश्यंभावि फलं तद्रूपत्वेन भाविते प्रस्तरे स्रुचोऽवस्थिताः। एतदेव दर्शयति—"एता असदन्त्सुकृतस्य लोक इत्याह। सत्यं वै सुकृतस्य लोकः। सत्य एवैनाः सुकृतस्य लोके सादयति। ता विष्णो पाहीत्याह। यज्ञो वै विष्णुः। यज्ञस्य धृत्यै। पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमित्याह। यज्ञाय यजमानायाऽऽत्मने। तेभ्य एवाऽऽशिषमाशास्तेऽनार्त्यै" [ब्रा० का० ३ प्र० ३ अ० ६] इति। धृतिर्यज्ञपुरुषकर्तृकं स्रुचां पोषणम्॥

अत्र विनियोगसंग्रहः—

"कृष्ण इध्मं वेदिर्वेदिं बर्हिर्बर्हिः समुक्षति।
दिवेत्रिभिर्बर्हिषोऽग्रमध्यमूलानि चोक्षति॥ १॥

स्वधा शेषं क्षिपेद्भूमौ विष्णोः प्रस्तरमुन्नयेत् ।
ऊर्णा बर्हिस्तृतिर्गन्धत्रिभिस्त्रीन्परिधीन्क्षिपेत् ॥ २ ॥
सूर्योऽभिमन्त्र्य पूर्वाग्निं वीत्याघारसमित्स्थितिः ।
विशो आधाय विधृती वसू प्रस्तरसादनम् ॥ ३ ॥
जुहूपध्रुभिरासाद्य स्रुच एतास्तु मन्त्रयेत् ।
एकादशानुवाकेऽस्मिन्नीरिता मन्त्रविंशतिः ॥ ४ ॥" इति ।

अथ मीमांसा ।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।
सामानाधिकरण्येन स्यादेकस्यान्यनामता ॥
गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते ।
अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः ॥
अर्थभेदादनामत्वं गुणश्चेत्प्रह्रियेत सः ।
यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः" इति ॥

इदमाम्नायते—"यजमानः प्रस्तरः" इति । तत्र यजमानस्य प्रस्तरशब्दो नामधेयं प्रस्तरस्य वा यजमानशब्दो नामधेयम् । कुतः । उद्भिदा यागेनेत्यादाविव सामानाधिकरण्यादित्येकः पक्षः । गुणविधिरेष इत्यपरः । तथाऽपि यजमानकार्ये जपादौ प्रस्तरस्याचेतनस्य सामर्थ्याभावात्प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य शक्तत्वाद्यजमानरूपो गुणो विधीयते । एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेऽपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भविष्यति न चात्र पूर्वन्यायेन स्तुतिः संभवति । अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात् । "वायुर्वै क्षेपिष्ठा देवता" "ऊर्जोऽवरुद्ध्यै" इत्यादिवत्स्तुतिरिति चेन्न । क्षिप्रत्वादिधर्मवत्कस्यचिदुत्कर्षस्याप्रतीतेः । तस्मान्नामगुणयोरन्यतरत्वमिति प्राप्ते ब्रूमः—गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्न नामत्वं युक्तम् । गुणपक्षे त्वग्नौ प्रहरणस्य प्रस्तरविषयत्वाद्यजमाने प्रहृते सति कर्मलोपः स्यात् । तस्माद्विधेयः प्रस्तरो यजमानशब्देन स्तूयते । यथा सिंहो देवदत्त इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते । एवं "यजमानो वा एककपालः" इत्यादिषु द्रष्टव्यम् ॥

अथ व्याकरणम्—

कृष्णस्य मृगाख्या चेदिति कृष्णशब्दस्याऽऽद्युदात्तः । आखरेष्ठ इत्यत्र प्रातिपदिकस्वरेण वा समासस्वरेण वा कृत्स्वरेण वा कृत्प्रत्ययान्तत्वेन थाथादिस्वरेण वाऽन्तोदात्तत्वम् । वेदिशब्दस्येन्प्रत्ययान्तत्वेन नित्स्वरः । विष्णुशब्दो नुप्रत्ययान्तः । स्तूपशब्दो वृषादिः । ऊर्णाशब्दस्य वृषादित्वादाद्युदात्तत्वे सत्युपमानपूर्वपदप्रकृतिस्वरत्वम् । स्वासस्थमित्यत्र " नञ्सुभ्याम् " [ पा० ६-२-१७२ ] इत्यन्तोदात्तः । विश्वावसुरित्यत्र " बहुव्रीहौ विश्वं संज्ञायाम् " [ पा० ६-२-१०६ ] इति पूर्वपदान्तोदात्तत्वम् । ईपतो यजमानस्येत्युभयत्र लसार्वधातुकस्वरः । मित्रावरुणावित्यत्र देवताद्वंद्वस्वरः । उत्तरत इत्यत्रातसुच्प्रत्ययान्तत्वेन चित्स्वरः । धर्मणेत्यत्र मनिन्प्रत्ययान्तत्वान्नित्स्वरः । सूर्यशब्दे निपातनादाद्युदात्तः । कस्या इत्यत्र सावेकाच इति विभक्तेरुदात्तत्वे प्राप्ते " न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः " [पा० ६-१-१८२] इति प्रथमैकवचने साववर्णान्तत्वेन निषिध्यते । अभिशस्त्या इत्यत्र तादौ चेति गतेः प्रकृतिस्वरः । वीतिहोत्रमित्यत्र " मन्त्रे वृषेषपचमनविद्भूवीरा उदात्तः " [ पा० ३ ३-९६ ] इति वीधातोरुदात्तत्वे क्तिन्प्रत्यये सति बहुव्रीहिस्वरः । घृताचीत्यत्र कृत्स्वरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके द्वादशोऽनुवाकः । )

---

भुवनमसि वि प्रथस्वाग्ने यष्टरिदं नमः । जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया अग्नाविष्णू मा वामव क्रमिषं वि जिहाथां मा मा सं ताप्तं लोकं मे लोककृतौ कृणुतं विष्णोः स्थानमसीत इन्द्रो अकृणोद्वीर्याणि समार-

भ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपं-
तेरिन्द्रावान्त्स्वाहा बृहद्भाः पाहि माऽग्ने दुश्च-
रितादा मा सुचरिते भज मखस्य शिरोऽसि
सं ज्योतिषा ज्योतिरङ्क्ताम् ( १ ) ॥

( अह्रुत एकविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
प्रथमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके द्वादशोऽनुवाकः । )

---

भुवनम् । असि । वीति । प्रथस्व । अग्ने । यष्टः ।
इदम् । नमः । जुहु । एति । इहि । अग्निः । त्वा ।
ह्वयति । देवयज्याया इति देव—यज्यायै । उपभृदि-
त्युप—भृत् । एति । इहि । देवः । त्वा । सविता ।
ह्वयति । देवयज्याया इति देव—यज्यायै । अग्ना-
विष्णू इत्यग्ना—विष्णू । मा । वाम् । अवेति । क्रमि-
षम् । वीति । जिहाथाम् । मा । मा । समिति ।
ताप्तम् । लोकम् । मे । लोककृताविति लोक—
कृतौ । कृणुतम् । विष्णोः । स्थानम् । असि ।
इतः । इन्द्रः । अकृणोत् । वीर्याणि । समारभ्येति
सम्—आरभ्य । ऊर्ध्वः । अध्वरः । दिविस्पृशमिति
दिवि—स्पृशम् । अह्रुतः । यज्ञः । यज्ञपतेरिति

यज्ञ—पतिः। इन्द्रावानितीन्द्र—वान्। स्वाहा। बृहत्। भाः। पाहि। मा। अग्ने। दुश्चरितादिति दुः—चरितात्। एति। मा। सुचरित इति सु—चरिते। भज। मखस्य। शिरः। असि। समिति। ज्योतिषा। ज्योतिः। अङ्क्ताम् (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके द्वादशोऽनुवाकः॥ १२॥

---

(अथ प्रथमकाण्डे प्रथमप्रपाठके द्वादशोऽनुवाकः।)

---

एकादशेऽनुवाक इध्माबर्हिःस्रुचां प्रोक्षणादिकमुक्तम्। तत्राऽऽज्यहविषा पूर्णानां स्रुचां यदासादनमुक्तं तेन पुरोडाशसांनाय्ययोरपि वेद्यामासादनमुपलक्ष्यते। ते मन्त्रास्त्वच्छिद्रकाण्डादौ द्रष्टव्याः। सर्वेषु हविःष्वासादितेष्वग्नावभ्याहितानामिध्मकाष्ठानामुपरि होतुमाघारो द्वादशे विधीयते।

## भुवनमसि वि प्रथस्वाग्ने यष्टरिदं नमः।

कल्पः—"अथाग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति भुवनमसि वि प्रथस्वाग्ने यष्टरिदं नम इति" इति।

जुहूपभृद्भ्यां पूर्वस्मिन्देश आहवनीयं प्रत्यञ्चमञ्जलिः। हे यागनिष्पादकाग्ने त्वं भुवनमसि, भवन्त्यस्माद्भूतानीति भुवनम्। अतो भूतकारणत्वाद्विस्तृतो भव। तुभ्यमिदमञ्जलिरूपं नमोऽस्तु। अस्य मन्त्रस्य द्वितीयाघारशेषत्वादमन्त्रकस्य प्रथमाघारस्य पूर्वमनुष्ठेयत्वात्तं विधित्सुस्ततः पूर्वं होतारं प्रति प्रैषमन्त्रमुत्पादयति—"अग्निना वै होत्रा। देवा असुरानभ्यभवन्। अग्नये समिध्यमानायानुब्रूहीत्याह भ्रातृव्याभिभूत्यै" [ब्रा० का० ३ प्र० ३ अ० ७] इति। हे होतरिध्मकाष्ठैः समिध्यमानस्याग्नेरनुरूपान्मन्त्रान्ब्रूहि। तमिमं प्रैषमध्वर्युर्ब्रूयात्। देवाः पूर्वं स्वकीयेषु यागेषु वह्निं होतारं कृत्वा तन्मुखेनासुरानजयन्। अतोऽद्यापि वैरितिरस्काराय समन्त्रकैः काष्ठैरग्निः प्रज्वलितः कार्यः। संख्याविशिष्टमिध्मं विधत्ते—"एकविंशतिमिध्मदारूणि भवन्ति। एकविंशो वै पुरुषः।

पुरुषस्याऽऽप्त्यै " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविꣳश इत्यन्यत्राऽऽम्नातम् । होत्रा प्र वो वाजा अभिद्यव इत्यादिष्वृक्षु सामिधेनीसंज्ञकास्वनूच्यमानासु काष्ठानामग्नौ प्रक्षेपं विधत्ते—" पञ्चदशेध्मदारूण्यभ्यादधाति । पञ्चदश वा अर्धमासस्य रात्रयः। अर्धमासशः संवत्सर आप्यते " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । कियत्संख्यैरर्धमासैश्चतुर्विंशतिसंख्याकैरित्यर्थः । अवशिष्टानां षण्णां काष्ठानां विनियोगमाह—" त्रीन्परिधीन्परिदधाति । ऊर्ध्वे समिधावादधाति । अनूयाजेभ्यः समिधमतिशिनष्टि । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । गन्धर्वोऽसीत्यादयः परिधिमन्त्राः । वीतिहोत्रमित्यादिरूर्ध्वसमिन्मन्त्रः । ते च पूर्वानुवाकेऽभिहिताः । अग्निप्रज्वलनाय वायूत्पादनं विधत्ते—" वेदेनोपवाजयति । प्राजापत्यो वै वेदः । प्राजापत्यः प्राणः । यजमान आहवनीयः । यजमान एव प्राणं दधाति " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । वेदस्य प्रजापतिश्मश्रुत्वात्प्राजापत्यत्वम् । प्राणवायोः प्रजापतिसृष्टतया प्राजापत्यत्वम् । आहवनीयस्य प्रस्तरन्यायेन यजमानत्वम् । आवृत्तिं विधत्ते—" त्रिरुपवाजयति । त्रयो वै प्राणाः । प्राणानेवास्मिन्दधाति " [ब्रा० का० ३ प्र० ३ अ० ७ ] इति । प्राणोऽपानो व्यानश्चेति प्राणानां त्रित्वम्। अनेकगुणविशिष्टं प्रथमाघारं विधत्ते—"वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिं मुखत आरभते। अथो प्रजापतिः सर्वा देवताः। सर्वा एव देवताः प्रीणाति" [ब्रा० का० ३ प्र० ३ अ० ७] इति। उपयत्य वेदस्योपरि स्रुवमवस्थाप्येत्यर्थः। आहुतीनामादित्वादयमाघारो यज्ञस्य मुखम् । तस्मिन्मुखे यज्ञस्रष्टृत्वेन यज्ञरूपं प्रजापतिमेवाऽऽरब्धवान्भवति । प्रजापतेः सर्वदेवतारूपत्वोपपादनं वाजसनेयिन एवमामनन्ति—" तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं दैवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः " इति। आग्नीध्रं प्रति प्रैषमन्त्रमुत्पादयति—" अग्निमग्नीत्रिस्त्रिः संमृड्ढीत्याह । त्र्यावृद्धि यज्ञः । अथो रक्षसामपहत्यै " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । यैर्दर्भैरिध्मः पूर्वं संनद्धस्तैरग्निज्वालायां संमार्जनमभिनेतव्यम् । हेऽग्नीदिति संबोध्य तत्रासौ प्रेष्यते । त्रिस्त्रिरिति वीप्सा परिधिसंमार्जनापेक्षा । तद्विधत्ते—" परिधीन्त्संमार्ष्टि । पुनात्येवैनान् " [ ब्रा० का० ३ प्र० ३ अ० ७] इति। प्रतिपरिधि त्रिरावृत्तिं विधत्ते—" त्रिस्त्रिः संमार्ष्टि । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय । अथो एते वै देवाश्वाः । देवाश्वानेव तत्संमार्ष्टि । सुवर्गस्य लोकस्य समष्ट्यै " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । देवा-

(आघारार्थो मन्त्राः)

भवत्वेन भाविताः स्वर्गमाप्तये भवन्ति। द्वयोराघारयोः क्रमेण गुणभेदं विधत्ते-"आसीनोऽन्यमाघारमाघारयति। तिष्ठन्नन्यम्। यथाऽनो वा रथं वा युञ्ज्यात्। एवमेव तदध्वर्युर्यज्ञं युनक्ति। सुवर्गस्य लोकस्याभ्यूढ्यै" [ब्रा० का० ३ प्र० ३ अ० ७] इति। शकटस्य प्राथमिकं बलीवर्दयुगमुपर्यासीनेन प्रेर्यते। द्वितीयतृतीयादिकं तु भूमौ स्थितेन। तद्वदाघाररथः स्वर्गलोकमभिलक्ष्य वहनाय भवति। एतदर्थवेदनं प्रशंसति—"वहन्त्येनं ग्राम्याः पशवः। य एवं वेद" [ब्रा० का० ३ प्र० ३ अ० ७] इति। बलीवर्दाश्वादयो ग्राम्याः। तिष्ठन्नन्यमिति विहितस्य द्वितीयाघारस्य संबन्धिषु मन्त्रेषु प्रथमं मन्त्रं व्याचष्टे—"भुवनमसि वि प्रथस्वेत्याह। यज्ञो वै भुवनम्। यज्ञ एव यजमानं प्रजया पशुभिः प्रथयति। अग्ने यष्टरिदं नम इत्याह। अग्निर्वै देवानां यष्टा। य एव देवानां यष्टा। तस्मा एव नमस्करोति" [ब्रा० का० ३ प्र० ३ अ० ७] इति। पूर्वोक्तनिर्वचनेन भूतोत्पत्तिकारणत्वादग्न्यभिन्नो यज्ञो भुवनम्। यष्टा देवपूजकः। अग्निश्च हव्यवहनेन देवान्पूजयति॥

**जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्यायै—**

कल्पः—"अथाऽऽदत्ते दक्षिणेन जुहूं जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया इति सव्येनोपभृतमुपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया इति" इति।

अनयोर्मन्त्रयोरग्निसवितृव्यवस्था युक्तेत्याह—"जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया इत्याह। आग्नेयी वै जुहूः। सावित्र्युपभृत्। ताभ्यामेवैने प्रसूत आदत्ते" [ब्रा० का० ३ प्र० ३ अ० ७] इति। अग्निसवितारौ जुहूपभृतोः स्रुचोरभिमानिदेवते॥

**अग्नाविष्णू मा वामव क्रमिषं वि जिहाथां मा मा सं ताप्तं लोकं मे लोककृतौ कृणुतम्—**

बौधायनः—"अत्याक्रामञ्जपत्यग्नाविष्णू मा वामव क्रमिषं वि जिहाथां मा मा सं ताप्तं लोकं मे लोककृतौ कृणुतमिति" इति।

अत्याक्रमणप्रकार आपस्तम्बेन दर्शितः—"अग्नाविष्णू मा वामव क्रमिषमित्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमवक्रामन्[1]प्रस्तरं दक्षिणेन पदा दक्षिणाऽतिक्रामत्युदक्सव्येन" इति।

---

१ ख. °मनतिक्रा°।

मध्यमपरिधेः पुरतोऽवस्थित आहवनीयोऽग्निस्ततः पश्चात्स्रुचामग्रभागे शास्त्रदृष्ट्याऽवस्थितो यज्ञाभिमानी विष्णुः । हेऽग्नाविष्णू आघारहोमार्थं युवयोर्मध्ये गच्छन्नप्यहं पादेन युवां माऽवक्रमिषं मम गमनावकाशाय युवां वियुक्तौ भवतम् । मां प्रति संतापं मा कुरुतम् । किं च स्थानकारणौ[1] युवां मम गमनस्थानं कुरुतम् । यथोक्तमर्थं दर्शयति—" अग्नाविष्णू मा वामव क्रमिषमित्याह । अग्निः पुरस्तात् । विष्णुर्यज्ञः पश्चात् । ताभ्यामेव प्रतिप्रोच्यात्याक्रामति । वि जिहाथां मा मा सं ताप्तमित्याहाहिꣳसायै । लोकं मे लोककृतौ कृणुतमित्याह । आशिषमेवैतामाशास्ते "[ ब्रा० का० ३ प्र० ३ अ० ७ ] इति ॥

## विष्णोः स्थानमसि—

बौधायनः—" स्थानं कल्पयति विष्णोः स्थानमसीति " इति ।

आपस्तम्बः—" विष्णोः स्थानमसीत्यवतिष्ठतेऽन्तर्वेदि दक्षिणः पादो भवत्यवघ्रः सव्योऽर्ध्वस्तिष्ठन्दक्षिणं परिधिसंधिमन्ववहृत्य " इति ।

हे भूप्रदेश त्वं यज्ञपुरुषस्य स्थानमसि । यज्ञपुरुषप्रयुक्तमतिशयं दर्शयति—" विष्णोः स्थानमसीत्याह । यज्ञो वै विष्णुः । एतत्खलु वै देवानामपराजितमायतनम् । यद्यज्ञः । देवानामेवापराजित आयतने तिष्ठति " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । देवयजनभूव्यतिरिक्तभूमेरसुराधीनतया तत्र देवानां पराजयेऽपि यज्ञप्रदेशोऽपराजितः ॥

## इत इन्द्रो अकृणोद्वीर्याणि समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहा—

बौधायनः—" अन्वारब्धे यजमाने मध्यमे परिधौ संस्पृशन्नृजुस्तिष्ठन्नृजु[माघार]माघारयति संततं प्राञ्चमव्यवच्छिन्दन्नित इन्द्रो अकृणोद्वीर्याणि समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहेति " इति ।

आपस्तम्बः—"समारभ्योर्ध्वो अध्वर इति प्राञ्चमुदञ्चमृजुꣳ संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि सꣳस्पर्शयति " इति ।

अस्य मत इत इन्द्र इति वाक्यं पूर्वमन्त्रशेषः । इतो देवयजनस्थानबलादिन्द्रोऽसुरवधरूपाणि वीर्याण्यकरोत् । यज्ञपतेर्यजमानस्य यज्ञ आघारः स्वाहा देवतायै दत्तः । कीदृशो यज्ञः । इन्द्रदेवताकत्वेनेन्द्रवान्नैर्ऋतीं राक्षसीं दिशं

१ ख. °कारिणौ । २ ग. °व्योऽथोर्ध्व° ।

(आघारार्था मन्त्राः)

समारभ्योर्ध्वो दीर्घोऽध्वरो हिंसारूपेण विच्छेदेन रहित ऐशानीं दैविकीं दिशं स्पृशति। अह्रुतोऽकुटिलः। इन्द्रशब्दसूचितं दर्शयति—"इत इन्द्रो अकृणोद्वीर्याणीत्याह। इन्द्रियमेव यजमाने दधाति" [ब्रा० का० ३ प्र० ३ अ० ७] इति। ऊर्ध्वशब्देन वृद्धिः सूचितेत्याह—"समारभ्योर्ध्वो अध्वरो दिविस्पृशमित्याह वृद्ध्यै" [ब्रा० का० ३ प्र० ३ अ० ७] इति[1]। समारभ्येतिपदसूचितं दर्शयति—"आघारमाघार्यमाणमनु समारभ्य। एतस्मिन्काले देवाः सुवर्गं लोकमायन्। साक्षादेव यजमानः सुवर्गं लोकमेति। अथो समृद्धेनैव यज्ञेन यजमानः सुवर्गं लोकमेति" [ब्रा० का० ३ प्र० ३ अ० ७] इति। देवाः स्वयं यागं कुर्वन्तोऽध्वर्युमनु तमाघारं स्पृष्ट्वा विलम्बमन्तरेण स्वर्गं गताः। साक्षादेवाविलम्बेनैव। किं च सम्यगारभ्येत्यनेन समृद्धिः सूचिता। अह्रुतशब्दार्थं दर्शयति—"अह्रुतो यज्ञो यज्ञपतेरित्याहानार्त्यै" [ब्रा० का० ३ प्र० ३ अ० ७] इति। इन्द्रशब्दार्थमाह—इन्द्रावान्त्स्वाहेत्याह। इन्द्रियमेव यजमाने दधाति" [ब्रा० का० ३ प्र० ३ अ० ७] इति॥

## बृहद्भाः—

कल्पः—"बृहद्भा इति स्रुचमुद्गृह्णाति" इति।

अनेनाऽऽघारेण ज्वालारूपं यथा बृहद्भवति तथाऽयमग्निर्भासते। ततो जुहूमां दद्यतामित्युद्गृह्णाति। अधिकभासनेन स्वर्गः स्मार्यत इत्याह—"बृहद्भा इत्याह। सुवर्गो वै लोको बृहद्भाः। सुवर्गस्य लोकस्य समष्ट्यै" [ब्रा० का० ३ प्र० ३ अ० ७] इति॥

## पाहि माऽग्ने दुश्चरितादा मा सुचरिते भज—

कल्पः—"अथासꣳस्पर्शयन्स्रुचावुदङ्ङत्याक्रामञ्जपति पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेति" इति।

भज स्थापय। जुहूपभृतोः परस्परमसꣳस्पर्शयन्नविशिष्टं प्रतिनिवृत्याऽऽगमनं विधत्ते—"यजमानदेवत्या वै जुहूः। भ्रातृव्यदेवत्योपभृत्। प्राण आघारः। यत्सꣳस्पर्शयेत्। भ्रातृव्येऽस्य प्राणं दध्यात्। असꣳस्पर्शयन्नत्याक्रामति। यजमान एव प्राणं दधाति" [ब्रा० का० ३ प्र० ३ अ० ७] इति। यजमानव्यागे प्रत्यासन्नत्वाज्जुहूर्यजमान इति मन्यते। औपभृतस्याऽऽज्यस्य जुहूद्वारा होम इति व्यवहितत्वमुपभृतः। ततो भ्रातृव्यो देवता। अर्थवादा-

१ क. ग. ङ. च. 'ति। सुवर्गप'।

न्तरे वा एतदेव द्रष्टव्यम् । मन्त्रस्य पदार्थवाक्यार्थौ दर्शयति—" पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेत्याह । अग्निर्वाव पवित्रम् । वृजिनमनृतं दुश्चरितम् । ऋजुकर्मꣳ सत्यꣳ सुचरितम् । अग्निरेवैनं वृजिनादनृताद्दुश्चरितात्पाति । ऋजुकर्मे सत्ये सुचरिते भजति । तस्मादेवमाशास्ते । आत्मनो गोपीथाय" [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । कायिकं निषिद्धाचरणं वृजिनं, विहिताचरणमृजुकर्म, वाचिके सत्यानृते ॥

## मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम् ॥

कल्पः—" जुह्वा ध्रुवां समनक्ति मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामिति त्रिः " इति ।

हे आघारशेष त्वं यज्ञस्य शिरोवदुत्तममङ्गमसि । अतस्त्वद्रूपेण ज्योतिषा ध्रौवाज्यरूपं ज्योतिः समङ्क्तां संयुज्यताम् । समञ्जनं विधत्ते—" शिरो वा एतद्यज्ञस्य । यदाघारः । आत्मा ध्रुवा । आघारमाघार्य ध्रुवाꣳ समनक्ति । आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । गलाधस्तनो देह आत्मा । पूर्वपक्षत्वेन द्विरावृत्तिं विधत्ते—" द्विः समनक्ति । द्वौ हि प्राणापानौ " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । सिद्धान्तमाह—" तदाहुः । त्रिरेव समञ्ज्यात् । त्रिधातु हि शिर इति । शिर इवैतद्यज्ञस्य । अथो त्रयो वै प्राणाः । प्राणानेवास्मिन्दधाति " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । त्वगसृगस्थिरूपा विस्पष्टास्त्रयो धातवो यस्य तत्त्रिधातु । मन्त्रगतज्योतिःशब्दविवक्षां दर्शयति—" मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामित्याह । ज्योतिरेवास्मा उपरिष्टाद्दधाति । सुवर्गस्य लोकस्यानुख्यात्यै " [ ब्रा० का० ३ प्र० ३ अ० ७ ] इति । अस्य ध्रौवाज्यशेषस्योपरि स्थापितेनाऽऽघारशेषाज्येनात्युज्ज्वलसत्प्रदीपेनैव स्वर्गलोकः प्रकाशितो भवति ॥

अत्र विनियोगसंग्रहः—

" ध्रुवाग्नेरञ्जलिं कृत्वा जूपद्भ्यां तयोर्ग्रहः ।
अग्रा दक्षिणदिग्गामी विष्णोः स्थित्वा समाहृतिः[1] ॥ १ ॥
बृहद्भाः स्रुचमुद्गृह्य पाहि प्रतिनिवर्तते ।
मख ध्रुवामनक्ति त्रिर्नव मन्त्रा इहेरिताः ॥ २ ॥ " इति ।

अथ मीमांसा—

अग्ने यष्टरिदं नमः, अग्निर्वै देवानां यष्टेत्यनयोर्मन्त्रब्राह्मणयोरग्निर्देवताया

[1] क. ङ. च. समाहुतिः ।

यागाधिकारः प्रतीयते तदयुक्तं नवमाध्यायप्रथमपादोक्तदेवताधिकरणविरोधप्रसङ्गात्।

तत्र ह्येवं चिन्तितम्—

" देवः प्रयोजकोऽपूर्वं वाऽऽद्योऽस्य फलदत्वतः।
न विधेये गुणो ह्येषोऽपूर्वस्य फलितोचिता " इति॥

" आग्नेयोऽष्टाकपालः " इत्यादिषु सर्वेषु कर्मसु मन्त्रतन्त्ररूपाणामनुष्ठेयानामङ्गानामग्न्यादिर्देवः प्रयोजकः। कुतः। यागेन पूजिताया देवतायाः फलप्रदत्वात्। संभवति च फलप्रदत्वं मन्त्रार्थवादादिभ्यो विग्रहादिपञ्चकावगमात्। विग्रहो हविःस्वीकारस्तद्भोजनं तृप्तिः प्रसादश्चेत्येतच्चेतनस्योचितं पञ्चकम्। सहस्राक्षो गोत्रभिद्वज्रबाहुरिति विग्रहः। अग्निरिदꣳहविरजुषतेति हविःस्वीकारः। अद्धीदिन्द्र प्रस्थितेमा हवीꣳषीति हविर्भोजनम्। तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति तृप्तिप्रसादौ। ततः सेवितराजादिवत्पूजितदेवतायाः फलप्रदत्वेन प्राधान्यात्सैवाङ्गानां प्रयोजिकेति प्राप्ते ब्रूमः—किं देवतायाः फलप्रदत्वलक्षणं प्राधान्यं शब्दादापाद्यते वस्तुसामर्थ्याद्वा। नाऽऽद्यः। स्वर्गकामो यजेतेति शब्दे विधेयस्य यागस्यैव फलप्रदत्वावगमात्। द्रव्यदेवते तु सिद्धत्वेन विध्यनर्हे। तत्र यथा द्रव्यस्य विधेयं प्रति गुणभावस्तथा देवताया अपि। यदि यागस्य कालान्तरभाविफलं प्रति व्यवहितत्वं तर्हि तत्साधनभूता देवता ततोऽपि व्यवहिता। का तर्हि फलस्य गतिः। अपूर्वमिति वदामः। तच्च श्रुत्या श्रुतार्थापत्त्या वा प्रतीयमानत्वाच्छाब्दमिति तस्य फलप्रदत्वमुचितम्। नापि वस्तुसामर्थ्याद्देवस्य फलप्रदत्वं विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात्। अन्यथा वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहेत्यादिमन्त्रेष्वपि देवत्वं विग्रहादियुक्तं कल्प्येत। तच्च प्रत्यक्षविरुद्धम्। अतो न राजादिवत्फलप्रदत्वम्। किं च विग्रहादिमद्देवतावाद्यपि न विना कर्मणा फलमभ्युपगच्छति। ततः प्राप्ताप्राप्तविवेकेनोभयवादिसिद्धस्य यागस्यैव फलप्रदत्वमस्तु। किं च मातापितृगुर्वादिशुश्रूषाया देवतां विनैव फलप्रदत्वमुभयवादिसिद्धम्। तस्मात्फलप्रदमपूर्वमेवाङ्गानुष्ठाने प्रयोजकम्। देवस्य प्रयोजकत्वे सत्याग्नेययाग उपदिष्टानि प्रयाजाद्यङ्गानि सौर्यादियागेष्वग्न्यभावादनूह्यानि। अपूर्वस्य प्रयोजकत्वे तत्सत्त्वादूह्यानीति विशेषः। तदिदं देवताधिकरणमग्न्यादिदेवानां कर्माधिकारे विरुध्यते। अत एव वैयासिकदेवताधिकरणसूत्रेषु जैमिनिपक्ष एवमुपन्यस्तः—" मध्वादिष्वसंभवादनधिकारं जैमिनिः " [ ब्र० सू० १-३-३१ ] इति। अस्यायमर्थः—

अस्ति हि काचन मधुविद्या छन्दोगैराम्नातत्वात् । तस्यामादित्यो मधुत्वेन ध्यातव्यः । वसवो रुद्रा आदित्या मरुतः साध्याश्चेत्येते देवगणाः परित उपविश्य तन्मधूपजीवन्ति । ईदृशेनोपासनेन वस्वादिमहिमानं प्राप्नुवन्तीति श्रूयते । तस्यां विद्यायां मनुष्याणामधिकारः संभवति । वस्वादिदेवतास्तु कानन्यान्वस्वादीनुपासीरन्कं चान्यं वस्वादिमहिमानं प्राप्नुयुः । आदित्यश्च कमन्यमादित्यं मधुत्वेनोपासीत । तस्माद्देवानामनधिकारं जैमिनिर्मन्यत इति । तर्हि विद्यान्तरेऽधिकारोऽस्त्वित्याशङ्क्योत्तरमेवं सूत्रितम्—" ज्योतिषि भावाच्च " [ ब्र० सू० १-३-३२ ] इति । न खल्वादित्यो नाम कश्चिच्चेतनो विग्रहवान्देवोऽस्ति । किं त्वस्मिन्दृश्यमाने ज्योतिर्मण्डले भवत्यादित्यशब्दप्रयोगः । एवमङ्गारेष्वग्निशब्दः । यदि विग्रहवती देवता स्यात्तदानीमृत्विगादिवत्कर्मण्युपलभ्येत । किं चैकस्य यजमानस्य यागे हविः स्वीकर्तुं गत्वा तदानीमेवान्येषां यागेषु गन्तुं न शक्नुयात् । अत एवाऽऽम्नायते—" कस्य वा ह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानाम् " इति । किं च विग्रहवत्सु देवेषु मृतेषु वैदिकानामग्नीन्द्रादिशब्दानामभिधेयाभावाद्वेदस्याप्रामाण्यं प्रसज्येत । तस्मान्मृगतृष्णादिवाक्येष्विव सहस्राक्षो गोत्रभिदित्यादिवाक्येषु कश्चिद्विकल्पप्रत्ययो जायते । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति तल्लक्षणम् ।

" मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः ।
एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः " ॥

इत्यत्र विनैव बाह्यवस्तुना यथा कश्चिदाकारविशेषो मनसि प्रतिभासते तथैव देवतावाक्येषु । तस्मादग्निर्वै देवानां यष्टेतिवाक्यबलाद्देवानां यागाधिकारो वक्तुं न शक्यः । अत्रोच्यते—देवानामधिकाराभावः कुत इति वक्तव्यम् । देहाद्यभावाद्वा सत्यपि देहादावर्थित्वसामर्थ्यविद्यारूपाणामधिकारहेतूनामभावाद्वा सत्स्वपि तेषु शास्त्रेण निषिद्धत्वाद्वा । प्रथमपक्षेऽपि देहाद्यभावः कुत इति वाच्यम् । प्रमाणाभावाद्वा बाधकसद्भावाद्वा । नाऽऽद्यो मन्त्रार्थवादेतिहासपुराणयोगिप्रत्यक्षलोकप्रसिद्धीनां तत्प्रमाणत्वात् । "देवो वः सविता प्रार्पयतु" "रुद्रस्य हेतिः परि वो वृणक्तु" इत्यादयश्चेतनोचितव्यवहाराभिधायिनो बहवो मन्त्राः पूर्वमुदाहृताः । "अग्ने यष्टरिदं नमः" "इत इन्द्रो अकृणोद्वीर्याणि" इत्यादय उदाह्रियन्ते । "अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम्" "अग्ने त्वꣳ सु जागृहि" इत्यादय उदाहरिष्यन्ते । तं गायत्र्याहरत् । पुरुषं वै देवाः पशुमालभन्त । देवासुराः संयत्ता आसन्नित्यादयोऽर्थवादाः । इतिहासो

भारतादिः। पुराणं ब्राह्मपाद्मवैष्णवादि। योगिप्रत्यक्षं योगशास्त्रे "मूर्धज्योतिषि सिद्धदर्शनम्" इत्यादिसूत्रेषु प्रसिद्धम्। लोकप्रसिद्धिश्च चित्रकारादितत्तन्मूर्ति-लेखनादिभिर्द्रष्टव्या। नापि द्वितीयो बाधकस्यानुपलम्भात्। वनस्पतितन्मूलादीनामपि विग्रहादिमत्त्वप्रसङ्गो बाधक इति चेन्न। तस्येष्टत्वात्। प्रत्यक्ष-विरोध इति चेन्न। स्थावररूपस्य प्रत्यक्षत्वेऽपि तदभिमानिदेवतानामप्रत्यक्ष-त्वात्। सन्ति हि सर्वेषु वस्तुष्वभिमानिदेवताः। अत एव श्रूयते—"अन्त-रिक्षदेवत्याः खलु वै पशवः। यजमानदेवत्या वै जुहूः। भ्रातृव्यदेवत्योप-भृत्" इति। नात्र दृश्यमाना अन्तरिक्षयजमानभ्रातृव्या विवक्षिताः किं तु तदभिमानिदेवताः। एवं च सत्यभिमानिनीभिः सहाभेदविवक्षया "वायवः स्थोपायवः स्थ" "जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति" इत्यादीनि चेतनोचितानि संबोधनान्युपपद्यन्ते। किंनि-मित्तोऽयं देवताभिव्यक्त्यभिनिवेश इति चेत्। तव किंनिमित्तोऽयं देवताप्रद्वेषा-भिनिवेशः। ज्योतिषि भावाच्चेति जैमिनिमतस्य सूत्रितत्वादिति चेत्। किं बादरायणस्य मतं न पश्यसि। स ह्येवं सूत्रयामास—"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" [ब्र० सू० २-१-५] इति। अस्यायमर्थः—वाक्च-क्षुरादीन्द्रियाणां परस्परकलहश्रुतिषु "मृदब्रवीत्" "आपोऽब्रुवन्" इत्या-दिश्रुतिषु चाभिमानिदेवता व्यपदिश्यन्ते। इन्द्रियसंवादवाक्यस्याऽऽदावे-वाऽऽहैता देवता इति देवताशब्देन विशेषितत्वात्। अन्यत्र च "अग्निर्वा-ग्भूत्वा मुखं प्राविशत्। वायुः प्राणो भूत्वा नासिके प्राविशत्। आदित्यश्चक्षुर्भू-त्वाऽक्षिणी प्राविशत्" इत्यादिना सर्वेष्वेवेन्द्रियेषु देवतानुगतिश्रवणादिति। बाधकान्तरं तु बादरायण एवाऽऽशङ्क्य निराचष्टे। तदीयं सूत्रमेतत्—"विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" [ब्र० सू० १-३-२७] इति। ऋत्विग्दृष्टान्तेन यः कर्मणि विरोधः सोऽपि नास्त्येकस्य युगपद्बहुगृह-भोजनासंभवेऽपि बहुकर्तृकनमस्कारस्वीकारः संभवतीत्यनेकप्रकारदर्शनात्। इह च यागस्योद्देशत्यागात्मकत्वान्नमस्कारन्यायेन बहवो यजमाना युगपदेकां देवतामुद्दिश्य हवींषि त्यजेयुः। अथ वा देवतानां योगसामर्थ्याद्युगपदनेकश-रीरप्राप्तिः श्रुतिस्मृत्योर्दृश्यते। तैश्च शरीरैर्युगपद्बहुषु यागेषु युगपद्गच्छेयुः। न चानुभवविरोधस्तासामन्तर्धानादिशक्तिमत्त्वेनायोग्यानुपलब्धेः। नापि विग्रह-वतीषु देवव्यक्तिषु मृतासु वैदिकशब्दस्यार्थाभावो जातेरेव शब्दार्थत्वात्। अतो वनस्पतिमूलजुहूपभृदाद्यचेतनद्रव्येषु सर्वेष्वभिमानिनीनां विग्रहवतीनां चेतनानां देवतानामभ्युपगमेऽपि न बाधः कश्चित्। मृगतृष्णिकाखपुष्पादि-ष्वपि वनस्पत्यादिष्विव देवताभ्युपगमः प्रसज्येतेति चेन्न। यदा मृगतृष्णायै

स्वाहा खपुष्पाय स्वाहेति वेदवाक्यं दर्शयिष्यसि तदाऽभ्युपगमिष्यामः । अतः प्रमाणसद्भावाद्बाधकाभावाच्च सन्त्येव देवतानां विग्रहादयः । नाप्य-र्थित्वाद्यधिकारकारणाभावादिति द्वितीयः पक्षो युक्तः । आदित्यवस्वादीनां स्वस्वपदस्य प्राप्तत्वेन तत्प्राप्तिहेतावुपासने यागे वाऽर्थित्वाभावेऽपि फलान्तर-हेतौ तत्संभवात् । सत्यसंकल्पानां तेषां संकल्पादेव फलसिद्धौ न यागादि-प्रवृत्तिरिति चेन्न । संकल्प इव यागादावपि प्रयासबुद्ध्यभावेन प्रवृत्तिसंभ-वात् । श्रूयन्ते हि बहुशो वेदवाक्यानि—“ अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत । ता अग्निष्टोमेनैव पर्यगृह्णात् ” इति । “ बृहस्पतिरकामयत । श्रन्मे देवा दधीरन् । गच्छेयं पुरोधामिति । स एवं चतुर्विंशतिरात्रमपश्यत् । तमा-हरत् । तेनायजत । ततो वै तस्मै श्रद्देवा अदधतागच्छत्पुरोधाम्” इति । इदानीं मनुष्य एव सत्रे भाविसंज्ञया प्रजापतिबृहस्पत्यादिशब्दैरुच्यत इति चेत् । अस्त्वेवं[1] नक्षत्रेष्टौ । तत्र हि यजमानो देवता चेत्युभयमेकेनैव शब्देन व्यवहृतम्—“अग्निर्वा अकामयत । अन्नादो देवानाꣳ स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडा-शमष्टाकपालं निरवपत्” इति । इह तु बाधकाभावान्मुख्या[2] एव प्रजापतिबृहस्पत्या-दयः । अन्यथा वसिष्ठविशेषणं[3] विरुध्येतं[4] । तच्चैवमाम्नायते—“वसिष्ठो हतपुत्रोऽ-कामयत विन्देय प्रजाम्” इति । तस्मादर्थिनो देवा यागादिषु प्रवर्तेरन् । सामर्थ्य-मपि धनवैत्त्वं तेषामस्त्येव । उपनयनपूर्वकाध्ययनाभावेऽपि स्वयंभातत्वाद्वेदा-नामस्त्येव विद्या । निषेधं च न पश्यामस्तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इतिवद्देवा अनवक्लृप्ता इत्यश्रवणात् । प्रत्युत “देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत” इति बहुशः श्रुतम् । आघारब्राह्मणेऽपि श्रूयते—“ देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमाघारयत्ततो वै देवा यज्ञमन्वपश्यन्” इति । “ असुरेषु वै यज्ञ आसीत्तं देवास्तूष्णीꣳ होमेनावृञ्जत” इति । सर्वोऽ-प्ययमर्थवाद इति चेद्बाढम् । न खलु वयमप्येतमनर्थवादं ब्रूमः । महातात्पर्येण विधिं प्रशंसतोऽवान्तरतात्पर्येण स्वार्थेऽपि प्रामाण्याद्भूतार्थवादत्वे का तत्र हानिः । यदा प्रजापतिरमन्त्रकं प्रथममाघारं प्राजापत्यमनुतिष्ठति तदा कमन्यं प्रजापतिं मनसा ध्यायेदिति चेत्पूर्वकल्पेऽतीतं ब्रह्माण्डान्तरे वर्तमानं वा ध्यायतु । यथा देवदत्तः स्वयमन्यस्य पिताऽपि सन्विद्याधनादिभिः स्वपित्रा समानोऽपि सन्स्वपितरं नमस्करोति । यथा वा ब्राह्मणकर्तृके श्राद्धे ब्राह्म-णान्तरं भोज्यते तद्वत् । यदि तत्र स्वसमानस्य पितुर्ब्राह्मणान्तरस्य च पूजया तुष्टः परमेश्वरः फलं दद्यात्तर्हि स किमस्य प्रजापतेः फलदाने विस्मरिष्यति

१ ख. अस्त्येवं । २ क. बाधाभा° । ३ क. °त । वसि° । ४ क. °वरुध्ये तें° ।

निद्रास्यति वा। "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यत्रापीन्द्रविग्रहेऽवस्थितोऽन्तर्याम्येव फलस्य दाता। अत एव बादरायणः—"फलमत उपपत्तेः" [ब्र० सू० ३-२-३८] इति सूत्रयामास। ईश्वरस्य फलदातृत्वेऽपि नापूर्ववैयर्थ्यं फलविशेषे तत्तारतम्ये चापूर्वस्यैव नियामकत्वात्। जैमिनिश्चापूर्वाङ्गीकारेण परितुष्टो न देवतां द्वेष्टि। तावतैव स्वापेक्षितोहाध्यायस्याऽऽरम्भसिद्धेः। न च प्रजापतिकर्तृके याग ऋत्विजामभावः। देवतान्तराणामृत्विक्त्वात्। नन्वार्त्विज्यं विप्रस्यैव। तथा च द्वादशाध्यायस्यावसाने चिन्तितम्—

"आर्त्विज्यं किं त्रिवर्णस्थं विप्रगाम्येव वाऽग्रिमः।
विद्यावत्त्वान्न तद्युक्तं ब्राह्मणस्यैव तत्स्मृतेः" इति।

"प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा" इति स्मृतिः। नायं दोषः। तत्र क्षत्रियवैश्ययोरार्त्विज्यं नास्तीत्येतावदेव विवक्षितं न तु देवानां तन्निवार्यते मन्त्रब्राह्मणयोस्तदवगमनात्। "पृथिवी होता। द्यौरध्वर्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता। अग्निर्होता। अश्विनाऽध्वर्यू। त्वष्टाऽग्नीत्। मित्र उपवक्ता" इति मन्त्राः। "अश्विनौ हि देवानामध्वर्यू आस्ताम्" इति ब्राह्मणम्। त्रैवर्णिकानामेव वसन्तादिकालेष्वाधानविधानाद्देवानां वर्णाश्रमाभावान्नास्त्याधानमिति चेन्न। तद्विधानस्य मनुष्यविषयत्वात्। वर्णाश्रमप्रयुक्ता विधयो मनुष्याणामेव सन्ति। देवास्तु न वर्णाश्रमधर्ममनुतिष्ठन्ति। किं तु काम्यकर्मण्याधानमपि देवानामाम्नातम्—"प्रजापती रोहिण्यामग्निमसृजत। तं देवा रोहिण्यामादधत। तं पूषाऽऽधत्त। तं त्वष्टाऽऽधत्त। तं मनुराधत्त। तं धाताऽऽधत्त" इति। तदेवं देवानां यागाधिकारे विघ्नाभावात् "अग्निर्वै देवानां यष्टा" इत्येतदिह सुस्थितम्। सर्वत्र च मन्त्रब्राह्मणेतिहासपुराणादिवादाः सुतरामुज्जीविताः।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू।
विधेयौ गुणसंस्कारावाहोस्वित्कर्मनामनी॥
अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः।
गुणो विधेयो नामत्वे रूपं न स्यात्क्षरद्घृते॥
संस्क्रियाऽऽघारमाघारयतीत्युक्ता द्वितीयया।
आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी॥
अग्निर्ज्योतिरिति प्रोक्तो मन्त्रादेवस्तथा घृतम्।
चतुर्गृहीतवाक्योक्तं द्वितीयायास्त्वियं गतिः॥

१ क. ग. °न्नास्त्यपूर्वमाधा°।

नासाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा।
साध्यतां वक्ति संस्कारो नैवाऽऽशङ्क्यः क्रियात्वतः" इति॥

"अग्निहोत्रं जुहोति" इत्यत्राग्निहोत्रशब्दस्य कर्मनामत्वे द्रव्यदेवतयोरभावा-द्यागस्य स्वरूपमेव न सिध्येत्। ततोऽग्निदेवतारूपो गुणोऽनेन दर्विहोमे विधीयते। आघारशब्दश्च "घृ क्षरणदीप्त्योः" इत्यस्माद्धातोरुत्पन्नः क्षरद्घृतमाचष्टे। तस्मिंश्च घृते द्वितीयाविभक्त्या संस्कार्यत्वं प्रतीयते। तच्च संस्कृतं घृतमुपांशु-यागे द्रव्यं भवति। तस्मादग्निहोत्राघारशब्दौ गुणसंस्कारयोर्विधायकाविति प्राप्ते ब्रूमः—अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति। सूर्यो ज्योति-र्ज्योतिः सूर्यः स्वाहेति प्रातरिति विहितेन मन्त्रेण प्राप्तत्वाद्देवता न विधेया। ततोऽग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेनानुष्ठेयस्य कर्मणोऽग्निहोत्र-मिति यौगिकं नामधेयम्। योगश्च बहुव्रीहिणा दर्शितः। चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्येत्याज्यद्रव्यस्य प्राप्ततया क्षरद्घृतसंस्कारस्याविधे-यत्वादाघारशब्दोऽपि यौगिकं कर्मनामधेयम्। यस्मिन्कर्मणि नैर्ऋतीं दिश-मारभ्यैशानीं दिशमवधिं कृत्वा संतत्या घृतं क्षार्यते तस्य कर्मण एतन्नाम। ननु नामत्वे सति "उद्भिदा यजेत" "ज्योतिष्टोमेन यजेत" इत्यादाविव धात्वर्थेन करणेन सामानाधिकरण्यायाग्निहोत्रेण जुहोत्याघारेणाऽऽघारयतीति तृतीयया भवितव्यम्। नैष दोषः। अनुष्ठानादूर्ध्वं धात्वर्थस्य सिद्धत्वाकारेण करण-त्वेऽपि ततः पूर्वं साध्यत्वाकारं वक्तुमग्निहोत्रमाघारमिति द्वितीयाया युक्तत्वात्। न चात्र द्वितीयानुसारेण व्रीहीन्प्रोक्षतीत्यादाविव संस्कारः शङ्कनीयः। व्रीहि-शब्दवदग्निहोत्राघारशब्दयोः प्रसिद्धद्रव्यवाचकत्वाभावेन क्रियावाचित्वाभ्यु-पगमात्। तस्मादग्निहोत्राघारशब्दौ दर्विहोमोपांशुयागयोर्गुणसंस्कारविधायिनौ न भवतः किं तु कर्मान्तरयोर्नामनी।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" अग्निहोत्राघारवाक्यमनुवादोऽथ वा विधिः।
अरूपत्वात्तु दध्यादिवाक्येनोक्तमनूद्यते॥
गुण्यसिद्धौ न दध्यादिर्गुणो दुष्टा विशिष्टता।
रूपं दध्यादिमन्त्राभ्यामतोऽसौ गुणिनो विधिः" इति॥

इदमाम्नायते—"अग्निहोत्रं जुहोति" इति, "दध्ना जुहोति" इति, "पयसा जुहोति" इति [च]। इदमपरमाम्नायते—"आघारमाघारयति" इति, "ऊर्ध्व-

१ क. ग. 'लयोः क्रमेणानु'।

माघारयति" इति, "ऋजुमाघारयति" इति च। तत्राग्निहोत्रवाक्यं दध्यादिवाक्यविहितस्य कर्मसमुदायस्यानुवादः। आघारवाक्यं तूर्ध्वादिवाक्यविहितस्य तस्येति। न त्वेतद्वाक्यद्वयं कर्मविधायकम्। कुतः। द्रव्यदेवतालक्षणस्य यागरूपस्याभावादिति चेत्तत्र वक्तव्यम्। किं दध्यादिवाक्येन गुणमात्रं विधीयते किं वा गुणविशिष्टं कर्म। नाऽऽद्यः। अग्निहोत्रादिवाक्यस्य त्वन्मते कर्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धौ गुण्यनुवादपुरःसरस्य गुणमात्रविधानस्यासंभवात्। द्वितीये विधिगौरवं स्यात्। तच्च सत्यां गतावयुक्तम्। अतोऽग्निहोत्रादिवाक्यं कर्मविधायकम्। तत्र द्रव्यं दध्यादिवाक्यैर्लभ्यते देवता तु मान्त्रवर्णिकी। आघारेऽप्येवं द्रव्यदेवते उन्नेतव्ये।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

"हिरण्यगर्भ आघारे पूर्वस्मिन्नुत्तरेऽथ वा।
लिङ्गादाद्ये समं लिङ्गं कॢप्तकार्यत्वतोऽन्तिमे" इति॥

वायव्यपशौ "हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति" इति श्रुतो मन्त्रः पूर्वस्मिन्नाघारे स्यात्। कुतो मन्त्रलिङ्गात्। प्रकृतौ प्राजापत्यः पूर्व आघारः। अस्मिन्नपि मन्त्रे हिरण्यगर्भशब्देन प्रजापतिरभिधीयते। "प्रजापतिर्वै हिरण्यगर्भः" इति वाक्यशेषादिति प्राप्ते ब्रूमः—अन्तिम आघारेऽयं मन्त्रः कॢप्तकार्यत्वात्। प्रकृतावमन्त्रकः प्रथम आघारः प्रजापतिं मनसा ध्यायन्नाघारयतीति ध्यानमात्रस्याभिधानात्। तूष्णीमाघारयतीत्यमन्त्रत्वं साक्षादेव श्रुतम्। द्वितीये त्वाघार ऊर्ध्वो अध्वर इत्यादैन्द्रो मन्त्रो विहितः। अतो मन्त्रकार्यं तत्र कॢप्तम्। तस्माद्द्वितीयाघारे हिरण्यगर्भमन्त्रविधिः। यत्तु प्रजापतिदेवतालिङ्गं तदिन्द्रेऽपि समानम्। इन्द्रोऽपि हि प्रजानां पतिः। तस्मादूर्ध्वो अध्वर इति मन्त्रं बाधित्वा हिरण्यादिमन्त्रस्तत्र विधीयते।

तृतीयाध्यायस्याष्टमे पादे चिन्तितम्—

"मा मा सं ताप्तमित्येतत्कस्मिन्स्यादिति पूर्ववत्।
अध्वर्यावस्तु तत्त्वेन स्वामिकर्मोपयोगतः" इति॥

मा मेतिमन्त्रोक्तं संतापाभावरूपं फलं यजमाने स्यादध्वर्यौ वेति संदेहः। पूर्वाधिकरणे ममाग्ने वर्च इत्यध्वर्युणा पठ्यमानेऽपि मन्त्रे ममेति शब्दोऽध्वर्युगामिनं यजमानं लक्षयति। स्वर्गकामो यजेतेत्यात्मनेपदेन साङ्गयागफलस्य स्वर्गस्य यजमानगामिताया अवगमात्। ततो यथा वर्चो यजमाने भवति तथा

१ ख. °घारे समारभ्योर्ध्वोऽ°। २ ख. °स्मिन्स्वामिनि पू°।

संतापाभावोऽपि यजमानगामीति प्राप्ते ब्रूमः—अध्वर्यावसंतप्ते सत्यविघ्नेन स्वामिनः कर्म समाप्यते । तस्मादध्वर्युगतोऽपि संतापाभावो यजमानस्यैव फलमिति नात्र पूर्ववदस्योपचारः ॥

अथ व्याकरणम्—

भुवनशब्दो नियतनपुंसकलिङ्गत्वादाद्युदात्तः । अग्न इत्यत्र वाक्यादित्वान्न निघातः । " आमन्त्रितं पूर्वमविद्यमानवत् " [ पा० ८·१·७२ ] इति तस्या विद्यमानवद्भावाद्यष्ठरित्येतस्य पदात्परत्वाभावान्न निघातः किं तु षाष्ठमामन्त्रिताद्युदात्तत्वम् । अग्नाविष्णू इत्यत्रापि तद्वत् । न विद्यते ध्वरो विघ्नो यस्य सोऽध्वरः । " नञ्सुभ्याम् " [ पा० ६·२·१७२ ] इत्युत्तरपदान्तोदात्तत्वम् । दिविस्पृशमित्यत्र कृत्स्वरः । अहृत इत्यत्राव्ययपूर्वपदप्रकृतिस्वरः । दुश्चरितादित्यत्रापि तद्वत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके त्रयोदशोऽनुवाकः । )

---

वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः । उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् । वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वाऽक्तꣳ रिहाणा वियन्तु वयः । प्रजां योनिं मा निर्मृक्षमा प्यायन्तामाप ओषधयो मरुतां पृषतयः स्थ दिवम् ( १ ) गच्छ ततो नो वृष्टिमेरय । आयुष्पा अग्नेऽस्यायुर्मे पाहि

चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि ध्रुवाऽसि यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै यज्ञस्य पाथ उप समितꣳ सꣳस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च (२) देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वमग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातमग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहा देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः (३) ॥

( दिवं च वित्त्वा गातुं त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके त्रयोदशोऽनुवाकः । )

---

वाजस्य । मा । प्रसवेनेति प्र—सवेन । उद्ग्राभे-

णेत्युत्–ग्राभेण । उदिति । अग्रभीत् । अथ । सप- त्नान् । इन्द्रः । मे । निग्राभेणेति नि–ग्राभेण । अधरान् । अकः । उद्ग्राभमित्युत्–ग्राभम् । च । निग्राभमिति नि–ग्राभम् । च । ब्रह्म । देवाः । अवीवृधन् । अथ । सपत्नान् । इन्द्राग्नी इतीन्द्र– अग्नी । मे । विषूचीनान् । वीति । अस्यताम् । वसु- भ्य इति वसु–भ्यः । त्वा । रुद्रेभ्यः । त्वा । आदि- त्येभ्यः । त्वा । अक्तम् । रिहाणाः । वियन्तु । वयः । प्रजामिति प्र–जाम् । योनिम् । मा । निरिति । मृक्षम् । एति । प्यायन्ताम् । आपः । ओषधयः । मरुताम् । पृषतयः । स्थ । दिवम् । (१) गच्छ । ततः । नः । वृष्टिम् । एति । ईरय । आयुष्पा इत्यां- युः–पाः । अग्ने । असि । आयुः । मे । पाहि । चक्षुष्पा इति चक्षुः–पाः । अग्ने । असि । चक्षुः । मे । पाहि । ध्रुवा । असि । यम् । परिधिमिति परि– धिम् । पर्यधत्था इति परि–अधत्थाः । अग्ने । देव । पणिभिरिति पणि–भिः । वीयमानः । तम् । ते । एतम् । अन्विति । जोषम् । भरामि । न । इत् । एषः । त्वत् । अपचेतयाता इत्यप–चेतयाते । यज्ञस्य । पाथः । उप । समिति । इतम् । सं॰

( आध्वर्यवाः स्रुग्व्यूहनादिमन्त्राः )

स्रावभागा इति संस्राव-भागाः । स्थ । इषाः । बृहन्तः । प्रस्तरेष्ठा इति प्रस्तरे-स्थाः । बर्हिषद इति बर्हि-सदः । च । ( २ ) देवाः । इमाम् । वाचम् । अभीति । विश्वे । गृणन्तः । आसद्येत्या-सद्य । अस्मिन् । बर्हिषि । मादयध्वम् । अग्नेः । वाम् । अपन्नगृहस्येत्यपन्न-गृहस्य । सदसि । सादयामि । सुम्नाय । सुम्निनी इति । सुम्ने । मा । धत्तम् । धुरि । धुर्यौ । पातम् । अग्ने । अदब्धायो इत्यदब्ध-आयो । अशीततनो इत्यशीत-तनो । पाहि । मा । अद्य । दिवः । पाहि । प्रसित्या इति प्र-सित्यै । पाहि । दुरिष्ट्या इति दुः-इष्ट्यै । पाहि । दुरद्मन्या इति दुः-अद्मन्यै । पाहि । दुश्चरितादिति दुः-चरितात् । अविषम् । नः । पितुम् । कृणु । सुषदेति सु-सदा । योनिम् । स्वाहा । देवाः । गातुविद इति गातु-विदः । गातुम् । वित्वा । गातुम् । इत । मनसः । पते । इमम् । नः । देव । देवेषु । यज्ञम् । स्वाहा । वाचि । स्वाहा । वाते । धाः ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

(अथ प्रथमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाकः ।)

---

द्वादशेऽनुवाक आघारावुक्तौ । अथ पञ्च प्रयाजाः । द्वावाज्यभागौ । त्रयः प्रधानयागाः । एकः स्विष्टकृत् । इडाभागभक्षणम् । त्रयोऽनूयाजा इत्येतावे[1]दनुष्ठातव्यम् । तन्मन्त्रास्तु हौत्रत्वादध्वर्युकाण्ड एतस्मिन्नाऽऽम्नाताः । उपरितनास्तु स्रुग्व्यूहनादिमन्त्रा आध्वर्यवत्वादिह त्रयोदशेऽनुवाक आम्नायन्ते।

**वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः । उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥**

कल्पः—“अथोदङ्ङध्वर्युः प्रत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदिति दक्षिणेन जुहूमुद्गृह्णात्यथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकरिति सव्येनोपभृतं निगृह्णा[2]त्युद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्निति प्राचीं जुहूमूहत्यथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यतामिति प्रतीचीमुपभृतं प्रत्यूहति” इति ।

अन्नस्य प्रसवहेतुना मुख्या जुह्वा ऊर्ध्वग्रहणेनेतो मामूर्ध्वमग्रहीत् । अथोपभृतो नीचग्रहणेन मम वैरिणो निकृष्टान्रुद्धानकरोत् । परं ब्रह्म देवाश्च ममोत्कर्षं वैरिणो निकर्षं च वर्धितवन्तः । अथेन्द्राग्नी मम सपत्नान्विष्वग्गतयः स्वस्थानभ्रष्टा यथा भवन्ति तथा विशेषेण प्रवर्तयेताम् । एतन्मन्त्रव्याख्यानात्पूर्वमिडाभक्षणादिकं विधीयते तस्य स्रुग्व्यूहनात्प्रागनुष्ठेयत्वात् । तत्रेडाभागस्य पुरोडाशादपच्छेदं विधत्ते—“धिष्णिया वा एते न्युप्यन्ते । यद्ब्रह्मा । यद्धोता । यदध्वर्युः । यदग्नीत् । यद्यजमानः । तान्यदन्तरेयात् । यजमानस्य प्राणान्त्संकर्षेत् । प्रमायुकः स्यात् । पुरोडाशमपगृह्य संचरत्यध्वर्युः । यजमानायैव तल्लोकꣳ शिꣳषति । नास्य प्राणान्त्संकर्षति । न प्रमायुको भवति” [ब्रा० का० १ प्र० ३ अ० ८] इति । धिष्णियनामकाः केचन देवाः सोमरक्षकाः । तथा च श्रूयते—“धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन्” इति । ते च धिष्णियाः सोमयागे वेदिकासदृशा मृन्म[3]या आम्नायन्ते । “चात्वालाद्धिष्णियानुपवपति”

---

१ ख. °वद्वक्तव्य° । २ ख. °भं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं ब्र° । ३ ख. °न्मयाः क्रिय° ।

इति श्रुतेः। तेषां च धिष्णियानामतिक्रमणं तत्रैव निषिद्धम्—"प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ्धिष्णियानतिसर्पेत्प्राणान्त्संकर्षेत्" इति। तद्वद्त्रापीडाभागभक्षणाय वेद्या उत्तरभागे स्थितानां ब्रह्मादीनां मध्ये संचारे प्राणापहारं बाधकमुपन्यस्य तत्परिहाराय भक्ष्यं पुरोडाशभागमपच्छिद्य तेभ्यः प्रदानाय हस्ते धृत्वा संचरेदिति विधीयते। तेन यज्ञविघ्नाभावाद्यजमानस्य स्वर्गं लोकमवशेषयति। इहलोकेऽपि प्राणबाधो न भवति। अत्र सूत्रम्—"इडापात्रे उपस्तीर्य सर्वेभ्यो हविर्भ्य इडामवद्यति" इति। अवान्तरेडां विधत्ते—"पुरस्तात्प्रत्यङ्ङासीनः। इडाया इडामादधाति। हस्त्याꣳ होत्रे। पशवो वा इडा। पशवः पुरुषः। पशुष्वेव पशून्प्रतिष्ठापयति। इडायै वा एषा प्रजातिः। तां प्रजातिं यजमानोऽनु प्रजायते" [ब्रा० का० ३ प्र० ३ अ० ८] इति। पात्रस्थिताया इडायाः पूर्वभागे प्रत्यङ्मुख उपविश्य सर्वसाधारण्या इडायाः सकाशाद्धोत्रे विभज्य प्रदातुं तद्धस्तयोग्यामल्पामिडामवदाय होतृहस्त आदध्यात्। "गौर्वा अस्यै शरीरम्" इतीडाभिमानिदेवतारूपश्रवणात्पशुत्वम्। नरमेधे पुरुषस्याऽऽलभ्यत्वात्सोऽपि पशुः। महत्या इडाया एषाऽवान्तरेडा प्रजाता। ततो यजमानस्य प्रजा भवति। अत्र सूत्रम्—"पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यति" इति। होतुः प्रदेशिन्या द्वयोः पर्वणोराज्येनाञ्जनं विधत्ते—"द्विरङ्गुलावनक्ति पर्वणोः। द्विपाद्यजमानः प्रतिष्ठित्यै" [ब्रा० का० ३ प्र० ३ अ० ८] इति। द्वाभ्यां पादाभ्यां स्थैर्येणावस्थानं प्रतिष्ठितिः। अवान्तरेडायां प्रकारविशेषं विधत्ते—"सकृदुपस्तृणाति। द्विरादधाति। सकृदभिघारयति। चतुः संपद्यते। चत्वारि वै पशोः प्रतिष्ठानानि। यावानेव पशुः। तमुपह्वयते" [ब्रा० का० ३ प्र० ३ अ० ८] इति। प्रतिष्ठानं पादः। अनेन चतुरवत्तेन तं चतुष्पादं पशुमुपह्वयते। इडाभागभक्षणायानुज्ञापितवान्भवति। अत्र चतुरवत्तं पुरोडाशभागं होता हस्ते धृत्वा भक्षणानुज्ञार्थं हौत्रकाण्डे पठितमनुवाकमुपहूतꣳ रथंतरमित्यादि पठेत्। तन्मध्येऽध्वर्युर्यजमानश्च प्रत्युपह्वानरूपं मन्त्रान्तरं पठेत्। तदिदं विधत्ते—"मुखमिव प्रत्युपह्वयेत। संमुखानेव पशूनुपह्वयते" [ब्रा० का० ३ प्र० ३ अ० ८] इति। होतुर्मुखमेवाभिवीक्ष्य पठेदित्यर्थः। अध्वर्युयजमानयोर्होतृहस्तगतेडास्पर्शनं विधत्ते—"पशवो वा इडा। तस्मात्साऽन्वारभ्या। अध्वर्युणा च यजमानेन च" [ब्रा० का० ३ प्र० ३ अ० ८] इति। पाठ्यं मन्त्रान्तरमुत्पादयति—"उपहूतः पशुमानसानीत्याह। उप

१ क. 'त्रमुप'।

होनौ ह्वयते होता । इडायै देवतानामुपहवे " [ ब्रा० का० ३ प्र० ३ अ० ८] इति । अहमध्वर्युर्देवैरनुज्ञातस्तत इडाभक्षणेन पशुमान्भवानि । यजमानेऽप्येवं योज्यम् । कस्मिन्कालेऽयं मन्त्रपाठः । इडार्थं देवतानामनुज्ञापने होत्रा क्रियमाणे सति तन्मध्य एनावध्वर्युयजमानौ यदोपह्वयते तदा पठेत् । दैव्या अध्वर्यव उपहूता उपहूतोऽयं यजमान इति मन्त्रावयवाभ्यामाभ्यां तयोरुपहवः । तदनन्तरं पठेदित्यर्थः । तद्वेदनं प्रशंसति—" उपहूतः पशुमान्भवति । य एवं वेद " [ ब्रा० का० ३ प्र० ३ अ० ८ ] इति । अवान्तरेडाया अवदानं तदुपाह्वानं च वाक्प्राणदेवतयोः प्रियमिति स्तौति—" यां वै हस्त्यामिडामादधाति । वाचः सा भागधेयम् । यामुपह्वयते । प्राणाना॑ꣳ सा । वाचं चैव प्राणा॑ꣳश्चावरुन्धे " [ ब्रा० का० ३ प्र० ३ अ० ८ ] इति । पुरोडाशस्य बर्हिषि स्थापनं विधातुं प्रस्तौति—" अथ वा एतर्ह्युपहूतायामिडायाम् । पुरोडाशस्यैव बर्हिषदो मीमा॑ꣳसा" [ ब्रा० का० ३ प्र० ३ अ० ८ ] इति । इडावदानानन्तरं होत्रा तस्यामिडायामुपहूतायां सत्यामवशिष्टस्य पुरोडाशस्यैतस्मिन्नेव काले बर्हिस्थापनसंबन्धिनी काचिन्मीमांसा भवति । किं पुरोडाशो बर्हिषि स्थापनीयो न वेति । तत्र प्रयोजनाभावादस्थापनमिति प्राप्ते प्रयोजनं देवतानां सभागत्वमिति मत्वा विधत्ते—" यजमानं देवा अब्रुवन् । हविर्नो निर्वपेति । नाहमभागो निर्वप्स्यामीत्यब्रवीत् । न मयाऽभागयाऽनुवक्ष्यथेति वागब्रवीत् । नाहमभागा पुरोनुवाक्या भविष्यामीति पुरोनुवाक्या । नाहमभागा याज्या भविष्यामीति याज्या । न मयाऽभागेन वषट्करिष्यथेति वषट्कारः । यद्यजमानभागं निधाय पुरोडाशं बर्हिषदं करोति । तानेव तद्भागिनः करोति " [ ब्रा० का० ३ प्र० ३ अ० ८ ] इति । यजमानवागाद्यभिमानिदेवता भागरहिताः स्वस्वव्यापारं न कुर्वन्ति । ततो यजमानस्यैकं पुरोडाशभागं पृथङ्निधायावशिष्टं पुरोडाशं बर्हिषि स्थापयेत् । तेन स्थापनमात्रेण वयं भागिन इति देवानां तुष्टिर्भवति । स्थापितस्य विभागं विधत्ते—" चतुर्धा करोति । चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति " [ ब्रा० का० ३ प्र० ३ अ० ८ ] इति । पुनः पूर्वविधिमनूद्य प्रशंसति—" बर्हिषदं करोति । यजमानो वै पुरोडाशः । प्रजा बर्हिः । यजमानमेव प्रजासु प्रतिष्ठापयति । तस्मादस्थ्नाऽन्याः प्रजाः प्रतितिष्ठन्ति । मा॑ꣳसेनान्याः " [ ब्रा० का० ३ प्र० ३ अ० ८ ] इति । यस्मात्कठिनस्य बर्हिषि स्थापितस्य पुरोडाशस्य मृदुनो बर्हिषश्च संयोगस्तस्मात्कृशदेहाः काश्चित्कठिनेनास्थ्ना प्रतितिष्ठन्ति स्थूलकायास्तु मांसेन । प्रकारान्तरेण तमेव विधिं प्रशंसन्ति—" अथो खल्वाहुः । दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्यवरुध्यन्ते । यत्पुरोडाशं बर्हिषदं करोति " [ ब्रा० का० ३ प्र० ३ अ० ८ ]

इति । पुरोडाशहविष्को हविर्यज्ञः । तस्य बर्हिषि पुरोडाशस्थापनं यत्, एतास्त्वृत्विजां वेदिमध्ये दक्षिणा एवावरुद्धाः । विध्यन्तरमनूद्य प्रशंसति—"चतुर्धा करोति । चत्वारो ह्येते हविर्यज्ञस्यर्त्विजः । ब्रह्मा होताऽध्वर्युरग्नीत्" [ब्रा० का० ३ प्र० ३ अ० ८] इति । तत्तद्भागस्य निर्देशं विधत्ते—"तमभिमृशेत् । इदं ब्रह्मणः । इद९ होतुः । इदमध्वर्योः । इदमग्नीध इति । यथैवादः सौम्येऽध्वरे । आदेशमृत्विग्भ्यो दक्षिणा नीयन्ते । तादृगेव तत्" [ब्रा० का० ३ प्र० ३ अ० ८] इति । यथा सोमयागे माध्यंदिनसवने दक्षिणार्थानि द्रव्याणि वेद्यां कृष्णाजिने प्रसार्येदमस्येदमस्येत्यादिश्य दक्षिणा नीयन्ते तद्वदिदं निर्देशनं द्रष्टव्यम् । निर्दिष्टानां भागानां यौगपद्यनिवारणाय क्रमं विधत्ते—"अग्नीधे प्रथमायाऽऽदधाति । अग्निमुखा ह्यृद्धिः । अग्निमुखामेवर्द्धिं यजमान ऋध्नोति" [ब्रा० का० ३ प्र० ३ अ० ८] इति । अग्निः कृत्स्नयागहेतुत्वात्समृद्धिहेतुः । तमग्निमिन्ध इत्यग्नीत् । ततोऽस्य प्राथम्यं युक्तम् । आग्नीध्रस्य हस्ते भागाधानप्रकारं विधत्ते—"सकृदुपस्तीर्य द्विरादधत् । उपस्तीर्य द्विरभिघारयति । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति" [ब्रा० का० ३ प्र० ३ अ० ८] इति । अस्य विधेस्तात्पर्यं बौधायन एकप्रकारेणाऽऽह—"उपहूतायामिडायामग्नीध आदधाति षडवत्तमुपस्तृणात्यादधात्यभिघारयति" इति । आपस्तम्बस्त्वन्यथा ब्रूते—"द्विरुपस्तृणाति । द्विरादधाति । द्विरभिघारयति" इति । विधत्ते—"वेदेन ब्रह्मणे ब्रह्मभागं परिहरति । प्राजापत्यो वै वेदः । प्राजापत्यो ब्रह्मा । सविता यज्ञस्य प्रसूत्यै" [ब्रा० का० ३ प्र० ३ अ० ८] इति । परिहारः प्रदानम् । यथा प्रजापतेरन्तर्यामितया प्रेरक एवं ब्रह्माऽपि तदा तदाऽनुज्ञया यज्ञस्य प्रवर्तक इति ब्रह्मणः प्राजापत्यत्वम् । वेदव्यतिरिक्तसाधनेन येन केनापि प्रक्रान्तपात्रेण भागान्तरं देयमित्याह—"अथ काममन्येन" [ब्रा० का० ३ प्र० ३ अ० ८] इति । होतुर्ब्रह्मानन्तर्यं विधत्ते—"ततो होत्रे । मध्यं वा एतद्यज्ञस्य । यद्धोता । मध्यत एव यज्ञं प्रीणाति" [ब्रा० का० ३ प्र० ३ अ० ८] इति । सामिधेनीरारभ्योपरिष्टादेव होतुर्व्यापाराद्यज्ञमध्यत्वम् । अध्वर्योर्होत्रानन्तर्यं विधत्ते—"अथाध्वर्यवे । प्रतिष्ठा वा एषा यज्ञस्य । यदध्वर्युः" [ब्रा० का० ३ प्र० ३ अ० ८] इति । प्रतिष्ठा समाप्तिः । समिष्टयजुर्होमपर्यन्तं यज्ञमध्वर्युः समापयति । आग्नीध्रमारभ्याध्वर्युपर्यन्तं क्रममन्वाहार्यादिदक्षिणायामतिदिशति—"तस्माद्धविर्यज्ञस्यैतामेवाऽऽवृतमनु । अन्या दक्षिणा नीयन्ते । यज्ञस्य प्रतिष्ठित्यै" [ब्रा० का० ३ प्र० ३ अ० ८] इति । प्रैषप्रकारः । आग्नीध्रं प्रति प्रैषमुत्पादयति—"अग्निमग्नीत्सकृत्सकृत्संमृड्ढी-

स्याह। पराङिव ह्येतर्हि यज्ञः" [ब्रा० का० ३ प्र० ३ अ० ८] इति। वीप्सया परिधिसंमार्जनमपि लभ्यते। अस्मिन्काले समाप्तप्रायत्वाद्यज्ञः पराङ्मुख इव वर्तते। ततः सकृत्संमार्जनं पर्याप्तम्। अथ होतारं प्रत्यस्ति कश्चित्प्रैषमन्त्रः- "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि" इति। भद्रं फलं तस्य वाच्यं वचनं तदर्थमग्निर्होतेत्यादिश्रुतिसिद्धा दैव्या होतारः परमेश्वरेण प्रेषिताः। इदं द्यावापृथिवी भद्रमभूदित्याद्यनुवाकः सूक्तं तस्य वाको वचनं तदर्थं मानुषो होता प्रेषितः। अतो हे होतस्त्वं तत्सूक्तं ब्रूहि। तमिमं मन्त्रमुत्पाद्य तत्रेषितपदस्य भद्रवाच्यायेति पदस्य च तात्पर्यं व्याचष्टे—"इषिता दैव्या होतार इत्याह। इषितꣳ हि कर्म क्रियते। भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीत्याह। आशिषमेवैतामाशास्ते" [ब्रा० का० ३ प्र० ३ अ० ८] इति। अस्ति होतारं प्रत्यपरः प्रैषमन्त्रः— "स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि" इति। दैव्यानां होतृणामयं[1] यज्ञः स्वाधीनो मानुषेभ्यो होतृभ्यः स्वस्त्यस्तु। हे होतस्त्वं शंयुदेवस्य संबन्धिनं तच्छंयोरावृणीमह इत्यनुवाकं ब्रूहि। अस्मिन्मन्त्रे स्वगाशब्दस्वस्तिशब्दशंयुशब्दानामभिप्रायं क्रमेण दर्शयति—"स्वगा दैव्या होतृभ्य इत्याह। यज्ञमेव तत्स्वगा करोति। स्वस्तिर्मानुषेभ्य इत्याह। आशिषमेवैतामाशास्ते। शंयोर्ब्रूहीत्याह। शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति" [ब्रा० का० ३ प्र० ३ अ० ८] इति। शंयुर्बृहस्पतेः पुत्रः। इत्थमिडाभागाद्यनुष्ठानं विधायास्मिन्काण्ड आम्नाताभ्यां वाजस्य मेत्येताभ्यामृग्भ्यां स्रुग्व्यूहनं विधत्ते- "अथ स्रुचावनुष्टुग्भ्यां वाजवतीभ्यां व्यूहति। प्रतिष्ठा वा अनुष्टुक्। अन्नं वाजः प्रतिष्ठित्यै। अन्नाद्यस्यावरुद्ध्यै" [ब्रा० का० ३ प्र० ३ अ० ९] इति। चतुर्भिः पादैर्गवादीनां प्रतिष्ठितत्वात्तद्वदनुष्टुभः प्रतिष्ठाहेतुत्वम्। वाजशब्दस्यान्नवाचित्वात्तद्वत्याटृचावत्तुं योग्यस्यान्नस्यावरोधाय भवतः। सामान्याकारेण विहितं स्रुग्व्यूहनं विशेषाकारेण विशदयति—"प्राचीं जुहूमूहति। जातानेव भ्रातृव्यान्प्रणुदते। प्रतीचीमुपभृतम्। जनिष्यमाणानेव प्रतिनुदते। स विषूच एवापोह्य सपत्नान्यजमानः। अस्मिꣳल्लोके प्रतितिष्ठति" [ब्रा० का० ३ प्र० ३ अ० ९] इति। वैरिणः परस्परवियुक्ता विविधदिक्पलायिता एव यथा भवन्ति तथा तानपोह्य प्रतितिष्ठति। वाजवतीभ्यामिति द्विवचनार्थमनूद्य प्रशंसति—"द्वाभ्याम्। द्विप्रतिष्ठो हि" [ब्रा० का० ३ प्र० ३ अ० ९] इति। द्वाभ्यां पादाभ्यां प्रतिष्ठा यस्यासौ द्विप्रतिष्ठः।

---

१ क. °यं स्वा°।

(आध्वर्यवाः स्रुग्व्यूहनादिमन्त्राः)

## वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वा—

कल्पः—“ जुह्वा परिधीननक्ति वसुभ्यस्त्वेति मध्यमं, रुद्रेभ्यस्त्वेति दक्षिणम्, आदित्येभ्यस्त्वेत्युत्तरम् ” इति।

त्रिष्वप्यनज्मीत्यध्याहारः। स्पष्टार्थतां दर्शयति—वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वेत्याह। यथायजुरेवैतत् ” [ब्रा० का० ३ प्र० ३ अ० ९] इति॥

## अक्त१ँ रिहाणा वियन्तु वयः।
## प्रजां योनिं मा निर्मृक्षम्—

बौधायनः—“ स्रुक्षु प्रस्तरमनक्त्यक्त१ँरिहाणा इति जुह्वामग्राणि, वियन्तु वय इत्युपभृति मध्यानि, प्रजां योनिं मा निर्मृक्षमिति ध्रुवायां मूलानि ” इति।

आपस्तम्बस्त्वाद्यद्वितीयमन्त्रावेकीकृत्याऽऽह—“ अक्त१ँ रिहाणा वियन्तु वय इति जुह्वामग्रं, प्रजां योनिं मा निर्मृक्षमित्युपभृति मध्यमा प्यायन्तामाप ओषधय इति ध्रुवायां मूलम् ” इति।

पक्षिण आज्येनाक्तं प्रस्तराग्रं लेलिहाना विविधं मार्गं गच्छन्तु। अहं तु प्रजां तत्कारणं च मा विनाशयामि। आज्यरूपा आपः प्रस्तरमूलरूपा ओषधीराप्याययन्तु। विधत्ते—“ स्रुक्षु प्रस्तरमनक्ति। इमे वै लोकाः स्रुचः। यजमानः प्रस्तरः। यजमानमेव तेजसाऽनक्ति। त्रेधाऽनक्ति। त्रय इमे लोकाः। एभ्य एवैनं लोकेभ्योऽनक्ति। अभिपूर्वमनक्ति। अभिपूर्वमेव यजमानं तेजसाऽनक्ति ” [ब्रा० का० ३ प्र० ३ अ० ९] इति। अभिमुखमग्रं पूर्वं यथा भवति तथा प्रस्तरमञ्ज्यात्। यजमानोऽपि मुख एव सभासु वक्तृत्वेन तेजस्वी भवति। मन्त्रगतस्याक्तशब्दस्याभिप्रायमाह—“ अक्त१ँरिहाणा इत्याह। तेजो वा आज्यम्। यजमानः प्रस्तरः। यजमानमेव तेजसाऽनक्ति ” [ब्रा० का० ३ प्र० ३ अ० ९] इति। विशब्दसूचितं दर्शयति—“वियन्तु वय इत्याह। वय एवैनं कृत्वा। सुवर्गं लोकं गमयति ” [ब्रा० का० ३ प्र० ३ अ० ९] इति। मन्त्रे प्रथमाबहुवचनान्तो विशब्दः पक्षिवाची ब्राह्मणे तु द्वितीयैकवचनान्तो वयःशब्दः। मा निर्मृक्षमित्येतस्याभिप्रायमाह—प्रजां योनिं मा निर्मृक्षमित्याह। प्रजायै गोपीथाय ” [ब्रा० का० ३ प्र० ३ अ० ९] इति। ओषधय इत्यत्र द्वितीया विवक्षितेत्याह—“ आ प्यायन्तामाप ओष-

धय इत्याह । आप एवौषधीराप्याययति" [ ब्रा० का० ३ प्र० ३ अ० ९ ]
इति । अत्र बहुवचनं द्रष्टव्यम् ॥

आ प्यायन्तामाप ओषधयो मरुतां पृष-
तयः स्थ दिवं गच्छ ततो नो वृष्टिमेरय ॥

बौधायनः—" तमुपरीव प्रहरति नात्यग्रं प्रहरति न पुरस्तात्प्रत्यस्यति न प्रतिशृणाति न विष्वञ्चं वियौत्यूर्ध्वमुद्यौत्या प्यायन्तामाप ओषधयो मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेरयेति " इति ।

आपस्तम्बः—" अनूच्यमाने सूक्तवाके मरुतां पृषतयः स्थेति सह शाखया प्रस्तरमाहवनीये प्रहरति " इति ।

अत्र प्रस्तरप्रहृतौ नात्यग्रमित्यादयो नियमविशेषाः । आहवनीयात्ययः प्रस्तराग्रस्य न कार्यः । प्रस्तरस्य पुरस्तादन्यत्किमपि न प्रक्षिपेत् । दर्भस्य कस्यचिच्छेदरूपा हिंसा न कार्या । दर्भाणां परस्परवियोगो न कार्यः । किं तु कृत्स्नं प्रस्तरमुद्यच्छेत् । आपस्तम्बस्य तु मरुतामिति प्रस्तरमन्त्रादिः । सह शाखया वत्सापाकरणहेतुभूतया । हे प्रस्तरावयवा दर्भा यूयं वायुप्रेरितवृष्टिजन्यतया वायूनां बिन्दवः स्थ । हे प्रस्तर त्वं दिवं गत्वा वृष्टिं प्रेरय । व्याचष्टे—" मरुतां पृषतयः स्थेत्याह । मरुतो वै वृष्ट्या ईशते । वृष्टिमेवावरुन्धे । दिवं गच्छ ततो नो वृष्टिमेरयेत्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे " [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति ॥

आयुष्पा अग्नेऽस्यायुर्मे पाहि
चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि—

कल्पः—" अथोपोत्थायाऽऽहवनीयमुपतिष्ठते—आयुष्पा अग्नेऽस्यायुर्मे पाहि चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीति " इति ।

आयुश्चक्षुषोः पालनीयतां दर्शयति—" यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्याऽऽयुर्मीयते । आयुष्पा अग्नेऽस्यायुर्मे पाहीत्याह । आयुरेवाऽऽत्मन्धत्ते । यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्य चक्षुर्मीयते । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्याह । चक्षुरेवाऽऽत्मन्धत्ते " [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति ॥

ध्रुवाऽसि—

कल्पः—" ध्रुवाऽसीत्यन्तर्वेदि पृथिवीमभिमृशति " इति ।

( आध्वर्यवाः स्रुग्व्यूहनादिमन्त्राः )

व्याचष्टे—"ध्रुवाऽसीत्याह प्रतिष्ठित्यै" [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति ॥

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै यज्ञस्य पाथ उप समितम्—

कल्पः—"मध्यमं परिधिमनुप्रहरति यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयाता इत्यथेतरावनुपसमस्यति यज्ञस्य पाथ उपसमितमिति" इति ।

भो अग्ने देव स्तुतिभिः प्राप्यमाणस्त्वं स्वयं यं मध्यमपरिधिं पश्चिमे भागे स्थापितवानसि । तत्रानुकूलतया प्रियं तमेतं परिधिं त्वयि भरामि । एष त्वत्तोऽपरक्तो नैव । हे दक्षिणोत्तरपरिधी यज्ञस्य फलरूपमन्नं युवामुपसंप्राप्नुतम् । पर्यधत्था इत्येतत्सत्यमित्याह—" यं परिधिं पर्यधत्था इत्याह । यथायजुरेवैतत् " [ ब्रा० का० ३ प्र० ३ अ० ९] इति । परिधावग्नेः प्रीत्युत्पादनायाग्निसंबोधनमित्याह—"अग्ने देव पणिभिर्वीयमाण इत्याह । अग्नय एवैनं जुष्टं करोति " [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । अनुशब्देन ज्ञातीनामनुरक्तत्वं सूच्यत इत्याह—" तं त एतमनु जोषं भरामीत्याह । सजातानेवास्मा अनुकान्करोति " [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । अपरागनिषेध आनुकूल्यार्थ इत्याह—" नेदेष त्वदपचेतयाता इत्याहानुख्यात्यै " [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । अनेकयोः परिध्योः सह कथनं बहुदिव्यानुकूल्यायेत्याह—" यज्ञस्य पाथ उपसमितमित्याह । भूमानमेवोपैति [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । विधत्ते—परिधीन्प्रहरति । यज्ञस्य समिष्ट्यै " [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । समिष्टिः संपूर्तिः ॥

सꣳस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वम्—

कल्पः—" अथैनान्सꣳस्रावेणाभिजुहोति जुह्वामुपभृतं सꣳस्रावयति सꣳस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वमिति " इति ।

---

१ च. 'यध्वꣳ स्वाहेति " ।

हे विश्वे देवा यूयं संस्रावभागाः स्थ । जुहूपभृद्भ्यां सिच्यमान आज्यशेषः संस्रावः । स एव भागो येषां ते संस्रावभागाः । कीदृशा देवास्तं भागं लब्धुमिच्छावन्तो बृहन्तो महान्तः सर्वैराराधनीयाः । तत्र केचित्प्रस्तरमुष्टौ[1] तिष्ठन्ति । अन्ये त्वास्तीर्णे बर्हिषि सीदन्ति । अस्माभिः क्रियमाणामिमां स्तुतिमभिवीक्ष्य समीचीनेयमिति गृणन्तो यूयमस्मिन्यज्ञ उपविश्य हृष्टा भवत । विधत्ते—"स्रुचौ संप्रस्रावयति । यदेव तत्र क्रूरम् । तत्तेन शमयति । जुह्वामुपभृतम् । यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । यजमानायैव भ्रातृव्यमुपस्तिं करोति" [ब्रा० का० ३ प्र० ३ अ० ९] इति । व्याचष्टे—"सꣲस्रावभागाः स्थेत्याह । वसवो वै रुद्रा आदित्याः सꣲस्रावभागाः । तेषां तद्भागधेयम् । तानेव तेन प्रीणाति" [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । अस्मिन्मन्त्रे देवतासंबन्धमृचश्छन्दोविशेषं च प्रशंसति—" वैश्वदेव्यर्चा । एते हि विश्वे देवाः । त्रिष्टुग्भवति । इन्द्रियं वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति" [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । एते वस्वादिरूपाः ॥

### अग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातम्—

बौधायनः—अथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य धुरि स्रुचौ विमुञ्चत्यग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातमिति " इति ।

हे जुहूपभृतौ युवामविनश्वरगृहस्य पृथिव्यभिमानिनो वह्नेः स्थाने शकटरूपे यजमानस्य सुखाय स्थापयामि । हे सुखवत्यौ सुखे मां स्थापयतं यज्ञभारवाहिनावेतौ दंपती रक्षतम् । यथोक्तं मन्त्रार्थं दर्शयति—" अग्नेर्वामपन्नगृहस्य सदसि सादयामीत्याह । इयं वा अग्निरपन्नगृहः । अस्या एवैने सदने सादयति । सुम्नाय सुम्निनी सुम्ने मा धत्तमित्याह । प्रजा वै पशवः सुम्नम् । प्रजामेव पशूनात्मन्धत्ते । धुरि धुर्यौ पातमित्याह । जायापत्योर्गोपीथाय " [ब्रा० का० ३ प्र० ३ अ० ९ ] इति । अत्राऽऽपस्तम्बो मन्त्रभेदमाश्रित्याग्नेर्वामिति शकटस्य पूर्वभागे स्रुचौ सादयित्वा धुरि धुर्याविति युगधुरोः प्रोहेदिति मन्यते ॥

### अग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै

१ ख. ॰भिलक्ष्य ।

( आध्वर्यवाः स्रुग्व्यूहनादिमन्त्राः )

पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः
पितुं कृणु सुषदा योनिꣳ स्वाहा—

कल्पः—" अपरं चतुर्गृहीतं गृहीत्वाऽन्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय फलीकरणानोप्य फलीकरणाञ्जुहोत्यग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहेति " इति ।

तण्डुलेषु गृहे क्रियमाणेष्वपनेया मालिन्यांशाः फलीकरणाः । हेऽग्ने मां दिवः पाहि द्युलोकवासिनो देवा मद्यपराधं यथा न गृह्णन्ति तथा कुरु । अदब्धायोऽहिंसितजीवित । अशीततनो, उष्णशरीर, प्रसित्यै प्रकृष्टाद्बन्धात्फलविघ्नात्पाहि । दुरिष्ट्यै दुष्टादयथाशास्त्रानुष्ठानात्पाहि । दुरद्मन्यै यागाधिकारविरोधिदुष्टवस्तुभोजनात्पाहि । दुश्चरितान्निषिद्धाचरणात्पाहि । पितुमन्नमस्मदीयमविषममृतं कुरु। सुषदा सुखोपवेशनेन निमित्तेन योनिं स्थानं कुरु । इदं फलीकरणद्रव्यं तुभ्यं स्वाहा हुतमस्तु । मन्त्रव्याख्यानपूर्वकं होमं विधत्ते—" अग्नेऽदब्धायोऽशीततनो इत्याह । यथायजुरेवैतत् । पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादित्याह । आशिषमेवैतामाशास्ते । अविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहेतीध्मसंव्रश्चना[1]न्यन्वाहार्यपचनेऽभ्याधाय फलीकरणहोमं जुहोति । अतिरिक्तानि वा इध्मसंव्रश्चनानि । अतिरिक्ताः फलीकरणाः । अतिरिक्तमाज्योच्छेषणम् । अतिरिक्त एवातीरिक्तं दधाति । अथो अतिरिक्तेनैवातिरिक्तमाप्त्वाऽवरुन्धे " [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति । इध्मे शास्त्रोक्तप्रमाणेन च्छिन्ने सति तच्छेषकाष्ठानीध्मसंव्रश्चनानि[2] । तानि दक्षिणाग्नौ प्रक्षिप्य तेषामुपरि जुहूगताज्ये स्थापितान्फलीकरणाञ्जुहुयात् । यज्ञोपयुक्तद्रव्यादधिकत्वमतिरिक्तत्वम् । अधिकद्रव्यहोमेनाधिकं फलं प्राप्य तत्स्वाधीनं करोतीत्यर्थः । इत्थं फलीकरणहोमे निष्पन्ने सत्यनन्तरं पत्न्याः समीपे वेदप्रासनं विधातव्यम् । तद्विधौ बुद्धिस्थे सति तत्प्रसङ्गाद्वेदस्य प्रशंसकः कश्चिन्मन्त्र उत्पाद्यते । स च प्रदेशान्तरविषयतया विनियुज्यते—" वेदिर्देवेभ्यो निलायत । तां वेदेनान्वविन्दन् । वेदेन वेदिं विविदुः पृथिवीम् । सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तः । ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिꣳ संमार्ष्ट्यनुवित्त्यै । अथो यद्वेदश्च वेदिश्च भवतः । मिथुनत्वाय प्रजात्यै "

१ ख. 'संव्रश्च' । २ ख. 'संव्रश्च' ।

ब्रा० का० ३ प्र० ३ अ० ९ ] इति। केनापि कारणेन देवेभ्यस्तिरोहितां वेद्यभिमानिदेवतां वेदाभिमानिदेवतामुखेन देवा अलभन्त। तमेतं वेदस्य महिमानं वेदेनेत्यादिको मन्त्रः प्रकाशयति। अस्यायमर्थः—असुरैर्दत्तां पृथिवीं देवाः पूर्वोत्तरभागाभ्यां संस्कृत्य वेदिमकुर्वन्। तां च वेदिं देवाः पुनर्वेदेनालभन्त। सा च वेदिः पृथिवीरूपा सती पार्थिवानि[1] व्रीह्यादीनि विस्तारितवती। किं च सा पृथिवीदेवता सर्वेषु भुवनेष्वन्तरुदरान्तर्ये(रे) गर्भं बिभर्ति। तस्माद्गर्भात्सर्वस्य फलस्य दाता यज्ञपुरुष उत्पन्न इति। अनेन मन्त्रेणाष्टमानुवाकोक्तात्पुरोडाशनिष्पादनादूर्ध्वं नवमानुवाके वक्ष्यमाणात्स्तम्बयजुर्हरणात्पुरस्ताद्दर्भमयेन वेदेन वेदिस्थानं संमृज्यात्। तच्च वेदिलाभाय। किं च वेदवेदिरूपं मिथुनं प्रजननाय भवति। प्रासाङ्गिकं समाप्य प्रकृतमनुसरति—"प्रजापतेर्वा एतानि श्मश्रूणि। यद्वेदः। पत्नियाः उपस्थ आस्यति। मिथुनमेव करोति। विन्दते प्रजाम्" [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति। पत्नीसमीपे प्रास्तस्य वेदस्य पुनरास्तरणं विधत्ते—"वेदꣳ होताऽऽहवनीयात्स्तृणन्नेति। यज्ञमेव तत्संतनोत्योत्तरस्मादर्धमासात्। तꣳ संततमुत्तरेऽर्धमास आलभते। तं कालेकाल आगते यजते" [ ब्रा० का० ३ प्र० ३ अ० ९ ] इति। वेदस्य बन्धनं विमुच्य गार्हपत्यमारभ्याऽऽहवनीयपर्यन्तास्तरणेनाऽऽगामिपर्वपर्यन्तं यज्ञः संततो भवति। पुनः पर्वण्यन्वाधानादिकं कृत्वा प्रतिपदि तं संततं यज्ञं कर्तुमारभते। एवं पुनः पुनस्तत्काले समागते सति यजत इत्यविच्छिन्नो यज्ञो भवति॥

देवा गातुविदो गातुं वित्त्वा गातुमित
मनसस्पत इमं नो देव देवेषु यज्ञꣳ
स्वाहा वाचि स्वाहा वाते धाः॥

बौधायनः—"अथोत्थाय दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समिष्टयजुर्जुहोति[2] देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेति" इति।

आपस्तम्बः—"देवा गातुविद इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन्ध्रुवया समिष्टयजुर्जुहोति मध्यमे स्वाहाकारे बर्हिरनुप्रहरति" इति।

अन्तेऽपि बौधायनेन स्वाहाकारस्याध्याहृतत्वात्तेनावशिष्टं सर्वं होतव्य-

१ क. ग. 'नि द्रव्यादी'। २ ख. 'ति मध्यमे स्वाहाकारे बर्हिरनुप्रहरति दे'।

मिति लभ्यते । जुह्वादीनि तु यजमानेन यावदायुः संभार्याणि[1] । तमाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति[2] शास्त्रात् । हे गातुविदो मार्गविदो देवाः पूर्वं यं गातुं मार्गं लब्ध्वा समागताः पुनः प्रतिनिवृत्य तं गातुं मार्गं गच्छत । हे मनसस्पते देव भवतोक्तेषु देवेष्विमं नो यज्ञं निधेहि । इदमाज्यं हुतमस्तु । सर्वक्रियाप्रवर्तके वायौ निधेहि । इदमाज्यं हुतमस्तु । वायुविषयेणानेन मन्त्रेण यज्ञसमाप्तिमुपपादयति—"ब्रह्मवादिनो वदन्ति । स त्वा अध्वर्युः स्यात् । यो यतो यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयतीति । वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते । देवा गातुविदो गातुं वित्त्वा गातुमितेत्याह । यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः" [ब्रा० का० ३ प्र० ३ अ० ९ ] इति । योऽध्वर्युर्यस्माद्देवाद्यज्ञमुपक्रमते तस्मिन्नेव देवे यदि यज्ञं समापयेत्तर्हि स एव मुख्योऽध्वर्युः स्यादिति ब्रह्मवादिनामुक्तिः । अत्राप्यध्वर्युः सर्वक्रियाप्रवर्तकाद्वायोरेव यज्ञमुपक्रमते । "देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम्" इत्येतस्याच्छिद्रकाण्डगतस्य मन्त्रस्य प्रथमं जपितत्वात् । अतः समाप्तावपि देवा गातुविद इत्येष वायुविषयो मन्त्रो युक्तः । यद्यप्येतावता त्रयोदशानुवाकोक्तानां मन्त्राणां व्याख्यानं समाप्तं तथाऽपि दशमानुवाके पत्नीसंनहनप्रसङ्गेन पत्नीविषयौ द्वौ मन्त्रावाम्नातौ । तदानीमनुपयोगाद्ब्राह्मणेन तौ तत्र न व्याख्यातौ । उपवेषत्यागार्थं मन्त्रोत्पत्तिरपि कर्तव्येति तदुभयमत्र व्याक्रियते । प्रथमं तावद्योक्त्रविमोकमन्त्रस्य पूर्वार्धं व्याचष्टे—"यो वा अयथादेवतं यज्ञमुपचरति । आ देवताभ्यो वृश्च्यते । पापीयान्भवति । यो यथादेवतम् । न देवताभ्य आवृश्च्यते । वसीयान्भवति । वारुणो वै पाशः । इमं वि ष्यामि वरुणस्य पाशमित्याह । वरुणपाशादेवैनां मुञ्चति । सवितृप्रसूतो यथादेवतम् । न देवताभ्य आवृश्च्यते । वसीयान्भवति" [ब्रा० का० ३ प्र० ३ अ० १०] इति । योक्त्रपाशस्य वरुणो देवता, तद्बन्धस्य च सविता देवता । ततो वरुणस्य पाशं यमबध्नीत सवितेति पदाभ्यां यथादेवतं यज्ञोपचारान्न देवताभ्य आवृश्च्यते न विच्छिन्नो भवति । नापि दरिद्रो भवति । सवितृप्रसूतो यथादेवतमुपचरतीति शेषः । तृतीयपादे पदार्थवाक्यार्थौ दर्शयति—"धातुश्च योनौ सुकृतस्य लोक इत्याह । अग्निर्वै धाता । पुण्यं कर्म सुकृतस्य लोकः । अग्निरेवैनां धाता । पुण्ये कर्मणि सुकृतस्य लोके दधाति" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति । दुःखनाशाय सुखप्राप्तये च चतुर्थपादोक्तिरित्याह—"स्योनं मे सह पत्या करोमी-

---

१ ख. संधार्या । २ क. ङ. च. णि । तं यजमानं यज्ञपात्रैर्दहन्तीति ।

त्याह। आत्मनश्च यजमानस्य चानार्त्यै संत्वाय" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति। पत्न्याः पूर्णपात्रविमोकार्थो यो मन्त्रस्तं व्याचष्टे—समायुपा सं प्रजयेत्याह। आशिषमेवैतामाशास्ते पूर्णपात्रे" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति। समानीयमान इति शेषः। मन्त्रगतं छन्दः प्रशंसति—"अन्ततोऽनुष्टुभा। चतुष्पद्वा एतच्छन्दः प्रतिष्ठितं पत्नियै पूर्णपात्रे भवति। अस्मिँल्लोके प्रतितिष्ठानीति। अस्मिन्नेव लोके प्रतितिष्ठति" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति। पत्नीकर्तव्यस्यावसाने विहितं यदिदं पूर्णपात्राभिमन्त्रणमनुष्टुभा क्रियते तदिदं छन्दः पादचतुष्टयोपेतत्वाद्गौरिव प्रतिष्ठितं भवति। कस्मिन्विषये। पत्न्याः संबन्धिनि पूर्णपात्रे विषये। मन्त्रं जपन्त्याः कोऽभिप्रायः। इह लोके प्रतिष्ठिता स्यामित्यभिप्रायः। तत्र मन्त्रसामर्थ्यात्सा प्रतितिष्ठत्येव। प्रकारान्तरेण प्रशंसति—"अथो वाग्वा अनुष्टुक्। वाङ्मिथुनम्। आपो रेतः प्रजननम्। एतस्माद्वै मिथुनाद्विद्योतमानः स्तनयन्वर्षति। रेतः सिञ्चन्। प्रजाः प्रजनयन्" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति। न केवलमनुष्टुभश्छन्दोरूपत्वं किं तु वाग्रूपत्वमप्यस्ति। सा च वाग्योपिच्छन्दोरूपेण पुरुषेण सह मिथुनं संपद्यते। यास्तु पूर्णपात्रगता आपस्ताः प्रजोत्पत्तिसाधनं रेतः। एतस्मादेव यागानुष्ठानगतान्मिथुनादुत्पन्न आदित्यप्रेरितो मेघो वृष्टिद्वारेण प्रजोत्पत्तौ पर्यवस्यति।

तथा च स्मर्यते—

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति॥

विमुक्तयोक्त्रस्य पूर्णपात्रोदकस्य च सहकारः पत्न्या कर्तव्य इत्याह—"यद्वै यज्ञस्य ब्रह्मणा युज्यते। ब्रह्मणा वै तस्य विमोकः। अद्भिः शान्तिः। विमुक्तं वा एतर्हि योक्त्रं ब्रह्मणा। आदायैनत्पत्नी सहाप उपगृह्णीते शान्त्यै" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति। यथा मन्त्रेणोपहितानां कपालानां मन्त्रेणैव विमोकः कर्तव्यस्तथा योक्त्रस्यापि योगविमोकवत्या रज्ज्वा कृतस्योपद्रवस्याद्भिः शान्तिर्युक्ता। योक्त्रं चेदानीं मन्त्रेण मुक्तमतोऽञ्जलौ तद्योक्त्रमादाय तेन सहापो गृह्णीयात्। तद्ग्रहणायाऽऽनयनं विधत्ते—"अञ्जलौ पूर्णपात्रमानयति। रेत एवास्यां प्रजां दधाति। प्रजया हि मनुष्यः पूर्णः" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति। शोभत इति शेषः। पूर्णपात्रोदकेन पत्न्या मुखप्रक्षालनं विधत्ते—"मुखं विमृष्टे। अवभृथस्यैव रूपं कृत्वोत्तिष्ठति" [ ब्रा० का० ३ प्र० ३ अ० १० ] इति। उत्तिष्ठेदिति विधिः।

अथोपवेषो मन्त्रेण परित्यक्तव्योऽतः प्रस्तौति—"परिवेषो वा एष वनस्पतीनाम्। यदुपवेषः" [ब्रा० का० ३ प्र० ३ अ० ११] इति। पलाशशाखामूले त्यक्तो भाग उपवेषः। स च सर्वेषां वनस्पतीनां परितो व्याप्नोति। वनस्पतिभिर्दुःसाध्यस्याङ्गारवियोजनतप्तकपालोपधानादेरनेन कृतत्वात्। वेदनं प्रशंसति—"य एवं वेद। विन्दते परिवेष्टारम्" [ब्रा० का० ३ प्र० ३ अ० ११] इति। सेवकजनमित्यर्थः। मन्त्रोत्पादनपूर्वकमुपवेषत्यागं विधत्ते—"तमुत्करे। यं देवा मनुष्येषु। उपवेषमधारयन्। ये अस्मदपचेतसः। तानस्मभ्यमिहाऽऽकुरु। उपवेषोपविड्ढि नः। प्रजां पुष्टिमथो धनम्। द्विपदो नश्चतुष्पदः। ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यञ्चमुपगूहति। तस्मात्पुरस्तात्प्रत्यञ्चः शूद्रा अवस्यन्ति" [ब्रा० का० ३ प्र० ३ अ० ११] इति। तमुत्कर उपगूहतीत्यन्वयः। यमित्यादिर्मन्त्रः। यं पलाशशाखामूलभागं देवा मनुष्यसंबन्धियज्ञेषु कपालोपधानाद्युग्रकर्मकारिणमुपवेषमकल्पयन्, हे उपवेष स त्वं ये पुत्रभार्यादयोऽस्मत्तोऽपरक्तास्तानस्मदर्थमिहाऽऽनीयानुरक्तान्कुरु। हे उपवेषास्माकं समीपे प्रजादिकं विड्ढि व्याप्तं कुरु। मनुष्यान्पशूंश्च चिरजीविनो वियोगरहितांश्च कुरु। अनेन मन्त्रेण तमुपवेषमुत्करे मृत्खननादिरूपे तृणादित्यागस्थाने पूर्वभागे प्रत्यङ्मुखं गूढं कुर्यात्। यस्मादेवं तस्माल्लोकेऽप्युपवेषवत्कर्मकराः शूद्राः स्वाम्यभिमुखाः स्वामिनः पुरस्तात्सर्वदाऽवतिष्ठन्ते। निःशेषेण गूहनं विधत्ते—"स्थविमत उपगूहति। अप्रतिवादिन एवैनान्कुरुते" [ब्रा० का० ३ प्र० ३ अ० ११] इति। अग्रमुत्करे प्रवेश्य मूलं वहिर्नावशेषयेत्। किं तु स्थविष्ठान्मूलादारभ्य कृत्स्नं प्रवेशयेत्। तथा सत्येतान्भृत्यानप्रतिवादिन उक्तकारिणः कुरुते। अभिचाराय मन्त्रान्तरमुत्पादयितुं प्रस्तौति—"धृष्टिर्वा उपवेषः। शुचर्तो वज्रो ब्रह्मणा सꣳशितः" [ब्रा० का० ३ प्र० ३ अ० ११] इति। अयमुपवेषः स्वत एव धार्ष्ट्ययुक्तोऽत ऊर्ध्वं वह्निसंतापेन युक्तः। पुनरपि मन्त्रेण तीक्ष्णीकृतत्वाद्वज्रः संपन्नोऽतोऽभिचारयोग्यः। तत्र मन्त्रमुत्पाद्य विनियुङ्क्ते—"योपवेषे शुक्। साऽमुमृच्छतु यं द्विष्म इति। अथास्मै नाम गृह्य प्रहरति" [ब्रा० का० ३ प्र० ३ अ० ११] इति। शुक्संतापः। अमुमित्यत्र यो द्वेष्यस्तस्य नाम गृहीत्वा तमुपवेषमग्नौ प्रहरेत्। पुनरप्यृचां त्रयमभिचारार्थमुत्पादयति—"निरमुं नुद ओकसः। सपत्नो यः पृतन्यति। निर्बाध्येन हविषा। इन्द्र एणं पराशरीत्। इहि तिस्रः परावतः। इहि पञ्चजनाꣳ अति। इहि तिस्रोऽतिरोचना यावत्। सूर्यो असद्दिवि। परमां त्वा परावतम्। इन्द्रो नयतु वृत्रहा। यतो न पुनरायसि। शश्वतीभ्यः समाभ्य इति" [ब्रा० का० ३ प्र० ३ अ० ११]

इति। यः शत्रुर्युयुत्सति अमुं स्वगृहात्त्वं निःसारय। निःशेषं जगद्बाध्यं येन तन्निर्बाध्यं तादृशं हविरुपवेषरूपं तेनेन्द्र एनं शत्रुं पराकृत्य हिंसितवान्। परावच्छब्दो दूरदेशवाची स्त्रीलिङ्गः। हे शत्रो त्वं त्रिभ्यो लोकेभ्यो निर्गत्य त्रीन्दूरदेशान्ब्राह्मणादीनतिक्रम्य चाण्डालादिषु गच्छ। यावत्सूर्यो दिव्यस्ति तावन्तं कालमग्निसूर्यचन्द्ररूपास्तिस्रो दीप्तीरतिक्रम्य महत्यन्धकारे गच्छ। वृत्रहेन्द्रस्त्वामत्यन्तदूरदेशं नयतु। यस्माद्दूरदेशादनेकेभ्यः संवत्सरेभ्य ऊर्ध्वमपि न पुनरागामिष्यसि। एताभिस्तिसृभिर्ऋग्भिरुपवेषं गृहाद्दूरतो निरस्येदित्येवं विधि(धिं) स्तावकेनार्थवादेनोन्नयति—"त्रिवृद्वा एष वज्रो ब्रह्मणा संशितः। शुचैवैनं विद्ध्वा। एभ्यो लोकेभ्यो निर्णुद्य। वज्रेण ब्रह्मणा स्तृणुते" [ब्रा० का० ३ प्र० ३ अ० ११] इति। मन्त्रत्रयेण तीक्ष्णीकृत एष उपवेषरूपो वज्रस्त्रिगुणो भवति। एतन्निष्ठेन शोकेनैनं वैरिणं लोकत्रयान्निःसार्य मन्त्रात्मकेन वज्रेणाभिहिनस्ति। त्रिर्भूमिं खात्वा तत्रोपवेषं प्रतिक्षेप्तुं यजुर्द्वयरूपं मन्त्रमुत्पादयति—"हतोऽसाववधिष्मामुमित्याह स्तृत्यै" [ब्रा० का० ३ प्र० ३ अ० ११] इति। स्तृतिर्हिंसा। अत्र सूत्रम्—"पञ्चभिर्निरस्येन्निखनेद्वा" इति। उपवेषस्याग्नौ क्षेपणे दूरदेशे निरसने भूमौ खनने च ध्यानं विधत्ते—"यं द्विष्यात्तं ध्यायेत्। शुचैवैनमर्पयति" [ब्रा० का० ३ प्र० ३ अ० ११] इति॥

अत्र विनियोगसंग्रहः—

"वाजद्वाभ्यां स्रुचोर्व्यूहो वस्वञ्ज्यात्परिधींस्त्रिभिः।
अक्तमाप्या त्रिभिः स्रुक्षु प्रस्तराग्रादिकाञ्जनम्॥ १॥
मरु प्रस्तरहोमोऽयमायुरग्न्यभिमन्त्रणम्।
ध्रुवा भूमिं स्पृशेत्रं प मध्यस्य परिधेर्हुतिः॥ २॥
यज्ञान्ययोर्द्वयोर्होमः संस्राव स्रावकाहुतिः।
अग्नेः स्रुचौ सादयित्वा धुरि ते प्रोहयेत्स्रुचौ॥ ३॥
अग्ने फलीकृतेर्होमो देवा इष्टयजुर्हुतिः।
वाचि बर्हिर्हुतिर्वाते सर्वहोमोऽत्र विंशतिः॥ ४॥

अथ मीमांसा।

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

"क्रयाय प्रतिपत्त्यै वा चमसेडादिभक्षणम्।
क्रयाय पूर्ववन्मैवं यागीये स्वत्ववर्जनात्॥

१ क. ग. 'भितस्त्रिर्भू'।

अक्रीतयजमानस्य भक्षसत्त्वाच्च तेन सा।
प्रतिपत्तिः संस्कृतित्वात्सत्रेषु न निवर्तते" इति॥

अस्ति सोमे चमसभक्षः। अस्ति चेष्टाविडाप्राशित्रादिभक्षः। तत्र भक्षेण क्रीतानामृत्विजां स्वाधीनत्वसंभवात्। दक्षिणेव क्रयार्थं भक्ष इति पूर्वः पक्षः। यागदेवतायै संकल्पिते द्रव्ये स्वत्वमलभमानो यजमानो न तेन क्रेतुं शक्नोति। किं च यजमानपञ्चमाः समुपहूयेडां प्राश्नन्तीत्यक्रीतस्यापि यजमानस्य भक्षः श्रूयते। तत्साहचर्यादृत्विजामपि भक्षणं न क्रयार्थमिति गम्यते। तस्मात्प्रतिपत्त्यर्थो भक्षः। तेन क्रयार्थत्वाभावेन परिशिष्यमाणा सा प्रतिपत्तिर्यागोपयुक्तद्रव्यसंस्कारत्वेन सत्रेषु न बाध्यते।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

"चतुर्धा कार्य आग्नेयः पुरोडाश इतीरितम्।
चतुर्धा करणं सर्वशेषो वाऽऽग्नेयमात्रगम्।
उपलक्षणताऽऽग्नेये युक्ताऽतः सर्वशेषता॥
अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्याग्नेयता ततः।
नाऽऽग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात्॥
तेनैकस्मिन्पुरोडाशे चतुर्धाकरणस्थितिः" इति।

दर्शपूर्णमासयोः श्रूयते—"आग्नेयं चतुर्धा करोति" इति। तत्राऽऽग्नेयवदैन्द्राग्नाग्नीषोमीययोरपि पुरोडाशयोरग्निसंबन्धादाग्नेयशब्देन पुरोडाशत्रयमुपलक्ष्यते। ततस्त्रयाणां शेष इति चेन्मैवम्। न ह्याग्नेय इत्ययं तद्धितः संबन्धमात्रेऽभिहितः किं तु देवतासंबन्धे। अग्निश्च केवलो द्विदेवत्ययोः पुरोडाशयोर्न देवता। अतो देवतैकदेशेन कृत्स्नदेवतोपलक्षणादाग्नेयत्वं तयोर्न मुख्यमिति मुख्य एवाऽऽग्नेये चतुर्धाकरणं व्यवतिष्ठते।

तत्रैव चतुर्थपादे चिन्तितम्—

"इदं ब्रह्मण इत्युक्तिः क्रयार्था भक्षणाय वा।
भक्षाश्रुतेः क्रयार्थाऽतो यथेष्टं तैर्नियुज्यताम्॥
देवतायै समस्तस्य क्लृप्तत्वात्स्वामिता न हि।
शेषस्य प्रतिपत्त्यर्थं भक्षणं तत्र युज्यते" इति॥

चतुर्धाकृतस्य पुरोडाशस्य भागान्यजमान एव निर्दिशेत्—"इदं ब्रह्मणः। इद१ होतुः। इदमध्वर्योः। इदमग्नीधः" इति। सोऽयं निर्देशो न भक्षणार्थः।

१ क. ख. ग. °त्रगः। उ°।

भक्षणस्याश्रुतत्वात् । ततो भृतिदानेन तानृत्विजः परिक्रेतुमयं निर्देशः । क्रयश्च तदङ्गीकारानुसारेण स्वल्पेनाप्युपपद्यते । तस्मात्स्वकीयभागास्तैरिच्छयोपयोक्तुं शक्या इति प्राप्ते ब्रूमः—अग्नये जुष्टं निर्वपामीति कृत्स्नस्य हविषो देवतार्थं संकल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावान्न युक्तः परिक्रयः । भक्षणं तु प्रतिपत्त्यर्थत्वाद्युक्तम् । अवशिष्टस्य यः कोऽप्युपयोगः प्रतिपत्तिः । पुरोडाशस्य भक्षणार्हत्वाद्भक्षणेन कर्मकराणामुत्साहजननाच्च तद्भक्षणार्थो निर्देशो युज्यते ।

तत्रैवाष्टमपादे चिन्तितम्—

" वाजस्य मेत्यमुं ब्रूयादेको द्वौ वा कृतार्थतः ।
एकः काण्डद्वये पाठादध्वर्युस्वामिनावुभौ " इति ॥

दर्शपूर्णमासयोर्वाजस्य मेत्ययं मन्त्रोऽध्वर्युकाण्डे यजमानकाण्डे चाऽऽम्नातः । तत्रैकेन पठिते सति मन्त्रस्य चरितार्थत्वादितरस्तं न पठेदिति चेन्मैवम् । काण्डान्तरपाठवैयर्थ्यप्रसङ्गात् । तस्मादुभाभ्यां पठनीयः । तयोः पठतोराशयभेदोऽस्ति । अनेन मन्त्रेण प्रकाशितमर्थमनुष्ठास्यामीत्यध्वर्युर्मनुते । अत्र न प्रमदिष्यामीति यजमानः ।

चतुर्थस्य द्वितीयपादे चिन्तितम्—

" प्रस्तरं शाखया सार्धं प्रहरेत्प्रहृतिस्त्वियम् ।
शाखाया अर्थकर्म स्यात्प्रतिपत्तिरुतोचिता ॥
प्रहृतिः प्रस्तरे यागः शाखायाः साहचर्यतः ।
तथात्वादर्थकर्मत्वे हृतिः शाखां प्रयोजयेत् ॥
हरतिर्यागवाची नो प्रतिपत्तिस्ततो भवेत् ।
पौर्णमास्यां ततो नैव हृतिः शाखां प्रयोजयेत् " इति ॥

दर्शपूर्णमासयोः श्रूयते—" सह शाखया प्रस्तरं प्रहरति " इति । तत्र शाखाप्रहरणमर्थकर्म । कुतः । प्रहृतिशब्देन यागस्याभिधानात् । एतच्च सूक्तवाकेन प्रस्तरं प्रहरतीत्येतद्वाक्यमुदाहृत्य चिन्तितम् । प्रस्तरप्रहरणस्य यागत्वे तत्साहचर्याच्छाखाप्रहरणमपि याग एवेत्यर्थकर्म स्यात् । अर्थाय क्रतुसाकल्यप्रयोजनाय क्रियमाणमर्थकर्म । ततः प्रहरणेन पौर्णमास्यामपि पलाशशाखा प्रयुज्यत इति प्राप्ते ब्रूमः—सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र हरतिधातोर्यागवाचित्वं नोक्तं किं तु मान्त्रवर्णिकदेवतामुपलभ्य द्रव्यदेवताभ्यां यागः कल्पितः । शाखाप्रहरणे तु नास्ति देवता । ततो यागस्य कल्पयितुमशक्यतया हरतिधातुरत्र स्ववाच्यार्थपरित्यागमेवाऽऽचष्टे । तथा सति वत्सापाकरण उपयु-

त्कायाः पलाशशाखाया उपयोगान्तराभावाद्यागदेशेऽवकाशलाभाय यत्र क्वाप्यवश्यं परित्यागे प्राप्ते शास्त्रेणाऽऽहवनीये त्यागो नियम्यते। तेन च शास्त्रीयत्यागेन शाखायाः प्रतिपत्तिर्भवति। प्रतिपत्तिर्नाम संस्काररूपो दृष्टार्थः। यथा राज्ञा चर्वितस्य ताम्बूलस्य सौवर्णे पतद्ग्रहे प्रक्षेपस्तद्वत्। ततः प्रहरणं प्रतिपत्तिकर्मतया तदभावे क्रतुवैकल्याभावात्पौर्णमास्यां स्वसिद्ध्[1]यहेतुभूतां शाखां न प्रयोजयति।

षष्ठाध्यायस्य प्रथमपादे चिन्तितम्—

"स्त्रिया नास्ति स्वामिभावः पुंलिङ्गेन तदीरणात्।
प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम्॥
अस्त्युद्देश्यगतत्वेन संख्यया सदृशत्वतः।
टाब्विभक्तिविकारादेरर्थस्तत्प्रकृतेर्न तु" इति॥

स्वर्गकामो यजेतेति पुंलिङ्गशब्देनाधिकारिणो विधानात्सोऽधिकारः स्त्रिया नास्ति। न च ग्रहैकत्ववल्लिङ्गमविवक्षितमिति वाच्यम्। एकत्ववल्लिङ्गस्य प्रत्यायार्थत्वाभावात्प्रकृत्यर्थतया तु ग्रहत्ववद्विवक्षितं पुंलिङ्गमिति प्राप्ते ब्रूमः—अस्ति स्त्रियाः कर्मस्वधिकारः। कुतः। पुंलिङ्गस्याविवक्षितत्वात्। न ह्येकत्वस्य प्रत्यायार्थत्वमविवक्षायां निमित्तं किं तूद्देश्यगतत्वम्। इहापि यः स्वर्गकामः स यजेतेति वचनव्यक्तौ पुंलिङ्गस्योद्देश्यगतत्वेनैकत्वसदृशत्वान्नास्ति विवक्षितत्वम्। न च प्रकृत्यर्थो लिङ्गम्। स्त्रीलिङ्गं तावट्टाबादिभिः स्त्रीप्रत्ययैरभिधीयते। पुंलिङ्गं तु वृक्षानित्यस्मिन्द्वितीयाबहुवचने विभक्तिविकारेण नकारादेशलक्षणेनाभिव्यज्यते। एवं कुलमित्यस्मिन्प्रथमैकवचने नपुंसकाभिव्यक्तिः। तस्माल्लिङ्गस्य प्रकृत्यर्थत्वाभावादुद्देश्यगतत्वेनाविवक्षितत्वाच्च स्त्रिया अस्त्यधिकारः।

तत्रैवान्यच्चिन्तितम्—

"दंपतिभ्यां पृथक्कार्यं सह वाऽऽख्यातसंख्यया।
पृथङ्मैवमवैगुण्यात्कर्त्रैक्यं देवतैक्यवत्" इति॥

यजेतेत्याख्यातप्रत्ययगतायाः संख्याया उद्देश्यगतत्वाभावेन विवक्षाया वारयितुमशक्यत्वादेककर्तृत्वाय दंपतिभ्यां पृथगेव कर्मानुष्ठेयमिति चेन्मैवम्। वैगुण्यप्रसङ्गात्। कर्मणि तत्र तत्र पत्न्यवेक्षणं यजमानावेक्षणं चेत्युभयमप्याम्नातम्। तत्र यजमानप्रयोगे पत्न्यवेक्षणं लुप्येत पत्नीप्रयोगे यजमानावेक्षणं लुप्येतेत्यवैगुण्याय द्वयोः सहाधिकारः। न च यजेतेत्येकवचनं विरुद्धम्।

१ ग. °सिद्धिहे°।

अग्नीषोमौ देवतेत्यत्र यथा व्यासक्तयोर्देवत्वाद्देवतैक्यं तथा दंपत्योरेकमेव कर्तृत्वमित्यङ्गीकारात् । तस्माद्दंपत्योः सहाधिकारः । तथा सत्यूनेऽतिरिक्तं धीयाता इति वाक्येन कर्मणि न्यूनाङ्गपूरणं पत्न्या क्रियत इति यदुक्तं तत्सुस्थितम् ॥

अथ व्याकरणम्—

वाजस्येत्यत्र "वज व्रज गतौ" इत्यस्माद्धातोरुत्पन्नः कर्मणि घञन्तः, [वाजशब्दः] । ततो ञित्त्वादाद्युदात्तः । प्रसवशब्दोऽप्प्रत्ययान्तः । ततस्तत्र थाथादिस्वरः । एवं सर्वं यथायोग्यमुन्नेयम् ॥

इषे त्वाद्या यजुर्मन्त्राः काचित्काचिदृगीरितौ ।
तासामृचां विविच्याथ वच्मि च्छन्दोऽवबुद्धये ॥

सावित्रियर्चा, अनुष्टुभर्चा, वैश्वदेव्यर्चेति ब्राह्मणेन व्याख्याततत्वात्सर्वयजुषां मध्ये समाम्नाता ऋचः । देवो वः सविता प्रार्पयत्विति द्विपदा विराड्गायत्री । आ प्यायध्वमिति मध्येज्योतिस्त्रिष्टुप् । रुद्रस्य हेतिरित्येकपदा त्रिष्टुप् । ध्रुवा अस्मिन्नित्यपि तद्वत् । प्रेयमगादिति त्रिष्टुप् । सहस्रवल्शा इत्येकपदा त्रिष्टुप् । उर्वन्तरिक्षमित्येकपदा गायत्री । संपृच्यध्वमिति गायत्री । देवो वः सवितोत्पुनात्विति गायत्री । अवधूतमित्येकपदा गायत्री । परापूतमित्यपि । दीर्घामन्वित्येकपदा त्रिष्टुप् । यानि घर्म इत्यनुष्टुप् । समापो अद्भिरित्युपरिष्टाद्बृहती । अद्भ्यः परीत्येकपदा गायत्री । अन्तरितमित्येकपदा गायत्री । देवस्य सवितुः सव इति द्विपदा गायत्री । पुरा क्रूरस्येत्येकपदा त्रिष्टुप् । उदादायेति त्रिपदा त्रिष्टुप् । आशासाना सुप्रजसस्त्वेत्यनुष्टुभौ । इमं वि ष्यामीति त्रिष्टुप् । समायुषेत्यनुष्टुप् । देवो वः सवितोत्पुनात्विति गायत्री । वीतिहोत्रमिति गायत्री । एता असदन्नित्येकपदा त्रिष्टुप् । अग्ने यष्टरित्येकपदा गायत्री । पाहि माऽग्न इति द्विपदा गायत्री । वाजस्य मोद्ग्राभं चेत्यनुष्टुभौ । यं परिधिमिति पुरस्ताज्ज्योतिस्त्रिष्टुप् । सꣳस्रावभागा इति त्रिष्टुप् । नन्वितरेषामपि मन्त्राणामनेन न्यायेनाक्षरमात्रासंख्याविशेषमुपजीव्य यत्किंचिच्छन्दः कल्प्यतामिति चेन्न । यजुषां छन्दःकल्पने श्रुतिविरोधप्रसङ्गात् । तथा च ब्राह्मणं पूर्वमेवोदाहृतम्—"तत्रोभयोर्मीमांसा । जामि स्यात् । यद्यजुषाऽऽज्यं यजुषाऽप उत्पुनीयात् । छन्दसाऽप उत्पुनात्यजामित्वाय" इति । तत्र यजुर्निषेध्य च्छन्दोऽभिधीयते । ततो यजुषां छन्दो न श्रुतेरभिमतम् । तथा सति

१ ख. °ता । तां तामृचं वि° । २ ख. °न्दो विधी° ।

( दर्शपूर्णमासविकृतिभूतकाम्येष्टीनां याज्यापुरोनुवाक्यामन्त्राः )

स्वशक्त्या किंचिन्नूतनं छन्दः कल्पयितुं न शक्यते। किं तु पूर्वसिद्धसंप्रदायागतं छन्दोलक्षणं यत्र यत्रास्ति तस्यां तस्यामृचि च्छन्दो जानीयात्। ऋचामेव च्छन्दोविधानात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ प्रथमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः । )

---

उभा वामिन्द्राग्नी आहुवध्यां उभा राधसः सह मादयध्यै। उभा दातारविषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम् । अश्रवꣳ हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् । अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् । इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा। शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम्। ( १ ) उभा हि वाꣳ सुहवा जोहवीमि ता वाजꣳ सद्य उशते धेष्ठा। वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्नयुज्महि। पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कम्। स नो रासच्छुरुधश्चन्द्राग्रा धियंधियꣳ सीषधाति प्र पूषा। क्षेत्रस्य

---

१ क. ग. °त्। इ°।

पतिना वयꣳ हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नः (२) मृडातीदृशे । क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयो-ध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम । आ देवानामपि पन्थामगन्म यच्छ-क्नवाम तदनु प्रवोढुम् । अग्निर्विद्वान्त्स यजात्(३) सेदु होता सो अध्वरान्त्स ऋतून्कल्पयाति । यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महि-षीव त्वद्रयिस्त्वद्वाजा उदीरते । अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः । अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवाꣳ ऋतुभिः कल्पयाति (४) ॥

( जुषेथामा स नो यजादा त्रयोविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

इषे त्वा यज्ञस्य शुन्धध्वं कर्मणे देवोऽवधूतं धृष्टिः सं वपाम्या ददे प्रत्युष्टं कृष्णोऽसि भुवनमसि वाजस्योभा वां चतुर्दश ॥ १४ ॥

इषे दृꣳह भुवनमष्टाविꣳशतिः ॥ २८ ॥ हरिः ॐ।

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके प्रथमः प्रपाठकः ॥ १ ॥

(अथ प्रथमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः।)

उभा। वाम्। इन्द्राग्नी इतीन्द्र—अग्नी। आहुवध्यै। उभा। राधसः। सह। मादयध्यै। उभा। दातारौ। इषाम्। रयीणाम्। उभा। वाजस्य। सातये। हुवे। वाम्। अश्रवम्। हि। भूरिदावत्तरेति भूरिदावत्—तरा। वाम्। विजामातुरिति वि—जामातुः। उत। वा। घ। स्यालात्। अथ। सोमस्य। प्रयतीति प्र—यती। युवभ्यामिति युव—भ्याम्। इन्द्राग्नी इतीन्द्र—अग्नी। स्तोमम्। जनयामि। नव्यम्। इन्द्राग्नी इतीन्द्र—अग्नी। नवतिम्। पुरः। दासपत्नीरिति दास—पत्नीः। अधूनुतम्। साकम्। एकेन। कर्मणा। शुचिम्। नु। स्तोमम्। नवजातमिति नव—जातम्। अद्य। इन्द्राग्नी इतीन्द्र—अग्नी। वृत्रहणेति वृत्र—हना। जुषेथाम्। (१) उभा। हि। वाम्। सुहवेति

सु—हवा । जोहवीमि । ता । वाजम् । सद्यः । उशते । धेष्ठा । वयम् । उ । त्वा । पथः । पते । रथम् । न । वाजसातय इति वाज—सातये । धिये । पूषन् । अयुज्महि । पथस्पथ इति पथः—पथः । परिपतिमिति परि—पतिम् । वचस्या । कामेन । कृतः । अभीति । आनट् । अर्कम् । सः । नः । रासत् । शुरुधः । चन्द्राग्रा इति चन्द्र—अग्राः । धियंधियमिति धियं—धियम् । सीषधाति । प्रेति । पूषा । क्षेत्रस्य । पतिना । वयम् । हितेन । इव । जयामसि । गाम् । अश्वम् । पोषयित्नु । एति । सः । नः । ( २ ) मृडाति । ईदृशे । क्षेत्रस्य । पते । मधुमन्तमिति मधु—मन्तम् । ऊर्मिम् । धेनुः । इव । पयः । अस्मासु । धुक्ष्व । मधुश्चुतमिति मधु—श्चुतम् । घृतम् । इव । सुपूतमिति सु—पूतम् । ऋतस्य । नः । पतयः । मृडयन्तु । अग्ने । नय । सुपथेति सु—पथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् । युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमउक्तिमिति नमः—उक्तिम् । विधेम । एति । देवानाम् । अपीति । पन्थाम् । अगन्म । यत् । शक्रवाम । तत् ।

अन्विति । प्रवोढुमिति प्र—वोढुम् । अग्निः । विद्वान् । सः । यजात् । ( ३ ) सः । इत् । उ । होता । सः । अध्वरान् । सः । ऋतून् । कल्पयाति । यत् । वाहिष्ठम् । तत् । अग्नये । बृहत् । अर्च । विभावसो इति विभा—वसो । महिषी । इव । त्वत् । रयिः । त्वत् । वाजाः । उदिति । ईरते । अग्ने । त्वम् । पारय । नव्यः । अस्मान् । स्वस्तिभिरिति स्वस्ति—भिः । अतीति । दुर्गाणीति दुः—गानि । विश्वा । पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव । तोकाय । तनयाय । शम् । योः । त्वम् । अग्ने । व्रतपा इति व्रत—पाः । असि । देवः । एति । मर्त्येषु । आ । त्वम् । यज्ञेषु । ईड्यः । यत् । वः । वयम् । प्रमिनामेति प्र—मिनाम । व्रतानि । विदुषाम् । देवाः । अविदुष्टरास इत्यविदुः—तरासः । अग्निः । तत् । विश्वम् । एति । पृणाति । विद्वान् । येभिः । देवान् । ऋतुभिरित्यृतु—भिः । कल्पयाति ( ४ )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके प्रथमः प्रपाठकः ॥ १ ॥

( दर्शपूर्णमासविकृतिभूतकाम्येष्टीनां याज्यापुरोनुवाक्यामन्त्राः )

( अथ प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः । )

---

त्रयोदशानुवाके दर्शपूर्णमासमन्त्राः समाप्ताः । अथ तद्विकृतिमन्त्रा वक्तव्याः । विकृतिषु चाऽऽध्वर्यवमन्त्राणामतिदेशे वैधप्राप्तत्वाद्धौत्रा एवानुशिष्यन्ते । ततः प्रपाठकानामन्त्यानुवाकेषु काम्येष्टीनां याज्यापुरोनुवाक्याः क्रमेणोच्यन्ते । ताश्चेष्टयो द्वितीयकाण्डस्य द्वितीयतृतीयचतुर्थप्रपाठकेषु क्रमेण विधीयन्ते । तत्रास्मिन्ननुवाके द्वितीयकाण्डस्थद्वितीयप्रपाठकस्य सार्धप्रथमानुवाकोक्तकाम्येष्टीनां याज्यापुरोनुवाक्या उच्यन्ते । काम्या याज्या इति याज्ञिकसमाख्याबलादिष्टिकाण्डस्य याज्याकाण्डस्य च परस्परं संबन्धः । इष्टिविशेषमन्त्रविशेषसंबन्धस्तु लिङ्गक्रमाभ्यामवगन्तव्यः । यद्यप्येकैक एव मन्त्रः स्वस्वदेवताप्रकाशकस्तथाऽपि दर्विहोमत्वव्यावृत्तये प्रतीष्टि मन्त्रद्वयं प्रयोक्तव्यम् । एतच्च वास्तोष्पतीयहोमप्रस्तावे समाम्नास्यते—" यदेकया जुहुयाद्दर्विहोमं कुर्यात् । पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय " इति । एतयोश्च लक्षणमाज्यभागब्राह्मणे पठिष्यते—" पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति । जातानेव भ्रातृव्यान्प्रणुदते । उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रतिनुदते " इति । यस्या ऋचः पूर्वार्धे देवतालिङ्गं सा पुरोनुवाक्या । उत्तरार्धे तल्लिङ्गं चेद्याज्या सा भवति । एतस्य लक्षणस्य प्रदर्शनार्थत्वात्क्वचिदेतद्व्यभिचरति । तत्र सर्वत्राऽऽम्नानक्रमो नियामकः । पुरस्तादाम्नाताः पुरोनुवाक्याः, पश्चादाम्नाता याज्याः । तस्मादिष्टिक्रमं मन्त्रक्रमं च परीक्ष्यैकैकस्यामिष्टावेकैकं मन्त्रयुग्मं प्रयोज्यम् । ननु यत्र युग्मादधिकस्त्वयुग्मसमानलिङ्गको मन्त्र आम्नायते तत्र क्रमानुसारेणोत्तरेष्टौ मन्त्रयोजने लिङ्गं बाध्येत, पूर्वेष्टौ तद्योजने क्रमो बाध्येतेति चेन्न । बाध्यतां नाम क्रमोऽस्य दुर्बलत्वात् । यदि न पूर्वेष्टौ तृतीयमन्त्रस्य पृथक्प्रयोजनता तर्हि तत्र याज्या विकल्पताम् । यत्र तु युग्मान्तरं पूर्वयुग्मेन(ण) समानलिङ्गं तत्र याज्यापुरोनुवाक्यायुग्मस्यैव विकल्पोऽस्तु । यद्वदिष्ट्यैक्ये मन्त्रयुग्माधिक्ये युग्मविकल्पस्तद्वन्मन्त्रयुग्मस्यैकत्वे सति तदीयदेवताविषयाणामिष्टीनामाधिक्ये ता इष्टयोऽपि विकल्पन्ताम् । तद्यथा । इहैव तावत्तादृशमुपलभ्यते । उभा वामिन्द्राग्नी इत्यादय इन्द्राग्निलिङ्गकाश्चत्वारो मन्त्राः । ऐन्द्राग्नेष्टयस्तु फलभेदेन षडाम्नाताः । तत्र प्रथममन्त्रयुग्मविषये तिस्र आद्या इष्टयो विकल्प्यन्ते ।

---

१ ख. 'दशभिरनुवाकैर्दर्श' । २ क. ग. काम्यया' । ३ क. ग. 'तीये हो' । ४ ख. क्रमस्य ।

तासु तिसृषु प्रथमामिष्टिं विधातुं प्रस्तौति—

"प्रजापतिः प्रजा असृजत ताः सृष्टा इन्द्राग्नी अपागूहता॑ँ सोऽचायत्प्रजापतिरिन्द्राग्नी वै मे प्रजा अपाघुक्षतामिति स एतमैन्द्राग्नमेकादशकपालमपश्यत्तं निरवपत्तावस्मै प्रजाः प्रासाधयताम्" [तै० सं० का० २ प्र० २ अ० १] इति।

अपागूहतामाच्छादितवन्तौ। अचायदचिन्तयत्। प्रासाधयतां प्रकटी कृतवन्तौ।

प्रस्तुतामिष्टिं विधत्ते—

"इन्द्राग्नी वा एतस्य प्रजामपगूहतो योऽलं प्रजायै सन्प्रजां न विन्दत ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मै प्रजां प्रसाधयतो विन्दते प्रजाम्" [सं० का० २ प्र० २ अ० १] इति।

यः पुरुषो यौवनादिना प्रजोत्पादनसमर्थोऽपि प्रजां न लभते तस्येन्द्राग्नी प्रतिबन्धकौ। तयोरुक्तः पुरोडाशो भागस्तेन तौ सेवते।

द्वितीयामिष्टिं विधत्ते—

"ऐन्द्राग्नमेकादशकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वेन्द्राग्नी एव स्वेन भागधेयेनोपधावति ताभ्यामेवेन्द्रियं वीर्यं भ्रातृव्यस्य वृङ्क्ते वि पाप्मना भ्रातृव्येण जयते" [सं० का० २ प्र० २ अ० १] इति।

सजाताः समानजन्मानो बन्धुभृत्यादयः। अचेतनं क्षेत्रविषयं चेतनं भृत्यविषयं च वैरिणो यत्सामर्थ्यं तदुभयमिन्द्राग्नी बलाद्विनाशयतः। स्वयं तु पापिष्ठेनैव वैरिणा विरुध्यमानो जयं प्राप्नोति।

तृतीयामिष्टिं विधत्ते—

"अप वा एतस्मादिन्द्रियं वीर्यं क्रामति यः सङ्ग्राममुपप्रयात्यैन्द्राग्नमेकादशकपालं निर्वपेत्सङ्ग्राममुपप्रयास्यन्निन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येणोपप्रयाति जयति त॑ँ सङ्ग्रामम्" [सं० का० २ प्र० २ अ० १] इति।

युद्धार्थं परसैन्यसमीपं प्रयास्यतो भयावेशाद्धस्तपादादीन्द्रियगता शक्तिरपक्रामति। इन्द्राग्नी तस्य धैर्यमुत्पाद्येन्द्रियशक्तिं समाधत्तः।

एतासु तिसृष्विष्टिषु पुरोनुवाक्यामाह—

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः

---

१ क. ग. °तामिन्द्रा°।

सह मादयध्यै । उभा दातारविषाः रयी-
णामुभा वाजस्य सातये हुवे वाम् ॥, इति ।

हे इन्द्राग्नी युवामुभौ हुव आह्वयामि । किमर्थम् । आहुवध्यै साकल्येन होतुम् । न चात्राश्वमेधपुरुषमेधादावश्वादेरिव युवयोर्होमद्रव्यत्वं शङ्कनीयम्। अस्ति ह्यत्र राधःशब्दवाच्यं पुरोडाशद्रव्यरूपमन्नम् । तेनान्नेन युवामुभौ परस्परं युक्तौ हर्षयितुमाह्वयामि । हृष्टाभ्यामावाभ्यां किं तवेति चेत् । युवामुभावन्नानां धनानां च दातारावतोऽन्नस्य लाभाय युवामुभावाह्वयामि ॥

अथ याज्यामाह—

अश्रवः हि भूरिदावत्तरा वां विजामातुरुत
वा घा स्यालात् । अथा सोमस्य प्रयती युव-
भ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥, इति ।

लोके हि स्वदुहितुरत्यन्तप्रियो विशिष्टो जामाता दौहित्रादिरूपाः प्रजा बह्वीर्ददाति, स्यालश्च स्वयं दक्षो भगिनीस्नेहेन गृहधनरक्षणाय दासदासीरूपाः प्रजा बह्वीः प्रददाति । ताभ्यामपि वां भूरिदावत्तरावतिशयेन बहुप्रजाप्रदौ युवामित्यश्रृणवम् । अथाऽतो हे इन्द्राग्नी युवभ्यां युवाभ्यां सोमस्य प्रयती सोमसदृशस्य पुरोडाशस्य प्रदानेन भवदीये चित्ते नूतनं हर्षरूपचित्तवृत्तीनां स्तोमं[1] संपादयामि । अत्रोदाहृतयोराद्यो मन्त्रः पुरोनुवाक्या । यागात्पुरस्ताद्देवताह्वानायाध्वर्युप्रैषमनु होत्रा वक्तव्यत्वात् । इन्द्राग्निभ्यामनुब्रूहीत्येतादृशोऽध्वर्युप्रैषः । द्वितीयो मन्त्रो याज्या । इज्यतेऽनयेति तद्व्युत्पत्तिः। अत एवात्र यजेति प्रैषः पठ्यते ॥

उत्तरासु तिसृष्विष्टिषु प्रथमां विधत्ते—

" वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सङ्ग्रामं जयत्यैन्द्राग्नमेकादशकपालं निर्वपेत्सङ्ग्रामं जित्वेन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तो नेन्द्रियेण वीर्येण व्यृध्यते " [ सं० का० २ प्र० २ अ० १ ] इति ।

युद्धश्रमेणेन्द्रियगतस्य वीर्यस्य व्यृद्धिः ।

द्वितीयामिष्टिं विधत्ते—

" अप वा एतस्मादिन्द्रियं वीर्यं क्रामति य एति जनतामैन्द्राग्नमेकाद-

१ ख. °मं सारं सं° ।

( दर्शपूर्णमासविकृतिभूतकाम्येष्टीनां याज्यापुरोनुवाक्यामन्त्राः )

कपालं निर्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोपधावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येण जनतामेति " [ सं० का० २ प्र० २ अ० १ ] इति ।

विजिगीषुकथासु स्वविद्याप्रकटनाय वा सभां जिगमिषोर्धैर्यभ्रंशरूपं वीर्यापक्रमणं भवति । तृतीया त्वैन्द्राग्नेष्टिः पौष्णचरुक्षैत्रपत्यचरुभ्यामुपरिष्टाद्विधास्यते ॥

तासु तिसृष्विष्टिषु पुरोनुवाक्यामाह—

इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥, इति ।

दासाः प्रजानामुपक्षपयितारस्तस्करप्रभवस्ते पतयो यासां पुरीणां ता दासपत्न्यः । हे इन्द्राग्नी तादृशीर्नवतिसंख्याकाः पुरो युगपदेकेनैव प्रहारकर्मणा युवां क्षपयतम् ॥

याज्यामाह—

शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् । उभा हि वाꣳ सुहवा जोहवीमि ता वाजꣳ सद्य उशते धेष्ठा ॥, इति ।

हे वृत्रहणाविन्द्राग्नी अद्य स्तोमं जुषेथां सेवेताम् । कीदृशं शुचिं निर्दोषं नवैरत्नविशेषैर्जातं जन्म यस्य तं नवजातं सुहवा रोषगर्वादिरहिततया सुखेन ह्वातुं शक्यौ युवामुभौ यस्माज्जोहवीम्याह्वयामि तस्मात्तावुभौ युवां कामयमानाय यजमानाय वाजं सद्यो धत्तम्[1] । तदिदमुत्तरार्धोक्तमन्त्रं[2] न स्तोत्रम् ॥

यथोक्तकर्मप्रयोगान्तःपातिनमपरं यागं विधत्ते—" पौष्णं चरुमनु निर्वपेत्पूषा वा इन्द्रियस्य वीर्यस्यानुप्रदाता पूषणमेव स्वेन भागधेयेनोपधावति स एवास्मा इन्द्रियं वीर्यमनु प्रयच्छति " [ सं० का० २ प्र० २ अ० १ ] इति ।

वीर्यं प्रददानाविन्द्राग्नी अनु पूषा प्रयच्छति ॥

तत्र पुरोनुवाक्यामाह—

वयमु त्वा पथस्पते रथं न वाजसातये । धिये पूषन्नयुज्महि ॥, इति ।

---

१ ख. धत्तं दत्तम् । २ ख. °र्धोक्तं नूतनम° ।

हे सुमार्गपते पूषन्वयमेव त्वां रथमिव योजयामः। किमर्थम्। धिये धीय-तेऽनुष्ठीयत इति धीः कर्म। कीदृश्यै धिये। वाजस्यान्नस्य सातिर्लाभो यस्याः सा वाजसातिस्तस्यै ॥

याज्यामाह—

पथस्पथः परिपतिं वचस्या कामेन कृतो
अभ्यानडर्कम्। स नो रासच्छुरुधश्चन्द्राग्रा
धियंधियꣳ सीषधाति प्र पूषा ॥, इति।

फलकामेन प्रेरितोऽहं तस्य तस्य मार्गस्य परिपालकं पूषापरपर्यायमर्कं स्तोत्ररूपेण वचसाऽभिव्याप्तवानस्मि। सोऽस्मभ्यं शोकनिरोधिका रासत्प्रय-च्छतु। कास्ताः। चन्द्राग्राश्चन्द्रवदाह्लादनसाधनमग्रं यासां ता ओषधीः। किं च पूषा धियंधियं तत्तद्विषयां प्रज्ञां प्रसीषधाति प्रकर्षेण साधयतु ॥

इष्ट्यन्तरं विधत्ते—

"क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रतिति-ष्ठति" [ सं० का० २ प्र० २ अ० १ ] इति।

क्षेत्राणां भूभागत्वाद्भूमेः क्षेत्रपतित्वम्। अर्थवादगतप्रतिष्ठाकामोऽत्राधि-कारी ॥

तत्र पुरोनुवाक्यामाह—

क्षेत्रस्य पतिना वयꣳ हितेनेव जयामसि।
गामश्वं पोषयित्न्वा स नो मृडातीदृशे ॥, इति।

हितेन पुत्रादिना यथा गवादिजयस्तथा क्षेत्रस्य पतिना गामश्वं पोषकम-न्नादिकं च वयमा समन्ताज्जयामः। स क्षेत्रस्य पतिरीदृशे गवादौ मां सुखयतु ॥

याज्यामाह—

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो
अस्मासु धुक्ष्व। मधुश्चुतं घृतमिव सुपू-
तमृतस्य नः पतयो मृडयन्तु ॥, इति।

हे क्षेत्रस्य पते धेनुः पय इव त्वमस्मासु माधुर्यरसोपेतमूर्मिवत्पुनः पुनरा

१ क. ग. °दास्वाद°।

स्युपेतं द्रव्यान्तरेष्वपि स्वमाधुर्यस्राविणं घृतवत्पर्युषितत्वदोषाभावेन सुपूतं नालिकेरफलेक्षुखण्डगुडादिभोग्यपदार्थसमूहं धुक्ष्व । यज्ञस्य पतयोऽस्मान्मृडयन्तु ॥

अवशिष्टामैन्द्राग्नेष्टिं विधत्ते—

"ऐन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रियं वीर्यमुपरिष्टादात्मन्धत्ते" [ सं० का० २ प्र० २ अ० १ ] इति ।

क्षैत्रपत्यचरोरूर्ध्वमियमिष्टिः । अत्रापि वीर्यकामोऽधिकारी । जनतामागत्येति क्षैत्रपत्यस्य काल उपरिष्टादित्यस्य कालः । अत्र याज्यानुवाक्ये पूर्वमेवोक्ते ॥

इष्ट्यन्तरं विधत्ते—

" अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्पथो वा एषोऽध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयत्यग्निमेव पथिकृतꣳ स्वेन भागधेयेनोपधावति स एवैनमपथात्पन्थामपि नयत्यनड्वान्दक्षिणावही ह्येष समृद्ध्यै " [ सं० का० २ प्र० २ अ० २ ] इति ।

पर्वणि पर्वण्यप्रमादेन तदिष्टेरनुष्ठानं विद्यमानं पन्थाः । कस्मिंश्चित्पर्वणि प्रमादेनानुष्ठानाभावोऽपथः । अस्मिन्विषये प्रायश्चित्तरूपेयमिष्टिः । यस्मादेषोऽनड्वान्भारं वहति तस्मात्समृद्ध्यै भवति ॥

तत्र पुरोनुवाक्यामाह—

अग्ने नय सुपथा राये अस्मान्विश्वानि
देव वयुनानि विद्वान् । युयोध्यस्मज्जुहु-
राणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥, इति ।

हेऽग्ने त्वं दर्शपूर्णमासेष्टिफलरूपाय धनायास्मानतिपाददोषरहितेन सुमार्गेण नय । हे देव त्वं विश्वान्मार्गान्वेत्सि । नरकहेतुत्वेन कुटिलमतिपादरूपं पापमस्मत्तो वियोजय । बहुतमां नमस्कारोक्तिं तव करवाम ॥

तत्र याज्यामाह—

आ देवानामपि पन्थामगन्म यच्छक्नवाम
तदनु प्रवोढुम् । अग्निर्विद्वान्त्स यजात्सेदु
होता सो अध्वरान्त्स ऋतून्कल्पयाति ॥, इति ।

यस्मात्पथो वयं पूर्वं भ्रष्टास्तमपि देवानां पन्थानमिदानीमागताः । किं कर्तुं, यत्कर्मानुष्ठातुं शक्नुमस्तदनुक्रमेण प्रवोढुम् । अविच्छेदेनानुष्ठानं प्रवाहः। यद्यप्यहं न जानामि तथाऽप्ययं पथिकृदग्निरपराधं समाधातुं वेत्ति । अतः सोऽस्मदर्थं यक्ष्यति । स एव देवानामाह्वाता । स एवातिपन्नान्यज्ञानृत्वादिकालांश्च कल्पयिष्यति ॥

इष्ट्यन्तरं विधत्ते—

" अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदग्निमेव व्रतपतिं स्वेन भागधेयेनोपधावति स एवैनं व्रतमालम्भयति व्रत्यो भवति " [ सं० का० २ प्र० २ अ० २ ] इति ।

अव्रत्यं यागव्रतविरोध्यनृतवादादिकं सोऽग्निरेवैनमव्रत्यचारिणं व्रतं प्रापयति । तत उत्तरेषु यागव्रतेषु योग्यो भवति । अत्र मन्त्रकाण्डे पथिकृल्लिङ्गकं[1] मन्त्रयुग्मं पूर्वमाम्नातमुदाहृतम् । व्रतलिङ्गमुपर्युदाहरिष्यते । मध्यवर्ति तु युग्मे विशेषलिङ्गाभावेऽप्युभयसाधारणलिङ्गदर्शनात्[2]पूर्वत्र विकल्पितमित्याहुः केचित् । अपरे तूत्तरत्र विकल्पितमिति मन्यन्ते । आचार्यास्तु पूर्वत्रैव स्विष्टकृतः संयाज्ये इति मन्यन्ते ॥

तत्र पुरोनुवाक्यामाह—

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥, इति ।

यत्प्रायणीयं हविस्तदग्नये बृहद्भवतु । हे विभावसो फलप्रदानेन मां पूजय। यथा महिषी मया दत्तं कार्पासबीजं तिलपिष्टादिकं भक्षयित्वा बहुक्षीरादिना पूजयति तद्वत् । तथा सति त्वदनुग्रहाद्धनं लभ्यतेऽन्नानि चोत्कर्षेण संपद्यन्ते॥

याज्यामाह—

अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥, इति ।

हेऽग्ने मदीयापराधपरिहारायेदानीं प्रवृत्तत्वान्नूतनस्त्वमस्मान्फलपर्यन्तानां कर्मणां पारं नय । किं कृत्वा । स्वस्तिभिर्यथाशास्त्रानुष्ठानैरनिपादरूपाण्यव्रत्यरूपाणि वा दुर्गाणि पापानि विश्वान्यतिक्रमय्य । किं चास्माकं निवासाय नगरी

१ ख. 'ङ्गकमु' । २ ख. ग. 'रणालिङ्ग' ।

विस्तृता भवतु । सस्यसंपत्त्यर्थमुर्वी बहुला भवतु । किं च त्वमस्मदीयाय पुत्राय दुहितृरूपापत्याय च सुखप्रदो भव ॥

अथ व्रातपत्ययागस्यासाधारणे युग्मे पुरोनुवाक्यामाह—

त्वमग्ने व्रतपा असि देव आ
मर्त्येष्वा। त्वं यज्ञेष्वीड्यः ॥, इति।

हेऽग्ने त्वमागत्य मनुष्येषु व्रतपालको देवोऽसि । आ समन्ताद्यज्ञेषु त्वं स्तुत्योऽसि ॥

याज्यामाह—

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा
अविदुष्टरासः। अग्निष्टद्विश्वमापृणाति विद्वा-
न्येभिर्देवाꣳ ऋतुभिः कल्पयाति ॥, इति।

हे देवा विदुषां युष्माकं संबन्धीन्यस्मदनुष्ठेयव्रतान्यत्यन्तमविद्वांसो वयं प्रकर्षेण विनाशयाम इति यत्तत्सर्वं विद्वानग्निरापूरयतु। यैर्ऋतूपलक्षितकालविशेषैर्देवान्हविर्भोक्तुं कल्पयति तैः कालविशेषैर्व्रतं पूरयतु ॥

अत्र विनियोगसंग्रहः—

" अन्त्यानुवाके याज्यानुवाक्याः काम्येष्टिसंगताः ।
काण्डस्य तु द्वितीयस्य द्वितीये प्रश्न इष्टयः ॥ १ ॥
उभैन्द्राग्नत्रये युग्ममिन्द्रैन्द्राग्नत्रये तथा ।
वयं पौष्णे चरौ क्षेत्र क्षैत्रपत्यचरौ तथा ॥ २ ॥
अग्ने पाथिकृते यद्वा व्रातपत्ये द्वियुग्मकम् ।
विकल्पेनेति मन्त्राः स्युरनुवाके चतुर्दश ॥ ३ ॥ "

अथ मीमांसा।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" ऐन्द्राग्नादीष्टयः काम्या याज्या अभ्युदिताः क्रमात् ।
काण्डयोस्ता यथालिङ्गं संचार्या नियमोऽथ वा ॥
लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमूः ।
अकाम्यास्वपि संचार्या याज्याः सर्वत्र का क्षतिः ॥
समाख्यानात्काण्डयोगः क्रमादिष्टिषु योजनम् ।
अपेक्षते दै(दे)वमात्रे[1]सक्तिः काम्यैकगास्ततः " इति ॥

---

१ ख. °त्रशक्तिः ।

काम्येष्टयस्तत्काण्डे क्रमेणाऽऽम्नाताः–"ऐन्द्राग्नमेकादशकपालं निर्वपे- द्यस्य सजाता वि(वी)युः" इत्यादिना। सजाता ज्ञातयो वि(वी)युर्विमता विप्र- तिपन्ना इत्यर्थः। इन्द्राग्नी रोचनेत्यादिके मन्त्रकाण्डे याज्यानुवाक्याः क्रमे- णाऽऽम्नाताः। तत्रेदं काम्ययाज्यानुवाक्याकाण्डमिति याज्ञिकानां समाख्य- याऽवगम्यते। तयोरिष्टिकाण्डमन्त्रकाण्डयोः प्रथमायामिष्टौ प्रथमपठिते याज्या- नुवाक्ये इत्यादिव्यवस्था। कर्मस्वरूपमात्रप्रकाशनं लिङ्गम्। न च तावन्मा- त्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः। ततः समाख्याबलान्मन्त्रकाण्डकर्मकाण्डयोः संबन्धावगमेन सामान्येन मन्त्रकर्मणोः संबन्धोऽवगम्यते। विशेषतस्त्वस्मिन्प्र- थमे कर्मण्ययं मन्त्र इति क्रमादवगम्यते। ऐन्द्राग्नेष्टावैन्द्राग्नमन्त्रो वैश्वानरेष्टौ वैश्वानरमन्त्र इत्येतादृशो विशेषो लिङ्गादवगम्यत इति चेन्न। लिङ्गसाधारण्ये क्रमापेक्षणात्। ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवानिति द्वितीयेष्टिरपि। तत्रेन्द्राग्नी पठितौ। मन्त्रकाण्डेऽपीन्द्राग्नी नवतिमित्यादिकमपरमैन्द्राग्नं याज्या- नुवाक्यायुगुलमाम्नातम्। न हि तत्र क्रममन्तरेण निर्णेतुं शक्यम्। न च क्रमेणैव तत्सिद्धेर्लिङ्गमप्रयोजकमिति वाच्यम्। क्वचिल्लिङ्ग- स्यैव व्यवस्थापकत्वात्। ऐन्द्राबार्हस्पत्येष्टिरेकैवाऽऽम्नाता—"यं काम- येत राजन्यमनपोब्धो जायेत वृत्रान्घ्नꣳश्चरेदिति तस्मा एतमैन्द्राबा- र्हस्पत्यं चरुं निर्वपेत्" इति। यं राजपुत्रं जायमानं राज्ञः पुरोहितस्य वा काम एवं भवति। अयं मातृगर्भे देवकृतविघ्नेन केनाप्यप्रतिबद्धो जायतां जातश्च शत्रून्मारयन्संचरेदिति। तद्राजपुत्रार्थेयमिष्टिः। मन्त्रकाण्डे तदिष्टि- क्रमे याज्यापुरोनुवाक्ये ऐन्द्राबार्हस्पत्ये द्विविधे आम्नाते। इदं वामास्ये हवि- रित्येकं युगुलम्। अस्मे इन्द्राबृहस्पती इत्यादिकमपरम्। तयोः प्रथमयुगुलस्य क्रमेण विनियोगेऽपि द्वितीययुगलं लिङ्गेनैव विनियोक्तव्यम्। तस्मात्क्रमस- माख्यासहकृतेन लिङ्गेन काम्येष्टिष्वेवैता याज्या नियम्यन्ते।

द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"इदं वांयुग्मयोः किं स्यात्साहित्यं वा विकल्पनम्।
साहित्यं पूर्ववन्मैवं देवताबोधनैक्यतः" इति॥

ऐन्द्राबार्हस्पत्ये कर्मणि "इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती" इति याज्यानुवाक्ये द्विविधे आम्नाते। तयोः सारस्वत्यादिवत्समुच्चयः। यथा सारस्वतीमनूच्य वाग्यन्तव्या वैष्णवीमनूच्य वाग्यन्तव्येत्यत्रादृष्टार्थत्वा-

---

१ ख. लिङ्गेनैवाव°।

त्समुच्चयस्तद्वदिति चेन्मैवम् । दृष्टप्रयोजनस्य देवताबोधनस्यैकत्वात् । तस्माद्विकल्पः ।

तत्रैवान्यच्चिन्तितम्—

“ पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।
पुरेवाऽऽद्यः समाख्यानाद्वचनात्तु समुच्चयः ” इति ॥

देवताप्रकाशनरूपकार्यस्यैकत्वाद्युग्मयोर्यथा न समुच्चयः किं तु विकल्प एव तथैवैकयुग्मगतयोरिति चेन्मैवम् । पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः । किं च पुरोनुवाक्यामनूच्य याज्यया जुहोतीति प्रत्यक्षवचनेन देवतोपलक्षणहविःप्रदानकार्यभेदोक्तिपुरःसरं साहित्यं विधीयते । तस्मात्समुच्चयः ।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

“ पर्यायेणापि देवोक्तिर्वैधेनैव पदेन वा ।
अर्थभेदादादिमोऽन्त्यः शब्दपूर्वान्वयित्वतः ” इति ॥

दर्शपूर्णमासयोर्ये नियमास्तेष्वग्न्यादिदेवताः किं पावकशुच्यादिना येन केनापि पर्यायेणाभिधातव्याः किं वा तत्तद्विध्युद्देशगतेनाग्न्यादिपदेनैवेति संशयः । तत्र शब्दस्यार्थप्रत्यायनार्थत्वात्पर्यायाणां स्वरूपेण भेदेऽप्यर्थाभेदाद्येन केनाप्यभिधानमिति पूर्वपक्षः । यत्र ह्यर्थे कार्यमासाद्यते तत्र शब्दोऽर्थप्रत्यायनार्थो भवति । यत्र पुनः शब्द एव कार्यं तत्र कार्यसंबन्धार्थं शब्द एव प्रत्याययितव्यः । तद्यथा देवदत्ते गौरवातिशयमापादयितुं राजसभायामाचार्योपाध्यायादिशब्दैस्तं व्यवहरन्ति । पितृमातृमातुलादयश्च तत्तत्संबन्धविशेषवाचिशब्देन यथा तुष्यन्ति तथा न नामग्रहणेन । प्रत्युत कुप्यन्ति, तद्वदत्राप्यग्न्यादिवैधशब्द एव कार्यमासक्तं विधिं विना यागदेवतयोः संबन्धाभावात् । विधिकृते तु तत्संबन्धे वैधशब्दस्य प्रयोजकत्वं दुर्वारम् । अत एवायाड्स्वाहाकारोज्जित्यादिनिगमेषु नियमेन वैधा एवाग्न्यादिशब्दाः प्रयुज्यन्ते “ अयाडग्नेः प्रिया धामानि, अयाट्सोमस्य प्रिया धामानि, स्वाहाऽग्निं स्वाहा सोमम् , अग्नेरहमुज्जितिमनूज्जेषं, सोमस्याहमुज्जितिमनूज्जेषम् ” इत्यादिना । तस्माद्वैधपदैरेव तत्तद्देवताभिधानम् ।

---

१ क. ग. ॰याग॰ ।

तत्रैवान्यचिन्तितम्—

" निगमे पावकाग्न्योः किमग्निः स्यादथ वोभयम् ।
अग्निश्चोदकतो मैवं वैधोऽग्निः सगुणो यतः " इति ॥

आधाने श्रूयते—"अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये " इति । तत्र गुणगुणिनोः पावकाग्न्योर्मध्येऽग्निशब्द एव निगमेषु प्रयोक्तव्यः । कुतः । तस्यैव चोदकप्राप्तमन्त्रपठितत्वात् । मैवम् । पावकगुणयुक्तस्याग्नेर्वैधत्वेन सर्वप्रयोगेषु तथैव प्राप्तत्वात् । तस्माच्छब्दद्वयं पठितव्यम् । अनेन न्यायेन प्रकृतेऽप्यैन्द्राग्नयाग इन्द्राग्निशब्देनैव निगदेषु देवताऽभिधातव्या । पाथिकृतयागे त्वग्निपथिकृच्छब्दद्वयेनेति द्रष्टव्यम् ॥

अथ व्याकरणम् ।

उभेत्यत्रे पूर्वसवर्णैकादेशस्वरौ । इन्द्राग्निशब्दे त्वाष्टमिकामन्त्रितनिघातः। आहुवध्या इत्यत्र तुमर्थे विहितस्य कध्यैप्रत्ययस्याऽऽदिरकार उदात्तः । ततः समासे कृत्स्वरः । एवं सर्वमुन्नेयम् । अस्मिन्प्रथमप्रपाठके शब्दस्वरप्रक्रिया लेशतः प्रदर्शिता । साकल्येन तु प्रकृतिप्रत्ययविकरणतत्तदादेशादिपरिज्ञानमन्तरेण दुर्बोधत्वात्तस्य च सर्वस्यास्माभिर्वैदिकशब्दप्रकाशे निरूपितत्वादत्रापि तन्निरूपणे ग्रन्थगौरवप्रसङ्गात्तत्रैव सर्वमवगन्तव्यम् । तदिदं याज्याकाण्डं वैश्वदेवम् । तथा चानुक्रमणिकायामुक्तम्—

" राजसूयः सब्राह्मणः पशुबन्धः सहेष्टिकः ।
उपानुवाक्यं याज्याश्च अश्वमेधः सब्राह्मणः ॥
सत्रायणं च होमाश्च सूक्तानि च सहेष्टिभिः ।
सौत्रामणी सहाच्छिद्रैः पशुमेधश्च षोडश " इति ॥

अनुमत्यै पुरोडाशमित्यादिको मन्त्रकाण्डस्थोऽष्टमप्रपाठको राजसूयः । अनुमत्या इत्यादिका विधिकाण्डस्थाः षष्ठसप्तमाष्टमप्रपाठकास्त्रयो राजसूयस्य ब्राह्मणम् । वायव्यꣳ श्वेतमालभेतेत्यादिप्रपाठकोक्ताः पशुबन्धाः । प्रजापतिः प्रजा असृजतेत्यादिप्रपाठकत्रयोक्ता इष्टयः । प्रजापतिरकामयत प्रजाः सृजेयेत्यादिकमुपानुवाक्यम् । उभा वामिन्द्राग्नी इत्यादयो याज्याः । जीमूतस्येत्यादिकस्तत्र तत्रोक्तोऽश्वमेधः । सांग्रहण्येष्ट्या, इत्यादिकं तद्ब्राह्मणम् । प्रजननं ज्योतिरित्यादिप्रपाठकपञ्चकं सत्रायणम् । जुष्टो दमूना इत्यादिप्रपाठकद्वयोक्ता मन्त्रा होमाः । पीवोऽन्नाꣳ रयिवृधः सुमेधा इत्यादिसार्धप्रपाठकोक्तानि

१ ख. 'त्र टाप्स्वरैका' । २ क. ग. 'न्द्रग्र' ।

( यजमानकर्तृकप्राग्वंशप्रवेशोपयुक्ता मन्त्राः )

सूक्तानि । अग्निर्वा अकामयतेत्याद्यर्धप्रपाठकोक्ता इष्टयः । स्वाद्वीं त्वा स्वादुनेत्यादिः सौत्रामणी । सर्वान्वा एषोऽग्नौ कामान्प्रवेशयतीत्यादीन्यच्छिद्राणि । अञ्जन्ति त्वामित्यादिकः पशुः । ब्रह्मणे ब्राह्मणमालभत इत्यादिर्मेधः[1] । अत्र याज्यानां विश्वे देवा ऋषयः । उभा वामिति द्वे त्रिष्टुभौ । इन्द्राग्नी नवतिमिति गायत्री । शुचिं नु स्तोममिति त्रिष्टुप् । वयमु त्वेति गायत्री । पथस्पथ इति त्रिष्टुप् । क्षेत्रस्य पतिनेत्यनुष्टुप् । क्षेत्रस्य पत इति तिस्रस्त्रिष्टुभः । यद्वाहिष्ठमित्यनुष्टुप् । अग्ने त्वमिति त्रिष्टुप् । त्वमग्ने व्रतपा इति गायत्री । यद्वो वयमिति त्रिष्टुप् । देवतास्तु तत्तन्मन्त्रव्याख्यानेनैव प्रकाशिताः । ता एता ऋषिच्छन्दोदेवता अनुष्ठानकाले स्मरणीयाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

## ( अथ प्रथमाष्टके द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीर्देवश्रूरेतानि प्र वपे स्वस्त्युत्तराण्यशीयाऽऽपो

---

१ ख. °दिर्नरमेधः । २ क. ग. अतो ।

( यजमानकर्तृकप्राग्वंशप्रवेशोपयुक्ता मन्त्राः )

अस्मान्मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्प्र वहन्तु रिप्रमुदाभ्यः शुचिरा पूत एमि सोमस्य तनूरसि तनुवं मे पाहि महीनां पयोऽसि वर्चोधा असि वर्चः ( १ ) मयि धेहि वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिस्तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमा वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इन्द्राग्नी द्यावापृथिवी आप ओषधीस्त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहि ( २ ) ॥

( वर्च ओषधीरष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टके द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

आपः । उन्दन्तु । जीवसे । दीर्घायुत्वायेति

( यजमानकर्तृकप्राग्वंशप्रवेशोपयुक्ता मन्त्राः )

दीर्घायु–त्वार्य । वर्चसे । ओषधे । त्रायस्व । एनम् । स्वधित इति स्व–धिते । मा । एनम् । हिꣳसीः । देवश्रूरिति देव–श्रूः । एतानि । प्रेति । वप्ते । स्वस्ति । उत्तराणीत्युत्–तराणि । अशीय । आपः । अस्मान् । मातरः । शुन्धन्तु । घृतेन । नः । घृतप्व इति घृत–प्वः । पुनन्तु । विश्वम् । अस्मत् । प्रेति । वहन्तु । रिप्रम् । उदिति । आभ्यः । शुचिः । एति । पूतः । एमि । सोमस्य । तनूः । असि । तनुवम् । मे । पाहि । महीनाम् । पयः । असि । वर्चोधा इति वर्चः–धाः । असि । वर्चः । ( १ ) मयि । धेहि । वृत्रस्य । कनीनिका । असि । चक्षुष्पा इति चक्षुः–पाः । असि । चक्षुः । मे । पाहि । चित्पतिरिति चित्–पतिः । त्वा । पुनातु । वाक्पतिरिति वाक्–पतिः । त्वा । पुनातु । देवः । त्वा । सविता । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरिति रश्मि–भिः । तस्य । ते । पवित्रपत इति पवित्र–पते । पवित्रेण । यस्मै । कम् । पुने । तत् । शकेयम् । एति । वः । देवासः । ईमहे । सत्यधर्माण इति सत्य–धर्माणः । अध्वरे । यत् । वः । देवासः । आगुर इत्या–गुरे । यज्ञियासः । हवामहे । इन्द्राग्नी

इतीन्द्रं—अग्नी । द्यावांपृथिवी इति द्यावा—पृथिवी । आपः । ओषधीः । त्वम् । दीक्षाणाम् । अधिपतिरित्यधि—पतिः । असि । इह । मा । सन्तम् । पाहि ( २ ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमकाण्डे द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आद्यप्रपाठके दर्शपूर्णमासेष्टिरीरिता ।
प्रपाठकत्रयेणाथ सोमयागः प्रवक्ष्यते ॥ २ ॥

तदिदं सौम्यकाण्डम् । तथा चानुक्रमणिकायामुक्तम्—
" अध्वरप्रभृतित्रीणि तद्विधिर्वाजपेयकौ ।
सत्राः शुक्रियकाण्डे च नवेन्दोरिति धारणा " इति ॥

आप उन्दन्त्वित्यादिकमध्वरकाण्डम् । आ ददे ग्रावाऽसीत्यादिकं ग्रहकाण्डम् । उदु त्यं जातवेदसमित्यादिकं दक्षिणाकाण्डम् । तान्येतानि त्रीणि। प्राचीनवꣳशं करोतीत्यादिकं त्रयाणामेतेषां विधिः । देव सवितः प्र सुवेत्यादिकं वाजपेयस्य मन्त्रकाण्डम् । देवा वै यथादर्शं यज्ञानाहरन्तेत्यादिकं वाजपेयस्य विधिकाण्डम् । त्रिवृत्स्तोमो भवतीत्यादिकाः सत्राः । नमो वाचे या चोदितेत्यादिकं शुक्रियमन्त्रकाण्डम् । देवा वै सत्त्रमासतेत्यादिकं तद्विधिकाण्डम् । तान्येतानि नवसंख्याकानि चन्द्रस्य काण्डानि । अतस्तेषु चन्द्र ऋषिरिति ध्यायेत् ।

" सोमाङ्गे दीक्षणीयादौ दर्शमन्त्रातिदेशनात् ।
दर्शोर्ध्वत्वं तत्र युक्तमग्निष्टोमोऽत्र वर्ण्यते " ॥

---

१ ख. तस्य ।

( यजमानकर्तृकप्राग्वंशप्रवेशोपयुक्ता मन्त्राः )

त्रिविधः सोमयाग एकाहाहीनसत्रनामकः । एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः । द्विरात्रमारभ्यैकादशरात्रपर्यन्ता अहीनाः । त्रयोदशरात्रमारभ्य सहस्रसंवत्सरपर्यन्तानि सत्राणि । द्वादशाहस्तु द्विरूपः । तत्राहीनरूपेण द्विरात्रादीनां प्रकृतिः, सत्ररूपेण त्रयोदशरात्रादीनाम् । तस्य च द्वादशाहस्यैकाहरूपो ज्योतिष्टोमः प्रकृतिः । अत एवाऽऽम्नायते—“एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः” इति । यद्यपि सप्तसंस्थो ज्योतिष्टोमोऽग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति, तथाऽप्यग्निष्टोमे कृत्स्नाङ्गजातस्योपदिष्टत्वात्स एवेतरेषां प्रकृतिः । अतः प्रथमं स एवाभिधीयते । तत्र प्रपाठकत्रयस्यानुवाकानां चार्थभेदो विनियोगसंग्रहे दर्शितः—

“ द्वितीयप्रश्नमारभ्य प्रश्नत्रय उदीर्यते ।
सोमयागे मन्त्रजातं तत्रावान्तरभेदतः ॥ १ ॥
क्रयः पशुग्रहश्चेति प्रश्नभेदोऽवगम्यताम् ।
क्रयप्रश्नेऽनुवाकाः स्युरर्थभेदाच्चतुर्दश ॥ २ ॥
प्राग्वंशावेशनं दीक्षा स्याद्देवयजनग्रहः ।
सोमक्रयण्यानयनं तदीयपदसंग्रहः ॥ ३ ॥
सोमोन्मानं क्रयस्तस्य शकटारोपणं गतिः ।
आतिथ्योपसदस्तद्वद्वेदुत्तरवेदिका ॥
हविर्धानं काम्ययाज्या इत्यर्था अनुवाकगाः ॥ ४ ॥ ” इति ।

तत्र प्रथमानुवाके क्षौरादिभिः संस्कृतस्य यजमानस्य प्राचीनवंशाख्यशालाप्रवेशोऽभिधीयते । आप उन्दन्त्वित्यादयः क्षौरमन्त्राः । क्षौरात्प्रागेव शाला निर्मातव्या । ततो बौधायनो दीक्षासाधनद्रव्यसंपादनपूर्वकं शालानिर्माणमाह—“ अग्निष्टोमेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनं च कृष्णविषाणं च वासश्च मेखलां च ” इति । “ जुष्टे देवयजने शाला कारिता भवति ” इति च । आपस्तम्बोऽपि “ सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते ” इत्युपक्रम्य वरणं देवयजनाध्यवसानं दीक्षणीयेष्टिं चाभिधायेदमाह—“ प्राचीनवꣳशं करोति पुरस्तादुन्नतं पश्चान्निनतꣳ सर्वतः परिश्रितम् ” इति ।

एतदेवाभिप्रेत्य वपनविधेः पूर्वं शालां विधत्ते—

“ प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणां

१ क. प. ङ. च. °तः सर्वतः प° ।

पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा यत्प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्तते " [ सं का० ६ प्र० १ अ० १ ] इति ।

प्रागायतः पृष्ठवंशो यस्य गृहविशेषस्य स प्राचीनवंशः । केचित्तु यस्य देवयजनस्येति विगृह्य कृत्स्नदेवयजनविधिमेतमाहुः । देवयजनैकदेशरूपगृहसंबद्धो वंशो देवयजनसंबद्धो भवति । वंशस्य प्रागग्रत्वेन तद्गृहं यजमानो देवलोकं करोति ॥

गृहस्य कुड्यस्थानीयमावरणं विधत्ते—

" परिश्रयत्यन्तर्हितो हि देवलोको मनुष्यलोकात् " [ सं० का० ६ प्र० १ अ १ ] इति ।

स्वर्गस्य मनुष्यैरदृश्यत्वादत्रापि तदर्थं परिश्रयणम् ।

द्वाराणि विधत्ते—

" नास्माल्लोकात्स्वेतव्यमिवेत्याहुः को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान्करोत्युभयोर्लोकयोरभिजित्यै " [ सं० का० ६ प्र०१ अ० १ ] इति ।

इह लोके तावत्सुखं प्रत्यक्षसिद्धम् । गृहक्षेत्रपुत्रमित्रादिभिस्तदुत्पादात् । स्वर्गे तु संदिग्धम् । यद्यविघ्नेनेदं कर्म साङ्गं समाप्येत तदा सुखमस्ति नान्यथा। भवदपि तत्सुखं नेदानीं भवति किं तु मरणादूर्ध्वम् । तदाऽपि प्रबलेन केनचिन्नरकप्रदेन कर्मणा प्रतिबन्धे सति ततोऽपि विलम्ब्येत । तस्मादिदानीमेवास्माल्लोकान्न सर्वात्मना निर्गन्तव्यमिति बुद्धिमन्त आहुः । तत एतल्लोकदर्शनाय द्वारेषु कृतेषु लोकद्वयजयो भवति ॥

## आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे—

कल्पः—" अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरनुबध्याऽऽप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इति " इति ।

गोदानं शिरसो भागः । जीवनायुर्वृद्धिब्रह्मवर्चसेभ्य आपः शिर आर्द्रीकुर्वन्तु ॥

## ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीर्देवश्रूरेतानि प्र वपे—

कल्पः—"ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति ओषधे त्रायस्वैनमिति स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति प्रवपति देवश्रूरेतानि प्र वप इति" इति।

१ ख. 'पते दे° ।

( यजमानकर्तृकप्राग्वंशप्रवेशोपयुक्ता मन्त्राः )

स्वधितिः क्षुरः । देवेषु प्रसिद्धत्वेन श्रूयत इति देवश्रूर्देवनापितस्तद्रूपोऽहं वपनं कुर्वे । एतानि केशादीनि ॥

## स्वस्त्युत्तराण्यशीय—

बौधायनः—" स्वस्त्युत्तराण्यशीयेत्युक्त्वा तं प्रत्यभिमृशते " इति ।

आपस्तम्बः—" स्वस्त्युत्तराण्यशीयेति यजमानो जपति " इति ।

अविघ्नेनोत्तराणि कर्माणि प्राप्नुयाम् ॥

विधत्ते—

केशश्मश्रु वपते नखानि निकृन्तते मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति " [ सं० का० ६ प्र० १ अ० १ ] इति ॥

## आपो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्प्र वहन्तु रिप्रम्—

बौधायनः—" अथैनमद्भिरभिपिञ्चत्यापो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्त्विति संप्रधाव्य रजः प्रक्षालयति विश्वमस्मत्प्र वहन्तु रिप्रमिति " इति ।

आपस्तम्बस्त्वेकमन्त्रतां मन्यते । अस्मानस्मदीयान्यजमानान् । क्षरदुदकमत्र घृतम् । तेन पुनन्ति पर्जन्यादयो घृतपुवः । रिप्रं पापम् । इमा आपः सर्वं पापमस्मत्तोऽपनयन्तु ॥

## उदाभ्यः शुचिरा पूत एमि—

कल्पः—" उदाभ्यः शुचिरा पूत एमीत्युद्ग्राहमानो जपति " इति ।

स्नानाचमनाभ्यां बहिरन्तश्च शुद्धः सन्नप्स्य उदगम्याऽऽगच्छामि ॥

विधत्ते—

" अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे " [ सं० का० ६ प्र० १ अ० १ ] इति ।

मुण्डनादिसंस्कारो दीक्षा । आहारादिनियमस्तपः । अप्सु स्नानेन तदुभयमव्यवधानेनैव प्राप्नोति ॥

अवतरणप्रदेशं[1] विधत्ते—

" तीर्थे स्नाति[2] तीर्थे हि ते तां प्रावेशयन् " [ सं० का० ६ प्र० १ अ० १ ] इति ॥

---

१ ख. अवान्तरप्र° । २ ख. °ति । तामेव दीक्षामुक्त° ।

उक्तमेवार्थमनूद्य स्तौति—

" तीर्थे स्नाति तीर्थमेव समानानां भवति " [ सं० का० ६ प्र० १ अ० १ ] इति ।

सख्यादीनां समानानां तीर्थवत्सेव्यो भवति ॥

आचमनं विधत्ते—

" अपोऽश्नात्यन्तरत एव मेध्यो भवति " [ सं० का० ६ प्र० १ अ० १ ] इति ॥

## सोमस्य तनूरसि तनुवं मे पाहि—

कल्पः—" अथ प्रदक्षिणमहतं वासः परिधत्ते सोमस्य तनूरसि तनुवं मे पाहीति " इति ।

क्षौमवस्त्रस्य सोमोऽभिमानी देव इति तस्य वस्त्रं शरीरम् ॥

विधत्ते—

" वाससा दीक्षयति सौम्यं वै क्षौमं देवतया सोममेव देवतामुपैति यो दीक्षते " [ सं० का० ६ प्र० १ अ० १ ] इति ।

दीक्षयति संस्करोति ॥

मन्त्रस्य पूर्वोत्तरभागौ व्याचष्टे—

" सोमस्य तनूरसि तनुवं मे पाहीत्याह स्वामेव देवतामुपैत्यथो आशिषमेवैतामाशास्ते " [ सं० का० ६ प्र० १ अ० १ ] इति ।

वस्त्रपरिहितस्य सोम एव स्वा देवता ॥

प्रकारान्तरेण प्रस्तौति—

" अग्नेस्तूषाधानं वायोर्वातपानं पितृणां नीविरोषधीनां प्रघात आदित्यानां प्राचीनतानो विश्वेषां देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा एतत्सर्वदेवत्यं यद्वासो यद्वाससा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति " [ सं० का० ६ प्र० १ अ० १ ] इति ।

शलाकोपधानं तूषाः । तत्र तन्तूनां पूरणं तूषाधानम् । वायुना शोषणं वातपानम् । नीविर्बन्धविशेषः । प्रघातो दण्डेन शलाकोपधानेन वा प्रहारः । प्राचीनतानो दीर्घतन्तुप्रसारणम् । ओतुस्तिर्यक्तन्तुप्रसारणम् । अतीकाशाश्छिद्राणि । एतेषु क्रमेणाग्न्यादयोऽभिमानिदेवताः ॥

भोजनं विधत्ते—

" बहिःप्राणो वै मनुष्यस्तस्याशनं प्राणोऽश्नाति सप्राण एव दीक्षते " [ सं० का० ६ प्र० १ अ० १ ] इति ।

प्राणस्थितिहेतुत्वादशनस्य प्राणत्वम् । मित्रबन्ध्वादिभिः प्रार्थितो बहु भुञ्जीतेति ॥

विधत्ते—

" आशितो भवति यावानेवास्य प्राणस्तेन सह मेधमुपैति " [ सं० का० ६ प्र० १ अ० १ ] इति ॥

## महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहि—

बौधायनः—" अथास्यैतन्नवनीतं विचितमुदशराव उपशेरते तस्य पाणिभ्यां संप्रम्लाय मुखमेव प्रथममभ्यङ्क्ते महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहीत्यनुलोममापादाभ्याम् " इति ।

आपस्तम्बो मन्त्रभेदमाह—" महीनां पयोऽसीति दर्भपुञ्जीलाभ्यां नवनीतमुद्यौति वर्चोधा असीति तेन पराचीनं त्रिरभ्यङ्क्ते " इति ।

हे नवनीत त्वं गवां पयःकार्यमसि । स्निग्धतारूपं वर्चो धारयसि । अतो मयि ब्रह्मवर्चसं धेहि ॥

अभ्यङ्गं विधत्ते—

"घृतं देवानां मस्तु पितृणां निष्पक्कं मनुष्याणां तद्वा एतत्सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति " [ सं० का० ६ प्र० १ अ० १ ] इति ।

नवनीतस्य पाकजन्यास्तिस्रोऽवस्थाः पक्वं किंचित्पक्वं निःशेषपक्वं च । द्रव्यान्तरप्रक्षेपेण सुरभि निःशेषपक्वम् । अत एव बह्वृचः पठन्ति—" आज्यं वै देवानां सुरभि घृतं मनुष्याणामायुतं पितृणां नवनीतं गर्भाणाम् " इति ।

प्रकारान्तरेण नवनीताभ्यङ्गं[1] प्रस्तौति—

"प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकं यो दीक्षितोऽन्तरेव नवनीतं तस्मान्नवनीतेनाभ्यङ्क्ते " [ सं० का० ६ प्र० १ अ० १ ] इति ।

दीक्षितस्य सर्वसाधने प्रवृत्तत्वादेतल्लोकप्रच्युतिः । यागस्यासमाप्तत्वाद्देवलोकप्राप्त्यभावः । नवनीतमपि क्षीरभावात्प्रच्युत्य घृतभावं न प्राप्नोति । अतोऽन्तरालवर्तित्वसाम्यात्तेन तस्याभ्यङ्गो युक्तः ॥

गुणद्वयं विधत्ते—

" अनुलोमं यजुषा व्यावृत्त्यै " [ सं० का० ६ प्र० १ अ० १ ] इति ।

---

१ ख. 'भ्यञ्जनं स्तौ' ।

मनुष्याणां नास्त्यानुलोम्ये नियमः । न वाऽभ्यङ्गे मन्त्रोऽस्ति । तस्माद्व्यावृत्त्यै तदुभयमत्रेति नियम्यते ॥

## वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहि—

कल्पः—" अथास्यैतदाञ्जनं पिष्टं दृषदुपले सतूलया च शरेषीकया चास्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्ति वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहीति " इति ।

मन्त्रार्थं विशदयन्नञ्जनं विधत्ते—

" इन्द्रो वृत्रमहन्तस्य कनीनिका पराऽपतत्तदाञ्जनमभवद्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते " [ सं० का० ६ प्र० १ अ० १ ] इति ।

विनाशयतीत्यर्थः ॥

क्रमेण गुणान्विधत्ते—

" दक्षिणं पूर्वमाऽङ्क्ते सव्यꣳ हि पूर्वं मनुष्या आञ्जते न नि धावते नीव हि मनुष्या धावन्ते पञ्च कृत्व आऽङ्क्ते पञ्चाक्षरा पाङ्क्तः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे परिमितमाऽङ्क्तेऽपरिमितꣳ हि मनुष्या आञ्जते सतूलयाऽऽङ्क्तेऽपतूलया हि मनुष्या आञ्जते व्यावृत्त्यै " [ सं० का० ६ प्र० १ अ० १ ] इति ।

मनुष्यस्य योषितामञ्जने वामभागपूर्वत्वं प्रसिद्धम् । अञ्जनोपेताङ्गुलेश्चक्षुषि सहसा पुनः पुनः पर्यावर्तनं निधावनं तच्च मनुष्याः कुर्वन्ति । यज्ञे सवनीयपुरोडाशद्रव्याणां पञ्चसंख्यया पङ्क्तिच्छन्दोगताक्षरसाम्याद्यज्ञस्य पाङ्क्तत्वम् ।

तथा च पञ्चमप्रपाठके वक्ष्यति—

" ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम् " [ सं० का० ६ प्र० ५ अ० १० ] इति ।

परिमितमल्पं पञ्चसंख्यानियमो वा । न ह्ययं नियमो मनुष्येष्वस्ति । अग्रसहिता शरेषीका सतूला । मनुष्याणामिषीकानियम एव नास्ति कुतः सतूलत्वनियमः ॥

विपक्षे बाधकपूर्वकं स्वपक्षं निगमयति—

" यदपतूलयाऽऽञ्जीत वज्र इव स्यात्सतूलयाऽऽङ्क्ते मित्रत्वाय " [ सं० का० ६ प्र० १ अ० १ ] इति ।

तूलरहितशरकाष्ठस्य तीक्ष्णाग्रत्वाद्वज्रसमत्वम् ॥

---

१ ख. न चाभ्य° । २ ख. °नुष्येषु योषित्सु अञ्ज° । ३ क. ग. °पक्षबा° ।

( यजमानकर्तृकप्राग्वंशप्रवेशोपयुक्ता मन्त्राः )

चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः—

कल्पः—"अथैनमेकविꣳशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति" इति।

प्रथमद्वितीयमन्त्रयोरच्छिद्रेणेत्यनुषज्यते। हे यजमान चितां ज्ञानानां पतिर्मनो देवस्त्वां पुनातु। वाचां शब्दानां पतिः सरस्वत्यसौ वा आदित्योऽच्छिद्रं पवित्रं तद्रूपोऽयं दर्भस्तोमः। जगन्निवासहेतोः सूर्यस्य रश्मिरूपा दर्भाः॥

दर्भस्तोमविशिष्टं मार्जनं विधत्ते—

"इन्द्रो वृत्रमहन्त्सोऽपोऽभ्यम्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत्तदपोदक्रामत्ते दर्भा अभवन्यद्दर्भपुञ्जीलैः पवयति या एव मेध्या यज्ञियाः सदेवा आपस्ताभिरेवैनं पवयति" [ सं० का० ६ प्र० १ अ० १ ] इति।

मेध्यं शुद्धं, यज्ञियं यज्ञार्हं, सदेवं देवताप्रियम्। उत्पवनब्राह्मणे दर्भोत्पत्तिर्व्याख्याता॥

दर्भस्तोमस्य संख्याविशेषान्विधत्ते—

"द्वाभ्यां पवयत्यहोरात्राभ्यामेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयाति पञ्चभिः पवयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवयति षड्भिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति सप्तभिः पवयति सप्त छन्दाꣳसि छन्दोभिरेवैनं पवयति नवभिः पवयति नव वै पुरुषे प्राणाः सप्राणमेवैनं पवयत्येकविꣳशत्या पवयति दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गं पवयति" [ सं० का० ६ प्र० १ अ० १ ] इति।

"गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह। बृहत्युष्णिहा ककुत्सूचीभिः शिम्यन्तु[2] त्वा" इति कैश्चिन्मन्त्र आम्नायते। तत्रोष्णिक्ककुभोरवान्तरभेदपरित्यागेन सप्त छन्दांसि। संचारस्थानभूतच्छिद्राभिप्रायेण प्राणानां नवत्वम्। अपरिवर्गं निःशेषम्। एकविंशतिपक्ष एवात्रानुष्ठेयः। "एकविꣳशत्या दर्भपुञ्जीलैः पवयति" इति बह्वृचब्राह्मण आम्नातत्वात्। तत्प्रशंसार्थमितरे पक्षा अनयुवानुवादः॥

---

१ ख. शोधयतु। २ ख. 'भिः शम्य'। ३ ख. 'इत्यश्वमेधे क'। ४ क. घ. ङ. कैस्मिश्चि'। ग. 'वादाः। म'।

मन्त्रं व्याचष्टे—

" चित्पतिस्त्वा पुनात्वित्याह मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पति- स्त्वा पुनात्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्र- सूत एवैनं पवयति " [ सं० का० ६ प्र० १ अ० १ ] इति ॥

## तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम्—

कल्पः—" यजमानं वाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमिति " इति ।

आदित्यरूपस्याच्छिद्रपवित्रस्य पतिः प्रेरकोऽन्तर्यामी । हे पवित्रपते तादृ- शस्य तव पवित्रेण यस्मा अग्निष्टोमकर्मणे कमात्मानं शोधयामि तत्कर्तुं शक्तो भूयासम् ॥

एतमभिप्रायं दर्शयति—

" तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्याहाऽऽशिषमेवै- तामाशास्ते " [ सं० का० ६ प्र० १ अ० १ इति ॥

## आ वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामहे—

बौधायनः—" अथैनं सव्ये पाणावभिपाद्य[1] शालामानयति आ वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इति " इति ।

आपस्तम्बः—" आ वो देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश्य " इति ।

हे देवा युष्माकं संबन्धिन्यस्मिन्नध्वरे वयं सत्यधर्माणोऽवश्यंभाव्यनुष्ठानपरा आगच्छामः । हे यज्ञसंबन्धिनो देवा यस्मादागुरे कर्मोद्यमे युष्मानाह्वास्याम- स्तस्माद्वयमत्राऽऽगच्छामः ॥

## इन्द्राग्नी द्यावापृथिवी आप ओषधीः—

बौधायनः—" पूर्वया द्वारा शालां प्रपादयति, इन्द्राग्नी द्यावापृथिवी आप ओषधीरिति " इति ।

आपस्तम्बः—" इन्द्राग्नी द्यावापृथिवी आप ओषधीरित्यपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य " इति ।

---

१ क. °भिप्रग°।

हे इन्द्रादय एनमनुजानीतेति शेषः ॥

**त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहि ॥**

बौधायनः—अथैनमग्रेणाऽऽहवनीयं पर्याहृत्य दक्षिणत उदङ्मुखमुपवेश्याऽऽहवनीयमीक्षयति त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहीति " इति ।

आपस्तम्बः—" त्वं दीक्षाणामधिपतिरसीत्याहवनीयमुपोपविशति " इति ।

हे आहवनीय त्वं दीक्षारूपाणां नियमानां पालकोऽस्यतस्त्वत्समीपे स्थितं मां पालय ॥

पूर्वोक्तपूतत्वप्रशंसापूर्वकं प्राचीनवंशप्रवेशं विधत्ते—

"यावन्तो वै देवा यज्ञायापुनत त एवाभवन्य एवं विद्वान्यज्ञाय पुनीते भवत्येव बहिः पवयित्वाऽन्तः प्रपादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्रणयति " [ सं० का० ६ प्र० १ अ० २ ] इति ।

अभवन्नैश्वर्यं प्राप्ताः । भवत्येवैश्वर्यं प्राप्नोत्येव ॥

अत्र विनियोगसंग्रहः—

" आपः शिर उनत्त्योप दर्भोऽत्रान्तर्हितः स्वधि ।
क्षुरं निधाय देवश्रूर्वपेत्स्वस्ति तदा जपेत् ॥ १ ॥
आपः स्नायादुदा जप्यं सोम वस्त्रपरिग्रहः ।
महीति नवनीतस्य ग्रहो वर्चोऽतिलेपनम् ॥ २ ॥
वृत्रेत्याङ्क्ते चित्पतिस्त्वात्रिभिर्दर्भेण पावयेत् ।
तस्येति जपति स्वामी ह्या वः प्राग्वंशवेशनम् ॥ ३ ॥
इन्द्राग्नी दक्षिणे गत्वा त्वमित्युपविशेदिह ।
प्रथमे ह्यनुवाकेऽस्मिन्मन्त्रा अष्टादशेरिताः ॥ ४ ॥ " इति ॥

अथ मीमांसा ।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" किं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यागकः ।
अङ्गाङ्गिता वा कालो वा ह्यपारार्थ्याय चाङ्गता ॥
दर्शादिलक्षिते काले सोमयागो विधीयते ।
स्वतन्त्रफलवत्त्वेन न युक्ताऽङ्गाङ्गिता तयोः " इति ॥

इदमाम्नायते—" दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत " इति । तत्रोभयोराग्निमारुतानूयाजवदन्याधीनत्वाभावाद्दर्शपूर्णमासोक्तेः पारार्थ्यपरिहाराय सोमस्य दर्शपूर्णमासाङ्गत्वबोधकोऽयं संयोग इति चेन्मैवम् । स्वतन्त्रफल-

वतः सोमयागस्याङ्गत्वासंभवात् । फलवत्संनिधावफलं तदङ्गमिति न्यायात् । न चात्र बृहस्पतिसवन्यायेन सोमधर्मकमफलं कर्मान्तरं विधीयत इति शक्यं वक्तुम् । सोमशब्दस्य बृहस्पतिसवशब्दवन्नामत्वाभावेन धर्मातिदेशकत्वाभावात् । क्त्वाप्रत्ययस्तु असत्यङ्गाङ्गिभावे कर्त्रैक्यमात्रेणोपपद्यते । तस्माद्दर्शपूर्णमासशब्दस्य पारार्थ्यमभ्युपेत्यापि तदिष्ट्युपलक्षित उत्तरकाले सोमविधिरयम् ।

एतदेवाभिप्रेत्य रथरूपकमाम्नायते—

" एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यति " [सं० का० २ प्र० ५ अ० ६] इति।

अवसाने निश्चिते वरे मार्गे यथा रथेन क्षुण्णे मार्गे गन्तुः कण्टकपाषाणादिबाधराहित्येन सुखं भवति तथा प्रथमं दर्शपूर्णमासाविष्टवत उत्तरकाले तदिष्टिविकृतिषु सोमाङ्गभूतदीक्षणीयाप्रायणीयादिषु कर्मानुष्ठानं सुकरं भवतीत्यर्थः । तस्मात्कालार्थः संयोगः ।

पञ्चमाध्यायस्य चतुर्थपादे चिन्तितम्—

" दर्शादीष्ट्वा सोमयागः क्रमोऽयं नियतो न वा ।
उक्तेराद्यो न सोमस्याऽऽधानानन्तरताश्रुतेः " इति ॥

दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेति क्त्वाप्रत्ययेनावगम्यमानः क्रमो नियत इति चेन्मैवम् । सोमेन यक्ष्यमाणोऽग्नीनादधीतेत्याधानानन्तरताया अपि श्रवणात् । तस्मादिष्टिसोमयोः पौर्वापर्यं न नियतम् ।

तत्रैवान्यच्चिन्तितम्—

" विप्रस्य सोमपूर्वत्वं नियतं वा न वाऽग्रिमः ।
उत्कर्षतो नैवमग्नीषोमीयस्यैव तच्छ्रुतेः " इति ॥

इष्टिपूर्वत्वं सोमपूर्वत्वं च विकल्पितमिति यदुक्तं तत्र ब्राह्मणस्य सोमपूर्वत्वमेव नियतम् । कुतः । उत्कर्षश्रवणात् " आग्नेयो[1] वै ब्राह्मणो देवतया[2] स सोमेनेष्ट्वाऽग्नीषोमीयो भवति यदेवादः पौर्णमासं हविस्तत्तर्ह्यनु निर्वपेत्तर्ह्युभयदेवतो भवति " इति । अस्यायमर्थः—प्रजापतेर्मुखादग्निर्ब्राह्मणश्चेत्युभावुत्पन्नौ । ततो ब्राह्मणस्यैकैव देवतेत्याग्नेय एव ब्राह्मणो न तु सौम्यः सोमस्य तद्देवतात्वाभावात् । यदा स ब्राह्मणः सोमेन यजति तदा सोमोऽप्यस्य देवतेत्यग्नीषोमीयो भवति । तस्याग्नीषोमीयस्य ब्राह्मणस्यानुरूपं पौर्णमासमग्नीषो-

१ क. ङ. च. °यो ब्रा° । २ क. ङ. च. °या सो° ।

मीयपुरोडाशरूपं हविः सोमादूर्ध्वमनुनिर्वपेत् । तदा स ब्राह्मणो देवताद्वयसंबन्धी भवतीति । यद्यप्यत्र कर्मान्तरं किंचिद्विधीयत इति कश्चिन्मन्येत तथाऽपि पौर्णमासं हविरिति विस्पष्टं प्रत्यभिज्ञानान्न कर्मान्तरं किं तु दर्शपूर्णमासयोः सोमादूर्ध्वमुत्कर्षः । तस्माद्विप्रस्य सोमपूर्वत्वमेव नियतमिति प्राप्ते ब्रूमः—नात्र दर्शशब्दः पूर्णमासशब्दो वा कश्चिद्यागवाची श्रूयते । पौर्णमासमित्येष तद्धितान्तो हविर्विशेषणत्वेनोपन्यस्यते । तच्च हविरग्नीषोमीयपुरोडाशरूपमिति देवताद्वयेन संस्तवादवगम्यते । तस्मादेकस्यैव हविष उत्कर्षो न तु कृत्स्नयोर्दर्शपूर्णमासयोः । तथा सति ब्राह्मणस्यैकस्मिन्नेवाग्नीषोमीयपुरोडाशे सोमपूर्वत्वनियमः । इतरत्र क्षत्रियवैश्ययोरिवास्यापीष्टिपूर्वत्वसोमपूर्वत्वे विकल्प्येते ।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" दिशं प्रतीचीं मनुजा व्यभजन्तेत्यसौ विधिः ।
वादो वाऽत्र पुराकल्पस्तुत्यर्थो विधिमर्हति ॥
प्राचीनवंशवाक्योक्तेर्विधानस्यैकवाक्यतः ।
दिग्विधावर्थवादोऽयमुपवीते निवीतवत् " इति ॥

ज्योतिष्टोमे श्रूयते—

" प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा यत्प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्तते " [ सं० का० ६ प्र० १ अ० १ ] इति । तत्र देवादीनां कर्मानधिकारान्न तत्र विधिशङ्का । मनुष्याः प्रतीचीं विभजेयुरित्येव विधिः स्यात् । कुतः । पुराकल्परूपेणार्थवादेन स्तूयमानत्वात् । पूर्वपुरुषाचरितत्वाभिधानं पुराकल्पः । व्यभजन्तेत्यनेन भूतार्थवाचिना तदभिधीयते । तस्माद्विधिरयमिति पूर्वः पक्षः । यस्य मण्डपविशेषस्योपरि वंशाः प्रागग्रा भवन्ति स प्राचीनवंशः । तद्विध्येकवाक्यत्वाभ्युपगमादर्थवादः । सायंकालीनाध्यर्यादौ प्रतीची प्राप्ता ।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" वपतीत्युपकारः किं द्वयोर्मुख्याङ्गयोरुत ।
मुख्य एव द्वयोरस्य कृत्स्नकर्तृगतत्वतः ॥
युक्तः शास्त्रीयसंस्कारो मुख्येऽस्य फलभोगि(जि)नः ।
विनाऽपि संस्कृतिं दृष्टं कर्तृत्वं तस्य नास्ति सः " इति ॥

---

१ ख 'कयता। दि'।

ज्योतिष्टोमे केशश्मश्रुवपनपयोव्रतादयो यजमानसंस्कारा आम्नाताः। ग्रहैः सोमहोमो ज्योतिष्टोमे मुख्यः। अग्नीषोमीयपश्वादिकमङ्गम्। तत्र द्वयोर्मुख्याङ्गयोरेते वपनादय उपकुर्वन्ति। कुतः। कर्तृधर्मत्वात्। यजमानो हि कर्तृतया वपनादिभिः संस्क्रियते। कर्तृत्वं च यथा मुख्यं प्रति तस्य विद्यते तथाऽङ्गं प्रत्यप्यस्ति। तस्मादुभयोरुपकार इति चेन्मैवम्। द्वौ हि यजमानस्याऽऽकारौ क्रियाकर्तृत्वं फलभोक्तृत्वं चेति। तयोरदृष्टः फलभोगः क्रियानिष्पत्तिश्च दृष्टा। तथा सति वपनादिकृतोपकारस्याप्यदृष्टत्वाद्भोक्तृशेषा वपनादयः फलभोगसाधने मुख्य एव पर्यवस्यन्ति। वपनादिसंस्काररहितैर्ऋत्विग्भिः कृषीवलादिभिश्च क्रिया निष्पाद्यमाना दृश्यते। ततस्तत्र कर्तृत्वाकारे वपनादिकृतः स उपकारो नास्ति। तस्माददृष्टफलभोजिनो यजमानस्य योऽयमदृष्टरूपः शास्त्रीयसंस्कारः सोऽयं मुख्ये कर्मणि युक्तो नाङ्गेषु। नात्र पूर्ववद्वाक्यमस्ति। येन परम्परया फलसाधनाङ्गेषु वपनाद्युपकारः शङ्क्येत। प्रकरणं तु मुख्यस्यैव न त्वङ्गानाम्। तस्मान्न तेषूपकारः।

तत्रैवाष्टमे पादे चिन्तितम्—

“ संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथ वा।
अध्वर्योस्तत्र शक्तत्वात्तद्वेदोक्तेश्च तस्य ते॥
संस्कारैर्योग्यतां प्राप्य स्वकार्यं कर्तुमृत्विजः।
क्रीणात्यन्यक्रिया तेषां संस्क्रिया यजमानगा ” इति॥

आप उन्दन्तु जीवस इत्याद्याः संस्कारमन्त्राः। तद्विधयश्चाध्वर्युवेदे समाम्नाताः—“ केशश्मश्रु वपते नखानि निकृन्तते ” इति। शक्तश्चाध्वर्युर्वपनादौ। तस्मात्तस्याध्वर्योर्वपनादिसंस्कारा इति चेन्मैवम्। वपनादिसंस्कारा यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते। तथा च ब्राह्मणम्—“ केशश्मश्रु वपते नखानि निकृन्तते मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति ” [ सं० का० ६ प्र० १ अ० १ ] इति। न ह्यध्वर्युवपनेन यजमानगता मृता त्वगपैति। योग्यस्य हि कर्माधिकारे सति पश्चात्प्रयासरूपेषु व्यापारेषु स्वयमशक्तः सन्कर्मकरानृत्विजः परिक्रीणाति। लोकेऽपि रोगिणः स्वामिन औषधाद्यानयन एव भृत्या जीवितदानेन परिक्रीयन्ते। न तु तदौषधं भृत्याः सेवन्ते। तस्मादितरक्रियर्त्विजाम्। संस्कारस्तु यजमानस्य। क्वचित्तु वचनादृत्विजामपि संस्कारोऽस्तु।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" जुह्वाः पर्णमयीत्वेन न पापश्रुतिरञ्जनात्।
वैरिदृग्वर्जनं वर्म प्रयाजैः पुरुषाय किम्॥
क्रतवे वाऽग्रिमो भानात्फलस्य न हि साध्यता।
विभाति क्रतवे तस्मादर्थवादः फलं भवेत् " इति॥

इदमाम्नायते—" यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै " इति। तत्र यज्जुह्वाः प्रकृतिभूतं पर्णद्रव्यं यश्चाञ्जनेन चक्षुःसंस्कारो यच्च प्रयाजानूयाजरूपं वर्म तत्त्रितयं पुरुषार्थत्वेन विधीयते। कुतः। पापश्लोकश्रवणराहित्यादेः पुरुषसंबन्धिफलस्य प्रतिभानादिति चेन्मैवम्। फलं हि साध्यं भवति। न चात्र साध्यता प्रतिभासते। न शृणोति वृङ्क्ते वर्म क्रियत इति वर्तमानत्वनिर्देशात्। अतः क्रत्वर्था एते विधयः। तत्र पर्णमयीत्वस्यानारभ्याधीतस्यापि वाक्येन क्रतुसंबन्धः। संस्कारक(व)र्मणोस्तु प्रकरणेन। क्रत्वर्थानां क्रतुनिष्पादनव्यतिरेकेण फलाकाङ्क्षाया असंभवाद्वर्तमाननिर्देशस्य विपरिणामं कृत्वाऽपि फलं कल्पयितुं न शक्यम्। तस्मात्फलवत्त्वभ्रमहेतुः पापश्लोकश्रवणराहित्यादिरर्थवादः।

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

" नानुषङ्गोऽनुषङ्गो वाऽच्छिद्रेणेत्यस्य शेषिणौ।
चित्पतिस्त्वेत्यनाकाङ्क्षावतो नात्रानुषज्यते॥
करणत्वं क्रियापेक्षं क्रिया चैका पुनात्विति।
मन्त्रद्व(त्र)येऽतस्तद्वारा सर्वशेषोऽनुषज्यते " इति॥

ज्योतिष्टोमे दीक्षाप्रकरणे पठ्यते—" चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः " इति। तत्र तृतीयमन्त्रशेषोऽच्छिद्रेणेत्यादिभागः प्रथमद्वितीयमन्त्रयोर्नानुषज्यते। कुतः। न हि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनात्वित्यनयोर्मन्त्रयोः शेषिणोः संपूर्णवाक्ययोः काचिच्छेषाकाङ्क्षाऽस्तीति प्राप्ते ब्रूमः—मा भूच्छेषिणोराकाङ्क्षा तथाऽपि शेषस्याऽऽकाङ्क्षाऽस्ति। पवित्रेण रश्मिभिरित्युक्तं करणत्वं क्रियामपेक्षते। क्रिया च पुनात्वित्येषा त्रिष्वपि मन्त्रेष्वेका। तथा च क्रियया संबद्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षेऽपि यथाऽन्वेति तथा पूर्वयोरप्यन्वेतु। तस्मादनुषङ्गः।

१ क. ग. कर्म। २ क. ख. ग. कर्म। ३ क. ख. ग. °लत्वभ्र°। ४ क. ग. शेषिता।

अथ च्छन्दः ।

आप उन्दन्त्विति द्विपदा गायत्री । आपो अस्मानिति द्विपदा विराट्। विश्वमित्येकपदा विराट् । उदाभ्य इति तद्वत् । चित्पतिरित्यनुषङ्गे सति तिस्रो गायत्र्यः । आ वो देवास इत्यनुष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टके द्वितयिप्रपाठके द्वितीयोऽनुवाकः । )

---

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहाऽऽपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहर्क्सामयोः शिल्पे स्थस्ते वामा रभे ते मा (१) पातमाऽस्य यज्ञस्योदृच इमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳ शिशाधि ययाऽति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमोर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीर्विष्णोः शर्मासि शर्म यजमानस्य

( प्राचीनवंशप्रविष्टयजमानस्य दीक्षाङ्गभूता मन्त्राः )

शर्म मे यच्छ नक्षत्राणां माऽतीकाशात्पाहीन्द्रस्य योनिरसि ( २ ) मा मां हिꣳसीः कृष्यै त्वा सुसस्यायै सुपिप्पलाभ्यस्त्वौषधीभ्यः सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृचः स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादा रंभे ( ३ ) ॥

( मा योनिरसि त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

आकूत्या इत्या—कूत्यै । प्रयुज इति प्र—युजे । अग्नये । स्वाहा । मेधायै । मनसे । अग्नये । स्वाहा । दीक्षायै । तपसे । अग्नये । स्वाहा । सरस्वत्यै । पूष्णे । अग्नये । स्वाहा । आपः । देवीः । बृहतीः । विश्वशंभुव इति विश्व—शंभुवः । द्यावापृथिवी इति द्यावा—पृथिवी । उरु । अन्तरिक्षम् । बृहस्पतिः । नः । हविषा । वृधातु । स्वाहा । विश्वे । देवस्य । नेतुः । मर्तः । वृणीत । सख्यम् । विश्वे । रायः । इषु-

ध्यसि । द्युम्नम् । वृणीत । पुष्यसे । स्वाहा । ऋक्सामयोरित्यृक्—सामयोः । शिल्पे इति । स्थः । ते इति । वाम् । एति । रभे । ते इति । मा । (१) पातम् । एति । अस्य । यज्ञस्य । उदृच इत्युत्—ऋचः । इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् । वरुण । समिति । शिशाधि । यया । अतीति । विश्वा । दुरितेति दुः—इता । तरेम । सुतर्माणमिति सु—तर्माणम् । अधीति । नावम् । रुहेम । ऊर्क् । असि । आङ्गिरसी । ऊर्णम्रदा इत्यूर्ण—म्रदाः । ऊर्जम् । मे । यच्छ । पाहि । मा । मा । मा । हिꣳसीः । विष्णोः । शर्म । असि । शर्म । यजमानस्य । शर्म । मे । यच्छ । नक्षत्राणाम् । मा । अतीकाशात् । पाहि । इन्द्रस्य । योनिः । असि । (२) मा । मा । हिꣳसीः । कृष्यै । त्वा । सुसस्याया इति सु—सस्यायै । सुपिप्पलाभ्य इति सु—पिप्पलाभ्यः । त्वा । ओषधीभ्य इत्योषधी—भ्यः । सूपस्था इति सु—उपस्थाः । देवः । वनस्पतिः । ऊर्ध्वः । मा । पाहि । एति । उदृच इत्युत्—ऋचः । स्वाहा । यज्ञम् । मनसा । स्वाहा । द्यावापृथिवीभ्यामिति द्यावा—पृथिवीभ्याम् । स्वाहा ।

( प्राचीनवंशप्रविष्टयजमानस्य दीक्षाङ्गभूता मन्त्राः )

उरोः। अन्तरिक्षात्। स्वाहा। यज्ञम्। वातात्। एति। रभे (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

( अथ प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः। )

---

प्रथमानुवाके प्राचीनवंशप्रवेशोऽभिहितः। अथ प्रविष्टस्य दीक्षानियमरूपेण तपसा शरीरशुद्धौ सत्यां पश्चाद्देवयजनस्वीकारादियोग्यतेति द्वितीयानुवाके दीक्षा विधीयते। तत्र दीक्षणीयेष्टावध्वरमन्त्राणामतिदेशतः प्राप्तत्वाद्दीक्षाहुत्यादिमन्त्रा एवोच्यन्ते।

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहाऽऽपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा—

कल्पः—" आज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्रुचा पञ्चमीं जुहोति आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहेति " इति।

यज्ञं करिष्यामीत्येवंविधो मानसः संकल्प आकूतिः। तत्संपूर्त्यर्थमविघ्नेन मां प्रेरयते वह्नये हविरिदं हुतमस्तु। श्रुतयोः फलसाधनयोर्धारणाशक्तिर्मेधा। तत्सिद्ध्यर्थं मदीयमनोभिमानिने वह्नये हुतमस्तु। दीक्षा व्रतनियमः। तत्सिद्ध्यर्थं मदीयशरीरतपोभिमानिने वह्नये हुतमस्तु। मन्त्रोच्चारणशक्तिः सरस्वती। तत्सिद्ध्यर्थं वागिन्द्रियपोषकाय वह्नये हुतमस्तु। बृहस्पतिरस्माकं

---

१ ख. °ष्टावाध्वर्यवम°।

हविषा वर्धताम् । हे आपो भवत्योऽपि वर्धन्ताम् । द्यावापृथिव्यौ वर्धताम्। विस्तीर्णमन्तरिक्षं च वर्धताम् । कीदृश्य आपः। देवीर्वृष्टिरूपेण द्युलोकादागताः । बृहतीर्बहुलाः । विश्वशंभुवः सस्यपाचनेन सर्वस्य जगतः सुखं कुर्वत्यः ॥

आहुतीर्विधत्ते—

" अदीक्षित एकयाऽऽहुत्येत्याहुः स्रुवेण चतस्रो जुहोति दीक्षितत्वाय स्रुचा पञ्चमीं पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे " [ सं० का० ६ प्र० १ अ० २ ] इति ॥

प्रथममन्त्र आकूत्युपयोगमाह—

" आकूत्यै प्रयुजेऽग्नये स्वाहेत्याहाऽऽकूत्या हि पुरुषो यज्ञमभि प्रयुङ्क्ते यजेयेति " [ सं० का० ६ प्र० १ अ० २ ] इति।

यदा मनसाऽऽकूतिस्तदा पुरुष ऋत्विजामग्रे यज्ञमभिलक्ष्य यजेयेति वाचं प्रयुङ्क्ते ॥

द्वितीयमन्त्रे मेधोपयोगमाह—

"मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति" [ सं० का० ६ प्र० १ अ० २ ] इति ।

श्रुतयोः फलसाधनयोरविस्मरणेन धृतयोर्मनसा यज्ञकर्तव्यतां प्रतिपद्यते। तपोभिमानिनो वह्नेरनुग्रहेण दीक्षासिद्धिः स्पष्टेत्यभिप्रेत्य तृतीयमन्त्रो न व्याख्यातः ॥

चतुर्थमन्त्रे पदवाक्ययोरर्थमाह—

" सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्या यज्ञं प्रयुङ्क्ते " [ सं० का० ६ प्र० १ अ० २ ] इति।

वाचा मन्त्रोच्चारणसिद्धिः। पृथिव्या यज्ञस्य देवयजनव्रीह्यादिद्रव्यसिद्धिः ॥

पञ्चममन्त्रस्य पूर्वभागे बहुविशेषणाभिप्रायमाह—

" आपो देवीर्बृहतीर्विश्वशंभुव इत्याह या वै वर्ष्यास्ता आपो देवीर्बृहतीर्विश्वशंभुवः " [ सं० का० ६ प्र० १ अ० २ ] इति ।

वर्षे भवा वर्ष्याः ॥

विपक्षे बाधमाह—

" यदेतद्यजुर्न ब्रूयाद्दिव्या आपोऽशान्ता इमं लोकमागच्छेयुः " [ सं० का० ६ प्र० १ अ० २ ] इति ।

---

१ ख. °तिर्भवति तदा ।

दिव्यत्वादशनिवदपामशान्तत्वम् ॥

यस्मान्मन्त्रोक्तगुणस्तुल्या जलदेवतायाः शान्तिस्तस्माच्छान्ताः सुखकारिण्य इत्येतं स्वपक्षमुपसंहरति—

"आपो देवीर्बृहतीर्विश्वशंभुव इत्याहास्मा एवैना लोकाय शमयति तस्माच्छान्ता इमं लोकमागच्छन्ति" [ सं० का० ६ प्र० १ अ० २ ] इति ॥

मन्त्रस्य द्वितीयतृतीयभागयोरुपयोगमाह—

"द्यावापृथिवी इत्याह द्यावापृथिव्योर्हि यज्ञ उर्वन्तरिक्षमित्याहान्तरिक्षे हि यज्ञः" [ सं० का० ६ प्र० १ अ० २ ] इति ।

भूमौ देवयजनमन्तरिक्षेऽनुष्ठानाय संचारो दिवि फलमिति यज्ञस्य लोकत्रयवर्तित्वम् ॥

मन्त्रस्य चतुर्थभागाभिप्रायमाह—

"बृहस्पतिर्नो हविषा वृधात्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै यज्ञमवरुन्धे" [ सं० का० ६ प्र० १ अ० २ ] इति ।

देवानां मध्ये बृहस्पतेर्गुरुत्वेन परब्रह्मस्वरूपत्वम् ॥

हविषा विधेरिति शाखान्तरमन्त्रपाठस्तं निन्दित्वा स्वपाठं प्रशंसति—

"यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणुमेव परिवृणक्ति" [ सं० का० ६ प्र० १ अ० २ ] इति ।

बृहस्पतिर्विदधात्वित्युक्ते सत्यभिवृद्धेरसूचितत्वाद्यज्ञविघ्नं यजमानः प्राप्नुयाद्वृधात्वित्युक्त्या तत्परिहारः ॥

## विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा—

बौधायनः—" अपरं चतुर्गृहीतं गृहीत्वाऽऽज्यपूर्णेन(र्णया)स्रुचौद्ग्रहणं जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेति" इति ।

आपस्तम्बः—" द्वादशगृहीतेन स्रुचं पूरयित्वा विश्वे देवस्य नेतुरिति पूर्णाहुतिं षष्ठीम्" इति ।

विश्वे विश्वात्मकस्य नेतुर्जगन्निर्वाहकस्य देवस्य सख्यमनुग्रहं मर्तो मरणवान्यजमानः सहसा वृणीत । तच्च सख्यमीदृशेन स्तोत्रेण लभ्यते । विश्वे हे विश्वा-

---

१ क. °ष्टाय । २ क. ङ. °पूर्णे स्रुचामौद्ग्र° । च. °पूर्णा स्रुचमौद्ग्र° ।

त्मक रायो धनस्येषुध्यसीशिषे । स्तुत्वा (त्वा) पुष्यसे यज्ञपोषणाय द्युम्नं धनं याचेत । इदं हविस्तव हुतमस्तु ॥

तमिममौद्ग्रहणहोमं विधास्यन्नाख्यायिकया पदं निर्वक्ति—

" प्रजापतिर्यज्ञमसृजत सोऽस्मात्सृष्टः पराङैत्स प्रयजुरव्लीनात्म साम तमृगुदयच्छद्यदुगुदयच्छत्तदौद्ग्रहणस्यौद्ग्रहणत्वम् " [ सं० का० ६ प्र० १ अ० २ ] इति ।

पलायमानं यज्ञपुरुषं ग्रहीतुं प्रजापतिना प्रेरितानां त्रिविधमन्त्रपुरुषाणां मध्ये यजुःसामपुरुषौ स यज्ञः प्रकर्षेणाव्लीनादावृणोत् । ऋग्देवता तु तं यज्ञमुदगृह्णात्तस्मादेतदृक्साध्यमनुष्ठानमौद्ग्रहणम् ॥

तदेतद्विधत्ते—

" ऋचा जुहोति यज्ञस्योद्यत्यै " [ सं० का० ६ प्र० १ अ० २ ] इति॥

तदीयं छन्दः प्रशंसति—

" अनुष्टुप्छन्दसामुदयच्छदित्याहुस्तस्मादनुष्टुभा जुहोति यज्ञस्योद्यत्यै " [ सं० का० ६ प्र० १ अ० २ ] इति ॥

एतन्मन्त्रगतमृक्त्वं छन्दश्च यथा प्रशस्तं तथैव पदसंख्यामपि प्रशंसति—

" द्वादश वात्सबन्धान्युदयच्छन्नित्याहुस्तस्माद्द्वादशभिर्वात्सबन्धविदो दीक्षयन्ति " [ सं० का० ६ प्र० १ अ० २ ] इति ।

यथा वत्स एकैकेन[1] पाशेन[2] प्रबध्यते तथा विश्वे देवस्येत्यादिषु द्वादशसु पदेष्वेकैकेन पदेन यज्ञो बध्यतेऽतस्तानि पदानि वात्सबन्धानि । वत्सस्येव बन्धो वत्सबन्धः । तदीयानि पदानि यज्ञमुद्गृह्णन्तीत्याहुः पूर्वेऽभिज्ञाः । तद्विदोऽध्वर्यव इदानीमपि तैः पदैर्जुह्वति ॥

पूर्वमभिज्ञप्रसिद्ध्या छन्दसः प्रशंसा कृता । इदानीं वागात्मकत्वेन छन्दः स्तूयते—

" सा वा एषर्गनुष्टुग्वागनुष्टुग्यदेतयर्चा दीक्षयति वाचैवैनꣳ सर्वया दीक्षयति " [ सं० का० ६ प्र० १ अ० २ ] इति ।

अनुष्टुभो वाग्विशेषत्वेन वाग्रूपत्वम् । छन्दोन्तरस्यापि तत्सममिति चेत्तर्हि प्रसङ्गे सति तदपि तथा स्तोतव्यम् ॥

लिङ्गोपजीवनेन मन्त्रं स्तौति—

" विश्वे देवस्य नेतुरित्याह सावित्र्येतेन मर्तो वृणीत सख्यमित्याह पितृदेवत्यैतेन विश्वे राय इषुध्यसीत्याह वैश्वदेव्येतेन द्युम्नं वृणीत पुष्यस इत्याह

---

१ ख. एके° । २ क. पादेन ।

( प्राचीनवंशप्रविष्टयजमानस्य दीक्षाङ्गभूता मन्त्राः )

पौष्णयेतेन सा वा एषक्सर्वदेवत्या यदेतयर्चा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति " [ सं० का० ६ प्र० १ अ० २ ] इति।

प्रथमपादे सवितृपर्यायस्य नेतृशब्दस्य प्रयोगेण सावित्रत्वम्। द्वितीयपादे मर्तशब्देन मृतपितृसूचनात्पितृदेवत्यत्वम्। तृतीयपादे विश्वशब्दस्य प्रयोगाद्वैश्वदेवत्वम्। चतुर्थपादे पुष्यस इत्युक्तत्वात्पौष्णत्वम्॥

अक्षरसंख्यामुपजीव्य स्तौति—

"सप्ताक्षरं प्रथमं पदमष्टाक्षराणि त्रीणि यानि त्रीणि तान्यष्टावुपयन्ति यानि चत्वारि तान्यष्टौ यदष्टाक्षरा तेन गायत्री यदेकादशाक्षरा तेन त्रिष्टुग्यद्द्वादशाक्षरा तेन जगती सा वा एषक्सर्वाणि च्छन्दाꣳसि यदेतयर्चा दीक्षयति सर्वैभिरेवैनं छन्दोभिर्दीक्षयति " [ सं० का० ६ प्र० १ अ० २ ] इति।

प्रथमं पदमृचि प्रथमः पादः। द्वितीयादिषु त्रिषु पादेष्वस्ति प्रत्येकमक्षरगताष्टत्वसंख्या। द्वितीयपादे सखियमित्यक्षरत्रयेणाष्टत्वं पूरणीयम्। प्रथमपादं द्वेधा विभज्य त्रीण्यक्षराणि तृतीयपादे चत्वारि चतुर्थपादे गणनीयानि। तथा सति द्वितीयतृतीयचतुर्थपादा अक्षरसंख्याभिर्गायत्र्यादिसमा इति च्छन्दस्त्रयसंपत्तिः। गायत्र्यादीनां त्रयाणां सवनत्रये प्राधान्यात्सर्वच्छन्दःसंपत्तिः॥

सप्तसंख्यामुपजीव्य स्तौति—

" सप्ताक्षरं प्रथमं पदꣳ सप्तपदा शक्करी पशवः शक्करी पशूनेवावरुन्धे " [ सं० का० ६ प्र० १ अ० २ ] इति।

विश्वे देवस्य नेतुरित्यत्र सप्ताक्षराणि। प्रोष्वस्मै पुरो रथमित्यस्यां च शक्कर्यामृचि सप्त पादाः। शक्कर्याः पशुप्रदत्वात्पशुरूपत्वम्॥

अशेषजगद्व्यवहारसमत्वेन मन्त्रं स्तौति—

" एकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उपजीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै " [ सं० का० ६ प्र० १ अ० २ ] इति।

यस्मादस्यामृचि प्रथमः पाद एकेनाक्षरेण न्यूनस्तस्मान्मनुष्या वाचः स्वरूपमनाप्तमसंपूर्णमुपजीवन्ति। मूलाधारादुत्पन्नो वायुर्मूर्धपर्यन्तं प्रसृतो वक्त्रे तत्तत्स्थानेषु वर्णानुत्पादयति। तदिदं वर्णाभिव्यक्तिलक्षणं वाचश्चतुर्थं पदम्। [इत]राणि तु त्रीणि कण्ठादध एव[1] रूढत्वान्नाभिव्यञ्जयितुं शक्यन्ते। तथा

१ ख. °व गूढ°।

चाऽऽम्नायते—"गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" इति । एतेनासंपूर्णवाग्व्यवहारसाम्यं दर्शितम् । किं चेयमृगुत्तरेषु पादेष्वक्षरपूर्णा तेन सृष्टिपूर्णप्रजापतिसाम्यात्तत्प्राप्तये भवति । प्रथमपादे यदक्षरन्यूनत्वं तेन सृष्टिशून्यजगद्बीजसाम्यात्प्रजोत्पत्तये भवति ॥

ऋक्सामयोः शिल्पे स्थस्ते वामा रभे
ते मा पातमाऽस्य यज्ञस्योदृचः—

कल्पः—" अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तस्य शुक्लकृष्णे संमृशति शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिर्ऋक्सामयोः शिल्पे स्थस्ते वामा रभे ते मा पातमाऽस्य यज्ञस्योदृच इति " इति ।

हे शुक्लकृष्णे रेखे युवामृक्सामयोः संबन्धिनी चित्रे भवथः । एतच्च ब्राह्मणे स्पष्टी भविष्यति । तादृशौ ते युवां स्पृशामि । अस्य यज्ञस्य येयमृगुत्तमा तयोपलक्षिता या कर्मसमाप्तिस्तत्पर्यन्तं ते युवां पालयतम् ॥

इमं मन्त्रमवतारयन्नाख्यायिकया शिल्पत्वं[2] विशदयति—

" ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वाऽपक्रम्यातिष्ठतां तेऽमन्यन्त यं वा इमे उपावर्त्स्यतः स इदं भविष्यतीति ते उपामन्त्रयन्त ते अहोरात्रयोर्महिमानमपनिधाय देवानुपावर्तेतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत्कृष्णम् " [ सं० का० ६ प्र० १ अ० ३ ] इति ।

ऋक्सामे देवते केनापि निमित्तेन देवयज्ञार्थमात्मानमप्रकाशयमाने आत्मतिरोधानाय कृष्णमृगो भूत्वा तदीयं संपूर्णं रूपं कृत्वा देवेभ्योऽपक्रम्य क्वचिद्गूढे अतिष्ठताम् । देवा विचारितवन्तो यं पुरुषमिमे ऋक्सामे प्राप्स्यतः स इदं यज्ञफलं प्राप्स्यतीति । देवास्तु ऋक्सामे रहसि केनाप्युपायेनोपच्छन्दितवन्तः । ते उभे अहोरात्रमहिमानं शुक्लकृष्णवर्णद्वयं स्वकीये मृगशरीरे स्थापयित्वा देवसमीपमागच्छताम् । कृष्णाजिनस्य यच्छुक्लं स एष ऋचा स्वीकृतोऽह्नो वर्णः । यत्कृष्णं स एष साम्ना स्वीकृतो रात्रेर्वर्णः ॥

शिल्पत्वमुपपाद्य मन्त्रं व्याचष्टे—

" ऋक्सामयोः शिल्पे स्थ इत्याहर्क्सामे एवावरुन्धे " [ सं० का० ६ प्र० १ अ० ३ ] इति ॥

---

१ क. ड. च. °लिरिति ऋक्सा° । २ क. शिल्पं दर्शय° ।

( प्राचीनवंशप्रविष्टयजमानस्य दीक्षाङ्गभूता मन्त्राः )

न केवलमृक्साममाप्तिः। किं त्वहोरात्रसारप्राप्तिश्चेत्याह—

"एष वा अह्नो वर्णो यच्छुक्लं कृष्णाजिनस्यैष रात्रिया यत्कृष्णं यदेवैनयोस्तत्र न्यक्तं तदेवावरुन्धे" [ सं० का० ६ प्र० १ अ० ३ ] इति।

एनयोरहोरात्रयोः संबन्धि यत्सारं तत्रक्सामयोर्न्यक्तं गूढं तदपि प्राप्नोति॥

विधत्ते—

"कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत्कृष्णाजिनं ब्रह्मणैवैनं दीक्षयति" [ सं० का० ६ प्र० १ अ० ३ ] इति।

ब्रह्म वेदस्तद्रूपत्वं कृष्णाजिनस्य। ऋक्सामशिल्पधारित्वात्तदुपपन्नम्। दीक्षयति कृष्णाजिनेन यजमानं योजयति। योजनं द्विविधम्। आस्तीर्णस्य कृष्णाजिनस्याऽऽरोहणमन्यस्य कृष्णाजिनस्य प्रावरणं च। तत्प्रकार आपस्तम्बेन दर्शितः—"कृष्णाजिनेन यजमानं दीक्षयति द्वाभ्याꣳ समस्य दीक्षेतान्तर्माꣳसाभ्यां बहिर्लोमाभ्यां यद्येकं स्याद्दक्षिणं पूर्वं पादं प्रतिपी[1]ड्येत्" इति॥

इमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं
वरुण सꣳ शिशाधि ययाऽति विश्वा
दुरिता तरेम सुतर्माणमधि नावꣳ रुहेम—

कल्पः—"अथ दक्षिणं जान्वाच्याभिसर्पतीमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳ शिशाधि ययाऽति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमेति" इति।

हे वरुण देवेमामग्निष्टोमविषयां धियमुपाददानस्य यजमानस्य संबन्धिनं दक्षं समृद्धमग्निष्टोमं क्रतुं संशिशाधि सम्यगुपदिश्य पारं नय। वयमपि पारं गन्तुं सर्वाणि विघ्नरूपदुरितानि यया नावाऽत्यन्तं तरेम तां सुखेन तरणे समर्थामिमां कृष्णाजिनरूपां नावमधिरुहेम॥

मन्त्रस्य स्पष्टार्थतामाह—

"इमां धियꣳ शिक्षमाणस्य देवेत्याह यथायजुरेवैतत्" [ सं० का० ६ प्र० १ अ० ३ ] इति॥

ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा
मा मा हिꣳसीर्विष्णोः शर्मासि शर्म यजमानस्य
शर्म मे यच्छ नक्षत्राणां माऽतीकाशात्पाहि—

---

१ क. °तिपिड्येत्।

बौधायनः—" प्रदक्षिणं मेखलां पर्यस्यति ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीरिति अथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छेति वसनस्यातीकाशेषु यजमानं वाचयति नक्षत्राणां माऽतीकाशात्पाहीति " इति ।

हे मेखले त्वमङ्गिरसां संबन्धिन्यम्रसरूपा कम्बलवन्मृदुरस्यतोऽन्नरसं मे प्रयच्छ, मां पालय, हिंसां बन्धनेन वेदनारूपां मा कुरु । हे वस्त्र त्वं विष्णोः सुखप्रदमसि, यजमानस्य सुखं प्रयच्छ, ममापि सुखं प्रयच्छ । हे वस्त्र मां नक्षत्रप्रकाशात्पाहि । शाखान्तरानुसारेण हे उष्णीषेति व्याख्येयम् ॥

तदिदं बौधायनेन मन्त्रक्रममनुसृत्योक्तम् । आपस्तम्बस्तु ब्राह्मणक्रममनुसृत्य वस्त्रमेखलयोः पौर्वापर्यमाह—" विष्णोः शर्मासीत्यनेन वाससा दक्षिणमꣳसं यजमानः प्रोर्णुते, नक्षत्राणां माऽतीकाशात्पाहीति शिरः, उष्णीषेण शिरो वेष्टयत इति वाजसनेयम्, शरमयी मौञ्जी वा मेखला त्रिवृत्पृथ्व्यन्यतरतःपाशा तया यजमानं दीक्षयति योक्त्रेण पत्नीमूर्गसीति " इति ।

रज्जुसदृशी मेखला । जटासदृशं योक्त्रम् ॥

वस्त्रप्रावरणं विधत्ते—

"गर्भो वा एष यद्दीक्षित उल्वं वासः प्रोर्णुते तस्माद्गर्भाः प्रावृता जायन्ते" [ सं० का० ६ प्र० १ अ० ३ ] इति ।

दीक्षितस्य गर्भरूपत्वं बह्वृचब्राह्मणे प्रपञ्चितम्—" पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति " इति । पटसदृशं गर्भवेष्टनमुल्बम् ॥

विपक्षे बाधकपुरःसरमाच्छादनस्यापनयनकालं विधत्ते—

" न पुरा सोमस्य क्रयादपोर्ण्वीत यत्पुरा सोमस्य क्रयादपोर्ण्वीत गर्भाः प्रजानां परापातुकाः स्युः क्रीते सोमेऽपोर्णुते जायत एव तदथो यथा वसीयाꣳसं प्रत्यपोर्णुते तादृगेव तत् " [सं० का० ६ प्र० १ अ० ३] इति ।

सोमे क्रीते तत्तदैव जायते ततो वस्त्रापनयनं युक्तम् । किं चात्यन्तधनवन्तं राजादिकं प्रति जनानां दिदृक्षायां पार्श्वस्थैर्याष्टिकादिभिः सभाया आवरणपटो यथाऽपनीयते तादृगेव तदिति द्रष्टव्यम् ॥

ऊर्गस्याङ्गिरसीत्यस्यार्थमाख्यायिकया दर्शयन्मेखलां विधत्ते—

" अङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त ततो यदत्यशिष्यत ते शरा

१ ख. 'र्यवस्य' ।

अभवन्नूर्ग्वै शरा यच्छरमयी मेखला भवत्यूर्जमेवावरुन्धे" [ सं० का० ६ प्र० १ अ० ३ ] इति।

अङ्गिरोनामकानामृषीणां परस्परमन्नरसे विभज्यमाने यदवशिष्टं तच्छरनामकतृणविशेषरूपेणाऽऽविर्भूतं तस्मादूर्गसीत्यादिमन्त्र उपपन्नः॥

मेखलाबन्धनप्रदेशं विधत्ते—

"मध्यतः संनह्यति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जते" [ सं० का० ६ प्र० १ अ० ३ ] इति।

अस्य यजमानस्य शरीरमध्ये रसं स्थापयति। तस्मात्सर्वेऽपि मध्य ऊर्जा भुञ्जते रसं धारयन्तीत्यर्थः॥

प्रकारान्तरेण मध्यदेशं स्तौति—

"ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यतः संनह्यति मेध्यं चैवास्यामेध्यं च व्यावर्तयति" [ सं० का० ६ प्र० १ अ० ३ ] इति॥

शरमयत्वं प्रशंसति—

"इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत्स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तः शरा अशीर्यन्त ते शरा अभवन्तच्छराणाꣳ शरत्वं वज्रो वै शराः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो यच्छरमयी मेखला भवति वज्रेणैव साक्षात्क्षुधं भ्रातृव्यं मध्यतोऽपहते" [ सं० का० ६ प्र० १ अ० ३ ] इति।

ये वज्रस्यान्तः शीर्णाः क्षुद्रावयवास्ते शराख्यास्तृणरूपाः शरा अभवन्॥

गुणं विधत्ते—

"त्रिवृद्भवति त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति" [ सं० का० ६ प्र० १ अ० ३ ] इति।

प्राणापानव्यानवृत्तिभिः प्राणस्य त्रिगुणत्वम्॥

गुणान्तरं विधत्ते—

"पृथ्वी भवति रज्जूनां व्यावृत्त्यै" [ सं० का० ६ प्र०१अ०३ ] इति।

रज्जूनां सूक्ष्माणां खट्वादिस्थितानाम्॥

मेखलायोक्त्रयोर्व्यवस्थां विधत्ते—

"मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय" [ सं० का० ६ प्र० १ अ० ३ ] इति।

मेखला यजमानस्य स्त्री योक्त्ररूपः पत्न्याः पुमानिति प्रत्येकं मिथुनत्वम्॥

## इन्द्रस्य योनिरसि मा मा हिꣳसीः—

बौधायनः—"अथास्यैषा कृष्णविषाणा त्रिवलिर्वा पञ्चवलिर्वा शाण्या

रज्ज्वा परितृण्णां तां यजमानाय प्रयच्छति—इन्द्रस्य योनिरसि मा मा हिꣳसीरिति यजमानः प्रतिगृह्णाति " इति ।

आपस्तम्बो मन्त्रैक्यं मेने ॥

कृष्णविषाणाया इन्द्रयोनित्वमाख्यायिकया विशदयन्विधत्ते—

" यज्ञो दक्षिणामभ्यध्यायत्ताꣳ समभवत्तदिन्द्रोऽचायत्सोऽमन्यत यो वा इतो जनिष्यते स इदं भविष्यतीति तां प्राविशत्तस्या इन्द्र एवाजायत सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति तस्या अनुमृश्य योनिमाच्छिनत्सा सूतवशाऽभवत्तत्सूतवशायै जन्म ताꣳ हस्ते न्यवेष्टयत तां मृगेषु न्यदधात्सा कृष्णविषाणाऽभवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्णविषाणां प्रयच्छति सयोनिमेव यज्ञं करोति सयोनिं दक्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय " [ सं० का० ६ प्र० १ अ० ३ ] इति ।

यज्ञदेवस्य दक्षिणादेव्या सह योगमिन्द्रोऽवगम्य ततो जातः सर्वमिदमैश्वर्यं प्राप्स्यतीति निश्चित्य स्वयमेव दक्षिणां प्रविश्य ततोऽजायत । पुनरपि स्वस्मादपरस्तया जनिष्यमाणः सर्वं प्राप्स्यतीति मत्वा मातुर्योनिमाच्छिनत् । सा च माता सकृत्प्रसूता पश्चाद्वियोनित्वेन वन्ध्याऽभवत् । ततो लोके पश्चान्नष्टबीजा सूतवशा संपन्ना । ततस्तां योनिं हस्ते वेष्टयित्वा पश्चाद्वलिभिर्युक्तां तां योनिं कृष्णमृगेषु निदधौ । तत इयं कृष्णविषाणा यज्ञस्य भोग्या योनिर्दक्षिणाया अवयवभूता योनिरिन्द्रस्य कारणभूता योनिः ॥

## कृष्यै त्वा सुसस्यायै—

कल्पः—" कृष्यै त्वा सुसस्याया इति तया वेदेर्लोष्टमुद्धन्ति " इति ।

हे लोष्ट शोभनसस्योपेत कृष्यर्थं त्वामुद्धन्मि ॥

मन्त्रसामर्थ्यं दर्शयति—

" कृष्यै त्वा सुसस्याया इत्याह तस्मादकृष्टपच्या ओषधयः पच्यन्ते " [ सं० का० ६ प्र० १ अ० ३ ] इति ।

नीवारादयोऽकृष्टपच्याः ॥

## सुपिप्पलाभ्यस्त्वौषधीभ्यः—

कल्पः—" सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यर्थे प्राप्ते शिरसि कण्डूयते " इति ।

यदा कण्डूयनप्रयोजनं प्रसक्तं तदा कण्डूयेत । हे शिरस्त्वां शोभनफलोपेतौषध्यर्थं कण्डूये ॥

पिप्पलशब्दसूचितमाह—

" सुपिप्पलाभ्यस्त्वौषधीभ्य इत्याह तस्मादोषधयः फलं गृह्णन्ति " [ सं० का० ६ प्र० १ अ० ३ ] इति ॥

विपक्षबाधपुरःसरं द्वयं विधत्ते—

" यद्धस्तेन कण्डूयेत पामनंभावुकाः प्रजाः स्युर्यत्स्मयेत नग्नंभावुकाः कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयते प्रजानां गोपीथाय " [ सं० का० ६ प्र० १ अ० ३ ] इति।

पामाख्यरोगयुक्ता दारिद्र्येण वस्त्ररहिताश्चेत्यर्थः ॥

विपक्षबाधपूर्वकं कृष्णविषाणायास्त्यागं विधत्ते—

"न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेद्यत्पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेद्योनिः प्रजानां परापातुका स्यान्नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति योनिर्वै यज्ञस्य चात्वालं योनिः कृष्णविषाणा योनावेव योनिं दधाति यज्ञस्य सयोनित्वाय " [ सं० का० ६ प्र० १ अ० ३ ] इति।

दक्षिणाभ्यो नेतोर्दक्षिणानामृत्विग्भिरपनयनात्। अवचृतेत्परित्यजेत्। चात्वालाद्धिष्णियानुपवपतीति चात्वालनामकाद्गर्ताद्धिष्णियानामुत्पत्तेर्विधास्यमानत्वाच्चात्वालस्य यज्ञयोनित्वम् ॥

## सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृचः—

बौधायनः—" अथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितꣳ सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णाति " इति।

आपस्तम्बो मन्त्रद्वयमाह—" सूपस्था देवो वनस्पतिरिति तं यजमानः प्रतिगृह्य " इति।

दण्डरूपो वनस्पतिकार्यो देवः सूपस्थाः। सुष्ठूपस्थीयतेऽवष्टभ्यते मैत्रावरुणेन प्रैषकाल इति सूपस्थाः। हे तादृग्दण्ड त्वमूर्ध्वस्थित आ समाप्तेर्मां पालय॥

यजमानाय दण्डप्रदानं विधत्ते—

" वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना सा वनस्पतीन्प्राविशत्सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायां यद्दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे " [ सं० का० ६ प्र० १ अ० ४ ] इति।

तूणवो वेणुः ॥

क्रमेण गुणौ विधत्ते—

" औदुम्बरो भवत्यूर्ग्वा उदुम्बर ऊर्जमेवावरुन्धे मुखेन संमितो भवति

मुखत एवास्मा ऊर्जं दधाति तस्मान्मुखत ऊर्जा भुञ्जते " [ सं० का० ६ प्र० १ अ० ४ ] इति ॥

यजमानस्य दण्डत्यागं विधत्ते—

" क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रतिष्ठापयन्ति " [ सं० का० ६ प्र० १ अ० ४ ] इति ।

मैत्रावरुणस्तत्र तत्र प्रैषैस्तेभ्य ऋत्विग्भ्यो मन्त्रान्विभजति । ते च ऋत्विजो यजमानार्थं तान्मन्त्रान्पठन्ति । अतो मैत्रावरुणस्य वाग्रूपो दण्डो युक्तः ॥

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याᳪं स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादा रभे ॥

बौधायनः—" अथैनं यज्ञस्यान्वारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याᳪं स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादा रभ इति " इति।

आपस्तम्बः—" अथाङ्गुलीर्न्यञ्चति स्वाहा यज्ञं मनसेति द्वे स्वाहा दिव इति द्वे स्वाहा पृथिव्या इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा यज्ञं वातादा रभ इति मुष्टी करोति वाचं यच्छति " इति ।

स्वाहाशब्देनाव्ययेन यथाब्राह्मणमर्था उपलक्षणीयाः । मनसा यज्ञमभिगच्छामि । द्यावापृथिव्योरन्तरिक्षे च यज्ञ आश्रितः । साक्षादेव यज्ञं वायोः प्रसादादारभे । सोऽयमुपलक्षणप्रकारः ॥

तदेतद्दर्शयति—" स्वाहा यज्ञं मनसेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति स्वाहा द्यावापृथिवीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञः स्वाहोरोरन्तरिक्षादित्याहान्तरिक्षे हि यज्ञः स्वाहा यज्ञं वातादा रभ इत्याहायं वाव यः पवते स यज्ञस्तमेव साक्षादारभते " [ सं० का० ६ प्र० १ अ० ४ ] इति।

वातस्य क्रियाहेतुत्वाद्यज्ञरूपत्वम् ॥

अत्र द्वयोर्हस्तयोः कनिष्ठिकामारभ्य चतसृणामङ्गुलीनां चतुर्भिर्मन्त्रैर्न्यग्भावः । पञ्चमेन मन्त्रेणाङ्गुष्ठाभ्यां दृढमुष्टिबन्धौ वाङ्नियमश्च ।

तदेतद्विधत्ते—

"मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै"[सं० का० ६ प्र० १ अ० ४]इति।

अप्रमत्तत्वं यज्ञधृतिः ॥

अध्वर्योः कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते—

" अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राह " [ सं० का० ६ प्र० १ अ० ४ ] इति ॥

( प्राचीनवंशप्रविष्टयजमानस्य दीक्षाङ्गभूता मन्त्राः )

स्वीकृतवाङ्नियमस्य नक्षत्रोदयात्पुरा विमोकं निषेधति—

" न पुरा नक्षत्रेभ्यो वाचं विसृजेद्यत्पुरा नक्षत्रेभ्यो वाचं विसृजेद्यज्ञं विच्छिन्द्यात् " [ सं० का० ६ प्र० १ अ० ४ ] इति ॥

कालविशेषे वाग्विमोकं विधत्ते, विमोककाले च वक्तव्यं कंचित्प्रैषमन्त्रमुत्पादयति—

" उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं विसृजति यज्ञव्रतो वै दीक्षितो यज्ञमेवाभि वाचं विसृजति " [ सं० का० ६ प्र० १ अ० ४ ] इति।

यज्ञार्थं स्वीकृतं वाङ्नियमादिरूपं व्रतं यस्यासौ यज्ञव्रतः। तथा सत्यस्य क्षीरसंपादनप्रैषस्यापि यज्ञार्थत्वान्नायं वाग्विमोको दोषकारी ॥

नक्षत्रोदयात्पुरा लौकिकवागुच्चारणे प्रायश्चित्तमाह—

" यदि विसृजेद्वैष्णवीमृचमनुब्रूयाद्यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ संतनोति " [ सं० का० ६ प्र० १ अ० ४ ] इति।

वैष्णवी विष्णो त्वं नो अन्तम इति केचित्। इदं विष्णुरित्यन्ये ॥

अत्र विनियोगसंग्रहः—

" आकूत्यै जुहुयात्षड्भिर्ऋक्सामेत्यजिनं स्पृशेत्।
इमामजिनमारोहेद्भ्रात्यूर्गिति मेखलाम् ॥ १ ॥
विष्णोर्वस्त्रेणोर्णुते तं नक्षेत्यावेष्टयेच्छिरः।
इन्द्र दद्यात्कृष्णशृङ्गं कृष्यै लोष्टोद्धतिस्तथा ॥ २ ॥
सुपि कण्डूयनं मूर्ध्नि सूप दण्डपरिग्रहः।
स्वाहाऽङ्गुलीर्द्वयोर्न्यश्चेत्पश्च[1][2] भेदेन विंशतिः[3] ॥ ३ ॥ " इति।

अथ मीमांसा।

पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—

" इष्टिदण्डादिभिर्दीक्षा किं वेष्ट्यैवोक्तितः क्रमात्।
युक्तः संस्कार इष्ट्यैव दण्डादेर्व्यञ्जकत्वतः " इति ॥

ज्योतिष्टोमे दीक्षाप्रकरणे श्रूयते—" आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः " इति। अन्यदपि श्रुतम्—" दण्डेन दीक्षयति मेखलया दीक्षयति कृष्णाजिनेन दीक्षयति " इति। तत्रेष्टिवद्दण्डादीनामपि साधनत्वाभिधानात्सर्वैरियं दीक्षेति चेन्मैवम्। इष्टेः क्रियारूपत्वात्संस्कारहेतुत्वं युक्तम्। दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति। न चैतावता दण्डादिवैयर्थ्यं,

१ ख. 'लीर्न्यं'। २ क. 'र्द्वये न्यञ्चे'। ग. 'र्द्वयं न्यञ्चे'। ३ ख. 'श्च मन्त्रभे'।

दीक्षितोऽयमित्यभिव्यक्तिरूपस्य दृष्टस्य प्रयोजनस्य सद्भावात्। तस्माद्दिष्टैव दीक्षा सिध्यति।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

"दण्डदीक्षा दक्षिणा तु शतं द्वादशभिर्युतम्।
द्वयार्थमुत मुख्यार्थं सोमस्येत्युक्तिसंभवात्॥
मुख्याङ्गद्वयगं मैवं पारम्पर्यविडम्बना।
वचनस्य न युक्ताऽतः प्रधानार्थमिदं स्थितम्" इति॥

ज्योतिष्टोमे दीक्षादक्षिणे श्रूयेते—"दण्डेन दीक्षयति" इति। "तस्य द्वादशशतं दक्षिणा" इति च। तत्र दीक्षा मुख्याङ्गयोरुपकरोति। तथा दक्षिणाऽपि। न च वाच्यं दीक्षा सोमस्य दक्षिणा सोमस्येतिवाक्ये षष्ठ्या मुख्यसंबन्ध एवावगम्यते न त्वङ्गसंबन्ध इति। दीक्षादक्षिणे साक्षात्सोमेनैव संबध्नीतां, स सोमः पुनरङ्गैः संबध्यत इति परम्परया दीक्षादक्षिणयोरङ्गैरपि संबन्धोऽस्ति। तस्मादुभयार्थं दीक्षादिकमिति प्राप्ते ब्रूमः—अव्यवहितसंबन्ध एव षष्ठ्या अभिधेयोऽर्थः। तदसंभवे तु परम्परया संबन्धः कथंचिद्गृह्येत। इह तु तत्संभवात्पारम्पर्यं न युक्तम्। तस्मात्प्रधानार्थं दीक्षादिकम्॥

चतुर्थाध्यायस्य द्वितीयपादे चिन्तितम्—

"मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता।
उतार्थकर्मताऽऽद्योऽस्तु धारणे कृतकृत्यतः॥
युक्तोपयुक्तसंस्कारादुपयोक्ष्यसंस्क्रिया।
स्थित्वा प्रैषानुवचने दण्डोऽपेक्ष्योऽर्थकर्म तत्" इति।

ज्योतिष्टोमे श्रूयते—"क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इति। तदेतद्दण्डदानं प्रतिपत्तिकर्म। कुतः। दण्डस्य यजमानधारणेन कृतकृत्यत्वात्। यजमानो ह्यध्वर्युणा दीक्षासिद्ध्यर्थं दत्तं दण्डमासोमक्रयाद्धारयति। अत एवाऽऽम्नातम्—"दण्डेन दीक्षयति" इति। "यदीक्षितदण्डं प्रयच्छति" इति च। तस्मादुपयुक्तस्य दण्डस्य दानं प्रतिपत्तिरिति चेन्मैवम्। दण्डे भविष्यदुपयोगस्यापि सद्भावात्। यदा मैत्रावरुणः स्थित्वा प्रैषाननुवक्ष्यति तदानीमवलम्बनाय दण्डोऽपेक्षितः। अत एवाऽऽम्नातम्—"दण्डी प्रैषानन्वाह" इति। तथा प्रतिपत्तिरूपादुपयुक्तसंस्कारादर्थकर्मरूप उपयोक्ष्यमाणः संस्कारः प्रशस्तः। उपयोजयितुमेव हि सर्वत्र संस्कारस्य प्रवृत्तिः। उपयुक्ते तु प्रतिपत्तिरूपस्य संस्कारस्याऽऽदरमात्रपर्यवसायित्वेन तत्कार्यपर्यवसानाभा-

१ क. ग. °त्वे त°।

( दीक्षितकर्तृकदेवयजनस्वीकारः )

वादप्रशस्तत्वम् । तस्मान्मैत्रावरुणसंस्काराय दण्डदानमर्थकर्म । तथा सति निरूढपशावसत्यपि दीक्षिते दण्डसंपादनस्यैतद्दानं प्रयोजकम् ।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" उत्तिष्ठन्प्रवदेदग्नीदग्नीनित्यादिकं तथा ।
कृणुत व्रतमित्येवं पठन्वाचो विमुञ्चते ॥
मन्त्रौ विधेयौ कालो वा मन्त्रावुत्थानमोकयोः ।
विनियोज्यौ न कालस्य लक्षणा युज्यते विधौ ॥
मन्त्रार्थानन्वयात्तत्र तद्विधिर्नैव शक्यते ।
अगत्या लक्षणाऽप्यस्तु तेन कालो विधीयते " इति ॥

ज्योतिष्टोमे समामनन्ति—" उत्तिष्ठन्नाहाग्नीदग्नीन्विहर " इति । तथा " व्रतं कृणुतेति वाचं विसृजति " इति । तत्राऽऽग्नीध्रं संबोध्याग्निविहरणादिप्रैषरूपो मन्त्रोऽनेन वाक्येनोत्थानशेषतया विनियुज्यते । तथा मुष्टिं कृत्वा नियमितवाचो दीक्षितस्य वाग्विमोके व्रतं कृणुतेति मन्त्रो विनियुज्यते । न चात्रोत्थानविमोकशब्दौ काललक्षकौ, तत्कालयोर्विधेयत्वे सति लक्षणाया अन्याय्यत्वादिति प्राप्ते ब्रूमः—अग्निविहरणप्रैषे पयःपानरूपव्रतसंपादनप्रैषे चान्वितावेतौ मन्त्रौ न तूत्थाने वाग्विमोके च । अतोऽसमर्थयोर्विनियोगासंभवादगत्या लक्षणामप्यङ्गीकृत्य कालो विधीयते ॥

अथ च्छन्दः ।

आपो देवीरिति त्रिपदा विराट् । विश्वे देवस्येत्यनुष्टुप् । इमां धियमिति त्रिष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

# दे॒वीं धियं॑ मनामहे सुमृडी॒काम॒भिष्ट॑ये वर्चो॒धां य॒ज्ञवा॑हसꣳ सु॒पा॒रा नो॑ अस॒द्वशे॑ ।

---

१ क. ग. 'यवाचके ळ' ।

(दीक्षितकर्तृकदेवयजनस्वीकारः)

ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहाऽग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि गोपाय नः स्वस्तये प्रबुधे नः पुनर्ददः । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वम् (१) यज्ञेष्वीड्यः । विश्वे देवा अभि मामाऽववृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावा रास्वेयत्सोमाऽऽ भूयो भर मा पृणन्पूर्त्या वि राधि माऽहमायुषा चन्द्रमसि मम भोगाय भव वस्त्रमसि मम भोगाय भवोस्राऽसि मम भोगाय भव हयोऽसि मम भोगाय भव (२) छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव वायवे त्वा वरुणाय त्वा निर्ऋत्यै त्वा रुद्राय त्वा देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं वो माऽव क्रमिषमच्छिन्नं तन्तुं पृथिव्या अनु गेषं भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वथेमव स्य वर आ पृथिव्या आरे शत्रून्कृणुहि सर्ववीर एदमगन्म देवय-

(दीक्षितकर्तृकदेवयजनस्वीकारः)

जनं पृथिव्या विश्वे देवा यदजुषन्त पूर्वे ऋक्सामाभ्यां यजुषा संतरन्तो रायस्पोषेण समिषा मदेम (३) ॥

(आ त्वं हयोऽसि मम भोगाय भव स्य पञ्चविंशतिश्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ प्रथमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ।)

---

दैवीम् । धियम् । मनामहे । सुमृडीकामिति सु—मृडीकाम् । अभिष्टये । वर्चोधामिति वर्चः—धाम् । यज्ञवाहसमिति यज्ञ—वाहसम् । सुपारेति सु—पारा । नः । असत् । वशे । ये । देवाः । मनोजाता इति मनः—जाताः । मनोयुज इति मनः—युजः । सुदक्षा इति सु—दक्षाः । दक्षपितार इति दक्ष—पितारः । ते । नः । पान्तु । ते । नः । अवन्तु । तेभ्यः । नमः । तेभ्यः । स्वाहा । अग्ने । त्वम् । स्विति । जागृहि । वयम् । स्विति । मन्दिषीमहि । गोपाय । नः । स्वस्तये । प्रबुध इति प्र—बुधे । नः । पुनः । ददः । त्वम् । अग्ने । व्रतपा इति व्रत—पाः । असि । देवः । एति ।

मर्त्येषु । आ । त्वम् । (१) यज्ञेषु । ईड्यः । विश्वे । देवाः । अभीति । माम् । एति । अवव्रत्रन् । पूषा । सन्या । सोमः । राधसा । देवः । सविता । वसोः । वसुदावेति वसु—दावा । रास्व । इयत् । सोम । एति । भूयः । भर । मा । पृणन् । पूर्त्या । वीति । राधि । मा । अहम् । आयुषा । चन्द्रम् । असि । मम । भोगाय । भव । वस्त्रम् । असि । मम । भोगाय । भव । उस्रा । असि । मम । भोगाय । भव । हयः । असि । मम । भोगाय । भव । (२) छागः । असि । मम । भोगाय । भव । मेषः । असि । मम । भोगाय । भव । वायवे । त्वा । वरुणाय । त्वा । निर्ऋत्या इति निः—ऋत्यै । त्वा । रुद्राय । त्वा । देवीः । आपः । अपाम् । नपात् । यः । ऊर्मिः । हविष्यः । इन्द्रियावानितीन्द्रिय—वान् । मदिन्तमः । तम् । वः । मा । अवेति । क्रमिषम् । अच्छिन्नम् । तन्तुम् । पृथिव्याः । अन्विति । गेषम् । भद्रात् । अभीति । श्रेयः । प्रेति । इहि । बृहस्पतिः । पुरएतेति पुरः—एता । ते । अस्तु । अथ । ईम् । अवेति । स्य । वरे । एति । पृथिव्याः । आरे । शत्रून् । कृणुहि । सर्ववीर इति सर्व—वीरः । एति । इदम् ।

अगन्म । देवयजनमितिं देव—यजनम् । पृथिव्याः । विश्वे । देवाः । यत् । अजुषन्त । पूर्वे । ऋक्सामाभ्यामित्यृक्साम—भ्याम् । यजुषा । संतरन्त इतिं सं—तरन्तः । रायः । पोषेण । समितिं । इषा । मदेम ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीयेऽनुवाके दीक्षा वर्णिता । दीक्षितेन देवयजने स्वीकृते सति सोमक्रयणादिरूपः क्रतुव्यवहारस्तत्र कर्तुं शक्यत इति तृतीयेऽनुवाके देवयजनस्वीकारो वर्ण्यते । तत्स्वीकारादूर्ध्वं सोमार्थे देवयजने सोमक्रयस्यैव वक्तुमुचितत्वात्तत्स्वीकारात्पूर्वमनुवाकादौ व्रतपानद्रव्यसंपादनमभिधीयते ।

दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे ।

बौधायनः—“ अथाप आचामति दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वश इति ” इति ।

आपस्तम्बः—“ दैवीं धियं मनामह इति हस्ताववनिज्य ” इति ॥

अभीष्टार्थसिद्ध्ये वयं देवताविषयां कर्मानुष्ठानबुद्धिमनया बुद्ध्या संपादयामः । कीदृशीं बुद्धिं सुमृडीकां सुखहेतुं ब्रह्मवर्चसधारणहेतुं यज्ञनिर्वाहिकाम् । इयं बुद्धिः सुष्ठु पारं गताऽस्माकं वशे भवतु ॥

सुमृडीकामिति पदस्याभिप्रायमाह—

“दैवीं धियं मनामह इत्याह यज्ञमेव तन्म्रदयति” [ सं० का० ६ प्र० १ अ० ४ ] इति ।

मृदू करोतीत्यर्थः ॥

सुपारेति पदेन यत्सूचितं तदाह—

" सुपारा नो असद्वश इत्याह व्युष्टिमेवावरुन्धे " [ सं० का० ६ प्र० १ अ० ४ ] इति ।

व्युष्टिः सुप्रभातं कृत्स्नयज्ञप्रकाशनमित्यर्थः ॥

ये देवा मनोजाता मनोयुजः सुदक्षा
दक्षपितारस्ते नः पान्तु ते नोऽवन्तु
तेभ्यो नमस्तेभ्यः स्वाहा—

कल्पः—" अथास्मै कंसे वा चमसे वा निषिच्य व्रतं प्रयच्छति तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेति " इति ।

चक्षुरादिप्राणाभिमानिनो ये देवाः सन्ति तेऽस्मान्पयःपानरूपव्रतानुष्ठायिनोऽन्तर्बहिश्च शुद्धिसंपादनेन पालयन्तु । कीदृशा देवाः । उत्पत्तिकाले मनसा सहोत्पन्नाः । व्यवहारकालेऽपि मनसा युज्यन्ते । अन्यमनस्कस्य चक्षुरादिभिः संनिहितविषयाणामप्यनवगमात् । सति तु मनःसाहाय्ये स्वस्वविषयेषु सुदक्षाः कुशलाः । दक्षः प्रजापतिरुत्पादको येषां ते दक्षपितारः ॥

विचारपुरःसरं व्रतं विधत्ते—

" ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३ इ न होतव्या३मिति हविर्वै दीक्षितो यज्जुहुयाद्यजमानस्यावदाय जुहुयाद्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्ये देवा मनोजाता मनोयुज इत्याह प्राणा वै देवा मनोजाता मनोयुजस्तेष्वेव परोक्षं जुहोति तन्नेव हुतं नेवाहुतम् " [ सं०का०६प्र०१अ०४ ] इति ॥

दीक्षितस्य हविष्ट्वमर्थवादान्तरे श्रूयते—

" पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति यो दीक्षितो यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य स तस्मात्तस्य नाऽऽश्यं पुरुषनिष्क्रयण इव ह्यथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाश्यं वारुण्यर्चा परिचरति स्वयैवैनं देवतया परिचरति " [ सं० का० ६ प्र० १ अ० ११ ] इति ॥

शाखान्तरेऽपि—"सर्वाभ्यो वा एष देवताभ्य आत्मानमालभते यो दीक्षितः " इति । तथा सति दीक्षितस्य गृहे यद्यग्निहोत्रं जुहुयात्तर्हि यजमान एव

१ ख. कृतय॰ । २ क. ॰थास्यै क॰ । ३ क. ग. वाऽभिषि॰ ।

( दीक्षितकर्तृकदेवयजनस्वीकारः )

हुतो भवेत् । अहोमे[1] तु नित्याग्निहोत्रस्य परुः प्रतिदिनानुष्ठानरूपं पर्व विच्छिद्येत । तत्र पूर्वप्रसिद्धेन मन्त्रेणाऽऽहवनीयाग्नौ होमः स प्रत्यक्ष इत्युच्यते । अयं तु परोक्षोऽग्निहोत्रहोमः । अन्यमन्त्रेण प्राणाग्निषु हूयमानत्वात् । अतस्तृतीयकोटित्वेन मुख्ययोर्होमाहोमयोरभावान्नोक्तदोषद्वयम् । तस्मादनेन मन्त्रेण व्रतं कुर्यादित्यभिप्रायः ॥

**अग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि गोपाय नः स्वस्तये प्रबुधे नः पुनर्ददः ।**

बौधायनः—"अथ संवेशनयजुर्जपति अग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि गोपाय नः स्वस्तये प्रबुधे नः पुनर्दद इति " इति ।

आपस्तम्बः—"अग्ने त्वꣳ सु जागृहीति स्वप्स्यन्नाहवनीयमभिमन्त्रयते" इति ।

सुमन्दिषीमहि निर्भयाः सन्तः स्वप्स्यामः । नोऽस्माकं स्वस्तये विनाशाभावार्थं प्रबुधे जागरणाय ददः सामर्थ्यं देहि ॥

भयप्रसक्तिं दर्शयन्मन्त्रं व्याचष्टे—

" स्वपन्तं वै दीक्षितꣳ रक्षाꣳसि जिघाꣳसन्त्यग्निः खलु वै रक्षोहाऽग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहीत्याहाग्निमेवाधिपां कृत्वा स्वपिति रक्षसामपहत्यै " [ सं० का० ६ प्र० १ अ० ४ ] इति ॥

**त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ।**

कल्पः—" अथाध्वर्युर्मध्यरात्र आहुत्य प्रबुद्ध[2]यजुर्वाचयति त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्य इति " इति ।

याज्यासु व्याख्यातम् ॥

व्रतभ्रंशप्रसक्तिं दर्शयन्प्रथमं पादं व्याचष्टे—

"अव्रत्यमिव वा एष करोति यो दीक्षितः स्वपिति त्वमग्ने व्रतपा असीत्याहाग्निर्वै देवानां व्रतपतिः स एवैनं व्रतमालम्भयति " [ सं० का० ६ प्र० १ अ० ४ ] इति ।

अविकलं करोतीत्यर्थः ॥

मनुष्येषु च्छिन्नं व्रतं मनुष्यावतारेण पालयतीति शङ्कां वारयन्द्वितीयपादं व्याचष्टे—

---

१ क. ग. अहुते नि° । २ क. °बुद्धे य° । ख. °बुध्य य° ।

" देव आ मर्त्येष्वेत्याह देवो ह्येष सन्मर्त्येषु " [ सं० का० ६ प्र० १ अ० ४ ] इति ।

अतो व्रतं समाधातुं शक्नोति ॥

अग्निर्मूर्धा दिवः ककुदित्यादियाज्यापुरोनुवाक्यादिमन्त्रेष्वग्निः स्तूयत इत्यभिप्रायं तृतीयपादे स्वयं दर्शयति—

" त्वं यज्ञेष्वीड्य इत्याहैतꣳ हि यज्ञेष्वीडते " [ सं० का० ६ प्र० १ अ० ४ ] इति ॥

विश्वे देवा अभि मामाऽववृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावा रास्वेयत्सोमाऽऽ भूयो भर मा पृणन्पूर्त्या वि राधि माऽहमायुषा चन्द्रमसि मम भोगाय भव वस्त्रमसि मम भोगाय भवोस्राऽसि मम भोगाय भव हयोऽसि मम भोगाय भव छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव—

बौधायनः—"अथ सनिहारान्प्रहिणोति स यं मन्यते न मां प्रत्याख्यास्यतीति तं प्रथममभिप्रहिणोति विश्वे देवा अभि मामाऽववृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावेति, आहरन्तं दृष्ट्वा जपति नानाहरन्तं रास्वेयत्सोमाऽऽ भूयो भर मा पृणन्पूर्त्या वि राधि माऽहमायुषेति " इति ।

सनिशब्देन हिरण्यवस्त्रादि देयद्रव्यमुच्यते । सनिहारा द्रव्याणामानेतारः ।

आपस्तम्बस्तु प्रकारान्तरेण मन्त्रविनियोगविच्छेदावाह—

"विश्वे देवा अभि मामाऽववृत्रन्निति प्रबुध्य जपति, पूषा सन्येति सनिहारान्त्सꣳ शास्ति, चन्द्रमसीत्येतैः प्रतिमन्त्रं यथालिङ्गं प्रतिगृह्णाति, देवः सविता वसोर्वसुदावेत्यन्यानि[२] " इति ।

सर्वे देवा अभितः पालयितुं मामावृत्य तिष्ठन्तु । पूषा सन्या पोषको देवो देयेन हिरण्यद्रव्येण सहाऽऽयातु । सोमो राधसा साधकेन वस्त्रेण सहाऽऽयातु । वसोर्वस्त्वन्तरस्य गवादेः प्रेरको देवो वसुप्रदः सन्नायातु । हे सोमास्मिन्कर्मण्यपेक्षितमियद्देहि, संपूर्त्या मां पूरयन्भूय आभर, अहमायुषा मा विराधि वियुक्तो मा भूवम् ॥

---

१ ख. °मधिप्र° । २ क. ग. °निति ।

दीक्षितकर्तृकदेवयजनस्वीकारः )

प्रबुद्धो जपेदित्येतद्व्याचष्टे—

" अप वै दीक्षितात्सुषुपुष इन्द्रियं देवताः क्रामन्ति विश्वे देवा अभि मामाऽववृत्रन्नित्याहेन्द्रियेणैवैनं देवताभिः संनयति " [ सं० का० ६ प्र० १ अ० ४ ] इति।

सुषुपुषः सुप्तात्। अतीन्द्रियसामर्थ्येन तदभिमानिदेवताभिश्चायं मन्त्रः संयोजयति॥

विपक्षबाधपुरःसरमाऽऽ भूयो भरेत्यमुं मन्त्रभागं व्याचष्टे—

"यदेतद्यजुर्न ब्रूयाद्यावत एव पशूनभिदीक्षेत तावन्तोऽस्य पशवः स्यू रास्वेयत्सोमाऽऽ भूयो भरेत्याहापरिमितानेव पशूनवरुन्धे " [ सं० का० ६ प्र० १ अ० ४ ] इति।

दीक्षाकाले विद्यमानान्यावतः पशूनभिप्राप्य दीक्षेत मन्त्रानुक्तौ तावन्त एव स्युः। मन्त्रोक्तौ तु तत्सामर्थ्यादपरिमिताः परलोके भवन्ति। पशुभिर्द्रव्यान्तराण्युपलक्ष्यन्ते। चन्द्रमसि मम भोगाय भव वस्त्रमसि मम भोगाय भवोस्राऽसि मम भोगाय भव हयोऽसि मम भोगाय भव छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भवेत्येभिर्मन्त्रैर्यथालिङ्गं वसु स्वीकर्तव्यम्। चन्द्रं हिरण्यम्। उस्रा गौः॥

तेन तेन मन्त्रेण तत्तद्द्रव्याभिमानिदेवतास्तुष्यन्तीत्याह—

" चन्द्रमसि मम भोगाय भवेत्याह यथादेवतमेवैनाः प्रतिगृह्णाति " [ सं० का० ६ प्र० १ अ० ४ ] इति।

एना हिरण्यादिरूपा दित्सिता दक्षिणाः॥

## वायवे त्वा वरुणाय त्वा निर्ऋत्यै त्वा रुद्राय त्वा—

कल्पः—" ताः समुदायुत्य रक्षति तासां या नश्यति म्रियते वा वायवे त्वेति तामनुदिशति, याऽप्सु वा पाशे वा वरुणाय त्वेति तां या सं वा शीर्यते गर्ते वा पतति निर्ऋत्यै त्वेति तां, यामहिर्व्याघ्रो वा हन्ति रुद्राय त्वेति ताम् " इति।

अनुदिशामीति शेषः॥

विपक्षस्वपक्षयोर्दूषणभूषणे दर्शयति—

"वायवे त्वा वरुणाय त्वेति यदेवमेता नानुदिशेदयथादेवतं दक्षिणा गम-

१ ख. वस्तु। २ क. ग. °युत्या र°। ३ ख. रक्षन्ति। ४ क. ग. गर्त। ५ ख. °हिर्वा व्याघ्रो।

येदा देवताभ्यो वृश्च्येत यदेवमेता अनुदिशति यथादेवतमेव दक्षिणा गम-यति न देवताभ्य आ वृश्च्यते " [ सं० का० ६ प्र० १ अ० ४ ] इति ॥

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रि-
यावान्मदिन्तमस्तं वो माऽव क्रमिषम-
च्छिन्नं तन्तुं पृथिव्या अनु गेषम्—

बौधायनः—" अथ यद्यपरियाणा आप उपाधिगच्छन्ति तज्जपति देवी-रापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं वो माऽव क्रमिषम-च्छिन्नं तन्तुं पृथिव्या अनुगेषमिति सं वा गाहते सं वा तरति " इति ।

अपरियाणा गमनविरोधिन्यो मार्गप्रतिरोधिकाः ॥

आपस्तम्बः—" प्रयाणे देवीराप इत्यपोऽवगाहतेऽच्छिन्नं तन्तुं पृथिव्या अनुगेषमिति हस्तेन लोष्टं विमृद्नात्यापारात् " इति ।

यदा केनापि निमित्तेन देवयजनादन्यत्र दीक्षेत तदानीं पृथगरणीष्वग्नी-न्समारोप्य देवयजनं गच्छन्मध्ये प्राप्तायां नद्यामवगाह्योत्तरेत् । अपां नपा-दित्यग्निसंबोधनम् । हे देव्य आपो युष्माकं य ऊर्मिस्तं पादेन माऽवक्रमि-षम् । कीदृश ऊर्मिः । व्रीह्याद्युत्पादनेन हविर्योग्यः स्वकीयजलपानेनेन्द्रिय-शक्तिकारी तृषां निवर्तयन्नतिहर्षप्रदः । मृदि लोष्टरूपं पृथिव्या अच्छिन्नं तन्तुं सेतुं प्राप्य तस्योपरि गच्छामि ॥

हविष्यशब्दाभिप्रायमाह—

" देवीरापो अपां नपादित्याह यद्वो मेध्यं यज्ञियꣳ सदेवं तद्वो माऽव क्रमि-षमिति वावैतदाह " [ सं० का० ६ प्र० १ अ० ४ ] इति ।

इति वाव, इत्येव ॥

तन्तुशब्दाभिप्रायमाह—

" अच्छिन्नं तन्तुं पृथिव्या अनुगेषमित्याह सेतुमेव कृत्वाऽत्येति " [ सं० का० ६ प्र० १ अ० ४ ] इति ॥

भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर-
एता ते अस्त्वथेमव स्य वर आ
पृथिव्या आरे शत्रून्कृणुहि सर्ववीरः—

---

१ ख. 'रते, इ' ।

( दीक्षितकर्तृकदेवयजनस्वीकारः )

बौधायनः—"बृहस्पतिर्वत्यर्चा प्रयाति भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्यथ यत्र वत्स्यन्भवति तदवस्यत्यथैमव स्य वर आ पृथिव्या इत्यथाऽऽदित्यमुद्यन्तमुपतिष्ठत आरे शत्रून्कृणुहि सर्ववीर इति" इति।

आपस्तम्बस्तु त्रीन्मन्त्रानेकीकृत्य विनियुङ्क्ते—"पृथगरणीष्वग्नीन्समारोप्य रथेन प्रयाति एतदभावे रथाङ्गमादाय भद्रादभि श्रेय इति" इति।

अत्रार्थक्रमेण देवीराप इत्यस्मात्पूर्वमेवायं मन्त्रोऽवगन्तव्यः। हे रथ भद्रात्प्रशस्तादस्मान्नित्याग्निहोत्रस्थानादतिप्रशस्तं सौमिकं देवयजनमभिप्रयाहि। बृहस्पतिस्तव पुरतो गन्ता भवतु। अथ प्रयाणादूर्ध्वं पृथिव्याः संबन्धिन्या समन्ताद्वरे श्रेष्ठे स्थान ईमिमां गतिमवस्य समापय। हे रथाभिमानिन्नादित्य शत्रूत्राक्षसादीनारे देवयजनाद्दूरे कुरु॥

कल्पः—"अथ यत्र यक्ष्यमाणो भवति तदवस्यत्येदमगन्म देवयजनं पृथिव्या इत्यन्तादनुवाकस्य" इति।

स च मन्त्र एवमाम्नायते—

एदमगन्म देवयजनं पृथिव्या विश्वे देवा यदजुषन्त पूर्व ऋक्सामाभ्यां यजुषा संतरन्तो रायस्पोषेण समिषा मदेम, इति।

पृथिव्याः संबन्धि यद्देवयजनं तदिदमागन्म वयं प्राप्ताः। यद्देवयजने (नं) पूर्वे सर्वे देवा अजुषन्तासेवन्त तद्वयमागत्य वेदत्रयगतैर्मन्त्रैः सोमयागं संतरन्तः सम्यक्पारं नयन्तो रायस्पोषेण धनसमृद्ध्या समिषा समीचीनेनान्नेन च मदेम हृष्यास्म॥

भद्रादभीत्यादिमन्त्रार्थः स्पष्ट इत्यभिप्रेत्य ब्राह्मणेनात्र व्याख्यानमुपेक्षितम्[1]। औपानुवाक्यकाण्डे तु दीक्षितनियमप्रसङ्गाद्व्याख्यानं कृतम्। तत्र बृहस्पतेरुपयोगमाह—

"अग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोर्भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते स एनꣳ संपारयति" [ सं० का० ३ प्र० १ अ० १ ] इति।

यदा दीक्षितोऽग्निहोत्रस्थानात्प्रयाति तदाऽग्निस्तिरोहित इव नैनं पालयति। ततो रक्षांस्येनं मार्गे हन्तुमीश्वराणि भवन्ति। तत्र बृहस्पतौ

---

१ क. ग. 'म्। उपा'।

पुरतो गच्छति सत्यनुगच्छन्तमेनं रक्षोबाधपरिहारेण स बृहस्पतिः सम्यक्पारं नयति ॥

उत्तरमन्त्रस्य चतुर्षु भागेषु प्रतिपाद्योऽर्थः प्रसिद्ध इत्याह—

"एदमगन्म देवयजनं पृथिव्या इत्याह देवयजन१ ह्येष पृथिव्या आगच्छति यो यजते विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा ऋक्सामाभ्यां यजुषा संतरन्त इत्याहर्क्सामाभ्या१ ह्येष यजुषा संतरति यो यजते रायस्पोषेण समिषा मदेमेत्याहाऽऽशिषमेवैतामाशास्ते" [ सं० का० ३ प्र० १ अ० १ ] इति।

अध्वर्युप्रभृतयो ब्राह्मणा यद्देवयजनमिदानीमधितिष्ठन्ति तद्देवाः स्वयं सेवमाना एतान्सेवन्ते। यो यजते स एष संतरतीत्यन्वयः ॥

अत्र विनियोगसंग्रहः—

" दैवीं हस्तौ शोधयित्वा ये दे व्रतपयः पिबेत्।
अग्ने स्वप्स्यन्नग्निमाह त्वं प्रबुद्धो जपेत्तथा ॥ १ ॥
विश्व इत्यपि पूषेति सनिहारानुशासनम्।
देवो वसुग्रहश्चन्द्रं षड्भिस्तत्र प्रतिग्रहः ॥ २ ॥
वाय नष्टामप्सु मृतां सन्नामृग्भ्यां च गां[1] स्पृशेत्।
देवीरापो विगाह्याच्छि लोष्टमप्सु विमर्दयेत् ॥ ३ ॥
भद्रादृथेन यात्येदं यागभूमि[2]व्यवस्थितिः।
अनुवाके तृतीयेऽस्मिन्नुदिता एकविंशतिः ॥ ४ ॥ " इति।

अथ मीमांसा।

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

" स्वप्नादिमन्त्रा आवर्त्या नो वाऽऽद्योऽस्त्वन्तरायतः।
कृत्स्नोदेशप्रवृत्तत्वान्निमित्ताभेदतः सकृत् " इति ॥

दीक्षितस्य स्वप्ननद्युत्तरणवृष्टिच्छेदनामेध्यदर्शननिमित्तकास्तत्तन्मन्त्रजपाः पठिताः। त्वमग्ने व्रतपा असीत्यादिकः स्वप्नमन्त्रः। देवीरापो अपां नपादित्यादिर्नदीतरणमन्त्रः। उन्दतीर्बलं धत्त इत्यादिर्वृष्टिच्छेदनमन्त्रः। अबद्धं मन इत्यादिरमेध्यदर्शनमन्त्रः। यदा निद्रा मध्ये प्रबोधैरल्पैर्व्यवधीयेत, नदी च बहुशःस्रोतोयुक्ता द्वीपैः, वृष्टिश्च विच्छेदैः, अमेध्यानि च देशैस्तदा तैरन्तरायनिमित्तेषु भिद्यमानेषु नैमित्तिका मन्त्रा आवर्तनीया इति प्राप्ते ब्रूमः—रात्रि-

१ ख. गाः। २ ख. °भूमि व्यवस्थित.। अ°।

( सोमयागोपयोगिसोमक्रयणार्थं सोमक्रयणीविषयहोमादिकम् )

गतां कृत्स्नां निद्रामुद्दिश्य मन्त्राभिधानान्निमित्तमेकम्। एवमन्यत्रापि योज्यम्। तस्मान्नास्त्यावृत्तिः।

तत्रैवान्यच्चिन्तितम्—

" प्रयाणे प्रत्यहं मन्त्रो भिन्नो नो वाऽत्र विश्रमैः।
प्रयाणभेदाद्भिन्नो नो गत्यैक्यादानिवृत्तितः " इति॥

भद्रादभि श्रेय इत्यादिः प्रयाणमन्त्रः। तत्र दीक्षितस्य निर्गमनमारभ्य पुनःप्रवेशपर्यन्तं विश्रमव्यवधानेऽपि प्रयोजनैक्यादेकमेव प्रयाणम्। ततो न मन्त्रावृत्तिः॥

अथ च्छन्दः—

दैवीं धियमित्यग्ने त्वमिति चैते अनुष्टुभौ। त्वमग्न इति गायत्री। विश्वे देवा इत्येकपदा। एदमगन्मेति त्रिष्टुप्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः। )

---

इयं ते शुक्र तनूरिदं वर्चस्तया सं भव भ्राजं गच्छ जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा शुक्रमस्यमृतमसि वैश्वदेवꣳ हविः सूर्यस्य चक्षुराऽरुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चिता चिदसि मनाऽसि धीरसि दक्षिणा (१) असि यज्ञियाऽसि क्षत्रियाऽस्यदितिरस्युभयतःशीर्ष्णी सा नः

---

१ ख. °दा त्रिष्टुप्। ए°।

सुप्राची सुप्रतीची सं भव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाध्यक्षायानु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वाऽऽ वर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या ( २ ) ॥

( दक्षिणा सोमसखा पञ्च च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

इयम् । ते । शुक्र । तनूः । इदम् । वर्चः । तया । सम् । इति । भव । भ्राजम् । गच्छ । जूः । असि । धृता । मनसा । जुष्टा । विष्णवे । तस्याः । ते । सत्यसवस इति सत्य—सवसः । प्रसव इति प्र—सवे । वाचः । यन्त्रम् । अशीय । स्वाहा । शुक्रम् । असि । अमृतम् । असि । वैश्वदेवमिति वैश्व—देवम् । हविः । सूर्यस्य । चक्षुः । आ । अरुहम् । अग्नेः । अक्ष्णः । कनीनिकाम् । यत् । एतशेभिः । ईयसे । भ्राजमानः । विपश्चिता । चित् । असि । मना । असि । धीः । असि । दक्षिणा । (1)

(सोमयागोपयोगिसोमक्रयणार्थं सोमक्रयणीविषयहोमादिकम्)

असि। यज्ञिया। असि। क्षत्रिया। असि। अदितिः। असि। उभयतःशीर्ष्णीत्युभयतः—शीर्ष्णी। सा। नः। सुप्राचीति सु—प्राची। सुप्रतीचीति सु—प्रतीची। सम्। इति। भव। मित्रः। त्वा। पदि। बध्नातु। पूषा। अध्वनः। पातु। इन्द्राय। अध्यक्षायेत्यधि—अक्षाय। अनु। इति। त्वा। माता। मन्यताम्। अनु। इति। पिता। अनु। इति। भ्राता। सगर्भ्य इति स—गर्भ्यः। अनु। इति। सखा। सयूथ्य इति स—यूथ्यः। सा। देवि। देवम्। अच्छ। इहि। इन्द्राय। सोमम्। रुद्रः। त्वा। आ। इति। वर्तयतु। मित्रस्य। पथा। स्वस्ति। सोमसखेति सोम—सखा। पुनः। आ। इति। इहि। सह। रय्या (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः।)

---

तृतीये देवयजनं स्वीकृतम्। अथ तस्मिन्नेव देवयजने सोमयागोपयोगिसोमं क्रेतुं सोमक्रयणीविषयं होमादिकं चतुर्थेऽभिधीयते। इयं ते शुक्रेत्यादयस्तन्मन्त्राः। प्रायणीयासंबन्धि ध्रौवाज्यम्। तेनाऽऽज्येन सोमक्रयणीमीक्षमाणो जुहुयात्। ततो मन्त्रव्याख्यानात्पूर्वं प्रायणीया सोमक्रयणी चानुवाकद्वयेन ब्राह्मणेऽभिधीयते।

तत्र प्रायणीयां प्रस्तौति—

"देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्तेऽन्योऽन्यमुपाधावन्त्वया प्रजानाम त्वयेति तेऽदित्या्ँ समध्रियन्त त्वया प्रजानामेति साऽब्रवीद्वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना असन्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः" [ सं० का० ६ प्र० १ अ० ५ ] इति।

देवयजनार्थमयं प्रदेशः समीचीनो न त्वितर इति निश्चेतुं परिभ्रम्य तं प्रदेशं निश्चित्य परिभ्रमणेन दिग्भ्रमं प्राप्य प्राचीनवंशादावसमर्थाः संपन्नाः। ततस्त्वमेव दिशं ज्ञापयेत्येवं परस्परं वदन्तो दिग्बोधकशक्तिमदित्यां निश्चितवन्तः। सा चादितिः सोमयागारम्भसमाप्त्योरहमेव देवता भूयासमिति वरमयाचत। प्रयन्ति प्रारभन्तेऽनेन देवतारूपेणेति प्रायणम्। उद्यन्त्युत्तिष्ठन्ति समापयन्त्यनेनेति उदयनम्। अहमेव प्रायणमारम्भदेवता येषां यज्ञानां ते मत्प्रायणाः। अहमेवोदयनं समाप्तिदेवता येषां यज्ञानां ते मदुदयनाः। तस्मादेवं वृतत्वाददितिदेवताकः प्रायणीययागः कर्तव्यः। तत्प्रसङ्गादुदयनयागोऽपि विधीयते।

अदितिरेका प्रधानदेवता चतस्रस्त्वङ्गदेवता इत्यभिप्रेत्य संख्यां विधत्ते—

" पञ्च देवता यजति पञ्च दिशो दिशां प्रज्ञात्या अथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे " [ सं० का० ६ प्र० १ अ० ५ ] इति।

दिग्विशेषेषु देवताविशेषान्विधातुं प्रस्तौति—

" पथ्या्ँ स्वस्तिमयजन्प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणा सोमेन प्रतीची्ँ सवित्रोदीचीमदित्योर्ध्वाम्" [सं० का० ६ प्र० १ अ० ५] इति।

स्वस्तिसंज्ञा देवता पथ्या पथि साधुः॥

दिग्विशेषबोधनरूपे मार्गे कुशलान्विधत्ते—

" पथ्या्ँ स्वस्ति यजति प्राचीमेव तया दिशं प्रजानाति पथ्या्ँ स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति चक्षुषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानुपश्यत्यग्नीषोमाविष्ट्वा सवितारं यजति सवितृप्रसूत एवानुपश्यति सवितारमिष्ट्वाऽदितिं यजतीयं वा अदितिरस्यामेव प्रतिष्ठायानुपश्यति " [ सं० का० ६ प्र० १ अ० ५ ] इति।

अर्थानुसारेण होमविशेषा दिग्विशेषेषूह्नेयाः[1]। चक्षुर्द्वयरूपेण प्रशंसितुमग्नीषोमयोः सह निर्देशः। होमस्तु तयोः क्रमभावी दिग्भेदाद्याज्यानुवाक्याभे-

१ क. ग °पान्प्रस्तौ°।

(सोमयागोपयोगिसोमक्रयणार्थ सोमक्रयणीविषयहोमादिकम्)

दाच्च। ततोऽग्निमिष्ट्वा सोमं यजतीत्यपि वाक्यं द्रष्टव्यम्। तयोश्चक्षुष्ट्वं दार्शिकाज्यभागब्राह्मणे प्रपञ्चितम्। अत्रादितेश्चरुहोमः। "आदित्यः प्रायणीयः पयसि चरुः" इति शाखान्तरे समाम्नानात्। आज्येन तु देवतान्तराणाम्। तथा च सूत्रम्—"चतुर आज्यभागान्प्रतिदिशं यजति" इति॥

ऋगनुवचनमध्वर्योर्विधत्ते—

"अदितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो वै देवानां विशो देवविशं खलु वै कल्पमानं मनुष्यविशमनुकल्पते यन्मारुतीमृचमन्वाह विशां क्लृप्त्यै" [सं० का० ६ प्र० १ अ० ५] इति।

मरुतो यद्ध व इत्येषा मारुती। तथा च सूत्रम्—"मारुतीमृचमन्वाह मरुतो यद्धवो दिव इति" इति। एकोनपञ्चाशत्संख्याकाः सप्तगणरूपा मरुतो मनुष्यवैश्यवद्देवानां धनसंपादकाः प्रजाः। अनेन मन्त्रानुवचनेन देवविशां समूहः स्वव्यापारे क्लृप्तो भवति। तं च कल्पमानमनुसृत्य मनुष्यप्रजासंघः [1]कल्पते। अतो मन्त्रानुवचनं प्रजानां क्लृप्त्यै भवति॥

पूर्वपक्षत्वेन चोदकप्राप्तं किंचिदङ्गमपवदति—

"ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजवदप्रयाजमुदयनीयमितीमे वै प्रयाजा अमी अनूयाजाः सैव सा यज्ञस्य संततिः" [सं० का० ६ प्र० १ अ० ५] इति।

प्रमुखे यष्टव्याः समिदादिनामकाः पञ्च प्रयाजा अनु पश्चात्समाप्तौ यष्टव्या बर्हिरादिनामकास्त्रयोऽनूयाजाः। तदुभयं प्रायणीयोदयनीययोरिष्ट्योरतिदेशतः प्राप्तम्। तत्र प्रायणीयेष्ट्यामनूयाजानुष्ठाने यागः समाप्येत तद्वदुदयनीयायां प्रयाजानुष्ठाने यागान्तरं प्रारभ्येत। तथा सति सोमयागो मध्ये विच्छिद्येत। उभयवर्जने तु सोमयागस्य प्रारम्भरूपायां प्रायणीयेष्टाविदानीमनुष्ठीयमाना इमे प्रत्यक्षाः प्रयाजाः समाप्तिरूपायामुदयनीयेष्टावनुष्ठीयमाना अमी परोक्षा अनूयाजाः। तथा सति प्रयाजानूयाजद्वयेन दर्शयागस्य या संततिः सैवास्य सोमयागस्य मध्ये विच्छेदराहित्यलक्षणा सा संततिः संपद्यते॥

पूर्वपक्षं दूषयति—

"तत्तथा न कार्यमात्मा वै प्रयाजाः प्रजाऽनूयाजा यत्प्रयाजानन्तरियादात्मानमन्तरियाद्यदनूयाजानन्तरियात्प्रजामन्तरियाद्यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः पराभवति यज्ञं पराभवन्तं यजमानोऽनु पराभवति" [सं० का० ६ प्र० १ अ० ५] इति।

---

१ क. कल्प्यते।

आत्मनो वा पुत्रादेर्वा नान्तरायः सोढुं शक्यते यतो द्वयं तदङ्गमित्यर्थः ॥

सिद्धान्तमाह—

" प्रयाजवदेवानूयाजवत्प्रायणीयं कार्यं प्रयाजवदनूयाजवदुदयनीयं नाऽऽत्मानमन्तरेति न प्रजां न यज्ञः पराभवति न यजमानः " [ सं० का० ६ प्र० १ अ० ५ ] इति ।

त्विच्छेदपरिहाराय विधत्ते—

" प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति सैव सा यज्ञस्य संततिः " [ सं० का० ६ प्र० १ अ० ५ ] इति ।

प्रायणीययागसंबन्धि चरुपात्रमप्रक्षाल्य निष्कासे पात्रलिप्तेऽन्ने निर्वापान्नलेपस्य या संततिः सैव सोमयागस्याविच्छेदरूपा सा संततिर्भवति ॥

प्रायणीयोदयनीययोर्दैवतैक्येन याज्याया अप्येकत्वप्राप्तौ व्यत्यासं विधत्ते-

" याः प्रायणीयस्य याज्या यत्ता उदयनीयस्य याज्याः कुर्यात्पराङमुं लोकमारोहेत्प्रमायुकः स्याद्याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रतितिष्ठति " [ सं० का० ६ प्र० १ अ० ५ ] इति ।

स्वस्तिरिद्धि प्रपथे श्रेष्ठेत्याद्याः प्रायणीयस्य याज्या उदयनीयस्यापि तथेत्येवं केचिदाहुः । तथा सति प्रतिनिवृत्तेरभावाद्यजमानोऽस्माल्लोकात्पराङ्मुखः स्वर्गमारोढुं सहसा म्रियेत । तस्मात्तेषां पक्षो न युक्तः । यास्तु स्वस्ति नः पथ्येत्याद्याः प्रायणीयस्य पुरोनुवाक्यास्तासां याज्यात्वे सति स्वस्तिरिद्धीत्यादीनां पूर्वोक्तानां पुरोनुवाक्यात्वाय प्रतिनिवृत्तेर्यजमानोऽप्यस्मिँल्लोके प्रतितिष्ठत्येव ॥

इत्थं प्रायणीयेष्टिमुक्त्वा सोमक्रयणीं वक्तुं सोमाहरणं सोपाख्यानमाह—

" कद्रूश्च वै सुपर्णी चाऽऽत्मरूपयोरस्पर्धेतां स कद्रूः सुपर्णीमजयत्साऽब्रवीत्तृतीयस्यामितो दिवि सोमस्तमाहर तेनाऽऽत्मानं निष्क्रीणीष्वेति " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

कद्रूः सुपर्णी चोभे सपत्न्यौ पराजये दासीत्वमभ्युपेत्य ममैव सौन्दर्यं ममैवेत्यस्पर्धेताम् । तत्र मध्यस्थाः कद्र्वा जयमूचिरे । सा च कद्रूः सपत्नीं दासीत्वेन परिगृह्य तन्मोचनोपायं स्वयमेवोपदिदेश । इतोऽस्माल्लोकादारभ्य गणनायां तृतीया द्यौः स्वर्गलोकस्तस्मिन्सोमो वर्तते । महर्जनस्तपः सत्यमित्येतेऽपि लोका द्युशब्दाभिधेयास्तस्मादितस्तृतीयस्यामिति विशेष्यते । सोम आहृत्य दत्ते सति त्वां मुञ्चामीति ।

( सोमयागोपयोगिसोमक्रयणार्थं सोमक्रयणीविषयहोमादिकम् )

सोमाहरणं संभावयितुं श्रुतिराह—

" इयं वै कद्रूरसौ सुपर्णी छन्दाꣳसि सौपर्णेयाः " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

भूलोकरूपत्वात्कद्रूः स्वयमाहर्तुं न शक्नोति । सुपर्णी तु द्युलोकरूपत्वादुत्पतनसमर्थानां गायत्र्यादिरूपाणामपत्यानां सद्भावाच्च शक्नोति ॥

अथ सा सुपर्णी स्वपुत्राणां गायत्र्यादीनामग्रे स्ववृत्तान्तं स्पष्टीं करोतीत्याह—

" साऽब्रवीदस्मै वै पितरौ पुत्रान्बिभृतस्तृतीयस्यामितो दिवि सोमस्तमाहर तेनाऽऽत्मानं निष्क्रीणीष्वेति मा कद्रूरवोचदिति " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

पुंनामनरकोपलक्षितादशेषाद्दुःखात्त्रायन्त इति पुत्रास्तान्पुत्रानस्मा एतादृशोपद्रवपरित्राणाय मातापितरौ पुष्णीतः । हे गायत्र्यादिपुत्राः कद्रूवचनमवगत्य यदुचितं तत्कुरुध्वम् । गायत्र्यादीनामैच्छिकशरीरधारित्वात्पुत्रत्वमविरुद्धम् ॥

तत्र प्रौढत्वादादौ जगती प्रवृत्त इत्याह—

" जगत्युदपतच्चतुर्दशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा पशुभिश्च दीक्षया चाऽऽगच्छत्तस्माज्जगती छन्दसां पशव्यतमा तस्मात्पशुमन्तं दीक्षोपनमति " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

पुरा जगतीपादस्य चतुर्दशाक्षराण्यासन् । तादृशी जगती द्युलोकं गत्वा स्वानभ्राजादिसोमरक्षकैः सह युद्ध्वा सोममप्राप्याग्नीषोमीयसवनीयानूबन्ध्याख्यपशूनिष्टिसाध्यां दीक्षां च गृहीत्वा स्वकीये चाक्षरद्वये स्वानादिभिर्गृहीते सति पराजित्य समागता । यस्माज्जगती पशूनानयत्तस्मात्सैवात्यन्तं पशुप्रदा । यतः पशुभिः सह दीक्षाऽऽनीता ततः स्वाधीनसंपत्तौ सत्यां दीक्षायां प्रवर्तते ॥

तथैव त्रिष्टुभो युद्धं दर्शयति—

" त्रिष्टुगुदपतत्त्रयोदशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा दक्षिणाभिश्च तपसा चाऽऽगच्छत् " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

गौश्चाश्वश्चेत्यादयो दक्षिणाः । अशनपरित्यागमुष्टिबन्धवाग्यमननवनीताभ्यङ्गकृष्णाजिनप्रावरणादिक्लेशसहिष्णुत्वं तपः । प्राणवत्प्रियस्य गवाश्वादेर्दानमधिकं तपः ॥

---

१ ख. °तः पश्वधिकस्वा° ।

त्रिष्टुभा तदानयनमुपपादयति—

" तस्मात्त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्त एतत्खलु वाव तप इत्याहुर्यः स्वं ददाति " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

माध्यंदिनसवनस्य त्रिष्टुगभिमानिनी देवता । ततस्तदेतत्त्रिष्टुभो लोकः स्थानं, शरीरप्रयासादपि धनहानिकृतस्य मानसप्रयासस्याधिकत्वाद्दत्तेन धनेन परोपजीवनाच्च दानमेव महत्तप इत्यभिज्ञानां मतम् ॥

गायत्र्या युद्धे जयं दर्शयति—

" गायत्र्युदपतच्चतुरक्षरा सत्यजया ज्योतिषा तमस्या अजाऽभ्यरुन्ध तदजाया अजत्वꣳ सा सोमं चाऽऽहरच्चत्वारि चाक्षराणि साऽष्टाक्षरा समपद्यत " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

सहायरहितयोः पूर्वयोः पराजयं दृष्ट्वा गायत्री स्वयमजया सहोदपतत् । सा त्वजा गायत्र्यर्थं स्वकीयेन तेजसा तं सोममभितो रुरोध । तस्माद्रोधनपर्यायक्षेपणार्थादजधातोरजेति नाम निष्पन्नम् ॥

प्रश्नोत्तराभ्यां गायत्रीं प्रशंसति—

" ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्गायत्री कनिष्ठा छन्दसाꣳ सती यज्ञमुखं परीयायेति यदेवादः सोममाहरत्तस्माद्यज्ञमुखं पर्यैत्तस्मात्तेजस्विनीतमा " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

सत्यात्कारणात् । कनिष्ठा न्यूनाक्षरा । यज्ञमुखं प्रातःसवनम् । तत्र बहिष्पवमाननाम्नि प्रथमस्तोत्र उपास्मै गायता नर इत्याद्या ऋचो गायत्र्यः । सेयं यज्ञमुखप्राप्तिः । ब्रह्मवादिष्वेव बुद्धिमन्तो यदेवेत्याद्युत्तरमाहुः । यस्मादियमदोऽमुष्माल्लोकात्सोममाहरत्तस्मादस्या मुखप्राप्तिर्युक्ता । मुखत्वादेवास्यास्तेजोबाहुल्यम् ॥

आहरणप्रकारं दर्शयति—

" पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात्तदधयत्तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च तस्मात्तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते " [ सं० का० ६ प्र० १ अ० ६ ] इति ।

पक्षिरूपा गायत्री सवनद्वयपर्याप्तौ सोमभागौ पद्भ्यां संगृह्य तृतीयसवनपर्याप्तं सोमभागं चञ्चुपुटाभ्यां संदश्य तदीयं रसं पपौ । यस्मात्पद्भ्यां धृतौ सोमभागौ न पीतौ तस्मात्प्रातःसवनमाध्यंदिनसवने शुक्रशब्दाभिधेयेन सोमरसेनोपेते ॥

---

१ ख. °ति । तस्मात्सत्या° ।

यस्मात्तृतीयो भागः पीतस्तस्मात्पीतत्वं मन्यमानास्तत्सादृश्यार्थमृजीषमभिषुणुयुरिति प्रासङ्गिकं किंचिद्विधाय तत्रापरं विशेषं विधत्ते—

"आशिरमवनयति सशुक्रत्वायाथो संभरत्येवैनत्" [ सं० का० ६ प्र० १ अ० ६ ] इति।

आशिरं क्षीरम्। सशुक्रत्वं सरसत्वम्। किं च क्षीरसेचनादृजीषगतसोमरसरूपहविः संभरति सम्यक्पोषयत्येव॥

पुनरप्यन्यद्विधत्ते—

"तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्स तिस्रो रात्रीः परिमुषितोऽवसत्तस्मात्तिस्रो रात्रीः क्रीतः सोमो वसति" [ सं० का० ६ प्र० १ अ० ६ ] इति।

उपसद्दिवसेषु त्रिष्वभिषवमकृत्वा सोमं निवासयेदित्यर्थः॥

इत्थं सोमाहरणं निरूप्य सोमक्रयणीं निरूपयितुमारभते—

"ते देवा अब्रुवन्स्त्रीकामा वै गन्धर्वाः स्त्रिया निष्क्रीणामेति ते वाचꣳ स्त्रियमेकहायनीं कृत्वा तया निरक्रीणन्"[सं० का० ६ प्र० १अ० ६]इति।

एकसंवत्सरवयस्कया स्त्रीरूपया वाग्देवतया सोमस्य निष्क्रयः कृतः॥

गन्धर्वेष्वपरक्तायास्तस्याः स्त्रिया रोहितगोरूपतां दर्शयति—

"सा रोहिद्रूपं कृत्वा गन्धर्वेभ्योऽपक्रम्यातिष्ठत्तद्रोहितो जन्म" [ सं० का० ६ प्र० १ अ० ६ ] इति।

देवेष्वनुरक्तायाः पुनर्देवताप्राप्तिं दर्शयति—

"ते देवा अब्रुवन्नप युष्मदक्रमीन्नास्मानुपावर्तते विह्वयामहा इति ब्रह्म गन्धर्वा अवदन्नगायन्देवाः सा देवान्गायत उपावर्तत तस्माद्गायन्तꣳ स्त्रियः कामयन्ते" [ सं० का० ६ प्र० १ अ० ६ ] इति।

विह्वयामहै विलक्षणं यथा भवति तथैवाऽऽकारयामः। ब्रह्म वेदः॥

एतद्वृत्तान्तवेदनं प्रशंसति—

"कामुका एनꣳ स्त्रियो भवन्ति य एवं वेदाथो य एवं विद्वानपि जन्येषु भवति तेभ्य एव ददत्युत यद्बहुतया भवन्ति" [ सं० का० ६ प्र० १ अ० ६ ] इति।

वरस्य स्निग्धा वरार्थं कन्यामन्वेष्टुं प्रवृत्ता बान्धवा जन्याः। तादृशानां जन्यानां द्वौ वर्गौ। तत्रैकस्मिन्वर्गे यथोक्तवेदनरहिता अनेकगुणान्तरोपेता

१ क. ग. °रक्ततया पु°।

बहवो वरा यद्यपि सन्ति तथाऽपि तं वर्गमुपेक्ष्य येषु जन्येष्वेकोऽप्येवं विद्वान्वरो भवति तेभ्य एव जन्येभ्यः कन्यां तत्पितरो ददाति ॥

सोमक्रयण्यां[1] गुणं विधत्ते—

"एकहायन्या क्रीणाति वाचैवैन सर्वया क्रीणाति तस्मादेकहायना मनुष्या वाचं वदन्ति" [ सं० का० ६ प्र० १ अ० ६ ] इति।

वाग्देवतायाः सोमक्रयणीरूपस्वीकारात्सर्वया वाचा क्रय उपपद्यते। एकसंवत्सरस्वीकारश्च तस्मिन्वयसि सति वदनव्यवहारोपक्रमात् ॥

वर्ज्यदोषान्विशदयति—

"अकूटयाऽकर्णयाऽकाणयाऽश्लोणयाऽसप्तशफया क्रीणाति" [ सं० का० ६ प्र० १ अ० ६ ] इति।

कूटा कुटिलशृङ्गी। कर्णा छिन्नकर्णोपेता। काणा त्वेकाक्षी। श्लोणा कुष्ठादिदूषिता। सप्तशफा न्यूनाङ्गी। एता वर्ज्याः।

उपादेयां दर्शयति—

"सर्वयैवैनं क्रीणाति" [ सं० का० ६ प्र० १ अ० ६ ] इति।

सर्वाऽवयवसंपूर्णेत्यर्थः ॥

विपक्षबाधपुरःसरं स्वपक्षं विधत्ते—

"यच्छ्वेतया क्रीणीयाद्दुश्चर्मा यजमानः स्याद्यत्कृष्णयाऽनुस्तरणी स्यात्प्रमायुको यजमानः स्याद्यद्द्विरूपया वार्त्रघ्नी स्यात्स वाऽन्यं जिनीयात्तं वाऽन्यो जिनीयादरुणया पिङ्गाक्ष्या क्रीणात्येतद्वै सोमस्य रूप स्वयैवैनं देवतया क्रीणाति" [ सं० का० ६ प्र० १ अ० ६ ] इति।

मृतं पुरुषमनु हन्यमाना गौरनुस्तरणी। कृष्णायास्तादृक्त्वेन यजमानो म्रियेत। वर्णद्वयोपेता यद्यपि विरोधिघातिनी तथाऽपि यजमानतद्वैरिणोरन्योन्यविरोधित्वात्को हन्ति को वा हन्यत इति न ज्ञायते। अरुणत्वं पिङ्गाक्षत्वं च सोमदेवतायाः स्वरूपम्। अतस्तादृशी गौः सोमक्रयाय सदृशी भवति।

इत्थं चतुर्थानुवाकोक्तमन्त्रव्याख्यानस्योपोद्घातत्वेन ब्राह्मणेन प्रायणीयासोमक्रयण्यावनुवाकाभ्यामभिहिते। अथ मन्त्रा व्याख्यातव्याः।

## इयं ते शुक्र तनूरिदं वर्चस्तया सं भव भ्राजं गच्छ—

कल्पः—" अथैतद्ध्रुवाज्यमाप्याय्य स्रुचि चतुर्गृहीतं गृहीत्वा सूत्रेण हिरण्यं

१ ख. °यण्या गु°।

( सोमयागोपयोगिसोमक्रयणार्थं सोमक्रयणीविषयहोमादिकम् )

निष्क्रयं बद्ध्वा दर्भाभ्यां प्रबध्य स्रुच्यवदधातीयं ते शुक्र तनूरिदं वर्चस्तया सं भव भ्राजं गच्छेति " इति।

हे शुक्र दीप्तिमद्धिरण्य तवेयं जुहूस्तनूः, इदं घृतं तव तेजोऽतस्तया जुह्वा संगच्छ संभव। हे हिरण्याऽऽज्यरूपां भ्राजं दीप्तिं प्राप्नुहि। अथ वा हे शुक्र वह्न इयमाज्यरूपा तव तनूरिदं हिरण्यं तव तेज इत्येवं ब्राह्मणानुसारेण व्याख्यातव्यम् ॥

आधानब्राह्मणोक्तं हिरण्यस्य महिमानं तत्रत्यपदत्रयोच्चारणेन प्रत्यभिज्ञाप्य प्रशंसति—

"तद्धिरण्यमभवत्तस्मादद्भ्यो हिरण्यं पुनन्ति" [ सं० का० ६ प्र० १ अ० ७ ] इति।

आधानब्राह्मणे त्वेवमाम्नायते—

"आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायत्। ताः समभवत्। तस्य रेतः परापतत्। तद्धिरण्यमभवत्" इति।

तस्माद्धिरण्यस्य वह्निः पिताऽऽपो मातरः। तस्मात्स्वतः शुद्धं हिरण्यं यदि कदाचिद्रजस्वलादिस्पर्शेन शोधनीयं भवति तदाऽद्भ्यः पुनन्ति जलेनैव शोधयन्ति न तु कांस्यताम्रादेरिव भस्माग्न्यादिकमपेक्षते ॥

जुह्वां हिरण्यप्रक्षेपेण विशिष्टं होमं विधत्ते—

"ब्रह्मवादिनो वदन्ति कस्मात्सत्यादनस्थिकेन प्रजाः प्र वीयन्तेऽस्थन्वतीर्जायन्त इति यद्धिरण्यं घृतेऽवधाय जुहोति तस्मादनस्थिकेन प्रजाः प्र वीयन्तेऽस्थन्वतीर्जायन्ते" [ सं० का० ६ प्र० १ अ० ७ ] इति।

तस्मादनस्थिकेन वीर्येण प्रजाः प्रवीयन्ते गर्भाः क्रियन्ते। उत्पत्तिकाले त्वस्थियुक्ता जायन्ते। तत्र वीर्यसदृशमाज्यमस्थिसदृशं हिरण्यम्। तदिदं सादृश्यं निर्वोढुमीश्वरेणास्थि निर्मीयत इत्यर्थः ॥

वह्निसंबन्धबोधनपरतया मन्त्रं व्याचष्टे—

"एतद्वा अग्नेः प्रियं धाम यद्घृतं तेजो हिरण्यमियं ते शुक्र तनूरिदं वर्च इत्याह सतेजसमेवैनꣳ सतनुं करोत्यथो सं भरत्येवैनम्" [ सं० का० ६ प्र० १ अ० ७ ] इति।

एनमग्निं संभरति सम्यक्करोत्येव। वह्निसंबोधनेन तदीयतेजोरूपेण हिरण्यमत्र प्रकाश्यते ॥

---

१ क. ग. दर्भनाड्यां प्रग्रथ्य स्रु°। २ क. ग. घ. ङ. °च्छति आज्य°। च. °च्छ। तेनाऽऽज्य°। ३ ख. °ज्ञाप्य प्र°।

हिरण्यस्य सूत्रेण बन्धनं विधत्ते—

" यदबद्धमवदध्याद्गर्भाः प्रजानां परापातुकाः स्युर्बद्धमव दधाति गर्भाणां धृत्यै " [ सं० का० ६ प्र० १ अ० ७ ] इति ॥

सूत्राग्राकर्षणेन यथा सहसा मुच्यते तथा बध्नीयादिति विशेषं विधत्ते—

"निष्टर्क्यं बध्नाति प्रजानां प्रजननाय" [सं० का० ६ प्र० १ अ० ७] इति।

निःशेषेण सहसा मोचनयोग्यं निष्टर्क्यम् ॥

## जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा—

कल्पः—" नाडीस्रुग्दण्ड उपसंगृह्याऽऽहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहेति " इति ।

हे सोमक्रयणि वाग्रूपा त्वं जूर्वेगयुक्ताऽसि मनसा नियमिताऽसि यज्ञाय प्रियाऽसि । तादृश्या अमोघप्रेरणायास्तव प्रेरणे सति मन्त्रोच्चारणरूपाया वाचो यन्त्रं नियममशीय प्राप्नुयाम् । इदमाज्यं हुतमस्तु ॥

यथोक्तार्थं मन्त्रे दर्शयति—

"वाग्वा एषा यत्सोमक्रयणी जूरसीत्याह यद्धि मनसा जवते तद्वाचा वदति धृता मनसेत्याह मनसा हि वाग्धृता जुष्टा विष्णव इत्याह यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति तस्यास्ते सत्यसवसः प्रसव इत्याह सवितृप्रसूतामेव वाचमव रुन्धे " [ सं० का० ६ प्र० १ अ० ७ ] इति ।

जवते तूर्णं कर्तव्यमित्यवगच्छति ॥

## शुक्रमस्यमृतमसि वैश्वदेवꣳ हविः—

बौधायनः—" अग्रेण शालां[3] तिष्ठन्यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेवꣳ हविरिति " इति ।

आपस्तम्बः—" सोमक्रयणीमीक्षमाणो जुहोति जूरसीत्यपरं चतुर्गृहीतं गृहीत्वा शुक्रमसीति हिरण्यं घृतादुद्धृत्य वैश्वदेवꣳ हविरित्याज्यमवेक्ष्य" इति ।

शुक्रं दीप्तिमत् । अमृतं नाशरहितम् । हे आज्य हे हिरण्येति वा योज्यम् । हे आज्य त्वं सर्वदेवप्रियं हविरसि । तदिदं स्पष्टत्वान्न ब्राह्मणे व्याख्यातम् ॥

---

१ क. °सा न मु° । २ ख. °ल्पः—दर्भकाण्डे सु° । ३ क. ख. ग. शालायां ।

(सोमयागोपयोगिसोमक्रयणार्थ सोमक्रयणीविषयहोमादिकम्)

सूर्यस्य चक्षुराऽरुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चिता—

कल्पः—" अथैनद्धिरण्यमन्तर्धायाऽऽदित्यमुदीक्षयति सूर्यस्य चक्षुराऽरुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चितेति " इति ।

सूर्यसंबन्धि मदीयं चक्षुरिन्द्रियं, कनीनिका त्वग्निसंबन्धिनी, तदुभयमारुहं प्राप्तोऽस्मि । यतो हे सूर्य त्वमेतशनामकैरश्वैर्गच्छसि, हे वह्ने त्वं विपश्चिता तेजसा भ्राजमानोऽसि तस्माद्रक्षोनिवारणाय युवामुभौ प्राप्तोऽस्मि ॥

एतदभिप्रायं दर्शयति—

"काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येष खलु वा अरक्षोहतः पन्था योऽग्नेश्च सूर्यस्य च सूर्यस्य चक्षुराऽरुहमग्नेरक्ष्णः कनीनिकामित्याह य एवारक्षोहतः पन्थास्तꣳ समारोहति " [ सं० का० ६ प्र० १ अ० ७ ] इति ।

काण्डे काण्डे तत्तदुपाङ्गैर्युक्त एकैकस्मिन्यज्ञाङ्गे ॥

बौधायनः—" अथैताꣳ सोमक्रयणीमग्रेण शालामुदीचीमभिवर्तयन्ते तामनुमन्त्रयते चिदसि मनाऽसीत्यन्तादनुवाकस्य " इति ।

स च मन्त्र एवमाम्नायते—

चिदसि मनाऽसि धीरसि दक्षिणाऽसि यज्ञियाऽसि क्षत्रियाऽस्यदितिरस्युभयतःशीर्ष्णी सा नः सुप्राची सुप्रतीची सं भव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाध्यक्षायानु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वाऽऽ वर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या ॥, इति ।

आपस्तम्बस्तु त्रेधा विभज्य विनियुङ्क्ते—" चिदसि मनाऽसीति सोमक्रयणीमभिमन्त्रयते, कर्णगृहीता पदि बद्धा भवति, मित्रस्त्वा पदि बध्नात्विति दक्षिणं पूर्वपादं प्रेक्षते, पूषाऽध्वनः पात्विति प्राचीमायतीमनुमन्त्रयते " इति ।

१ क. ग. सोमक्रयणिं ताम् ।

हे वाग्देवतारूपे सोमक्रयणि त्वं चिदादिशब्दप्रतिपाद्याऽसि । अन्तःकरणस्य चित्तं मनो बुद्धिरिति तिस्रो वृत्तयः । देहादिसंघातस्याचेतनत्वं व्यावर्त्य चेतनत्वं संपादयन्ती बाह्यवस्तुषु वा निर्विकल्परूपं सामान्यप्रज्ञानं जनयन्ती वृत्तिश्चित्तम् । अयं पदार्थ एवं भवति वा न वेति विचाररूपा वृत्तिर्मनः । भवत्येवेति निश्चयरूपा बुद्धिः । एतत्त्रितयमिह चिन्मनोधीशब्दैरुच्यते । दक्षिणा कुशला देयद्रव्यरूपा वा । यज्ञिया सोमक्रयद्वारेण यज्ञसंबन्धिनी । क्षत्रिया देवेषु सोमः क्षत्रियजात्यभिमानी ।

तथा च वाजसनेयिन आमनन्ति—

" यान्येतानि देवक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः " इति ।

तेन सोमेनाभिमन्तव्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन क्षत्रिया । ज्योतिष्टोमस्याऽऽद्यन्तयोः प्रायणीयोदयनीययोरदितेर्देवतात्वात्सेयमुभयतःशीर्ष्णी तद्रूपा त्वमसि । सा तादृशी त्वमस्मदर्थं सुप्राची सुप्रतीची संभव, प्रथमं सोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखी गत्वा पश्चादस्मान्प्रति सुष्ठु प्रत्यङ्मुखी समागम्यास्माभिः संगच्छस्व ॥

यथोक्तमर्थं मन्त्रे दर्शयति—

" वाग्वा एषा यत्सोमक्रयणी चिदसि मनाऽसीत्याह शास्त्येवैनामेतत्तस्माच्छिष्टाः प्रजा जायन्ते " [ सं० का० ६ प्र० १ अ० ७ ] इति ।

एतेन मन्त्रेण वागात्मिकां सोमक्रयणीं चिदादिशब्दवाच्या भवेत्येवमनुशास्ति । यस्मादेवं तस्माल्लोकेऽपि प्रजा अनुशिष्यन्ते ॥

कृत्स्नशस्तात्पर्यमुक्त्वा प्रत्यवयवं व्याचष्टे—

" चिदसीत्याह यद्धि मनसा चेतयते तद्वाचा वदति मनाऽसीत्याह यद्धि मनसाऽभिगच्छति तत्करोति धीरसीत्याह यद्धि मनसा ध्यायति तद्वाचा वदति दक्षिणाऽसीत्याह दक्षिणा ह्येषा यज्ञियाऽसीत्याह यज्ञियामेवैनां करोति क्षत्रियासीत्याह क्षत्रिया ह्येषाऽदितिरस्युभयतःशीर्ष्णीत्याह यदेवाऽऽदित्यः प्रायणीयो यज्ञानामादित्य उदयनीयस्तस्मादेवमाह " [ सं० का० ६ प्र० १ अ० ७ ] इति ।

मनसा वृत्तित्रयसाधारणेनान्तःकरणेन चेतयते सामान्यतो जानात्यभिगच्छति विचारयति ध्यायति निश्चिनोति । उत्तरमन्त्रस्यायमर्थः । हे सोमक्रयणि मित्रो हितकारी देवस्त्वां दक्षिणे पादे बध्नातु ॥

---

१ ख. 'यकार' ।

( सोमयागोपयोगिसोमक्रयणार्थ सोमक्रयणीविषयहोमादिकम् )

एतन्मन्त्रविरुद्धं पक्षत्रयं व्यावर्तयन्मन्त्रं व्याचष्टे—

" यदबद्धा स्यादयता स्याद्यत्पादिबद्धाऽनुस्तरणी स्यात्प्रमायुको यजमानः स्याद्यत्कर्णगृहीता वार्त्रघ्नी स्यात्स वाऽन्यं जिनीयात्तं वाऽन्यो जिनीयान्मित्रस्त्वा पदि बध्नात्वित्याह मित्रो वै शिवो देवानां तेनैवैनां पदि बध्नाति" [ सं० का० ६ प्र० १ अ० ७ ] इति ।

अत्र पादबन्धनं कर्णग्रहणं चामन्त्रकमङ्गी चकारेत्यविरोधः । अथवा, अकर्णगृहीता, अपदि बद्धेति पदच्छेदः । तृतीयमन्त्रस्यायमर्थः—हे सोमक्रयणि त्वां पूषा पोषको देवो भयोपेतान्मार्गात्पालयतु । यागाध्यक्षायेन्द्राय त्वां सोमक्रयसाधनेन मातृ(ता)पित्रादयोऽनुमन्यन्ताम् । सगर्भ्यस्त्वया सहैकस्मिन्गर्भेऽवस्थितः । हे देवि सा त्वमिन्द्रार्थं सोमं देवमनुगच्छ । तां त्वां रुद्रो देवोऽस्मान्प्रति पुनरावर्तयतु । आवर्तयन्नपि न रौद्रेण मार्गेण किं तु मित्रस्य पथा । ततस्ते स्वस्ति सुखं भवतु । सोमः सखा यस्यास्तव सा त्वं सोमसखा भूत्वा धनेन सहास्मान्प्रति पुनरागच्छ । अत्र रुद्रस्त्वेत्यादिना पृथङ्मन्त्रेण सोमक्रयादूर्ध्वमेतस्याः प्रत्यावर्तनमिति केचित् ॥

मन्त्रस्य भागान्क्रमेण व्याचष्टे—

"पूषाऽध्वनः पात्वित्याहेयं वै पूषेमामेवास्या अधिपामकः समष्ट्या इन्द्रायाध्यक्षायेत्याहेन्द्रमेवास्या अध्यक्षं करोति अनु त्वा माता मन्यतामनु पितेत्याहानुमतयैवैनया क्रीणाति सा देवि देवमच्छेहीत्याह देवी ह्येषा देवः सोम इन्द्राय सोममित्याहेन्द्राय हि सोम आह्रियते यदेतद्यजुर्न ब्रूयात्पराच्येव सोमक्रयणीयाद्रुद्रस्त्वाऽऽ वर्तयत्वित्याह रुद्रो वै क्रूरो देवानां तमेवास्यै परस्ताद्दधात्यावृत्त्यै क्रूरमिव वा एतत्करोति यद्रुद्रस्य कीर्तयति मित्रस्य पथेत्याह शान्त्यै वाचा वा एष वि क्रीणीते यः सोमक्रयण्या स्वस्ति सोमसखा पुनरेहि सह रय्येत्याह वाचैव विक्रीय पुनरात्मन्वाचं धत्तेऽनुपदासुकाऽस्य वाग्भवति य एवं वेद" [ सं० का० ६ प्र० १ अ० ७ ] इति ।

समष्ट्यै सम्यक्प्राप्तये । एतद्रुद्रस्ये(स्त्वे)ति यजुः । तमेव क्रूरं रुद्रम् । अस्याः सोमक्रयण्या आवृत्तये परस्तात्तामतिलङ्घ्य परभागे स्थापयति । अनुपदासुका क्षयरहिता । तदेतद्वेदनस्य प्रशंसनम् ॥

अथ विनियोगसंग्रहः—

" इयं क्षिप्त्वा घृते स्वर्णं जूरसीति जुहोति हि ॥
शुक्रेति स्वर्णमुद्धृत्य वैश्वेत्याज्यमवेक्षते ॥ १ ॥

१ ख. °ये रुद्रस्त्वाऽऽवर्तयत्विति । २ ख. °त्तानिति° ।

सूर्यं सूर्यमुपस्थाय चित्सोमक्रयणीं जपेत् ॥
मित्रो दृष्ट्वा बद्धपादं पूषा तामनुमन्त्रयेत् ॥
रुद्रस्तामावर्तयीत मन्त्राः संकीर्तिता नव ॥ २ ॥ " इति ।

अथ मीमांसा ।

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म तत् ॥
निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः ॥
उताऽऽद्यः पूर्ववन्मैवं मुख्यस्य प्रकृतित्वतः ॥
मध्योऽस्तु नोपयोक्तव्यसंस्कारस्य गुरुत्वतः " इति ॥

ज्योतिष्टोमे श्रूयते—" प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति " इति । अत्र पूर्वन्यायेन निष्कासद्रव्यकमुदयनीयसमानकर्मकमन्यदर्थकर्मेत्याद्यः पक्षः । मुख्यस्योदयनीयस्य प्रकृतत्वाद्भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवदुदयनीयधर्मातिदेशासंभवान्नार्थकर्मत्वम् । तर्हि निष्कासप्रतिपत्तिरिति मध्यमः पक्षोऽस्तु । सोऽपि न संभवत्युपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात् । तस्मादुदयनीयस्य संस्कारः ।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

" क्रीणात्यरुणयेत्येतत्संकीर्णं वा क्रयैकभाक् ॥
क्रयेणानन्वयात्कीर्णः सर्वद्रव्येषु रक्तिमा ॥
द्रव्यद्वारा क्रये योगात्तद्भागेनान्वयः पुनः ॥
साक्षात्क्रये गुणस्यार्थाद्द्रव्ये संनिहितेऽस्त्वसौ " इति ॥

ज्योतिष्टोमे श्रूयते—" अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति " इति । तत्रारुणशब्दोऽरुणिमानं गुणमाचष्टे । गुणिविषयतया प्रयुज्यमानस्यापि नागृहीतविशेषणा विशिष्टे बुद्धिरिति न्यायेन गुणबोधकत्वादन्वयव्यतिरेकाभ्यां गुणमात्रे व्युत्पत्तेश्च । तस्य चारुणिमगुणस्य तृतीयाश्रुत्या सोमक्रयसाधनत्वं प्रतीयते । तच्चानुपपन्नममूर्तस्य गुणस्य वासोहिरण्यादिवत्क्रयसाधनत्वासंभवात् । ततस्तृतीयाश्रुतेर्विनियोजकत्वाभावेन प्रकरणस्यात्र विनियोजकत्वं वक्तव्यम् । प्रकरणं च ग्रहचमसाद्यखिलद्रव्येष्वरुणिमानं विनिवेशयति । न चानेन न्यायेन पिङ्गाक्ष्येकहायनीशब्दयोरपि सर्वद्रव्यगामित्वं शङ्कनीयं तयोः शब्दयोर्द्रव्यवाचित्वात् । पिङ्गलवर्णे अक्षिणी यस्याः सा गौः पिङ्गाक्षी । एवमेकहायनी । यद्यप्येकगोवाचिनौ शब्दौ तथाऽपि विशेषणीभूतधर्मभेदाच्छब्दद्वयम् । तच्च युगपत्प्रवृत्तं सद्धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन

( क्रयप्रदेशं गच्छन्त्याः सोमक्रयण्याः पदसंग्रहस्याभिधानम् )

विदधाति । न चैतद्द्रव्यमितरद्रव्ये विनिवेशयितुं शक्यम् । अरुणिमगुणो द्रव्येषु विशेषणत्वेनान्वेतुं योग्यत्वात्तेषु निवेश्यते । तत्रैषाऽक्षरयोजना । अरुणयेत्येतत्पृथग्वाक्यम् । तत्र तृतीयाश्रुत्या प्राकरणिकानि साधनद्रव्याणि सर्वाण्यनूद्य प्रातिपदिकेन गुणो विधीयते यानि ज्योतिष्टोमे साधनद्रव्याणि तानि सर्वाण्यरुणानि कर्तव्यानीति । तस्माद्गुणः संकीर्ण इति प्राप्ते ब्रूमः—यद्यप्यमूर्तो गुणस्तथाऽपि हायनवदाक्षिवच्च गोद्रव्यमवच्छिनत्ति । तच्च द्रव्यं साधनमिति तद्द्वारा गुणस्य क्रयेणान्वयो भवति । एवं सति वाक्यभेदो न भविष्यति । ननु वाक्यभेदाभावेऽपि लक्षणा दुर्वारा । गुणवाचिनः शब्दस्य गुणिद्रव्यपरत्वाङ्गीकारात् । मैवम् । गुणस्यैवात्र तृतीयाश्रुत्या साधनत्वमुच्यते । तच्च द्रव्यद्वारमन्तरेण न संभवतीत्यर्थापत्त्या द्रव्यावच्छेदकं कल्प्यते । तर्हि ग्रहचमसादिद्रव्यमवच्छिद्यतामिति चेत् । न । तस्य द्रव्यस्य क्रयसाधनत्वाभावेन तदवच्छेदकगुणस्य श्रूयमाणक्रयसाधनत्वासिद्धेः । तर्हि वाससा क्रीणात्यजया क्रीणातीति वस्त्रादीनां क्रयसाधनत्वात्तदवच्छेदोऽस्त्विति चेत् । न । तेषां क्रयान्तरसाधनत्वात् । न हि तत्राग्निहोत्रे पयोदध्यादिविकल्पवत्क्रयानुवादेन वस्त्रादिविकल्पो युक्तः । अनुवाद्यस्य क्रयमात्रस्याग्निहोत्रवदन्यत्राविधानात् । ततो वस्त्रादिद्रव्यविशिष्टाः क्रयान्तरविधयः । न हि स्ववाक्यगतमेकहायनीद्रव्यमुपेक्ष्य वस्त्राद्यवच्छेदो युक्तः । तस्मात्क्रयेण साक्षादन्वितयोर्द्रव्यगुणयोः पश्चादन्यथाऽनुपपत्त्या परस्परावच्छेदकत्वेनान्वयः । तथा सत्यारुण्यविशिष्टैकहायन्या क्रीणातीत्यर्थः पर्यवस्यति । तस्मादारुण्यगुणः क्रयहेतुमेकहायनीमेव भजते ॥

अथ च्छन्दः—

सूर्यस्य चक्षुरारुहमित्यनुष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

वस्व्यसि रुद्राऽस्यदितिरस्यादित्याऽसि शु-

१ क. 'राऽरुण' ।

क्राऽसि चन्द्राऽसि बृहस्पतिस्त्वा सुम्ने रंण्वतु रुद्रो वसुंभिरा चिंकेतु पृथिव्यास्त्वा मूर्धन्ना जिंघर्मि देवयजंन इडांयाः पदे घृतवंति स्वाहा परिंलिखितꣳ रक्षः परिंलिखिता अरांतय इदमहꣳ रक्षंसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमंस्य ग्रीवाः ( १ ) अपि कृन्ताम्यस्मे रायस्त्वे रायस्तोते रायः सं देंवि देव्योर्वश्यां पश्यस्व त्वष्टींमती ते सपेय सुरेता रेतो दधाना वीरं विंदेय तवं संदृशि माऽहꣳ रायस्पोषेंण वि योषम् (२) ॥

( अस्य ग्रीवा एकान्नत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

वस्वी । असि । रुद्रा । असि । अदितिः । असि । आदित्या । असि । शुक्रा । असि । चन्द्रा । असि । बृहस्पतिः । त्वा । सुम्ने । रण्वतु । रुद्रः । वसुंभिरिति वसु—भिः । एतिं । चिकेतु । पृथिव्याः । त्वा । मूर्धन् । एतिं । जिघर्मि । देवयजंन इतिं देव—यजंने । इडांयाः । पदे । घृतवतीतिं घृत—वति ।

( क्रयप्रदेशं गच्छन्त्याः सोमक्रयण्याः पदसंग्रहस्याभिधानम् )

स्वाहा । परिलिखितमिति परि—लिखितम् । रक्षः । परिलिखिता इति परि—लिखिताः । अरातयः । इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् । अस्य । ग्रीवाः । ( १ ) अपीति । कृन्तामि । अस्मे इति । रायः । त्वे इति । रायः । तोते । रायः । समिति । देवि । देव्या । उर्वश्या । पश्यस्व । त्वष्टीमती । ते । सपेय । सुरेता इति सु—रेताः । रेतः । दधाना । वीरम् । विदेय । तव । संदृशीति सं—दृशि । मा । अहम् । रायः । पोषेण । वीति । योषम् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाके क्रयप्रदेशं प्रति सोमक्रयणीगमनमुक्तम् । गतायां तस्यां क्रयाय सोमोन्मानस्यावसरः । सप्तमपदसंग्रहस्तु गमनमध्य एव कर्तव्यः । ततः पञ्चमे सोऽभिधीयते ।

वस्व्यसि रुद्राऽस्यदितिरस्यादि-
त्याऽसि शुक्राऽसि चन्द्राऽसि—

कल्पः—“ तस्यै पद्पदान्यनुनिष्क्रामति वस्व्यसि रुद्राऽस्यदितिरस्या-

दित्याऽसि शुक्राऽसि चन्द्राऽसीति गच्छन्तीं सोमक्रयणीमनुगच्छन्षट्सु तदीयपदेषु षड्भिरेतैर्मन्त्रैः स्वपादं प्रक्षिपेत् " इति ।

वसुरुद्रादित्याः सवनत्रयदेवताः । अदितिः प्रायणीयोदयनीययोर्देवता। शुक्रशब्देन दीप्तिमान्सोमो विवक्षितः । चन्द्रशब्देनाऽऽह्लादकारि सुवर्णम्। हे सोमक्रयणि त्वं वस्वादीनां स्वरूपमसि तदपेक्षितसोमयागसाधनत्वात् ॥

बृहस्पतिस्त्वा सुम्ने रण्वतु
रुद्रो वसुभिरा चिकेतु—

कल्पः—" सप्तमं पदमञ्जलिना गृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिरा चिकेत्विति " इति ।

हे सोमक्रयणीपद त्वां बृहस्पतिरस्मिन्सुखप्रदेशे रमयतु । वसुभिः सहितो रुद्रस्त्वामनुजानातु आवर्तयतु वा ॥

पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन
इडायाः पदे घृतवति स्वाहा—

कल्पः—" अथैतस्मिन्पदे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन इडायाः पदे घृतवति स्वाहेति " इति ।

हे घृत त्वामिडायाः सोमक्रयण्याः पदे समन्तात्क्षारयामि । कीदृशे पदे। पृथिव्या मूर्धस्थानीये देवतानां यागस्थाने घृतयुक्ते । तथाऽन्यत्राऽऽम्नातम्- " सा यत्र यत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते " इति ॥

मन्त्रान्व्याख्यातुमादावनुष्ठानं विधत्ते—

"षट्पदान्यनु नि क्रामति षडहं वाङ्नाति वदत्युत संवत्सरस्यायने यावत्येव वाक्तामव रुन्धे " [ सं० का० ६ प्र० १ अ० ८ ] इति ।

अस्ति कश्चित्पृष्ठ्यः षडहाख्यो यागः । तत्र षड्विधानि स्तोत्राणि बृहद्रथंतरवैरूपवैराजशाक्वररैवतनामकैः सामभिः साध्यानि । तानि च क्रमेण षट्सु दिनेषु गीयन्ते । न तु सप्तमं पृष्ठ्यस्तोत्रं किंचिदप्यस्ति । ततः प्रधानभूतपृष्ठ्यस्तोत्ररूपा वाग्देवता षडहगतां संख्यामतीत्य न क्वापि वदति । अपि च संवत्सरकालसंबन्धिनि गवामयनेऽपि नाधिकं पृष्ठ्यस्तोत्रं वदति । तस्माद्वाग्रूपायाः सोमक्रयण्याः षट्पदानामनुक्रमणं युक्तम् । तस्माद्वाग्रूपत्वादेव सर्वां वाचमवरुन्धे ॥

---

१ ख. °नाऽभिगृ° । २ ख. °डाया गोरूपायाः । ३ ख. °न्व्याचिख्यासुरादा° । ४ ख. °त्रं क्वचि° ।

( क्रयप्रदेशं गच्छन्त्याः सोमक्रयण्याः पदसंग्रहस्याभिधानम् )

विधत्ते—

" सप्तमे पदे जुहोति सप्तपदा शक्करी पशवः शक्करी पशूनेवाव रुन्धे सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै " [ सं० का० ६ प्र० १ अ० ८ ] इति ।

गवादयो ग्राम्याः । कृष्णमृगादय आरण्याः । तथा च बौधायनः—" सप्त ग्राम्याः पशवोऽजाऽश्वो गौर्महिषी[1] वराहो हस्त्यश्वतरी चेत्यथ सप्ताऽऽरण्या द्विखुराश्चैकखुराश्च पक्षिणश्च सरीसृपाश्च श्वापदाश्च शरभाश्च मर्कटाश्च " इति । गायत्री त्रिष्टुबित्यादीनि सप्त च्छन्दांसि । पशुजातीयं छन्दोजातीयं चेत्युभयमपि सप्तसंख्ययाऽवरुध्यते ॥

प्रथममन्त्रगतशब्दस्वरूपेणैव सोमक्रयण्या महिमाऽऽख्यायत इत्याह—

" वस्व्यसि रुद्राऽसीत्याह रूपमेवास्या एतन्महिमानं व्याचष्टे " [ सं० का० ६ प्र० १ अ० ८ ] इति ॥

द्वितीयमन्त्रे बृहस्पतिशब्दमा चिकेत्विति शब्दं च व्याचष्टे—

" बृहस्पतिस्त्वा सुम्ने रण्वत्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे रुद्रो वसुभिरा चिकेत्वित्याहाऽऽवृत्यै " [ सं० का० ६ प्र० १ अ० ८ ] इति ॥

तृतीयमन्त्रार्थस्य प्रसिद्धिं दर्शयति—

"पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन इत्याह पृथिव्या ह्येष मूर्धा यद्देवयजनमिडायाः पद इत्याहेडायै ह्येतत्पदं यत्सोमक्रयण्यै घृतवति स्वाहेत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह" [सं० का० ६ प्र० १ अ० ८] इति ॥

सोमक्रयणीपदे हिरण्यप्रक्षेपं विधत्ते—

" यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति " [ सं० का० ६ प्र० १ अ० ८ ] इति ॥

**परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि—**

कल्पः-"अथोद्धृत्य हिरण्यशकलेन वा कृष्णविषाणया वा पदं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामीति " इति ।

---

१ ख. 'हिषो व' ।

( क्रयप्रदेशं गच्छन्त्याः सोमक्रयण्याः पदसंग्रहस्याभिधानम् )

परिलिखितं नाशितं, रक्ष इति जात्यभिप्रायेणैकवचनम् । ग्रीवा इति व्यक्त्यभिप्रायेण बहुवचनम् । इदमिति हस्ताभिनयः । कृन्तामि च्छिनद्मि ॥

रक्षसः प्रसक्तिं पूर्वोक्तां स्मारयन्मन्त्रं व्याचष्टे—

" काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति " [ सं० का० ६ प्र० १ अ० ८ ] इति ।

अनन्तरायं द्वयोर्मध्य एकतरस्याप्यन्तरायो यथा न भवति तथेत्यर्थः ॥

## अस्मे रायस्त्वे रायस्तोते रायः—

कल्पः—" अस्मे राय इति स्थाल्यां यावत्पूतꣳ समोप्य त्वे राय इति यजमानाय प्रयच्छति तोते राय इति पत्नियै " इति ।

त्पूतं घृतेनाऽऽप्लुतम् । तादृशं रजः सोमक्रयण्याः सप्तमपदस्थाने यावदस्ति तावत्सर्वं पात्रे क्षिपेत् । अस्मिन्नध्वर्यौ रायो रजोरूपं धनं तिष्ठतु । त्वे त्वयि यजमाने । तोते कलत्रे ॥

अनुष्ठानविधिपुरःसरं मन्त्रान्व्याचष्टे—

" पशवो वै सोमक्रयण्यै पदं यावत्पूतꣳ सं वपति पशूनेवाव रुन्धेऽस्मे राय इति सं वपत्यात्मानमेवाध्वर्युः पशुभ्यो नान्तरेति त्वे राय इति यजमानाय प्र यच्छति यजमान एव रयिं दधाति तोते राय इति पत्निया अर्धो वा एष आत्मनो यत्पत्नी यथा गृहेषु निधत्ते तादृगेव तत् " [सं० का० ६ प्र० १ अ० ८ ] इति ॥

## सं देवि देव्योर्वश्या पश्यस्व—

कल्पः—" अथ पत्नीं सोमक्रयण्या[1] समीक्षयति सं देवि देव्योर्वश्या पश्यस्वेति " इति ।

हे देवि सोमक्रयाणि त्वमुर्वश्या देव्या सहेमां पश्य । अयं मन्त्रः स्पष्टार्थत्वाद्ब्राह्मणेनोपेक्षितः ॥

## त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशि—

१ क. ग. °ण्यामी° ।

(क्रयप्रदेशं गच्छन्त्याः सोमक्रयण्याः पदसंग्रहस्याभिधानम्)

बौधायनः—"अथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशीति" इति।

आपस्तम्बः—"त्वष्टीमती ते सपेयेति पत्नी सोमक्रयणीमभिमन्त्रयते" इति।

हे यजमान त्वया सह सपेय संगच्छेय। अथ वा हे सोमक्रयणि ते तवानुग्रहेणाहं पत्या संगच्छेय। कीदृशी। त्वष्टीमती, स्त्रीपुरुषमिथुनरूपाणां पशुमनुष्यादीनां शरीरनिर्माता त्वष्टा। तथा चाग्न्युपस्थानप्रकरणे श्रूयते—"यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते" इति। तादृशस्य त्वष्टुरनुग्रहेणोपेता, शोभनममोघं स्वकीयं रेतो यस्याः सा सुरेताः, तादृशमेव पत्यू रेतो दधाना तव पत्युः सोमक्रयण्या वा संदृश्यभीक्ष्णं वीक्षणं वर्तमाना वीरं स्वोचितगुणेषु शूरं पुत्रं विदेय लभेय॥

त्वष्टीमतीत्येतस्य पदस्याभिप्रायमाह—

"त्वष्टीमती ते सपेयेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति" [सं० का० ६ प्र० १ अ० ८] इति॥

## माऽहꣳ रायस्पोषेण वि योषम्॥

बौधायनः—"सोमक्रयणीमीक्षते माऽहꣳ रायस्पोषेण वि योषमिति" इति।

आपस्तम्बः—"माऽहꣳ रायस्पोषेण वि योषमिति पत्नीपदं प्रदीयमानमनुमन्त्रयते" इति।

वियोषं वियुक्तो मा भूवम्। अयं मन्त्रो ब्राह्मणेनोपेक्षितः॥

एतस्य सोमक्रयणीपदरजसस्तृतीयं भागं गार्हपत्ये प्रक्षिपेत्, भागान्तरमाहवनीय इति विधत्ते—

"अस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपवपेदस्मिꣳल्लोके पशुमान्त्स्याद्यदाहवनीयेऽमुष्मिꣳल्लोके पशुमान्त्स्यादुभयोरुप वपत्युभयोरेवैनं लोकयोः पशुमन्तं करोति" [सं०का०६प्र०१अ०८] इति।

अत्र सूत्रम्—"पदरजस्त्रेधा[1] विभज्य तृतीयमुत्तरतो गार्हपत्यस्य शीते भस्मन्युपवपति तृतीयमाहवनीयस्य तृतीयं पत्न्यै प्रयच्छति तत्सा गृहेषु दधाति" इति॥

अत्र विनियोगसंग्रहः—

"षट्पदानुक्रमा[2] वस्वी बृहस्तत्पदसंग्रहः।
पृथिव्यास्तत्पदे हुत्वा परि संवेष्ट्य रेखया॥ १॥

---

१ क. ग. पदं त्रेधा। २ क क्रमो व॰।

अस्मे स्थाल्यां पदं क्षिप्त्वा त्वे दद्यात्स्वामिने पदम् ।
तोते पत्न्यै पदं दद्यात्सं क्रयण्या ह्यवेक्षयेत् ॥ २ ॥
त्वष्टी तां मन्त्रयेत्पत्नी माऽहं तद्दीयते यदा ।
पदं तदा मन्त्रयेत मन्त्राः पञ्चदशेरिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

" सोमक्रयण्यानयने पदकर्म प्रयोजकम् ।
न वाऽऽद्योऽक्षाञ्जनस्यापि क्रयवत्संनिकर्षतः ॥
तृतीयया क्रयार्था गौस्तद्वाराऽऽनयनस्य च ।
तादर्थ्यात्तत्प्रयुक्तत्वं न प्रयोजकता पदे " इति ॥

ज्योतिष्टोमे सोमक्रय आम्नायते—" एकहायन्या क्रीणाति " इति। सेयमेकहायनी गौर्यदा सोमं क्रेतुं नीयते तदाऽध्वर्युस्तस्याः पृष्ठतो गच्छति। तदप्याम्नातम्—" षट्पदान्यनुनिष्क्रामति " इति । ततः सप्तमे पदे हिरण्यं निधाय हुत्वा तत्पदगतं रजो गृह्णीयात् । एतदपि श्रूयते—" सप्तमपदमध्वर्युरञ्जलिना गृह्णाति " इति । यदेतद्रजः संगृह्यते हविर्धानयोः शकटयोरक्षे तेन रजसा युक्तमञ्जनं क्षिपेत् । एतदपि श्रुतम्—"यज्ञं वा एतत्संभरति यत्सोमक्रयण्यै पदं यज्ञमुखः हविर्धाने यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्" इति। तत्र यथा क्रयः संनिकृष्टस्तथैव पदकर्माप्यक्षाञ्जनं संनिकृष्टम्। अथोच्येत दध्यानयनमामिक्षया यथा संयुक्तं न तथाऽक्षाञ्जनं सोमक्रयण्यानयने संयुक्तमिति। तन्न । क्रयेऽपि[१] पदसंयोगस्य तुल्यत्वात् । अथासंयुक्तोऽपि क्रयो गवानयनेन निष्पाद्येत तर्ह्यक्षाञ्जनमपि तेन निष्पाद्यत इति समानत्वात्क्रयवत्पदकर्मापि सोमक्रयण्यानयनस्य प्रयोजकमिति प्राप्ते ब्रूमः—एकहायन्या क्रीणातीति तृतीयाश्रुत्या गोः क्रयार्थत्वं गम्यते । गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रय एवाऽऽनयने प्रयोजकः । न च पदकर्मार्थत्वं गोर्वा तदानयनस्य वा क्वचिच्छ्रुतं तस्मात्तदप्रयोजकम् ॥

अस्मिन्ननुवाके सर्वाणि यजूंष्येवेति नात्र च्छन्द इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

१ क. °पि तद° ।

(अथ प्रथमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः।)

अꣳशुनां ते अꣳशुः पृच्यतां परुंषा परुं-
र्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमा-
त्योऽसि शुक्रस्ते ग्रहोऽभि त्यं देवꣳ सवितारं-
मूण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधाम-
भि प्रियं मतिमूर्ध्वा यस्यामतिर्भा अदिंद्युत-
त्सवींमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा
सुवः। प्रजाभ्यस्त्वा प्राणाय त्वा व्यानाय
त्वा प्रजास्त्वमनु प्राणिंहि प्रजास्त्वामनु प्रा-
णंन्तु ॥ १ ॥

(अनु सप्त च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

(अथ प्रथमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः।)

अꣳशुनां। ते। अꣳशुः। पृच्यताम्। परुंषा।
परुः। गन्धः। ते। कामम्। अवतु। मदाय। रसः।
अच्युतः। अमात्यः। असि। शुक्रः। ते। ग्रहः।
अभीति। त्यम्। देवम्। सवितारम्। ऊण्योः।
कविक्रतुमिति कवि—क्रतुम्। अर्चामि। सत्यसवस-

मितिं सत्य—सवसम् । रत्नधामितिं रत्न—धाम् । अभीतिं । प्रियम् । मतिम् । ऊर्ध्वा । यस्यं । अमतिः । भाः । अदिंद्युतत् । सवींमनि । हिरंण्यपाणिरिति हिरंण्य—पाणिः । अमिमीत । सुक्रतुरितिं सु—क्रतुः । कृपा । सुवः । प्रजाभ्य इतिं प्र—जाभ्यः । त्वा । प्राणायेतिं प्र—अनाय । त्वा । व्यानायेतिं वि—अनाय । त्वा । प्रजा इतिं प्र—जाः । त्वम् । अनुं । प्रेतिं । अनिंहि । प्रजा इतिं प्र—जाः । त्वाम् । अनुं । प्रेतिं । अनन्तु ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ प्रथमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

पञ्चमेऽनुवाके सोमक्रयण्याः पदसंग्रहो मार्गमध्येऽभिहितः । अथाऽऽगतया सोमक्रयण्या सोमः क्रेतव्यः । स च सोमक्रय उन्मानपूर्वक इति षष्ठे सोमोन्मानमभिधीयते ।

अꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमात्योऽसि शुक्रस्ते ग्रहः—

बौधायनः—" हिरण्यवता पाणिना राजानमभिमृशति अꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमात्योऽसि शुक्रस्ते ग्रह इति " इति ।

आपस्तम्बः—" अꣳशुना ते अꣳशुः पृच्यतामिति यजमानो राजानमभिमन्त्रयते " इति ।

अꣳशुः सूक्ष्मोऽवयवः। परुः पर्व। हे सोम तवैकेनांशुनाऽन्योंऽशुः संयुज्यतां, कोऽप्यंशुर्वाय्वाद्युपघातेन मा वियुज्यताम्। तथा परुषा परुः संयुज्यतां, कस्यापि परुषो भागो मा भूत्। त्वदीयो गन्धो यजमानस्य कामं पालयतु, त्वदीयो रसो मदाय देवानां हर्षाय विनाशरहितो भवतु। त्वममात्योऽसि, यजमानेन देवताभिश्च सह सर्वदा तिष्ठासि। तव स्वीकारः शुक्रो हिरण्यसाध्यः॥

एतं मन्त्रं व्याचिख्यासुरादौ सोमविक्रयिणं प्रत्यध्वर्योः प्रैषमन्त्रमुत्पादयति—

"ब्रह्मवादिनो वदन्ति विचित्यः सोमा३न विचित्या३इति सोमो वा ओषधीनाꣳ राजा तस्मिन्यदापन्नं ग्रसितमेवास्य तद्यद्विचिनुयाद्यथाऽऽस्याद्ग्रसितं निष्खिदति तादृगेव तद्यन्न विचिनुयाद्यथाऽक्षन्नापन्नं विधावति तादृगेव तत्क्षोधुकोऽध्वर्युः स्यात्क्षोधुको यजमानः सोमविक्रयिन्त्सोमꣳ शोधयेत्येव ब्रूयाद्यदीतरं यदीतरमुभयेनैव सोमविक्रयिणमर्पयति तस्मात्सोमविक्रयी क्षोधुकः" [सं० का० ६ प्र० १ अ० ९] इति।

विचयो नाम सोमस्य[1] तृणादेरपनयनम्। तस्मिन्नोषधीनां राज्ञि सोमे यत्तृणादिकमापन्नं पतितं तत्तृणादिकमस्य सोमस्य ग्रसितमेव ग्रास एव भवति। तथा सति यदि विचिनुयात्तृणादिकमपनयेत्तदानीं यथा लोके ग्रसितमन्नं निष्खिदति मक्षिकाद्युपद्रवेण वमति तत्तृणाद्यपनयनं तादृक्स्यात्। यदि न विचिनुयात्तदानीं यथा चक्षुषि पतितमितस्ततो विधावनेन व्यथां जनयति तदविवेचनं तादृक्स्यात्। ततो दोषद्वयपरिहाराय सोमविक्रयिन्नित्यादिप्रैषमन्त्रं ब्रूयात्। तस्मिन्नुक्ते सति यदीतरमितरो[2] विचयदोषः, यदीतरं त्वविचयदोषस्तेनोभयेन दोषेण सोमविक्रयिणमेव योजयति। तस्मादसौ क्षोधुको न क्षितो भवेत्॥

अत्र सूत्रम्—"उत्तरवेदिदेश उपरवदेशे वा रोहितं[3] चर्माऽऽनडुहं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य दक्षिणे चर्मपक्षे राजानं निवपत्युत्तरस्मिन्नुपविशति सोमविक्रय्युदकुम्भꣳ राजानं सोमविक्रयणमिति सर्वतः परिश्रित्योत्तरेण द्वारं कृत्वा विचित्यः सोमा३ इत्युक्त्वा सोमविक्रयिन्सोमꣳ शोधयेत्युक्त्वा पराङावर्तते" इति॥

यथोक्तं कर्म विधत्ते—

"अरुणो ह स्माऽऽहौपवेशिः सोमक्रयण एवाहं तृतीयसवनमव रुन्ध

1 क. ख. घ. ङ. °स्य तस्य तृ°। 2 ख. °तरं वि°। 3 ख. लोहितं।

इति पशूनां चर्मन्मिमीते पशूनेवाव रुन्धे पशवो हि तृतीयꣳ सवनम्" [सं० का० ६ प्र० १ अ० ९] इति।

अरुणनामकः कश्चिदुपवेशस्य पुत्रः पशुचर्मणि सोमं मिमीते। अत्रैव हि तृतीयसवनं संपादयिष्यामीति तस्याभिप्रायः। सवनीयानुबन्ध्याख्ययोः पश्वोस्तृतीयसवने सद्भावात्पशवस्तृतीयसवनम्। अतः पशुचर्मणा तत्प्राप्तेः सोमोन्मानं तत्र कुर्यादित्यर्थः॥

चर्मण उत्तरलोमास्तरणं विधत्ते—

"यं कामयेतापशुः स्यादित्यृक्षतस्तस्य मिमीतर्क्षं वा अपशव्यमपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति लोमतस्तस्य मिमीतैतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवति" [सं० का० ६ प्र० १ अ० ९] इति।

ऋक्षतो रूक्षे परुषे निर्लोमभागे। लोमतः सलोमभागे॥

उदकुम्भसंनिधिं विधत्ते—

"अपामन्ते क्रीणाति सरसमेवैनं क्रीणाति" [सं० का० ६ प्र० १ अ० ९] इति॥

मन्त्रे दुर्बोधभागं व्याचष्टे—

"अमात्योऽसीत्याहामैवैनं कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो ह्यस्य ग्रहः" [सं० का० ६ प्र० १ अ० ९] इति।

अमैव सहैव स्थित इत्यर्थः। सोमस्वीकारः शुक्रो हि सुवर्णसाध्यो हीत्यर्थः॥

शकटेन सह सोमं प्राप्तुं गच्छेदिति विधत्ते—

"अनसाऽच्छ याति महिमानमेवास्याच्छ याति" [सं० का० ६ प्र० १ अ० ९] इति।

शकटरूपेण बहुमानेन सोमस्य महिमा प्रकाशितो भवति॥

तमेव विधिमनूद्य प्रशंसति—

"अनसाऽच्छ याति तस्मादनोवाह्यꣳ समे जीवनम्" [सं० का० ६ प्र० १ अ० ९] इति।

समे प्रदेशे जीवनसाधनं धान्यं शकटवाह्यं तद्वत्सोमः॥

विषमे तु प्रदेशे शिरसा सोमवाहनं विधत्ते—

"यत्र खलु वा एतꣳ शीर्ष्णा हरन्ति तस्माच्छीर्षहार्यं गिरौ जीवनम्" [सं० का० ६ प्र० १ अ० ९] इति।

(सोमोन्मानम्)

यत्र यदा पर्वते सोमलतोत्पत्तिप्रदेशे सोमं क्रीणन्ति तदेति शेषः। लोकेऽपि दुर्गमे गिरौ धान्यं शिरसा वहन्ति।

अत्र सूत्रम्—"उद्धृतपूर्वफलकेनानसा परिश्रितेन च्छदिष्मता प्राञ्चः सोममच्छ यान्ति शीर्ष्णा गिरौ क्रीतं हरन्ति अपरेणोत्तरेण वा राजानं प्राग्गीषमुदगीषं वा नद्धयुगꣳ शकटं चु(चि)बुकमतिष्ठितम्" इति।

तस्मिञ्शकटे पूर्वस्थापितं मध्यमफलकमुद्धृत्य नूतनं फलकं स्थापनीयम्। अथ वोद्धृतमुन्नतं पूर्वफलकरूपं मुखं यस्य शकटस्य तदुद्धृतपूर्वफलकम्। परिश्रयः शकटस्योपरिगृहकुड्यवत्परितो वेष्टनम्। छदिरुपरितनमाच्छादनम्॥

अभि त्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभि प्रियं मतिमूर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवः।

बौधायनः—"अथैनमतिच्छन्दसर्चा मिमीत एकयैकयोत्सर्गं मिमीतेऽयातयाम्नियायातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुलयः सर्वास्वङ्गुष्ठमुपनिगृह्णाति अभि त्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभि प्रियं मतिमूर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवरिति पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीम्" इति।

आपस्तम्बः—"क्षौमं वासो द्विगुणं त्रिगुणं वा प्राग्दशमुत्तरदशं चर्मण्यास्तृणात्युदग्दशं वा तस्मिन्हिरण्यपाणिरङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्यांऽशून्संगृह्य न्यञ्चमभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीते" इति।

तं देवमभ्यर्चामि। कीदृशम्। ऊण्योर्द्यावापृथिवीरूपयोर्हस्तयोः सवितारं प्रेरकं, कवीनां वेदार्थविदां क्रतुर्यागो यस्य प्रेरकस्य सोऽयं कविक्रतुः। अत एव सत्यः फलपर्यवसायी सवः प्रेरणं यस्यासौ सत्यसवाः। रत्नानि दधातीति रत्नधाः। आभिमुख्येन सर्वेषां प्रियः। मतिः सर्वैर्मन्तव्यः। तादृशं देवमर्चामि। यस्य सवितुरूर्ध्वलोकवर्तिनी दीप्तिरमतिर्मन्तुमशक्या द्योतते प्रकाशते। स्वर्गवर्ती स देवः कृपया मां समागत्य हिरण्यपाणिः सोमं मिमीताम्॥

एतस्यामृचि वर्तमानं छन्दः प्रशंसति—

"अभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीतेऽतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनं छन्दोभिर्मिमीते वर्ष्म वा एषा छन्दसां यद्-

तिच्छन्दा यदतिच्छन्दसर्चा मिमीते वर्ष्मैवैनꣳ समानानां करोति " [ सं० का० ६ प्र० १ अ० ९ ] इति ।

अक्षराधिक्येन गायत्र्यादीनि च्छन्दांस्यतिक्रम्य वर्तत इत्यतिच्छन्दाः । वर्ष्म[1] शरीरम् ॥

अङ्गुलीषु प्रकारविशेषं विधत्ते—

" एकयैकयोत्सर्गं मिमीतेऽयातयाम्नियायातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुलयः " [ सं० का० ६ प्र० १ अ० ९ ] इति ।

उत्सर्गमुत्सृज्योत्सृज्य कनिष्ठिकैव प्रथमपर्यायेऽनामिकैव द्वितीये मध्यमैव तृतीये तर्जन्येव चतुर्थे । एवं सति सकृत्प्रवृत्ताया अङ्गुल्याः पुनः प्रवृत्त्यभावाद्यातयामत्वं गतरसत्वं न भविष्यति । यस्मात्पर्यायेण प्रवृत्तास्तस्मात्प्रत्येकमङ्गुष्ठेन संयोक्तुं पृथक्सामर्थ्येऽर्पिताः ॥

अङ्गुष्ठस्य पर्यायो नास्तीत्यमुमर्थं विधत्ते—

" सर्वास्वङ्गुष्ठमुप नि गृह्णाति तस्मात्समावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्मात्सर्वा अनु सं चरति " [ सं० का० ६ प्र० १ अ० ९ ] इति ।

कनिष्ठिकादिषु सर्वास्वङ्गुलीषु प्रत्येकमङ्गुष्ठं संयोजयेत् । समावद्वीर्यस्तुल्यसामर्थ्यः । तस्माल्लोकव्यवहारेऽपि प्रत्येकं सर्वा अङ्गुलीरनुसंचरति ॥

विपक्षबाधकपूर्वकं पूर्वोक्तं स्वपक्षमुपसंहरति—

"यत्सह सर्वाभिर्मिमीत सꣳश्लिष्टा अङ्गुलयो जायेरन्नेकयैकयोत्सर्गं मिमीते तस्माद्विभक्ता जायन्ते " [ सं० का० ६ प्र० १ अ० ९ ] इति ॥

समन्त्रकामन्त्रकयोः सोमोन्मानयोरावृत्तिसंख्यां विधत्ते—

" पञ्च कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे यद्यजुषा मिमीते भूतमेवाव रुन्धे यत्तूष्णीं भविष्यत् " [ सं० का० ६ प्र० १ अ० ९ ] इति ।

यद्यपि अतिच्छन्दसर्चेत्याम्नानात्पदार्थरूपस्य लक्षणस्य सद्भावाच्चाभित्यमित्येपर्गेव तथाऽपि युज्यते प्रयुज्यत इति व्युत्पत्तिमभिप्रेत्य यजुषेत्युक्तम् । अङ्गुष्ठस्य क्रमेण कनिष्ठिकादिभिः सह चत्वारः पर्यायाः । समन्त्रके प्रयोगे कनिष्ठिकाव्यतिरिक्तया कयाचित्सह पञ्चमः पर्यायः । अमन्त्रके तु कनिष्ठिकयैव सह ।

तथा च सूत्रम्—" यया प्रथमं न तया पञ्चमं तयैवोत्तमम् " इति ।

---

[1] ख. 'र्ष्म वा शरीरमिव । अ' ।

(सोमोन्मानम्)

विराट्छन्दसोऽन्नप्रदत्वादन्नत्वम्। समन्त्रकामन्त्रकयोः प्रयोगयोः पूर्वोत्तरभावसाम्येन भूतभविष्यद्वस्तुप्राप्तिः ॥

**प्रजाभ्यस्त्वा प्राणाय त्वा व्यानाय त्वा प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्तु ॥**

कल्पः—"अथातिशिष्टं राजानं प्रजाभ्यस्त्वेत्युपसमूहति समुच्चित्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वेति व्यानाय त्वेत्यनुशृन्थति अथोपरिष्टादङ्गुलावकाशं शिष्ट्वा यजमानमीक्षयति प्रजाभ्यस्त्वा प्राणाय त्वा व्यानाय त्वा प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्त्विति" इति।

हे सोमाशेषप्रजार्थं त्वां समूहामि प्राणार्थं त्वामुपनह्यामि व्यानार्थं त्वां विस्रंसयामि। प्राणतीः प्रजा अनु त्वं प्राणिहि। प्राणन्तं त्वामनु प्रजाः प्राणन्तु ॥

अवशेषणे बाधं ब्रुवन्यथोक्तं समूहनादिकं विधत्ते—

"यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्युप समूहति सदस्यानेवान्वाभजति वाससोप नह्यति सर्वदेवत्यं वै वासः सर्वाभिरेवैनं देवताभिः समर्धयति पशवो वै सोमः प्राणाय त्वेत्युपनह्यति प्राणमेव पशुषु दधाति व्यानाय त्वेत्यनु शृन्थति व्यानमेव पशुषु दधाति तस्मात्स्वपन्तं प्राणा न जहति" [सं० का० ६ प्र० १ अ० ९] इति।

दशकृत्वोऽङ्गुलिभिर्मितात्सोमस्यानाधिक्ये सत्येतस्मिन्सदस्यवस्थितानामपि सोमो न स्यान्मन्त्रेण समूहने तु यजमानमनु सदस्यान्सोमं प्रापयति। प्राणव्यानयोः पशुषु स्थापितत्वात्स्वापेऽपि नास्ति प्राणपरित्यागः ॥

अत्र विनियोगसंग्रहः—

"अंशु सोमं मन्त्रयेताभि त्यं क्रेतुं मिमीत तम्।
प्रजा समुह्य तच्छेषं प्राणायेत्येष बध्यते ॥
व्या विस्रस्य प्रजेक्षेत षण्मन्त्रा इह वर्णिताः ॥ १ ॥" इति।

अस्मिन्ननुवाके संदिग्धार्थोदाहरणाभावान्नात्र विशेषेण किंचिदपि मीमांस्यते। सामान्यविचारास्तु पूर्वोक्ता यथायोगमनुसंधेयाः। छन्दस्तु श्रुतावेवातिच्छन्दसर्चेति स्पष्टमुदाहृतम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

१ क. घ. ङ च. °ङ्गुल्याव°।

(अथ प्रथमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः)

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यत्ते गोरस्मे चन्द्राणि तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणाम्यस्मे ते बन्धुर्मयि ते रायः श्रयन्तामस्मे ज्योतिः सोमविक्रयिणि तमो मित्रो न एहि सुमित्रधा इन्द्रस्योरुमा विश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनꣳ स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् (१) ॥

(उरुं द्वाविꣳशतिश्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

(अथ प्रथमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ।)

सोमम् । ते । क्रीणामि । ऊर्जस्वन्तम् । पयस्वन्तम् । वीर्यावन्तमिति वीर्य—वन्तम् । अभिमातिषाहमित्यभिमाति—साहम् । शुक्रम् । ते । शुक्रेण । क्रीणामि । चन्द्रम् । चन्द्रेण । अमृतम् । अमृतेन ।

(सोमक्रयः)

सम्यत् । ते । गोः । अस्मे इति । चन्द्राणि । तपसः । तनूः । असि । प्रजापतेरिति प्रजा—पतेः । वर्णः । तस्याः । ते । सहस्रपोषमिति सहस्र—पोषम् । पुष्यन्त्याः । चरमेण । पशुना । क्रीणामि । अस्मे इति । ते । बन्धुः । मयि । ते । रायः । श्रयन्ताम् । अस्मे इति । ज्योतिः । सोमविक्रयिणीति सोम—विक्रयिणि । तमः । मित्रः । नः । एति । इहि । सुमित्रधा इति सुमित्र—धाः । इन्द्रस्य । ऊरुम् । एति । विश । दक्षिणम् । उशन् । उशन्तम् । स्योनः । स्योनम् । स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्तेति सु—हस्त । कृशानविति कृश—अनो । एते । वः । सोमक्रयणा इति सोम—क्रयणाः । तान् । रक्षध्वम् । मा । वः । दभन् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ प्रथमकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ।)

---

षष्ठेऽनुवाके क्रयाय सोमस्योन्मानमुक्तम् । सप्तमे लब्धावसरः क्रयोऽभिधीयते।

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यत्ते गोः—

बौधायनः—" अथैनं स हिरण्येन पणते सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाह१ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यत्ते गोरिति " इति ।

आपस्तम्बो मन्त्रभेदमाह—" सोमविक्रयिणे राजानं प्रदाय पणते सोमविक्रयिन्क्रय्यस्ते सोमा३इति क्रय्य इतीतरः प्रत्याह सोमं ते क्रीणाम्यूर्जस्वन्तमित्युक्त्वा कलया ते क्रीणानीत्येवमाह भूयो वा अतः सोमो राजाऽर्हतीति सर्वेषु पणनेषु सोमविक्रयी प्रत्याह संपदो गवा ते क्रीणानीत्यन्ततः शुक्रं ते शुक्रेण क्रीणामीति जपित्वा हिरण्येन क्रीणाति " इति ।

हे सोमविक्रयिन्नहं त्वदीयं सोमं क्रीणामि । कीदृशम् । ऊर्जस्वन्तं शारीरबलप्रदं, पयस्वन्तं प्रभूतरसोपेतं, वीर्यावन्तमिन्द्रियपाटवहेतुम् । अभिमातिषाहं पापरूपस्य वैरिणो हन्तारम् । शुक्रचन्द्रामृतशब्दैरभिधेयास्तेजःसुखाविनाशास्त्वदीयसोमेऽस्मदीयहिरण्ये च समाः । अतो हिरण्येन सोमं क्रीणामि । न केवलं हिरण्यं तुभ्यं दीयते किंतु समीचीनं गोरेकहायनीस्वरूपमपि पूर्वं दत्तं तस्मात्तव हिरण्यलाभोऽधिकः ॥

## अस्मे चन्द्राणि—

कल्प—" अस्मे चन्द्राणीति सोमविक्रयिणो हिरण्यमपादत्ते " इति ।

अस्मास्वेव हिरण्यानि चन्द्राणि तिष्ठन्तु । बहुवचनं व्यत्ययेन द्रष्टव्यम् ॥

## तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणाम्यस्मे ते बन्धुर्मयि ते रायः श्रयन्ताम्—

बौधायनः—" अथैनं प्राचीनग्रीवयाऽजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीति अस्मे ते बन्धुरिति यजमानमीक्षते मयि ते रायः श्रयन्तामित्यात्मानम् " इति ।

आपस्तम्बस्त्वेकमन्त्रतामाह—"तपसस्तनूरसीति जपित्वाऽजया क्रीणामि" इति ।

हेऽजे त्वं तपसः पुण्यस्य शरीरमसि । यज्ञनिष्पादकस्य सोमस्य द्युलोके त्वयैवावरुद्धत्वात् । वर्ण्यत इति वर्णो देहः प्रजापतेर्वर्णोऽसि प्रजापतिवत्सर्वदेवात्मकत्वात् । तच्चौपानुवाक्यकाण्ड आम्नातम्—" सा वा एषा सर्वदेवत्या यदजा " इति । किं च त्वमपत्यपरम्परया सहस्रसंख्यातं पुष्यसि ।

१ क. ग. वातः । २ ख. °नं प्रतीचीनग्री° ।

तादृश्यास्तव संबन्धिना चरमेण सहस्रतमेन पशुना सोमं क्रीणामि न तु त्वया । अहं तव बन्धुस्त्वत्संपादितस्य सोमस्य कर्मणि प्रवृत्तत्वान्मयि त्वदीयान्यपत्यरूपाणि धनान्यवतिष्ठन्ताम् ॥

मन्त्रान्व्याचिख्यासुरादावनभिमतं निराकृत्य स्वाभिमतं पणनमन्त्रमुत्पाद्य विनियुङ्क्ते—

" यत्कलया ते शफेन ते क्रीणानीति पणेतागोअर्घं[१] सोमं कुर्यादगोअर्घं यजमानमगोअर्घमध्वर्युं गोस्तु महिमानं नाव तिरेद्गवा ते क्रीणानीत्येव ब्रूयाद्गोअर्घमेव सोमं करोति गोअर्घं यजमानं गोअर्घमध्वर्युं न गोर्महिमानमव तिरति " [ सं० का० ६ प्र० १ अ० १० ] इति ।

कलाऽल्पादप्यल्पो यः कोऽप्यवयवलेशः । कलया शफेन वा पणने दोषत्रयं स्यात् । सोमो गोरूपं मूल्यं नार्हति । यजमानस्तद्दातुं न शक्नोति । अध्वर्युश्च न दापयतीत्येवं सोमयजमानाध्वर्यवो गोअर्घरहिता इति दोषत्रयम् । किं च सोमो गोमूल्य इत्युक्ते गोर्महिमाऽधिको भवेत् । तं नावजानीयात् । परमते त्वसाववज्ञातो भवेत् । गवा ते क्रीणानीत्यनेन मन्त्रेण सर्वं समाहितं भवति ॥

यथेयं सोमक्रयणी गौस्तथैवाजादीनि नव द्रव्याणि क्रयसाधनानि क्रमेण विधत्ते—

"अजया क्रीणाति सतपसमेवैनं क्रीणाति हिरण्येन क्रीणाति सशुक्रमेवैनं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणात्यृषभेण क्रीणाति सेन्द्रमेवैनं क्रीणात्यनडुहा क्रीणाति वह्निर्वा अनड्वान्वह्निनैव वह्नि यज्ञस्य क्रीणाति मिथुनाभ्यां क्रीणाति मिथुनस्यावरुद्ध्यै वाससा क्रीणाति सर्वदेवत्यं वै वासः सर्वाभ्य एवैनं देवताभ्यः क्रीणाति दश संपद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे " [ सं० का० ६ प्र० १ अ० १० ] इति ।

तपसस्तनूरसीत्युक्तत्वादजया क्रीतस्य सोमस्य सतपस्त्वम् । एवमुत्तरत्रापि योज्यम् । साशिरं दध्यादिगोरसोपेतं, सेन्द्रमिन्द्रियवर्धकं, वह्निर्वाहकः, यज्ञस्य वह्नि यज्ञनिर्वाहकं सोमम् । मिथुनाभ्यां वत्सतरो वत्सतरी चेत्येताभ्यां मिथुनावयवाभ्यां धेनोः सवत्साया विवक्षितत्वाद्दशद्रव्यसंपत्तिः ॥

मन्त्रत्रयं स्पष्टार्थत्वबुद्ध्योपेक्ष्य चतुर्थमन्त्रस्याभिप्रायमाह—

" तपसस्तनूरसि प्रजापतेर्वर्ण इत्याह पशुभ्य एव तदध्वर्युर्निह्नुत आत्मनोऽनाव्रस्काय " [ सं० का० ६ प्र० १ अ० १० ] इति ।

---

१ क. घ. ङ. सोमगोर्मूल्यमल्पमित्यु' । ख. सोमस्य गो' ।

तत्तेन मन्त्रपाठेन पशुभ्योऽजाप्रभृतीन्निह्नुतेऽपलपति। न ह्यजा परमार्थतस्त-पसस्तनूर्भवति, नापि प्रजापतेर्वर्ण(र्णो) रूपम्। तेनापलापेनाजोपचरिता भवति। स चोपचारः स्वस्यापराधराहित्याय क्रियते ॥

पशूपचारवेदनं प्रशंसति—

" गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद " [ सं० का० ६ प्र० १ अ० १० ] इति ॥

दत्तस्य हिरण्यस्य पुनरादानं विधित्सुर्हिरण्यप्रकाशकं द्वितीयमन्त्रं स्पष्टार्थ-मपि पुनरनुसंधत्ते—

" शुक्रं ते शुक्रेण क्रीणामीत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० १ अ० १० ] इति ॥

पुनरादानं विधत्ते—

" देवा वै येन हिरण्येन सोममक्रीणन्तदभीषहा पुनराऽददत को हि तेज-सा विक्रेष्यत इति येन हिरण्येन सोमं क्रीणीयात्तदभीषहा पुनरा ददीत तेज एवाऽऽत्मन्धत्ते " [ सं० का० ६ प्र० १ अ० १० ] इति।

अभीषहा बलात्कारेण। को हीत्यादिर्देवाभिप्रायः ॥

## अस्मे ज्योतिः—

कल्पः—" अस्मे ज्योतिरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां काले दशापवित्रस्य नाभिं कुरुते " इति।

अविलोमभिर्निर्मितस्तन्तुरूर्णास्तुका। सा च शुक्ला ज्योतिःस्वरूपा। तज्ज्योतिरस्मास्ववतिष्ठताम् ॥

## सोमविक्रयिणि तमः—

कल्पः—" कृष्णामूर्णास्तुकामद्भिः क्लेदयित्वेदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्युपग्रथ्य सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इति " इति ॥

मन्त्रद्वयं व्याचष्टे—

" अस्मे ज्योतिः सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति तमसा सोमविक्रयिणमर्पयति " [ सं० का० ६ प्र० १ अ० १० ] इति ॥

विपक्षे बाधपुरःसरं ग्रथनमन्त्रमुत्पादयति—

१ क. °धकपु°।

(सोमक्रयः)

"यदनुपग्रथ्य हन्याद्दन्दशूकास्ताꣳ समाꣳ सर्पाः स्युरिदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उप ग्रथ्नामीत्याहादन्दशूकास्ताꣳ समाꣳ सर्पा भवन्ति तमसा सोमविक्रयिणं विध्यति" [सं० का० ६ प्र० १ अ० १०] इति।

कृष्णया विध्येत्। तां समां तं संवत्सरं कृत्स्नम्। इदमहमित्यादिमन्त्रेण सर्पदंशस्य परिहारः॥

मित्रो न एहि सुमित्रधा इन्द्रस्योरुमा विश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम्—

कल्पः—"कौत्साद्राजानमादत्ते मित्रो न एहि सुमित्रधा इति तं यजमानस्योरौ दक्षिणत आसादयति इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनमिति" इति।

शोभनं मित्रं सोमरूपं यस्य यजमानस्य स यजमानः सुमित्रस्तं दधाति पोषयतीति सुमित्रधाः। हे सोम सुमित्रधास्त्वमस्माकं मित्रः प्रियो भूत्वा समागच्छ। हे सोम, इन्द्रस्य यजमानस्य दक्षिणमूरुमाविश। कीदृशम्, उशन्तं कामयमानं स्योनं सुखकरम्। त्वमपि तादृशः॥

स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्॥

कल्पः—"अथ सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्निति" इति।

स्वानादयः सोमरक्षकाः। सोमः क्रीयते[1] यैर्गवादिभिस्ते सोमक्रयणाः। हे स्वानादयस्तान्सोमक्रयणान्पालयत। केऽपि वैरिणो युष्मान्मा हिंसिषत। अत्र मूल्यभूतान्सोमक्रयणाननुदिश्य पश्चात्सोमस्वीकारो युक्तः। अतोऽर्थक्रमेण मित्रो न[2]ः, इन्द्रस्योरुमिति मन्त्रद्वयमुपरिष्टाद्व्याख्यास्यते॥

इमं मन्त्रं व्याचष्टे—

"स्वान भ्राजेत्याहैते वा अमुष्मिँल्लोके सोममरक्षन्तेभ्योऽधि सोममाऽहरन्" [सं० का० ६ प्र० १ अ० १०] (इति+।

अधि अधिकं प्रभूतम्॥

+ धनुश्चिह्नान्तर्गतं क. ग. घ. पुस्तकेषु नास्ति।

१ ख. °पि गोर्वै°। २ ख. °मं तु म°।

विपक्षस्वपक्षयोर्दोषतत्समव(मा)धाने दर्शयति— )

" यदेतेभ्यः सोमक्रयणान्नानुदिशेदक्रीतोऽस्य सोमः स्यान्नास्यैतेऽमुष्मिँल्लोके सोमꣳ रक्षेयुर्यदेतेभ्यः सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्येतेऽस्यामुष्मिँल्लोके सोमꣳ रक्षन्ति " [ सं० का० ६ प्र० १ अ० १० ] इति।

सोमं सोमयागफलम् ॥

अथ सोमस्वीकारस्य प्राप्तावसरत्वान्मन्त्रं[1] व्याचष्टे—

" वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रधा इत्याह शान्त्यै " [ सं० का० ६ प्र० १ अ० ११ ] इति ।

बन्धनस्य वरुणपाशरूपत्वात्तद्युक्तः सोमो वारुणः । अतो वरुणवत्क्रूरत्वप्राप्तौ तच्छान्तये मित्रत्वं प्रतिपादयति[2] ॥

ऊरुस्थानं पूर्वाचारप्राप्तमित्याह—

" इन्द्रस्योरुमा विश दक्षिणमित्याह देवा वै यꣳसोममक्रीणन्तमिन्द्रस्योरौ दक्षिण आऽसादयन्नेष खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाह " [ सं० का० ६ प्र० १ अ० ११ ] इति ।

अत्र विनियोगसंग्रहः—

" सोमं जपेत्क्रयात्पूर्वं शुक्रं स्वर्णेन[3] तत्क्रये ।
अस्मे स्वर्णमपादत्ते तप जप्यं क्रयेऽजया ॥ १ ॥
अस्मे ज्यो स्वामिने दद्याच्छुक्लामूर्णास्तुकामथ ।
सोम विध्येत्कृष्णयोर्णास्तुकया क्रयकारिणम् ॥ २ ॥
मित्रः सोममुपादायेन्द्रस्योरावुपवेशयेत् ।
स्वान मूल्याननुदिशेदिमे मन्त्रा नवोदिताः ॥ ३ ॥ " इति ।

अथ मीमांसा ।

द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—

" क्रयणेषु विकल्पः स्यात्साहित्यं वाऽग्रिमो यतः ।
कार्यैक्यमानतेर्लाभाद्दशोक्तेश्च समुच्चयः " इति ॥

अजया क्रीणाति हिरण्येन क्रीणाति वाससा क्रीणातीत्यादीनि बहूनि सोमक्रयसाधनद्रव्याण्याम्नातानि । तेषां कार्यैक्याद्विकल्प इति चेन्मैवम् । बहुभिर्द्रव्यैर्विक्रेतुरानतेः सौलभ्यात् , दशभिः क्रीणातीति संख्योक्तेश्च समुच्चयः ॥

१ ख. ॰त्वात्तं मन्त्रं । २ ख. प्रार्थ्यते । ३ ख. पश्येत ।

(सोमस्य शकटारोपणम्[1])

अत्र सर्वाणि यजूंषि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ प्रथमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः।)

---

उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु। उर्वन्तरिक्षमन्विह्यदित्याः सदोऽस्यदित्याः सद आ सीदास्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आऽसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु (१) क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रावुदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्। उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमसि प्रत्यस्तो वरुणस्य पाशः (२) ॥

(हृत्सु पञ्चत्रिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

१ ख. षि। नास्ति कश्चिच्छन्दोविशेषः। इ०।

( अथ प्रथमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

उदिति । आयुषा । स्वायुषेति सु—आयुषा । उदिति । ओषधीनाम् । रसेन । उदिति । पर्जन्यस्य । शुष्मेण । उदिति । अस्थाम् । अमृतान् । अनु । उरु । अन्तरिक्षम् । अन्विति । इहि । अदित्याः । सदः । असि । अदित्याः । सदः । एति । सीद । अस्तभ्नात् । द्याम् । ऋषभः । अन्तरिक्षम् । अमिमीत । वरिमाणम् । पृथिव्याः । एति । असीदत् । विश्वा । भुवनानि । सम्राडिति सम्—राट् । विश्वा । इत् । तानि । वरुणस्य । व्रतानि । वनेषु । वीति । अन्तरिक्षम् । ततान । वाजम् । अर्वत्स्वित्यर्वत्—सु । पयः । अघ्नियासु । हृत्स्विति हृत्—सु । ( १ ) क्रतुम् । वरुणः । विक्षु । अग्निम् । दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ । उदिति । उ । त्यम् । जातवेदसमिति जात—वेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् । उस्रौ । एति । इतम् । धूर्षाहाविति धूः—साहौ । अनश्रू इति । अवीरहणावित्यवीर—हनौ । ब्रह्मचोदनाविति ब्रह्म—चोदनौ । वरुणस्य । स्कम्भनम् । असि । वरुणस्य । स्कम्भसर्जनमिति स्कम्भ—सर्जनम् ।

(सोमस्य शकटारोपणम्)

असि। प्रत्यस्त इति प्रति—अस्तः। वरुणस्य। पाशः (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

(अथ प्रथमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः)

सप्तमेऽनुवाके सोमक्रयणमभिहितम्[1]। अथ[2] क्रीतं सोमं प्राचीनवंशे[3] नेतुमष्टमे शकटारोपणं सोमस्योच्यते।

उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु।

कल्पः—"अथैनमादायोपोत्तिष्ठति उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अन्विति" इति।

अमृतान्[4]देवाननुलक्ष्याऽऽयुरादिविशेषणविशिष्टेन सोमेन सहोदस्थामुत्तिष्ठामीति[5]। जीवनमायुः। तत्रापि रोगाद्युपद्रवरहितं स्वायुः। तदुभयप्रदत्वात्सोमस्य तदुभयरूपत्वम्। ओषधीनां पर्जन्यस्य च सोमः सार इतरौषधिवद्भूमिविशेषे[6] जायमानत्वाद्वृष्ट्या वर्धमानत्वाच्च। चतुर्भिर्विशेषणैः पृथक्क्रियापदमन्वेतुं चत्वार उच्छब्दाः॥

अमृतशब्दानुशब्दयोरर्थमाह—

"उदायुषा स्वायुषेत्याह देवता एवान्वारभ्योत्तिष्ठति" [सं० का० ६ प्र० १ अ० ११] इति।

उर्वन्तरिक्षमन्विहि—

कल्पः—"उर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति" इति॥

उत्थापनमारभ्य पुनर्भूमौ स्थापनपर्यन्तं सोमोऽन्तरिक्षाधार इत्यभिप्रायं दर्शयति—

"उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो ह्येतर्हि सोमः" [सं० का० ६ प्र० १ अ० ११] इति॥

१ ख. °क्रयोऽभि°। २ ख. °हितः। अ°। ३ ख. °वंशं ने°। ४ ख. अहमम्°। ५ ख. °ति। चिरजी°। ६ ख. °शेषाज्जाय°।

अदित्याः सदोऽस्यदित्याः सद आ सीदास्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आऽसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि—

बौधायनः—"तस्य च्छिद्रे कृष्णाजिनमास्तृणात्यदित्याः सदोऽसीति, अदित्याः सद आसीदेति कृष्णाजिने राजानमथैनमुपतिष्ठतेऽस्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आऽसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानीति" इति।

आपस्तम्बो द्वितीयतृतीयमन्त्रावेकी चकार। हे कृष्णाजिन त्वमदित्या भूमेः सदः स्थानमसि। हे सोम तस्याः सदः प्राप्नुहि। ऋषभः श्रेष्ठोऽयं सोमो यथा द्युलोको न पतति तथा स्तम्भनं संचस्कार। अन्तरिक्षमेतावदित्यमिमीत पृथिव्या वरिमाणं गुरुत्वं चामिमीत। स सोमदेवः स्वमहिम्ना सम्यग्राजमानो विश्वानि भुवनानि आसीदव्याप्तवान्। विश्वेत्तानि सर्वाण्येवोक्तानि कर्माणि सर्वावरकत्वेन वरुणनाम्नः सोमस्य व्रतानि व्रतवन्नियतानि॥

प्रथमद्वितीयमन्त्रयोः स्पष्टार्थतां दर्शयति—

"अदित्याः सदोऽस्यदित्याः सद आ सीदेत्याह यथायजुरेवैतत्" [सं० का० ६ प्र० १ अ० ११] इति॥

द्वितीयमन्त्रसाध्यं यदासादनं तदेव तृतीयमन्त्रेणापि कर्तव्यमित्यमुमर्थं हेतूपन्यासपुरःसरं विधत्ते—

"वि वा एनमेतदर्धयति यद्वारुणꣳ सन्तं मैत्रं करोति वारुण्यर्चाऽऽसादयति स्वयैवैनं देवतया समर्धयति" [सं० का०६प्र० १ अ० ११] इति।

उपनद्धः सोमो वरुणो यद्विषये मित्रो न एहीति मन्त्रं पठन्मैत्रं करोतीति यदस्ति एतेनैनं सोमं व्यर्धयति समृद्धिहीनं करोति, वारुण्यर्चा तु समर्धयति॥

वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्रियासु हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ—

१ ख. नीडे। २ ख. °दोऽस्यदि°। ३ ख. °नमासायाथै°। ४ ख. °चकार। ५ ख. °त्वं विस्तारं चा°। ६ ख. °णि सर्वात्मकत्वेन स°। ७ ख. ग. घ. यदेनं। ८ क. °र्चाऽऽसादय°। ग. घ. °र्चा स°।

( सोमस्य शकटारोपणम् )

कल्पः—" अथैनं वाससा परितनोति वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्राविति " इति ।

विततानेति प्रतिवाक्यमन्वेति । वरुणनामकः सोमदेवो जगदीश्वरेणाभिन्नः सर्वं निर्ममे । तत्किं, वनेषु वृक्षमध्येषु अन्तरिक्षमवकाशं वितताम । अर्वत्सु वाजिषु वाजं वेगं गतिविशेषं, पयो गोषु, हृदयेषु चित्तेषु क्रतुं संकल्पं, विक्षु प्रजासु जठराग्निं, द्युलोके सूर्यं, पर्वते सोमवल्लीमदधादस्थापयत् ॥

अनेन मन्त्रेण कर्तव्यं विधत्ते—

" वाससा पर्यानह्यति सर्वदेवत्यं वै वासः सर्वाभिरेवैनं देवताभिः समर्धयत्यथो रक्षसामपहत्यै " [ सं० का० ६ प्र० १ अ० ११ ] इति ॥

मन्त्रार्थो लोकप्रसिद्ध इत्याह—

" वनेषु व्यन्तरिक्षं ततानेत्याह वनेषु हि व्यन्तरिक्षं ततान वाजमर्वत्स्वित्याह वाजꣳ ह्यर्वत्सु पयो अघ्नियास्वित्याह पयो ह्यघ्नियासु हृत्सु क्रतुमित्याह हृत्सु हि क्रतुं वरुणो विक्ष्वग्निमित्याह वरुणो हि विक्ष्वग्निं दिवि सूर्यमित्याह दिवि हि सूर्यꣳ सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं दधाति यो यजते तस्मादेवमाह" [सं० का० ६ प्र० १ अ० ११] इति ।

अद्रिशब्देनात्र पाषाणबहुलो गिरिर्विवक्षितः । पाषाणसंधिषु सोमस्योत्पत्तेः । यजमानस्तेषु पाषाणेषु सोमं प्राप्नोति ॥

कल्पः—" उदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यत्यूर्ध्वग्रीवं [1] बर्हिष्ठाद्विशसनम् [2] " इति ।

स च मन्त्र एवं पठ्यते—

उदु त्यं जातवेदसं देवं वहन्ति
केतवः। दृशे विश्वाय सूर्यम्।, इति।

केतवो रश्मयस्त्यं तं परोक्षं जातवेदसमुत्पन्नस्य सर्वस्य जगतो वेत्तारं सूर्यं देवमुद्वहन्ति ऊर्ध्वप्रदेशं प्रापयन्ति । किमर्थं, विश्वाय दृशे सर्वस्य जगतो दर्शनार्थम् ॥

सौर्यमन्त्रेण रक्षांसि निवार्यन्त इत्याह—

"उदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति रक्षसामपहत्यै" [सं० का० ६ प्र० १ अ० ११ ] इति ॥

---

१ ख. °नं पुरस्तात्प्रत्या° । २ घ. बर्हिष्ठा° ।

## उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ—

कल्पः—" अथ सोमवाहनावानीयमानौ प्रति मन्त्रयते—उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनाविति " इति ।

हे उस्रौ बलीवर्दावेतमागच्छतम् । कीदृशौ, धूर्षाहौ भारं सहमानौ अनश्रू अनसि शकटे श्रुतौ ख्यातौ । अवीरहणौ वीरं शकटस्थितं सोममबाधमानौ । ब्रह्मचोदनौ ब्रह्मान्नं कृषिद्वारेणान्नप्रवर्तकौ ॥

मन्त्रस्य स्पष्टार्थतामाह—

" उस्रावेतं धूर्षाहावित्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० १ अ० ११ ] इति ॥

## वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमसि प्रत्यस्तो वरुणस्य पाशः ॥

बौधायनः—" तयोर्दक्षिणं पूर्वं युनक्ति वरुणस्य स्कम्भनमसीति, वरुणस्य स्कम्भसर्जनमसीति शम्यामवगूहति, प्रत्यस्तो वरुणस्य पाश इति योक्त्रम् " इति ।

आपस्तम्बः—" वरुणस्य स्कम्भनमसीति शम्यां प्रतिमोच्योस्रावेतं धूर्षाहावित्यनड्वाहावुपाज्य वारुणमसीति योक्त्रपाशं परिहृत्य प्रत्यस्तो वरुणस्य पाश इत्यभिधानीं प्रत्यस्यति " इति ।

शाखान्तरानुसारेण वारुणमसीत्युक्तम् । एतच्छाखानुसारेण वरुणस्य स्कम्भसर्जनमसीति द्रष्टव्यम् । युगच्छिद्रे प्रक्षेप्यः शङ्कुः शम्या । हे शम्ये त्वं वरुणस्योक्ष्णो निवारणीयस्य बलीवर्दस्य स्कम्भनं निवारणं कुर्वत्यसि । गलबन्धनसाधनं योक्त्रम् । हे योक्त्र त्वमपि पलायनान्निवारणीयस्य शम्येव निवारणं सृजसि । दीर्घरज्जुः पाशः । स च प्रत्यस्तः शकटस्योपरि प्रसारितः । एते त्रयो मन्त्राः स्पष्टार्था इति ब्राह्मणेनोपेक्षिताः ॥

अत्र विनियोगसंग्रहः—

" उद्[3]ायु सोममादायोरु गच्छेच्छकटं प्रति ।
अदि स्तृत्वाऽजिनं सोममदित्याः सेति सा[4]दयेत् ॥ १ ॥
वने वस्त्रेण बद्ध्वोदु प्रत्यानह्यति चै[5]र्मणा ।
उस्रावनडुहोर्योगो वरु शम्यां विनिक्षिपेत् ॥ २ ॥

१ ख. °थ उस्रावेतमिति युगपदनड्वाहावुपाज्य सो° । २ ख. °हावनश्रू इत्य° । ३ क. ग घ. °दा ससोममुत्थायानुग° । ४ ख. संविशेत् । ५ ख. चर्मणि ।

वरु बद्ध्वा योक्त्रपाशं प्रति धानीमुपास्यति ।
अनुवाके ह्यष्टमेऽस्मिन्मन्त्रा एते दशोदिताः ॥ ३ ॥" इति ॥

अत्र मीमांसा नास्ति ॥

अथ च्छन्दः—

उदायुषेत्यनुष्टुप् । उर्वीत्येकपदा गायत्री । अस्तभ्नादिति वनेष्विति च त्रिष्टुभौ । उदु त्यमिति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

प्र च्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरा दघच्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवैः सꣳस्कृतं यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत वरुणस्य

( शकटारोपितस्य सोमस्य प्राचीनवंशं प्रति गमनम् )

स्कम्भनमसि वरुणस्य स्कम्भसर्जनमस्युन्मुक्तो वरुणस्य पाशः ( १ ) ॥

( मित्रस्य त्रयोविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः )

---

प्रेति । च्यवस्व । भुवः । पते । विश्वानि । अभीति । धामानि । मा । त्वा । परिपरीति परि—परी । विदत् । मा । त्वा । परिपन्थिन इति परि—पन्थिनः । विदन् । मा । त्वा । वृकाः । अघायव इत्यघ—यवः । मा । गन्धर्वः । विश्वावसुरिति विश्व—वसुः । एति । दघत् । श्येनः । भूत्वा । परेति । पत । यजमानस्य । नः । गृहे । देवैः । सꣳस्कृतम् । यजमानस्य । स्वस्त्ययनीति स्वस्ति—अयनी । असि । अपीति । पन्थाम् । अगस्महि । स्वस्तिगामिति स्वस्ति—गाम् । अनेहसम् । येन । विश्वाः । परीति । द्विषः । वृणक्ति । विन्दते । वसु । नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतम् । सपर्यत । दूरेदृश इति दूरे—दृशे । देवजातायेति देव—जाताय । केतवे । दिवः ।

( शकटारोपितस्य सोमस्य प्राचीनवंशं प्रति गमनम् )

पुत्राय। सूर्याय। शꣳसत। वरुणस्य। स्कम्भनम्। असि। वरुणस्य। स्कम्भसर्जनमिति स्कम्भ—सर्जनम्। असि। उन्मुक्त इत्युत्—मुक्तः। वरुणस्य। पाशः (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः॥ ९॥

( अथ प्रथमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः। )

अष्टमे सोमस्य शकटारोपणमुक्तमारोपितस्य नवमे गमनमुच्यते।

प्र च्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरा दघच्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवैः सꣳस्कृतं यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु—

बौधायनः—"सुब्रह्मण्योमिति त्रिरुक्तायां प्रच्यावयन्ति प्र च्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरा दघच्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवैः सꣳस्कृतमिति प्रदक्षिणं राजानं परिवहन्त्यथैतावञ्जसोपसंक्रामतोऽध्वर्युर्यजमानश्च यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति" इति।

आपस्तम्ब उक्तमन्त्रद्वयं त्रेधा विभजति—

"प्र च्यवस्व भुवस्पत इति प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्तते श्येनो भूत्वा परा पतेत्यध्वर्यू राजानमभिमन्त्रयतेऽपि पन्थामगस्महीत्यध्वर्युर्यजमानश्च दक्षिणेनोत्तरेण वा राजानमतिक्रामतः" इति।

१ ख. हि।

भूशब्देन भूमौ स्थितानि भूतानि यजमानाध्वर्युप्रभृतीन्युपलक्ष्यन्ते। तेषां च भूतानां पालकत्वात्पतिः सोमः। हे भूतपते सोम विश्वानि धामानि प्राचीनवंशहविर्धानादिस्थानान्यभिलक्ष्य प्रकर्षेण च्यवस्व गच्छ। परिपरी मार्गे बाधकस्तस्करप्रभुः स त्वां मा जानातु। परिपन्थिनस्तद्भृत्यास्तेऽपि त्वां मा जानन्तु। वृका अरण्यश्वानः। अघं पापं वधरूपमिच्छन्तीत्यघायवः। तेऽपि त्वां मा जानन्तु। विश्वावसुर्गन्धर्वः स्वर्गमार्गे सोमस्यापहर्ता। सोऽपि त्वां मा दधत्, मा प्रतीक्षताम्। हे सोम त्वं श्येनवदुत्पतनसमर्थो भूत्वाऽस्मद्यजमानस्य गृहे प्राचीनवंशे परापत शीघ्रं गच्छ। देवसदृशैरध्वर्युप्रभृतिभिस्तवोपवेशनायाऽऽसन्दीरूपं स्थानं संस्कृतम्। स्वस्ति श्रेयोरूपो यज्ञस्तस्यायनं प्राप्तिस्तदस्यास्तीति स्वस्त्ययनी यजमानस्य यज्ञप्रापकोऽसि। अपि च वयं पन्थानमनुष्ठानरूपमगस्महि प्राप्ताः। कीदृशं स्वस्तिगां श्रेयःप्रापकम्। अनेहसं नकारस्य व्यत्ययेन हकारः। अनेनसं पापरहितम्। येन पथा विश्वा द्विषः सर्वान्वैरिणः परिवृणक्ति सर्वतो वर्जयति। किं च येन पथा द्रव्यं लभते, तादृशं पन्थानं प्राप्ताः॥

प्रथममन्त्रे यथोक्तमर्थं प्रसिद्धतया स्पष्टयति—

"प्र च्यवस्व भुवस्पत इत्याह भूताना৺ ह्येष पतिर्विश्वान्यभि धामानीत्याह विश्वानि ह्येषोऽभि धामानि प्रच्यवते मा त्वा परिपरी विददित्याह यदेवादः सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्तस्मादेवमाहापरिमोषाय" [ सं० का० ६ प्र० १ अ० ११ ] इति।

पूर्वं गन्धर्वेण सोमस्यापहृतत्वादस्ति तस्करप्रसक्तिस्तस्मान्मा त्वेत्यादिकं वक्तव्यम्॥

द्वितीयमन्त्रे स्वस्त्ययनी(नि)शब्देन यज्ञप्राप्तिर्विवक्षितेत्याह—

"यजमानस्य स्वस्त्ययन्यसीत्याह यजमानस्यैवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" [ सं० का० ६ प्र० १ अ० ११ ] इति॥

तृतीयमन्त्रो ब्राह्मणेनोपेक्षितः॥

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृत৺ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय श৺सत—

कल्पः—" अथाग्रेण शालां तिष्ठन्नोह्यमानं राजानं प्रति मन्त्रयते नमो

१ ख. 'था जनो त्रि'।

( शकटारोपितस्य सोमस्य प्राचीनवंशं प्रति गमनम् )

मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेति " इति ।

अस्मिन्मन्त्रे सूर्यरूपेण सोमः स्तूयते—मित्रस्य मित्राय नमः। कीदृशाय वरुणस्य स्वरश्मिभिर्जगदावृणते। पुनः कीदृशाय चक्षसे सर्वज्ञाय। हे ऋत्विजो महो महते तस्मै देवाय देवप्रीत्यर्थं सपर्यत सपर्यां सेवां कुरुत । किं कृत्वा, तज्ज्योतिष्टोमरूपमृतं सत्यमवश्यफलप्रदं कर्म कृत्वा । किं च सूर्याय शंसत सूर्यप्रीत्यर्थं स्तुतिं कुरुत । कीदृशाय सूर्याय, दूरे दृश्यमानाय देवत्वेन जाताय केतवेऽह्नो लक्षणभूताय द्युलोकस्य पुत्रवत्प्रियाय ॥

अस्मिन्मन्त्रे वरुणशब्दाभिप्रायमाह—

" वरुणो वा एष यजमानमभ्यैति यत्क्रीतः सोम उपनद्धो नमो मित्रस्य वरुणस्य चक्षस इत्याह शान्त्यै " [ सं० का० ६ प्र० १ अ० ११ ] इति ।

यः सोम उपनद्ध एष वरुणरूपः सन्यजमानमभिलक्ष्य समागच्छत्यतो वरुणनमस्कारेण तत्त्वत उपद्रवः शाम्यति ॥

यद्यप्यग्नीषोमीयस्य पशोर्नायमनुष्ठानकालस्तथाऽपि प्रसङ्गात्तं पशुं विधित्सुः प्रसङ्गं तावद्दर्शयति—

" आ सोमं वहन्त्यग्निना प्रति तिष्ठते तौ संभवन्तौ यजमानमभि सं भवतः पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति यो दीक्षितः " [ सं० का० ६ प्र० १ अ० ११ ] इति ।

ऋत्विजः प्राचीनवंशगतस्याऽऽहवनीयस्याग्नेः समीपं प्रति सोममानयन्ति। स च सोमोऽग्निना समेत्य प्रतिष्ठितो भवति । तौ चाग्नीषोमौ परस्परं यदा संगच्छेते तदा यजमानमभिलक्ष्य संगतौ भवतः । तदेतदवगम्य किल पुरा यो दीक्षितः स एष यज्ञार्थं स्वात्मानमेवाऽऽलभ्य पशुत्वेनोपाकृत्य प्रचरति । सोऽयं प्रसङ्गः ॥

इदानीं विधत्ते—

" यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य सः " [ सं० का० ६ प्र० १ अ० ११ ] इति ।

अस्य यजमानस्य पश्वालम्भ आत्मनिष्क्रयणः । पशुं मूल्यत्वेनाग्नीषोमाभ्यां दत्त्वा तेन तयोः स्वभूतमात्मानं निष्क्रीणाति ॥

---

१ क. ग. घ. °त्यमेवाग्नी° । २ क. ग. घ. °त्त्वा त° ।

अत्र हविःशेष[1]भक्षणं पूर्वपक्षतया निषेधति—

"तस्मात्तस्य नाऽऽश्यं पुरुषनिष्क्रयण इव हि" [ सं० का० ६ प्र० १ अ० ११ ] इति।

यस्मादयं पशुः पुरुषस्य मूल्य[2]मिव तस्मात्तस्य पशोः संबन्धि हविर्न भक्षणीयं तद्भक्षणे मूल्यनाशप्रसङ्गात् ॥

सिद्धान्तमाह—

"अथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाश्यम्" [सं० का० ६ प्र० १ अ० ११] इति।

अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः। अभिज्ञास्त्वग्नीषोमार्थमिन्द्रो वृत्रं हतवानित्याहुः। अयं वृत्तान्तो द्वितीयकाण्डस्य पञ्चमप्रपाठके त्वष्टा हतपुत्र इत्यस्मिन्ननुवाके प्रपञ्चितः। यस्मादग्नीषोमार्थमिन्द्रो वृत्रं हतवांस्तस्मादग्नीषोमीयपश्वालम्भो यः सोऽस्य यजमानस्य वैरिघाती। तस्मात्तदीयं हविर्भक्षणीयमे[3]व॥

प्रासङ्गिकं परिसमाप्य प्रकृतमेव नमो मित्रस्येति मन्त्रं विनियुङ्क्ते—

"वारुण्यर्चा परि चरति स्वयैवैनं देवतया परि चरति" [ सं० का० ६ प्र० १ अ० ११ ] इति।

उपनद्धस्य सोमस्य वरुणो देवता। परिचरणं नमस्काराद्युपचारः। ततो वरुणमन्त्रेण तदनुष्ठानं युक्तम्। अथ प्राग्वंशे सोममासन्द्यां प्रतिष्ठाप्य तस्मिन्काल एवा वन्दस्व वरुणं बृहन्तमित्येतया तत्त्वा यामीत्यनया वा वारुण्यर्चोपस्थानरूपं परिचरणं कर्तव्यम्॥

**वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमस्युन्मुक्तो वरुणस्य पाशः ॥**

बौधायनः—"अथैतत्सोमवाहनमग्रेण शालामुदगीषमुपस्थापयन्ति तदुपस्तभ्नाति वरुणस्य स्कम्भनमसीति वरुणस्य स्कम्भसर्जनमसीति शम्यामुद्[4]वृहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रम्" इति।

आपस्तम्बस्तु शम्यायोक्त्राभिधानीनां क्रमेणोन्मोचनं मन्यते॥

अत्र विनियोगसंग्रहः—

"प्र च्य प्राग्वंशगमनं श्येनोऽध्वर्युस्तु मन्त्रयेत्।
अप्यतिक्रम्य राजानं नम एनं प्रतीक्षते॥
वरुत्रयेण शम्यादीन्मुञ्चेत्सप्तात्र मन्त्रकाः॥ १॥" इति॥

१ क. ग. घ. °शेषं पू°। २ ख. °ल्यमेव। ३ ख. °व। एवं प्रा°। ४ ख. °मुदूह्वात्यु°।

( प्राचीनवंशसमीपमागतस्य सोमस्य सत्कारार्थमातिथ्येष्टिः )

अत्रापि नास्ति मीमांसा ॥

अथ च्छन्दः—

प्र च्यवस्वेति षट्पदाऽतिजगती। श्येनो भूत्वाऽपि पन्थामित्येते अनुष्टुभौ। नमो मित्रस्येति जगती ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

अग्नेरा॑ति॒थ्यम॑सि॒ विष्ण॑वे त्वा॒ सोम॑स्याऽऽ- ति॒थ्यम॑सि॒ विष्ण॑वे त्वाऽति॑थेराति॒थ्यम॑सि॒ विष्ण॑वे त्वाऽग्नये॑ त्वा रायस्पोष॒दाव्ने॒ विष्ण॑वे त्वा श्ये॒नाय॑ त्वा सोम॒भृते॒ विष्ण॑वे त्वा॒ या ते॒ धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒ विश्वा॑ परि॒भूर॑स्तु य॒ज्ञं ग॑य॒स्फान॑ः प्र॒तर॑णः सु॒वीरो॒ऽवी॑र॒हा प्र च॑रा सोम॒ दुर्या॒नदि॑त्याः सदो॒ऽस्यदि॑त्याः सद॒ आ (१) सी॒द॒ वरु॑णोऽसि धृ॒तव्र॑तो वारु॒णम॑सि शं॒योर्दे॒वाना॑ꣳ स॒ख्यान्मा दे॒वाना॑मप॒सश्छि॑त्स्म॒ह्याप॑तये त्वा गृह्णामि॒ परि॑पतये त्वा गृह्णामि॒ तनू॒नप्त्रे॑ त्वा गृह्णामि शाक्व॒राय॑ त्वा गृह्णामि॒ शक्म॒न्नोजि॑ष्ठाय त्वा गृह्णा॒म्यना॑धृष्टमस्यनाधृ॒ष्यं दे॒वाना॒मोजो॒ऽभिश-

स्तिपा अनभिशस्तेन्यमनु मे दीक्षां दीक्षापति-
र्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुप गेषꣳ
सुविते मा धाः ( २ ) ॥

( आ मैकं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

अग्नेः । आतिथ्यम् । असि । विष्णवे । त्वा ।
सोमस्य । आतिथ्यम् । असि । विष्णवे । त्वा ।
अतिथेः । आतिथ्यम् । असि । विष्णवे । त्वा ।
अग्नये । त्वा । रायस्पोषदाव्न इति रायस्पोष—
दाव्ने । विष्णवे । त्वा । श्येनाय । त्वा । सोमभृत
इति सोम—भृते । विष्णवे । त्वा । या । ते । धा-
मानि । हविषा । यजन्ति । ता । ते । विश्वा । परि-
भूरिति परि—भूः । अस्तु । यज्ञम् । गयस्फान इति
गय—स्फानः । प्रतरण इति प्र—तरणः । सुवीर इति
सु—वीरः । अवीरहेत्यवीर—हा । प्रेति । चर । सोम ।
दुर्यान् । अदित्याः । सदः । असि । अदित्याः ।
सदः । एति । ( १ ) सीद । वरुणः । असि । धृतव्रत
इति धृत—व्रतः । वारुणम् । असि । शंयोरिति

(प्राचीनवंशसमीपमागतस्य सोमस्य सत्कारार्थमातिथ्येष्टिः)

शं—योः। देवानाम्। सख्यात्। मा। देवानाम्। अपसः। छित्स्महि। आपतय इत्या—पतये। त्वा। गृह्णामि। परिपतय इति परि—पतये। त्वा। गृह्णामि। तनूनप्त्र इति तनू—नप्त्रे। त्वा। गृह्णामि। शाक्वराय। त्वा। गृह्णामि। शक्मन्। ओजिष्ठाय। त्वा। गृह्णामि। अनाधृष्टमित्यना—धृष्टम्। असि। अनाधृष्यमित्यना—धृष्यम्। देवानाम्। ओजः। अभिशस्तिपा इत्यभिशस्ति—पाः। अनभिशस्तेन्यमित्यनभि—शस्तेन्यम्। अन्विति। मे। दीक्षाम्। दीक्षापतिरिति दीक्षा—पतिः। मन्यताम्। अन्विति। तपः। तपस्पतिरिति तपः—पतिः। अञ्जसा। सत्यम्। उपेति। गेषम्। सुविते। मा। धाः। (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ प्रथमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः।)

---

नवमेऽनुवाके सोमस्य प्राचीनवंशं प्रति गमनमुक्तं, दशमे तु समीपमागतशातिथिरूपस्य सोमस्य सत्कारायाऽऽतिथ्येष्टिरुच्यते।

अग्नेरातिथ्यमसि विष्णवे त्वा सोमस्याऽऽतिथ्यमसि विष्णवे त्वाऽतिथेरातिथ्यमसि वि-

ष्णवे त्वाऽग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा—

कल्पः—" आतिथ्यं निर्वपत्यन्वारब्धायां पत्न्यामथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं[1] कृत्वाऽग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा सोमस्याऽऽतिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वाऽतिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वाऽग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा[2] जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा श्येनाय त्वा सोमभृते विष्णवे त्वा जुष्टं निर्वपामीति[3] पञ्चकृत्वो यजुषा " इति।

प्रकृतिगतेऽग्नये जुष्टं निर्वपामीत्येतस्मिन्मन्त्रेऽतिदेशात्प्राप्ते सति तत्रत्यदेवतापदस्यैवात्र पञ्चभिः पर्यायैरपोदितत्वात्[4]पञ्चमेऽ(स्व)पि सावित्रं जुष्टं चानुषजति। अत्र विष्णुरेक एव हविषो देवता। अग्न्यादयस्तु तदनुचराः। अतति सततं गच्छतीत्यतिथिः। तदर्थं क्रियमाणं सत्काररूपं कर्माऽऽतिथ्यम्। लोके स्वामिने दीयमानेन द्रव्येण तदनुचरा अपि परितुष्यन्ति। तस्मादत्राग्न्यादीनामिदं हविर्भवत्यातिथ्यम्। हे हविस्त्वमतिथिरूपस्याग्नेः सत्काररूपमसि। तादृशं त्वां विष्णुशब्दाभिधेयाय सोमाय निर्वपामि। सोमस्येत्यत्र प्रधानभूतः सोमो न त्वपरः कश्चित्तन्नामाऽनुचरः। अतिथिनामकोऽन्यः। रायस्पोषदावा धनसमृद्धेर्दाता कश्चिदग्निनामकोऽन्यः। सोमं बिभर्ति पोषयतीति सोमभृच्छ्येननामकोऽन्यः। एतावुभावपि सोमस्य राज्ञोऽतिप्रत्यासन्नावनुचरावित्यभिप्रेत्याग्नये श्येनायेति चतुर्थ्या त्वाशब्देन च प्रधानसमतया निर्दिश्येते॥

मन्त्रान्व्याचिख्यासुरादौ कालविशेषसहितमातिथ्यं कर्म विधत्ते—

"यदुभौ विमुच्याऽऽतिथ्यं गृह्णीयाद्यज्ञं विच्छिन्द्याद्यदुभावविमुच्य यथाऽनागतायाऽऽतिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान्भवत्यविमुक्तोऽन्योऽथाऽऽतिथ्यं गृह्णाति यज्ञस्य संतत्यै" [सं० का० ६ प्र० २ अ० १] इति

द्वयोर्बलीवर्दयोर्विमुक्तयोः सतोः सोमगमनरूपं कर्म सर्वथा परित्यक्तं भवति। आतिथ्यकर्म तूपक्रान्तं, ततो यज्ञमध्ये यज्ञो विच्छिद्येत। अविमुक्तयोस्

---

१ क. ग. घ. °ति प°। २ ख. त्वा नि°। ३ ख. च. °पामि" इति। पाठस्तु—"अग्नेरातिथ्यमसि विष्णवे त्वा सोमस्याऽऽतिथ्यमसि विष्णवे त्वाऽतिथेरातिथ्यमसि विष्णवे त्वाऽग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा" इति। पञ्चकृत्वो यजुषेति प्र°
४ ख. °यैरापादि°।

द्वयोर्गमनस्यासंपूर्णत्वादनागताय सोमायाऽऽतिथ्यं कृतं भवेत्। एकस्मिन्वि-मुक्ते च विमुक्तत्वादेव गमनं संपूर्णं भवति। इतरस्य विमोकाभावात्पूर्वकर्मापि न त्यक्तम्। अतस्तस्मिन्काले निर्वापाद्यज्ञः संततो भवति ॥

निर्वापकालेऽध्वर्युमनु पत्न्याः शकटस्पर्शं विधत्ते—

"पत्न्यन्वारभते पत्नी हि पारीणह्यस्येशे पत्नियैवानुमतं निर्वपति यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनव-च्छित्त्यै" [ सं० का० ६ प्र० २ अ० १ ] इति।

परि(री)णद्गृहं तत्र भवं व्रीह्यादिद्रव्यं पारीणह्यं तस्येशाना पत्नी। किं च यज्ञः पुमान्पत्नी स्त्रीत्येतन्मिथुनम्। किं च योऽयं पत्न्याः शकटस्य[1] यज्ञाङ्गस्य स्पर्शः स यज्ञस्य विच्छेदराहित्याय भवति ॥

मन्त्रान्व्याचष्टे—

"यावद्भिर्वै राजाऽनुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्याऽऽतिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोत्यतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्या एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति श्येनाय त्वा सोम-भृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति" [ सं० का० ६ प्र० २ अ० १ ] इति।

सोमस्य भृत्यैरग्न्यादिभिर्भृत्यान्तराणि गायत्र्यादीन्युपलक्ष्यन्ते। उपलक्षक-विशेषाणामग्न्यादीनामुपलक्ष्यविशेषैर्गायत्र्यादिभिः प्रातिस्विकसंबन्धविशेषे प्रमाणमिदं ब्राह्मणमेव ॥

निर्वापावृत्तिसंख्यां विधत्ते—

"पञ्च कृत्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे" [ सं० का० ६ प्र० २ अ० १ ] इति।

आद्यन्तयोर्मन्त्रयोर्गायत्र्या द्विरुपलक्षितत्वं प्रश्नोत्तराभ्यामुपपादयति—

"ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्गायत्रिया उभयत आतिथ्यस्य क्रि-यत इति यदेवादः सोममाऽहरत्तस्माद्गायत्रिया उभयत आतिथ्यस्य क्रियते पुरस्ताच्चोपरिष्टाच्च" [ सं० का० ६ प्र० २ अ० १ ] इति।

आतिथ्यं क्रियत इत्यर्थः ॥

---

१ ख. °टरूपस्य।

निरुप्तैस्तण्डुलैर्नवकपालः पुरोडाशः कार्य इति विधत्ते—

"शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतम्" [ सं० का० ६ प्र० २ अ० १ ] इति।

आतिथ्येष्टेः सत्काररूपत्वेन शिरोवदुत्तमाङ्गत्वम्। यस्मादत्र कपालेषु नवसंख्या तस्माद्दृष्टान्तभूतं शिरोऽपि नवभिः कपालैर्विशेषेण स्यूतम्। पौरोडाशिकब्राह्मणे ह्येवमाम्नातम्—"तस्मादष्टाकपालं पुरुषस्य शिरः" इति। ततोऽष्टानां कपालानां परस्परमष्टधा स्यूतिस्ततस्तत्समूहरूपस्य शिरसोऽधस्तनेन कबन्धेन सहैकधा स्यूतिः॥

उक्तमेव विधिमनूद्य प्रशंसति—

"नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता स्तोमेन संमितास्तेजस्त्रिवृत्तेज एव यज्ञस्य शीर्षन्दधाति" [ सं०का०६प्र०२अ०१ ] इति।

त्रिवृन्नामके स्तोमे त्रीणि सूक्तानि। तेष्वेकैकस्मिन्सूक्ते तिस्रस्तिस्र ऋचः। अतः संख्यासाम्यान्नवकपालस्य त्रिवृद्रूपत्वम्। त्रिवृच्च प्रजापतेर्मुखादग्निना सह जातत्वात्तेजोरूपम्। तथा सति यज्ञशिरोरूप आतिथ्ये तेजः स्थापितं भवति॥

पुनरप्यनूद्य प्रशंसति—

"नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता प्राणेन संमितास्त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणमभिपूर्वं यज्ञस्य शीर्षन्दधाति" [ सं० का० ६ प्र० २ अ० १ ] इति।

त्रिभिः कपालैः संस्कृतः पुरोडाशस्त्रिकपालः। तादृशाश्च पुरोडाशास्त्रयः। नवसंख्यायां विभज्यमानायामेवं संपद्यते। तथा सति यत्कपालगतं त्रिवृत्त्वं यच्च पुरोडाशगतं तेन सदृशी प्राणसंख्या प्राणस्योर्ध्वाधोमध्यवृत्तिभिस्त्रिगुणत्वात्। अथ वा नवसु च्छिद्रेषु वर्तमानो नवसंख्याकः प्राणः। तस्य त्रेधा विभागे सति प्रकृतनवकपालसादृश्यं भवति। तादृशं प्राणमभिपूर्वमनुक्रमेण यज्ञस्य शिरस्यातिथ्ये स्थापयति॥

अस्यामातिथ्येष्टौ प्रकृतिवत्प्रस्तरस्य विधृत्योश्च कुशमयत्वे प्राप्ते तद्बाधितुं द्रव्यान्तरं विधत्ते—

"प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची प्रजापतेरेव तच्चक्षुः सं भरति" [ सं० का० ६ प्र० २ अ० १ ] इति।

---

१ ख. 'णेऽप्येव'। २ ख. 'मानतया न'।

पक्ष्माण्यक्षिरोमाणि। अश्ववालाः काशाख्या दर्भविशेषाः। ऐक्षवी इक्षुपत्रिके। तिरश्ची चक्षुषश्चर्मपुटिके। यथा सोमपर्णस्य पलाशवृक्षरूपेणोत्पत्तिर्यथा चाप्सु मेध्यांशो दर्भरूपेणोत्पन्नस्तथैव प्रजापतेः पक्ष्मणां चर्मपुटयोश्च काशरूपेणेक्षुपत्ररूपेण चाऽऽविर्भावोऽर्थवादान्तरे द्रष्टव्यः। एवं सति प्रशस्तत्वादत्र प्रस्तराख्यस्तृणमुष्टिराश्ववालः कर्तव्यः। तस्याधस्तात्तिर्यक्त्वेन स्थापनीये विधृती ऐक्षव्यौ कुर्यात्। तावता प्रजापतेस्तच्चक्षुः संपादितं भवति ॥

परिधिषु श्रीपर्णीवृक्षं[1] विधत्ते—

" देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन्ते देवाः कार्ष्मर्यमपश्यन्कर्मण्यो वै कर्मैनेन कुर्वीतेति ते कार्ष्मर्यमयान्परिधीनकुर्वत तैर्वै ते रक्षाꣳस्यपाघ्नत यत्कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै " [ सं० का० ६ प्र० २ अ० १ ] इति।

निष्कावं निःशब्दं चर्वणादिशब्देन देवा ज्ञास्यन्तीति मत्वा चौर्येणाभक्षयन्। कार्ष्मर्यवृक्षो रक्षोनिवारकत्वेन कर्मण्यः। तस्मात्तेनैव कर्म कुर्वीतेति मत्वा तन्मयान्परिधीनकुर्वत। तथैवान्येनापि कर्म कर्तव्यम् ॥

मध्यमपरिधेर्दक्षिणोत्तरपरिधिभ्यां सह संस्पर्शं विधत्ते—

" सꣳ स्पर्शयति रक्षसामनन्ववचाराय " [ सं०का०६प्र०२अ०१ ] इति।

स्पर्शाभावे परिध्योः संधौ रक्षसामन्तरनुप्रवेशः स्यात् ॥

पूर्वस्यां दिशि रक्षःप्रवेशनिवारणाय प्रसक्तं चतुर्थपरिधिं निषेधति—

" न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाꣳस्यपहन्ति " [ सं० का० ६ प्र० २ अ० १ ] इति ॥

आघारसमिधोर्द्वयोराहवनीयपूर्वभागे[2] स्थापनं विधत्ते—

"ऊर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति " [ सं० का० ६ प्र० २ अ० १ ] इति।

यद्यप्यूर्ध्वायां दिशि रक्षसां निवारणायोपरिष्टादेव समिधौ स्थापनीये तथाऽपि व्योम्नि स्थापयितुमशक्यत्वादूर्ध्वदिशि[3](गप्रे) स्थापनीये ॥

तत्र कंचिद्विशेषं विधत्ते—

" यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय " [सं०का०६प्र०२अ०१] इति।

वीतिहोत्रं त्वा कव इति मन्त्रेण दक्षिणामादध्यात्तूष्णीमुत्तराम्। समन्त्रकामन्त्रकयोः स्त्रीपुरुषलक्षणत्वान्मिथुनत्वम्[4] ॥

---

१ ख. 'पर्णवृ'। २ ख. 'नीयात्पूर्वे'। ३ ख. 'दिग्बुद्ध्या दूरे स्था'। ४ ख. 'पवद्विल'।

समित्संख्यां विधत्ते—

" द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै " [ सं० का० ६ प्र० २ अ० १ ] इति ।

द्वित्वं पादद्वयप्रतिष्ठायै भवति । ननु संस्पर्शादिविधयः प्रकृतौ दर्शपूर्णमासेष्टावपि सन्तीत्यतिदेशादेव तदनुष्ठानस्यात्र प्राप्तत्वान्न पृथग्विध्यपेक्षेति चेन्न । उपसदर्थे विधेयत्वात् । तर्हि तत्रैव विधीयतामिति चेन्न । आतिथ्योपसदोः परिध्यादिभेदं वारयितुं साधारणत्वेनात्रैव विधेयत्वात् ॥

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञं गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान्—

बौधायनः—" अथ यजमानो नीडाद्राजानमपादत्ते या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति पूर्वया द्वारा शालां प्रपादयति गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यानिति " इति ।

आपस्तम्बो मन्त्रैक्यं मन्यते—" या ते धामानीति पूर्वया द्वारा प्राग्वंशं प्रविश्य " इति ।

हे सोम या ते धामानि त्वदीयेषु येषु स्थानेषु प्रातःसवनादिषु हविषा यजन्ति यज्ञमुद्दिश्य ता ते विश्वा त्वदीयानि तानि सर्वाणि परिभूरस्तु परितः प्राप्तवान्भव । हे सोम त्वं दुर्यान्गृहान्प्राचीनवंशरूपान्प्रचर प्राप्नुहि । कीदृशस्त्वं गयस्फानो गृहाभिवर्धकः । प्रतरणः प्रकर्षेण यज्ञपारं प्रति अस्मांस्तारयिता । सुवीरः शोभनास्त्वत्प्रसादलब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीरः । अवीरहा यथोक्तानां वीराणामहन्ता परिपालक इत्यर्थः ॥

अदित्याः सदोऽस्यदित्याः सद आ सीद—

कल्पः—" अथैनामासन्दीमग्रेणाऽऽहवनीयं पर्याहृत्य दक्षिणतो निदधाति तस्यां कृष्णाजिनमास्तृणात्यदित्याः सदोऽसीत्यदित्याः सद आ सीदेति कृष्णाजिने राजानम् " इति ॥

वरुणोऽसि धृतव्रतो वारुणमसि शंयोर्देवानाꣳ सख्यान्मा देवानामपसश्छित्स्महि—

बौधायनः—" अथैनमुपतिष्ठते वरुणोऽसि धृतव्रतो वारुणमसीति समु-

१ ख. °ध्यन्तरापे° ।

( प्राचीनवंशसमीपमागतस्य सोमस्य सत्कारार्थमातिथ्येष्टिः )

ज्ञित्य कृष्णाजिनं तस्यान्तान्स्यन्द्यया (नासन्ध्या) विग्रथ्य वंशे प्रग्रथ्नाति शंयोर्देवानाꣳ सख्यादित्यथ परावासन्दीपादावन्तरेण ब्राह्मणोऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपसश्छित्स्महीति " इति ।

आपस्तम्बोऽत्र प्रथममन्त्रोत्तरार्धस्य द्वितीयतृतीयमन्त्रयोश्चैकतां मन्यते—
" वरुणोऽसि धृतव्रत इति राजानमभिमन्त्रयते, वारुणमसीति वाससा पर्यानह्यति " इति ।

हे सोम त्वं वरुणपाशस्य निवारकोऽसि । धृतं यज्ञरूपं व्रतं येन त्वया स त्वं धृतव्रतः । हे सोम त्वमुपनद्धस्वरूपत्वाद्वरुणसंबन्ध्यसि । तथा सति त्वदीयाच्छंयोः सुखमिश्राद्वरुणादिदेवानां सख्याद्वयमपसो मा च्छित्स्महि । सकारान्तोऽपःशब्दः कर्मवाची । अस्माकं कर्मविच्छेदो मा भूदित्यर्थः । या ते धामानीत्यादयो मन्त्रा ब्राह्मणेनोपेक्षिताः ॥

आतिथ्येष्टिमध्ये वह्निमन्थनपूर्वकमाहवनीये मथिताग्निप्रक्षेपं विधत्ते—

" ब्रह्मवादिनो वदन्त्यग्निश्च वा एतौ सोमश्च कथा सोमायाऽऽतिथ्यं क्रियते नाग्नय इति यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते " [ सं० का० ६ प्र० २ अ० १ ] इति ।

अग्निश्च सोमश्चेत्येतावुभावपि यागनिर्वाहकौ देवौ, तयोः साम्ये सति कथमग्नय आतिथ्यं नेति प्रश्नः । अग्निं मथित्वाऽऽहवनीये प्रहरेत्तदिदमाहवनीयाग्नेरातिथ्यम् ॥

मथनस्य कालं विधत्ते—

" अथो खल्वाहुरग्निः सर्वा देवता इति यद्धविरासाद्याग्निं मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयति" [ सं० का० ६ प्र० २ अ० १ ] इति ।

अपि चैते ब्रह्मवादिनः कालविवक्षावन्तस्तदुपोद्घातत्वेन वह्नेः सर्वात्मकत्वमाहुः । तच्च सर्वदेवतात्मकत्वमेकद्वित्रितानामुत्पत्तौ विस्पष्टमाम्नातम् । यदातिथ्यपुरोडाशं वेद्यामासाद्य तस्मिन्काले ऽग्निं मथ्नीयात्तथा मथ्यमानाग्नावन्तर्भूताः सर्वा अपि देवता आसन्नहविर्भोक्तुमुत्पादिता भवन्ति तैस्स एव काल इत्यर्थः । मथनमन्त्रास्त्वाध्वर्यवा अग्नीषोमीयपशुप्रस्तावे समाम्नास्यन्ते । हौत्रास्तु बह्वृचब्राह्मण आतिथ्येष्टिसमीप एवोदाहृताः ॥

# आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि

---

१ ख. °थ्य पाशेषु प्र° । २ क. घ. °णो निषि° । ३ ख. तस्मात्स ।

# तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामि—

कल्पः—"अथैतद्ध्रौवमाज्यमाप्याय्य कꣳसं वा चमसं वा याचति तमन्तर्वेदि निधाय तस्मिन्नेतत्तानूनप्त्रं समवद्य विगृह्णाति आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामीति" इति ।

आपतिर्निश्वासरूपेण बहिर्गतः पुनराभिमुख्येनान्तः पततीत्यापतिः प्राणः। हे आज्य प्राणार्थं त्वामस्मिन्पात्रे गृह्णामि । परितो नानाविषयेषु पततीति परिपतिर्मनः । तनूं शरीरं न पातयति न विनाशयतीति तनूनपा जाठरोऽग्निः। शाकनशीलः शक्वरः शक्तिमान्पुरुषस्तस्य संबन्धि शाक्वरं शक्तिस्वरूपम्। शक्मञ्शक्तिमत्सु यदोजिष्ठं तस्मै । ओजो नामाष्टमो धातुस्तस्य सारमोजिष्ठम् । तदवष्टम्भेनैव शक्तिरवतिष्ठते । एतैर्मन्त्रैस्तानूनप्त्रं ग्राह्यम् ॥

तनूनप्तृसंज्ञकजाठरवह्निविषयस्य शपथकर्मणो हेतुभूतमाज्यं तानूनप्त्रं तस्य ग्रहणं[१] विधातुं प्रस्तौति—

"देवासुराः संयत्ता आसन्ते देवा मिथो विप्रिया आसन्तेऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निर्ऋच्छाद्यो नः प्रथमोऽन्योऽन्यस्मै द्रुह्यादिति तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति" [ सं० का० ६ प्र० २ अ० २ ] इति ।

संयत्ताः सङ्ग्रामं प्राप्ताः । मिथः परस्परं ते च देवाः सर्वेऽपि स्वातिरिक्तस्य ज्यैष्ठ्यमनङ्गीकुर्वाणाः पञ्चव्यूहा अभवन् । तेषु व्यूहेष्वग्न्यादयः पञ्च देवाः सेनान्यो वस्वादयः पञ्च गणाः[२] । ततस्ते कंचित्कालं परस्परविरोधिनो भूत्वा पश्चादेवं विचारितवन्तो यदि वयमन्योन्यविरोधिनस्तदा वैरिणामसुराणामिदं जयरूपं कार्यं वयमेव साधयामः । ततस्तद्विरोधपरिहारहेतुं शपथं कर्तुमस्मदीयाः प्रियाः पुत्रभार्यादिरूपा इमास्तनूरेकत्र संघी कुर्म इति विचार्य संघीकृत्य शपथमेवं परिभाषितवन्तः । अस्माकं मध्ये यः प्रथमं द्रुह्यति स ताभ्यस्तनूभ्यो निर्गच्छेन्निर्भ्रष्टो भवत्विति । यस्मादेवानामेवं वृत्तं तस्मान्म-

१ क. घ. 'णं प्र' । २ ख. 'णाः सेनाः । ते कं' ।

( प्राचीनवंशसमीपमागतस्य सोमस्य सत्कारार्थमातिथ्येष्टिः )

नुष्याणामपि शपथं कृतवतां मध्ये यः प्रथमं द्रुह्यति स विनाशं प्राप्नोति। समान एकस्मिन्विषये तानूनप्त्रिणः शपथवन्तः सतानूनप्त्रिणः ॥

इदानीं विधत्ते—

"यत्तानूनप्त्रꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" [ सं० का० ६ प्र० २ अ० २ ] इति।

समवद्यति संभूयावदानं कुर्यात्। स्वयं भूतिमान्भवति वैरी तु पराभवति। इयमेव भ्रातृव्याभिभूतिः ॥

अवदानसंख्यां विधत्ते—

"पञ्च कृत्वोऽव द्यति पञ्चधा हि ते तत्समवाद्यन्ताथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे" [ सं० का० ६ प्र० २ अ० २ ] इति।

ते देवास्तत्तदानीं पञ्चधा विभक्ताः पश्चात्संभूयैकवत्प्रियतनूरवाद्य [ न्त ] स्थापितवन्तः ॥

मन्त्रान्व्याचष्टे—

"आपतये त्वा गृह्णामीत्याह प्राणो वा आपतिः प्राणमेव प्रीणाति परिपतय इत्याह मनो वै परिपतिर्मन एव प्रीणाति तनूनप्त्र इत्याह तनुवो हि ते ताः समवाद्यन्त शाक्करायेत्याह शक्त्यै हि ते ताः समवाद्यन्त शक्मन्नोजिष्ठायेत्याहौजिष्ठꣳ हि ते तदात्मनः समवाद्यन्त" [ सं० का० ६ प्र० २ अ० २ ] इति।

(*आपतिपरिपतितनूनप्तृशाक्करशक्मन्नोजिष्ठशब्दैर्देववृत्तान्तः सूच्यते।)
तनूशाक्करौजिष्ठशब्दैरेव[1] [ वा ] वृत्तान्तः सूच्यते[2]। ते देवास्तदानीं स्वात्मसंबन्धं पुत्रादितनुरूपमोजः सारं समवाद्यन्त ॥

## अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यम्—

कल्पः[3]—"यावन्त ऋत्विजस्त एतत्समवमृशन्ति अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमिति" इति।

हे तानूनप्त्राऽऽज्य त्वमितः पूर्वं केनाप्यतिरस्कृतमसि। इतः परमप्यति-

* धनुश्चिह्नान्तर्गतं ख. पुस्तक एव।

१ क. घ. तच्छक्मन्नोजि°। २ क. घ. °ब्दैर्देववृ°। ३ क. ख. घ. °ल्पः—'स या°।

रैस्कार्यं देवानामोजः सारमसि । अभिशस्तेर्हिंसारूपादन्योन्यविरोधादस्मान्पालयसि । त्वं पुनरभिशस्तेरविषयंभूतमसि ॥

मन्त्रस्य यथोक्तार्थः प्रसिद्ध इत्याह—

" अनाधृष्टमस्यनाधृष्यमित्याहानाधृष्ट९ ह्येतदनाधृष्यं देवानामोज इत्याह देवाना९ ह्येतदोजोऽभिशस्तिपा अनभिशस्तेन्यमित्याहाभिशस्तिपा ह्येतदनभिशस्तेन्यम् " [ सं० का० ६ प्र० २ अ० २ ] इति ॥

अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुप गेष९ सुविते मा धाः—

कल्पः—" यजमानमतिवाचयति अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुप गेष९ सुविते मा धा इति " इति ।

दीक्षणीयेष्टौ यो देवः स दीक्षापतिर्ममेमां दीक्षामनुजानातु । तप उपसत्तत्त्यो देवो मदीयं तपोऽनुजानातु । अहं चाञ्जसा सत्यमुपगेषमार्जवेन तानूनप्त्रस्पर्शनरूपं शपथं प्राप्तोऽस्मि । हे तानूनप्त्र मां सुविते शोभनमार्गे यज्ञकर्माणि स्थापय ॥

मन्त्रस्य स्पष्टार्थतामाह—

" अनु मे दीक्षां दीक्षापतिर्मन्यतामित्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० २ अ० २ ] इति ॥

अत्र विनियोगसंग्रहः—

" अग्नेः पञ्चकनिर्वापो या ते प्राग्वंशवेशनम् ।
अघासन्द्यां क्षिपेच्चर्म ह्यदि सोमं तु सादयेत् ॥ १ ॥
वरु तं मन्त्रयेद्दारु वाससा परिणह्यति ।
आप तानूनप्त्रमाज्यं समवद्यति पञ्चभिः ॥ २ ॥
अना सर्व ऋत्विजस्तु तानूनप्त्रं स्पृशन्ति हि ।
अनु स्वामी स्पृशेदेतदिति सप्तदशेरिताः ॥ ३ ॥" इति ॥

अथ मीमांसा ।

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

" वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः ।
धर्मातिदेशः स्यान्नो वा विद्यतेऽत्राग्निहोत्रवत् ॥

१ ख. 'रस्कृतं दे' । २ ख. 'यम' । ३ ख. देवस्तपस्पतिः । म° ।

श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः।
न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः" इति॥

आतिथ्येष्टौ वैष्णवो नवकपालो विहितः। तत्र श्रुत्या वैष्णवशब्दो राजसूयगते वैष्णवे त्रिकपाले प्रयुज्यमानोऽग्निहोत्रवन्नवकपालधर्मानतिदिशतीति पूर्वः पक्षः। विष्णुर्देवताऽस्येति विग्रहे सति विहितस्ताद्धितप्रत्ययो देवताम-भिधत्ते न तु धर्मान्। तस्मान्नातिदिशति।

चतुर्थाध्यायस्य द्वितीयपादे चिन्तितम्—

"यदातिथ्याबर्हिरेतदुपसत्स्वतिदेशनम्।
साधारण्यविधिर्वाऽऽद्यस्तदीयस्योपसंहृतेः॥
बर्हिःश्रुत्यैकताभानान्नातिदेशस्य लक्षणा।
आतिथ्ययोपसद्भिश्च बर्हिरेतत्प्रयुज्यते" इति॥

ज्योतिष्टोमे श्रूयते—"यदातिथ्यं बर्हिस्तदुपसदां तदग्नीषोमीयस्य च" इति। क्रीतं सोमं शकटेऽवस्थाप्य प्राचीनवंशं प्रत्यानीयमानेऽभिमुखे यामिष्टिं निर्वपति सेयमातिथ्या। तत ऊर्ध्वं त्रिषु दिनेष्वनुष्ठीयमाना उपसदः। औपवसथ्ये दिनेऽनुष्ठेयोऽग्नीषोमीयः। तत्राऽऽतिथ्येष्टौ विहितं यद्बर्हिस्तद्यदि तस्या इष्टेराच्छिद्योपसत्सु विधीयेत तदानीमातिथ्यायां विधानमनर्थकं स्यात्। यदि च तत्रोपयुक्तमितरत्र विधीयेत विनियुक्तविनियोगरूपो विरोधः स्यात्। तस्मादातिथ्यबर्हिषो ये धर्मा आश्ववालत्वादयस्ते धर्मा उपसत्सूपसंह्रियन्त इत्यतिदेशपरं वाक्यमिति प्राप्ते ब्रूमः—बर्हिःशब्दस्य धर्मातिदेशपरत्वे लक्षणा प्रसज्येत। श्रुत्या तु बर्हिष आतिथ्योपसदग्नीषोमीयेषु एकत्वं प्रतिभाति। अतः साधारण्यमत्र विधेयम्। आतिथ्यार्थं यद्बर्हिरुपादीयते तन्न केवलमातिथ्यार्थं किं तूपसदर्थमग्नीषोमीयार्थं चोपादेयमिति विधिवाक्यार्थः। तस्मादातिथ्योपसदग्नीषोमीयास्त्रयोऽप्यस्य बर्हिषः प्रयोजकाः। एवं परिधिसंधिस्पर्शादिविधीनां साधारण्यं द्रष्टव्यम्॥

अथ च्छन्दः—

या ते धामानीति त्रिष्टुप्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः॥ १०॥

---

१ क. घ. °तिथ्यं ब°। २ क. ख. घ. °रणवि°। ३ क. घ. बहुश्रु°।

( अथ प्रथमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

अꣳशुरꣳशुस्ते देव सोमाऽऽप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाऽऽप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि ( १ ) या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहा ( २ ) ॥

( त्वयि चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

अꣳशुरꣳशुरित्यꣳशुः—अꣳशुः । ते । देव । सोम । एति । प्यायताम् । इन्द्राय । एकधनविद

इत्येकधन—विदे । एति । तुभ्यम् । इन्द्रः ।
प्यायताम् । एति । त्वम् । इन्द्राय । प्यायस्व ।
एति । प्यायय । सखीन् । सन्या । मेधया ।
स्वस्ति । ते । देव । सोम । सुत्याम् । अशीय ।
एष्टः । रायः । प्रेति । इषे । भगाय । ऋतम् । ऋत-
वादिभ्य इत्यृतवादि—भ्यः । नमः । दिवे । नमः ।
पृथिव्यै । अग्ने । व्रतपत इति व्रत—पते । त्वम् ।
व्रतानाम् । व्रतपतिरिति व्रत—पतिः । असि ।
या । मम । तनूः । एषा । सा । त्वयि । (१) या ।
तव । तनूः । इयम् । सा । मयि । सह । नौ ।
व्रतपत इति व्रत—पते । व्रतिनोः । व्रतानि ।
या । ते । अग्ने । रुद्रिया । तनूः । तया । नः ।
पाहि । तस्याः । ते । स्वाहा । या । ते । अग्ने ।
अयाशयेत्यया—शया । रजाशयेति रजा—शया ।
हराशयेति हरा—शया । तनूः । वर्षिष्ठा । गह्वरे-
ष्ठेति गह्वरे—स्था । उग्रम् । वचः । अपेति ।
अवधीम् । त्वेषम् । वचः । अपेति । अवधीम् ।
स्वाहा ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम् )

(अथ प्रथमकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः ।)

---

दशमेऽनुवाक आतिथ्येष्टिरुक्ता । तन्मध्ये सोमः प्राग्वंशे स्थापितः । तेन सोमेन करिष्यमाणस्य यागस्य विघ्नकारिणोऽसुराः प्रथमं जेतव्या इति तद्विजयार्थमुपसद एकादशे वर्ण्यन्ते । तत्राऽऽदौ तावदतिथेः सोमस्य बन्धनोपद्रवपरिहारेणा[1]प्याप्यायनादुपचारः[2] क्रियते ।

अꣳशुरꣳशुस्ते देव सोमाऽऽ प्यायतामिन्द्रा-
यैकधनविद आ तुभ्यमिन्द्रः प्यायतामा
त्वमिन्द्राय प्यायस्वाऽऽ प्यायय सखीन्त्सन्या
मेधया स्वस्ति ते देव सोम सुत्यामशीय—

बौधायनः—"अथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययं[3]ति अꣳशुरꣳशुस्ते देव सोमाऽऽ प्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति यजमानमभिवाचयति आ प्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेति" इति ।

आपस्तम्बस्य तु एक एव मन्त्रः । मदन्ती(न्त्य)स्तप्ता आपः । अंशुः सूक्ष्मोऽवयवः । हे सोम देव ते योंऽशुः शुष्यति यश्चांशुः क्षीयते[4] स सर्वोऽप्यंशुर्वर्धताम् । किमर्थम् । इन्द्रार्थम् । कीदृशायेन्द्राय, एकं मुख्यं शोभनं सोमरूपं धनं वेत्तीत्येकधनवित्तस्मै । हे सोम तुभ्यं त्वदर्थमिन्द्र आप्यायतां त्वां पातुमुत्सहताम् । त्वमपीन्द्रार्थमाप्यायस्व वर्धस्व । सखीनृत्विजः सन्या धनलाभेन मेधया प्रज्ञया च वर्धस्व । हे सोम देव ते स्वस्ति शुभमस्तु । त्वत्प्रसादेनाहं सुत्यामभिषवतन्त्रमशीय प्राप्नवानि ॥

एतन्मन्त्रं व्याख्यातुं प्रस्तौति—

"घृतं वै देवा वज्रं कृत्वा सोममघ्नन्नन्तिकमिव खलु वा अस्यैतच्चरन्ति यत्तानूनप्त्रेण प्रचरन्ति" [ सं० का० ६ प्र० २ अ० २ ] इति ।

पुरा कदाचित्स्वसामर्थ्याद्वज्रीकृतेन घृतेन सोमस्य देवैस्ताडितत्वात्सोमो घृताद्बिभेति । ऋत्विजश्च वेद्यां तानूनप्त्रेणाऽऽज्येन प्रचरन्तीति यदेतदस्य

---

१ ख. °णाऽऽप्याय° । २ ख. °चाराः क्रियन्ते । बोधा° । ३ क. ग. घ. °यन्ति अं° ।
४ ख. °ते यजमानेन सर्वो° ।

सोमस्यान्तिकं यथा भवति तथा चरन्ति । आहवनीयदक्षिणभागे सोमस्य स्थितत्वात् । अतो भीतः सोम आप्यायितव्यः ॥

आप्यायनस्य प्रसङ्गं दर्शयित्वा तन्मन्त्रं व्याचष्टे—

"अꣳशुरꣳशुस्ते देव सोमाऽऽप्यायतामित्याह यदेवास्यापुवायते न्मीयते तदेवास्यैतेनाऽऽप्याययत्या तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय यायस्वेत्याहोभावेवेन्द्रं च सोमं चाऽऽप्याययत्या प्यायय सखीन्त्सन्या मेध-ेत्याहर्त्विजो वा अस्य सखायस्तानेवाऽऽप्याययति स्वस्ति ते देव सोम ुत्यामशीयेत्याहाऽऽशिषमेवैतामा शास्ते" [सं०का० ६प्र० २अ० २] इति।

अस्य सोमस्य यदङ्गमपुवायते शुष्यति यच्च मीयते ॥

## एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै—

कल्पः—"न प्रस्तरायाऽऽश्रावयति न बर्हिरनुप्रहरति तं दक्षिणार्धे वेद्यै ेधाय तस्मिन्दक्षिणोत्तरेण निह्नुवते—एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो मो दिवे नमः पृथिव्या इति" इति ।

आतिथ्येष्टौ यः प्रस्तरो यच्च तत्रत्यं बर्हिस्तदुभयमग्नौ न प्रहरणीयं किं तु प्रस्तरं वेद्या दक्षिणार्धे निधाय तस्मिन्प्रस्तरे दक्षिणपाणीनुत्तानान्कृत्वा व्यान्नीचैः कृत्वा सर्वे निह्नवमपलापसदृशं नमस्कारोपचारं कुर्युः । मन्त्रार्थस्तु ृशब्द इच्छावन्तं द्यावापृथिव्यभिमानिनं देवमाचष्टे । स हि दयालुतया केषु पुरुषेष्विच्छावान् । हे तादृग्देव त्वमृतवादिभ्यो यज्ञवादिभ्योऽस्मभ्य-ं यज्ञं प्रकृष्टं देहीत्यध्याहारः । किमर्थम् । रायो राये धनार्थम् । इषेऽन्ना-। भगायैश्वर्यादिषड्गुणार्थम् ।

ते च गुणा एवं स्मर्यन्ते—

> "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
> ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति ॥

वयं पुनर्द्युदेवतायै भूदेवतायै च नमस्कुर्मः ॥

नायमकाण्डे नमस्कारः किं तु तस्य निमित्तमस्तीत्याह—

"प्र वा एतेऽस्माल्लोकाच्च्यवन्ते ये सोममाप्याययन्त्यन्तरिक्षदेवत्यो हि ा आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृत्या-ँल्लोके प्रति तिष्ठन्ति" [सं० का० ६ प्र० २ अ० २] इति ।

---

१ ख. वीर्यस्य ।

आप्यायितस्य सोमस्य नाभिदघ्न्यामासन्द्यां पर्यवस्थितत्वादन्तरिक्षदेवत्यत्वम्। तादृशस्य सोमस्याऽऽप्याययितारोऽपि तथाविधा इत्यस्माल्लोकात्प्रच्युता अतोऽस्मिँल्लोके प्रतिष्ठित्यै नमस्कारः क्रियते ॥

अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि—

कल्पः—" अथ यजमानमवान्तरदीक्षामुपनयति अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानीति " इति।

अनेन मन्त्रेणाऽऽहवनीयस्योपस्थानम्। अत्रावान्तरदीक्षोपक्रमः। हेऽग्ने व्रतपते त्वं व्रतपतिरसि। नैकस्य व्रतस्य पतिः किं तु सर्वेषामिति विवक्षां द्योतयितुं व्रतानामित्युक्तम्। व्रतमाचरन्ती मदीया तनूस्त्वयि मनसा समर्पिता। त्वदीया तु व्रतं पालयन्ती तनूर्मयि मनसा स्थापिता। तथा सति आवामुभावपि व्रतिनौ संपद्यावहे। तयोर्व्रतानि सह प्रवर्तन्ताम् ॥

या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा—

कल्पः—" अथैनं संशास्ति संतरां मेखलां[1] समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पूर्वं व्रतं सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनैव[2] तोऽधिव्रतय " इति।

या मेखला पूर्वं मध्ये संनद्धा सा संकुचिततरा यथा भवति तथा नियन्तव्या। ये च मुष्टी कृते ते अप्यतिसंकोचेन दृढीकर्तव्ये। उष्णक्षीरी भवेदुष्णोदकी[3] भवेत्। पूर्वंचमसमुत्सृजेत्। तत्र या ते अग्न इत्ययं मन्त्रः। अनेनैव मन्त्रेणात ऊर्ध्वं व्रतं पिबेत्। हेऽग्ने या तव तनूस्त्वयि रुद्रिया क्रूरा तयाऽस्मान्पालय। त्वदीयायास्तस्यास्तन्वा इदं हुतमस्तु ॥

अग्ने व्रतपत इत्यस्य मन्त्रस्य स्पष्टार्थतामभिप्रेत्यावान्तरदीक्षारम्भं विधत्ते—

" देवासुराः संयत्ता आसन्ते देवा बिभ्यतोऽग्निं प्राविशन्तस्मादाहुरग्निः सर्वा देवता इति तेऽग्निमेव वरूथं कृत्वाऽसुरानभ्यभवन्नग्निमिव खलु वा

---

१ ख. 'र्वं तद्व्रतं संसृ'। २ ख. 'वात ऊर्ध्वं व्रतयाति" इ'। ३ ख. 'दको मार्जयेत्। ४ ख. पूर्वं व्रतं मन्त्रमु'।

( सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम् )

एष प्र विशति योऽवान्तरदीक्षामुपैति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति " [ सं० का० ६ प्र० २ अ० २ ] इति।

परकायप्रवेशहेतुत्वाद्योगशास्त्रप्रसिद्धेन संयमविशेषेण देवा अग्निमग्निशरीरं प्राविशन्। तपोरूपत्वेनाग्निसमानाऽवान्तरदीक्षा ततस्तामुपेयात् ॥

पूर्वोक्तां दीक्षामिदानीमुच्यमानावान्तरदीक्षां च प्रशंसति—

"आत्मानमेव दीक्षया पाति प्रजामवान्तरदीक्षया " [ सं० का० ६ प्र० २ अ० २ ] इति ॥

अवान्तरदीक्षानियमान्विधत्ते—

"संतरां मेखलाꣳ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयते निर्ह्यग्निः शीतेन वायति समिद्ध्यै " [ सं० का० ६ प्र० २ अ० २ ] इति।

सर्वो जनः स्वात्मानं क्लेशयित्वाऽप्यपत्यानि सम्यक्परिपालयति। अतः स्वस्मादपि प्रजाोऽभ्यन्तरा[1]। मेखलायास्तु प्रजास्थानीयत्वेनान्तरतरत्वात्संश्लिष्टतरं यथा भवति तथा समाच्छादयेत्। शीतेन क्षीरेण शीताभिरद्भिश्चाग्निर्निर्वायति। तस्मादुदराग्निसमिन्धनाय पेयस्य क्षीरस्य मार्जनहेतोरुदकस्य चौष्ण्यं कर्तव्यम् ॥

व्रतमन्त्रे रुद्रियाशब्दाभिप्रायमाह—

" या ते अग्ने रुद्रिया तनूरित्याह स्वयैवैनद्देवतया व्रतयति सयोनित्वाय शान्त्यै " [ सं० का० ६ प्र० २ अ० २ ] इति।

स्वोदराग्नेरपरं रूपं रुद्रिया तनूस्तया दुग्धे तप्ते सति तया देवतया सह(स्वयै)व दुग्धं व्रतयति भुङ्क्ते। तच्च भोजनं सयोनित्वाय योनिभूतेनाग्निना साहित्याय। तच्च साहित्यमुग्रस्याग्नेः शान्त्यै भवति ॥

या ते अग्नेऽयाशया रजाशया हराशया
तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं
त्वेषं वचो अपावधीꣳ स्वाहा ॥

कल्पः—" आज्यस्थाल्याः स्रुवेणोपहत्य प्रथमामुपसदं जुहोति या ते अग्नेऽयाशया[3] तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति " इति।

---

१ ख. °तुन्न योग°। २ ख. °जाया अभ्यन्तरतमत्वम्। मे°। ३ ख. °या रजाशया हराशया त°।

अत्र या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठेत्येतादृश- (शो)[मन्त्र] आम्नातः। तस्मिन्नयाशयादिपदत्रयेण त्रयो मन्त्रा भवन्ति। तेषु प्रथममन्त्रे तनूरित्यादिरनुषज्यते। द्वितीये तु या ते अग्न इति तनूरिति चोभ- यमनुषज्यते। तृतीये तु या ते अग्न इत्ययमेवानुषज्यते। तैरेतैस्त्रिभिर्मन्त्रैस्त्रिषु दिनेषु क्रमेणोपसदाख्या आहुतयो होतव्याः। अयसि शेतं इत्ययाशया लोहनिर्मिता। तथा रजते शेत इति रजाशया। हिरण्ये शेत इति हराशया। वर्षिष्ठा वृद्धतमा। गह्वरे स्प्रष्टुमशक्ये तप्ते लोहे तप्तरजते तप्तहिरण्ये वा तिष्ठ- तीति गह्वरेष्ठा। अन्नपानयोरलाभेन क्षुधितोऽहं पिपासितोऽहमित्युक्तिरुग्रं वचस्तदेतदैहिकमामुष्मिकं तु त्वेषं दीपकं मनसः संतापजनकं वचः। तत्तु जना इत्थं वदन्ति अद्य गोवधाद्युपपातकलक्षणमेनः प्राप्तं विद्वद्ब्राह्मणवधादि- रूपा वीरहत्या प्राप्तेति। इदं तु पदव्याख्यानमन्यत्र ब्राह्मणे स्पष्टमाम्नातम्— "अशनयापिपासे ह वा उग्रं वचः। एनश्च वैरहत्यं च त्वेषं वचः" इति। अत्रायं वाक्यार्थः—हेऽग्ने या तवायाशया तनूस्तयाऽहं द्वे अपि वचसी अपावधीं नाशितवानस्मि। एवमुत्तरयोरपि योज्यम्। तस्मा अग्नय इदं हुतमस्तु॥

त्रीनेतानुपसद्धोमान्विधातुं प्रस्तौति—

"तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी ता देवा जेतुं नाशक्नुवन्ता उपसदैवाजिगीषन्तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति त इषु समस्कुर्वताग्निमनीक सोम शल्यं विष्णुं तेजनं तेऽब्रुवन्क इमामसिष्यतीति रुद्र इत्यब्रुवन्रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्र- वीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपति- स्ता रुद्रोऽवासृजत्स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान्प्राणुदत" [ सं० का० ६ प्र० २ अ० ३ ] इति।

ये पूर्वमग्निना वरूथेन पराभूता असुरास्तेषामसुराणां पृथिव्यन्तरिक्षद्युलो- केषु स्वरक्षार्थं तिस्रः पुरो दुर्गरूपा आसन्। तासु पृथिवीवर्तिनी लोहप्राकार- वेष्टिता। अन्तरिक्षवर्तिनी रजतप्राकारवेष्टिता। द्युलोकवर्तिनी हिरण्यप्राकार- वेष्टिता। तादृशीः पुरो देवा अग्निना वरूथेनापि जेतुमशक्ता युद्धं परित्यज्योप- सदैव जेतुमैच्छन्। दुर्गं परितोऽवरुध्य चिरं तत्समीपेऽवस्थाय तमुप(पा)व- सत चिरकालावस्थाने सति दुर्गमध्येऽन्नपानादिक्षयादन्तर्भेदाद्वा जयो भव- [ती]ति। यस्माद्देवैश्चिरवासो जयोपायत्वेन विचारितस्तस्माल्लोकेऽप्याहुः। किं- किमाहुः। यश्च ब्राह्मणादिर्वेदाध्ययनेन वेदविचारं जानाति यश्च शूद्रादि- जानाति ते सर्वेऽपि युद्धेनाजेयं महापुरमुपसदा जेतुं शक्यमित्याहुः। तत

(सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम्)

देवाः कालविलम्बो मा भूदिति विचार्य युद्धेनैव जेतुमिषुं संस्कृतवन्तः। अग्निं सोमं विष्णुं च संभूयैकबाणं कृत्वा तेन जेतुमुद्युक्ताः। अनीकशब्दो बाणस्य प्रथमभागकाष्ठमाचष्टे। शल्यशब्दो लोहम्। तेजनशब्दस्तदग्रम्। तामिमां देवतात्रयसमष्टिरूपामिषुं स्त्रीबालसहितकृत्स्नासुरघातिनीं को नाम मोक्ष्यतीति विचार्य शक्तो निर्घृणश्च रुद्र इति निश्चित्य तस्मै वरं दत्तवन्तः। स रुद्रस्तामिषुं मुक्त्वा तया प्राकारत्रयं विभिद्य त्रिभ्यो लोकेभ्योऽसुरान्निःसारयामास॥

विधत्ते—

"यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै" [सं० का० ६ प्र० २ अ० ३] इति।

वैरिदुर्गोपसदनकार्यकारित्वादेता आहुतय उपसद इत्युच्यन्ते। तत्राग्निः सोमो विष्णुरित्येवंरूपास्तिस्रो देवतास्तासां याज्यापुरोनुवाक्या हौत्र एवाऽऽम्नायन्ते। अयाशयादितनुधारी वह्निश्चतुर्थी देवता। तदीयमन्त्र आध्वर्यवत्वादत्रैवाऽऽम्नातः॥

उपसदामाज्यहविष्ट्वेनोपांशुयाजवत्प्रयाजाज्यभागाद्याहुतिप्रसक्तौ प्रतिषेधति—

"नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात्" [सं० का० ६ प्र० २ अ० ३] इति।

अग्निमनीकमिति बाणव्याजेनाग्नेः प्रथमभावित्वलक्षणं मुखत्वमुक्तम्। तत्र प्रयाजादिहोमे वह्नेर्मुखत्वं हीयेत॥

आहुत्यन्तराणां सर्वेषां निषेधप्राप्तौ कांचिदाहुतिं विधत्ते—

"स्रुवेणाऽऽघारमा घारयति यज्ञस्य प्रज्ञात्यै" [सं० का० ६ प्र० २ अ० ३] इति।

दर्शपूर्णमासादियज्ञानामाघारोपेतत्वादुपसदामपि यज्ञत्वप्रत्यभिज्ञानाय स्रुवाघारः॥

तिसृणामुपसदां होमप्रकारं विधत्ते—

"पराङतिक्रम्य जुहोति पराच एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्यान्प्र णुदते" [सं० का० ६ प्र० २ अ० ३] इति।

पराङ्पुनरावृत्तिरहितो वेद्याहवनीययोर्मध्यमतिक्रम्य दक्षिणस्यां दिश्युदङ्मुखः स्थित्वा क्रमेणाग्नेः सोमस्य विष्णोश्च तिस्र आहुतीर्जुहुयात्। तथा सति वैरिणोऽपि पुनरावृत्तिरहितानेव कृत्वा लोकत्रयान्निःसारयति॥

---

१ ख. °त, अत आ°। २ ख. स्रौवाघारः।

( सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम् )

चतुर्थाहुतिप्रकारं विधत्ते—

" पुनरत्याक्रम्योपसदं जुहोति प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्याञ्जित्वा भ्रातृव्यलोकमभ्यारोहति " [ सं० का० ६ प्र० २ अ० ३ ] इति ।

दक्षिणदेशादुत्तरस्यां दिशि समागत्य चतुर्थीमुपसदं जुहुयात् । तथा सति वैरिणो निःसार्य स्वर्गं गत्वा वैरिस्थानं पुरत्रयमधितिष्ठति ।

अत्र सूत्रम्-" ध्रौवादष्टौ जुह्वां गृह्णाति चतुरुपभृति घृतवतीशब्दे जुहूपभृता-वादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत्प्रचरत्यर्धेन जौहवस्याग्निं यजति अर्धेन सोममौपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्नेऽया-शया तनूरिति स्रुवेणोपसदं जुहोति " इति ॥

कालद्वये तदनुष्ठानं विधत्ते—

"देवा वै याः प्रातरुपसद उपासीदन्नह्नस्ताभिरसुरान्प्राणुदन्त याः सायं रात्रियै ताभिर्यत्सायंप्रातरुपसद उपसद्यन्तेऽहोरात्राभ्यामेव तद्यजमानो भ्रातृ-व्यान्प्र णुदते " [ सं० का० ६ प्र० २ अ० ३ ] इति ।

उपासीदन्ननुष्ठितवन्तः । प्रातरनुष्ठिताभिरह्नो वैरिनिःसारणं सायमनुष्ठिता-भिस्तु रात्रेः ॥

कालद्वये याज्यानुवाक्ययोर्व्यत्यासं विधत्ते—

"याः प्रातर्याज्याः स्युस्ताः सायं पुरोनुवाक्याः कुर्यादयातयामत्वाय " [ सं० का० ६ प्र० २ अ० ३ ] इति ।

यातयामत्वं गतरसत्वं तद्वर्जनाय व्यत्यासः ॥

दिनत्रये तदनुष्ठानं विधत्ते—

" तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान्प्रीणाति " [ सं० का० ६ प्र० २ अ० ३ ] इति ॥

त्रिषु दिनेषु कालद्वयेऽनुष्ठानं प्रशंसति—

" षट्सं पद्यन्ते षड्वा ऋतव ऋतूनेव प्रीणाति " [ सं० का० ६ प्र० २ अ० ३ ] इति ॥

प्रसङ्गादहीने द्विरात्रादावुपसद्दिनसंख्यां विधत्ते—

"द्वादशाहीने सोम उपैति द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणाति" [ सं० का० ६ प्र० २ अ० ३ ] इति ।

अहःसंघेन निष्पाद्यः सोमयागोऽहीनः । सत्रमप्यनेनोपलक्ष्यते । अहःसमूहस्य समानत्वात् ॥

१ ख. स्वयं जित्वा ।

द्वादशदिनेषु कालद्वयानुष्ठानं प्रशंसति—

"चतुर्विꣳशतिः सं पद्यन्ते चतुर्विꣳशतिरर्धमासा अर्धमासानेव प्रीणाति" [सं० का० ६ प्र० २ अ० ३] इति ॥

एतेषूपसद्दिनेष्ववान्तरदीक्षाव्रतपाने स्तनसंख्यां विधत्ते—

"आराग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन्मे लोकेऽर्धुकꣳ स्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आराग्राऽवान्तरदीक्षाऽस्मिन्नेवास्मै लोकेऽर्धुकं भवति" [सं० का० ६ प्र० २ अ० ३] इति।

बलीवर्दप्रतोदनं लोहमारं तद्वदल्पमग्रं मुखं यस्याः साऽऽराग्रा। अर्धुकं समृद्धिशीलं फलम्। सोमक्रयदिने सायमेकं स्तनं दुह्यात्, अपरेद्युः प्रातर्द्वौ स्तनौ, सायं त्रीन्स्तनान्, परेद्युः प्रातश्चतुरः ॥

यस्तु परलोकसमृद्धिकामस्तस्योक्तवैपरीत्यं विधत्ते—

"परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन्मे लोकेऽर्धुकꣳ स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षाऽमुष्मिन्नेवास्मै लोकेऽर्धुकं भवति" [सं० का० ६ प्र० २ अ० ३] इति।

परःशब्देनात्र श्रेष्ठत्वादुपक्रमो विवक्षितः। उपक्रमे वरीयोऽधिकं यस्याः सा परोवरीयसी। अयं पक्षः सूत्र उपन्यस्तः—"यदहः सोमं क्रीणीयुस्तदहश्चतुरः सायं दुह्युस्त्रीन्प्रातर्द्वौ सायमेकमुत्तमे" इति ॥

अशक्तस्य क्षीरव्रतादूर्ध्वमाहारमल्पमनुजानाति—

"सुवर्गं वा एते लोकं यन्ति य उपसद उपयन्ति तेषां य उन्नयते हीयत एव स नोदनेषीति सून्नीयमिव" [सं० का० ६ प्र० २ अ० ४] इति।

उपसदां स्वर्गप्राप्तिहेतुत्वात्तदनुष्ठायिभिरवहितैर्भवितव्यम्। तेषां मध्ये यः कोऽपि हीनमनस्को यथोक्तव्रतादूर्ध्वमोदनादिकमन्तर्नयेत्स स्वर्गाद्धीयत एव। तस्मादशक्तोऽपि श्रद्धालुतया नोदनेषि न किंचिदपि व्रतादूर्ध्वमन्तर्नेष्यामीति यदि मन्येत तेन सून्नीयमिव शोभनं वाक्यान्तराभ्यनुज्ञातं वस्तून्नीतमिव कुर्यात्। अशक्तिपरिहारमात्रोपयुक्तं किंचिदेव स्वीकर्तव्यम्। वाक्यान्तरं तु कूष्माण्डहोमप्रकरणे समाम्नायते—"पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्याऽऽमिक्षा वैश्यस्याथो सौम्येऽप्यध्वर एतद्व्रतं ब्रूयाद्यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून्घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय" इति। उपदस्याम्युपक्षीणो भवामि ॥

---

१ ख. °क्षाङ्ग व्र°।

अनुव्रते कृतेऽपि फलभ्रंशो नास्तीत्यस्मिन्नर्थे दृष्टान्तमाह—

" यो वै स्वार्थेतां यताꣳ श्रान्तो हीयत उत स निष्ट्याय सह वसति " [ सं० का० ६ प्र० २ अ० ४ ] इति ।

स्वार्थं यन्ति गच्छन्तीति स्वार्थेतस्तेषां स्वार्थेताम् । यतन्त इति यतस्तेषां यताम् । मकरमासे प्रयागस्नानं केषांचित्स्वार्थस्तं प्राप्तुं प्रयतमानानां स्वग्रामान्निर्गत्य गच्छतां मध्ये यः कश्चिच्छ्रान्तो गन्तुमशक्तः संक्रान्तिकालीनस्नानाद्धीयते सोऽपि निष्ट्याय परेद्युर्निर्गत्य तीर्थे गत्वा तैस्तीर्थवासिभिः सहावशिष्टं मासं वसति तद्वदयमप्येकेनानुव्रतेनाशक्तिं परिहृत्य शिष्टं नियममनुतिष्ठेत् ॥

तमिममर्थं निगमयति—

"तस्मात्सकृदुन्नीय नापरमुन्नयेत" [ सं० का० ६ प्र० २ अ० ४ ] इति ॥

सकृदुन्नयने द्रव्यं विधत्ते—

" दध्नोन्नयेतैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे " [ सं० का० ६ प्र० २ अ० ४ ] इति ॥

अथ सौमिकीं वेदिं विधातुं प्रस्तौति—

" यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा स पृथिवीं प्राविशत्तं देवा हस्तान्त्सꣳरभ्यैच्छन्तमिन्द्र उपर्युपर्यत्यक्रामत्सोऽब्रवीत्को माऽयमुपर्युपर्यत्यक्रमीदित्यहं दुर्गे हन्तेत्यथ कस्त्वमित्यहं दुर्गादाहर्तेति सोऽब्रवीद्दुर्गे वै हन्ताऽवोचथा वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति तं जहि यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृत्य सप्त गिरीन्भित्त्वा तमहन्त्सोऽब्रवीद्दुर्गाद्वा आहर्ताऽवोचथा एतमा हरेति तमेभ्यो यज्ञ एव यज्ञमाऽहरद्यत्तद्वित्तं वेद्यमसुराणामविन्दन्त तदेकं वेद्यै वेदित्वम् " [ सं० का० ६ प्र० २ अ० ४ ] इति ।

स्वर्गलोके स्थितो यज्ञपुरुषस्तिरोधानाय विष्णुर्भूत्वा वैष्णवं रूपं संपूर्णं कृत्वा देवेभ्यः पलाय्य पृथिवीं प्राविशत् । देवाश्च पृष्ठत एव समागत्य हस्तान्प्रसार्य तं धर्तुमैच्छन् । अयं यज्ञो यत्र यत्र गच्छति तत्र तत्रेन्द्रस्तमतिक्रम्य पुरतो मार्गमवरुध्यातिष्ठत् । कोऽयं मामत्यक्रमीदिति यज्ञेनाऽऽक्षिप्त इन्द्रः केनाप्यगम्ये दुर्गे गत्वा विरोधिनं ताडयिष्यामीति स्वमहिमानं प्रतिजज्ञे । अथैवं मच्छक्तेः परीक्षकः को नाम त्वमसीतीन्द्रेणाऽऽक्षिप्तो यज्ञस्ता[१]दृशश्च दुर्गात्तं विरोधिनमाहरिष्यामीति स्वशक्तिं प्रतिजज्ञौ[२](ज्ञे) । प्रतिज्ञाय स्वकीयं पूर्व-

१ ख. °दृशाद्दुर्गा° । २ ख. च. °तिज्ञा° ।

(सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम्)

वृत्तान्तमिन्द्रस्य पुरतः सर्वमवोचत्। पुरा कदाचिदसुरप्राबल्यं दृष्ट्वा मदङ्गभूतदीक्षाद्यभिमानिनः सर्वेऽपि स्वर्गलोकवासिनो मत्तो निर्गत्य पृथिवीं प्राविशन्। ते च के, चतस्रो दीक्षास्तिस्र उपसद एका सुत्येत्यष्टदिवससाध्यानि कर्माणि। तत्र दीक्षोपसदः सप्त पृथिव्यां गत्वा गिरयोऽभवन्। सुत्याभिमानी देवो वाममोषो वामं कमनीयं सौमिकवेदिग्रहचमसादिरूपं दैवं वित्तं मुष्णात्यपहरतीति वाममोषः। स च मुषितं तत्सर्वमसुरेभ्यो दत्त्वा स्वयं वराहो भूत्वा सप्तभ्यो गिरिभ्यः परस्तादसुराणां तद्वित्तं बिभर्ति रक्षति। तच्च वित्तं वेद्यं देवैः पुनर्लब्धव्यम्। अतो हे इन्द्र त्वं यदि दुर्गे स्थितं विरोधिनं हन्ताऽसि तर्हि तं वराहं जहीत्युक्त इन्द्रो दर्भस्तम्बेनैव गिरीन्भित्त्वा वराहं ताडितवान्। तत इन्द्रो यज्ञमुवाच विरोधिनमाहरिष्यामीति यत्प्रतिज्ञातं तत्कर्तुं शक्नोषि चेदेनं विरोधिनं वराहमाहरेत्युक्तो यज्ञाभिमान्येव तं वराहाकारं वेदिग्रहचमसादिविचोपेतं यज्ञमेभ्यो देवेभ्य आहृत्य ददौ। यस्माद्देवैर्लब्धव्यमसुराणां तद्वेदिरूपं वित्तं देवा अविन्दन्तालभन्त तस्माद्विद्यते लभ्यत इति व्युत्पत्त्या वेदेर्वेदिनाम संपन्नम्। वक्ष्यमाणमपेक्ष्यायमेकः प्रकारः। तस्मादेकं वेदित्वमित्युच्यते॥

प्रकारान्तरेणापि वेदित्वं दर्शयति—

"असुराणां वा इयमग्र आसीद्यावदासीनः परापश्यति तावद्देवानां ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो दास्याम इति यावदिय सलावृकी त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रः सलावृकी रूपं कृत्वेमां त्रिः सर्वतः पर्यक्रामत्तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वम्" [सं० का० ६ प्र० २ अ० ४] इति।

दार्शिके[2] वेदिब्राह्मणेऽप्येतदुपाख्यानं श्रुतम्। तत्र वसवस्त्वेति मन्त्रैर्यावान्प्रदेशः परिगृहीतस्तावत्येव वेदिः। अत्र तु कृत्स्नाऽपि भूमिर्वेदिरिति विशेषः॥

कृत्स्नभूमेर्वेदित्वेऽपि यागोपयुक्तदेशः पृथक्कल्पनीय इति विधत्ते—

"सा वा इयꣳ सर्वैव वेदिरियति शक्ष्यामीति त्वा अवमाय यजन्ते" [सं० का० ६ प्र० २ अ० ४] इति।

भूमिः सर्वा यद्यपि वेदिरेव तथाऽपि न यत्र क्वापि यष्टव्यं किं त्वेतावति प्रदेशे सदोहविर्धानादिकं निर्मातुं शक्ष्यामीति निश्चित्य तावन्तं प्रदेशमवमाय पदैः परिमित्य तस्मिन्प्रदेशे यजेरन्॥

---

१ क. ग. घ. °त्तोऽपनीय पृ°। २ क. °र्शिकवे°।

तत्र पदसंख्यां विधत्ते—

"त्रिꣳशत्पदानि पश्चात्तिरश्ची भवति षट्त्रिꣳशत्प्राची चतुर्विꣳशतिः पुरस्तात्तिरश्ची दशदश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे" [ सं० का० ६ प्र० २ अ० ४ ] इति ।

अत्रोक्तपदसंख्यायां सर्वस्यां मेलितायां नवसंख्याकानि दशकानि संपद्यन्ते। तदेवं वेदिप्रदेशप्रमाणं मध्यम उपसद्दिने प्रातःकालीनाया उपसद ऊर्ध्वं कर्तव्यम् ।

तथा च सूत्रम्—"अन्तरा मध्यमे प्रवर्ग्योपसदौ वेदिं कुर्वन्ति प्राग्वंशस्य मध्यमाल्लालाटिकात्त्रीन्प्राचः प्रक्रमान्प्रक्रम्य शङ्कुं निहन्ति तस्मात्पञ्चदशसु दक्षिणत एवमुत्तरतस्ते श्रोणी प्रथमनिहिताच्छङ्कोः षट्त्रिंशति पुरस्तात्तस्माद्द्वादशसु दक्षिणत एवमुत्तरतस्तावंसौ" इति ॥

यथोक्तपरिमाणवति प्रदेश उपरितनमृत्तिकाया अपनयनं विधत्ते—

"उद्धन्ति यदेवास्या अमेध्यं तदपहन्ति" [ सं० का० ६ प्र० २ अ० ४ ] इति ।

निष्ठीवनादिकृतमशुचित्वमुद्धननेनापैति ॥

तमेव विधिमनूद्य प्रशंसति—

"उद्धन्ति तस्मादोषधयः परा भवन्ति बर्हिः स्तृणाति तस्मादोषधयः पुनरा भवन्ति" [ सं० का० ६ प्र० २ अ० ४ ] इति ।

पूर्वं तस्मिन्प्रदेशे समुत्पन्नास्तृणविशेषा उद्धननेन पराभूता भवन्ति तस्मात्कृत्स्नवेद्यां बर्हिरास्तरणादोषधयः पुनरागता भवन्ति ॥

तस्य बर्हिष उपरि पुनरप्यग्नीषोमीयपश्वर्थं बर्हिरुत्तरवेदिप्रदेशे स्तृणीयादिति विधत्ते—

"उत्तरं बर्हिष उत्तरबर्हिः स्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः" [ सं० का० ६ प्र० २ अ० ४ ] इति ।

उत्कृष्ट इत्यर्थः ॥

यत्पूर्वं विहितं तिस्र उपसद उपैति द्वादशाहीने सोम उपैतीति तत्र विपक्षस्वपक्षयोर्बाधाबाधावुपन्यस्यति—

"यद्वा अनीशानो भारमादत्ते वि वै स लिशते यद्द्वादश साह्नस्योपसदः स्युस्तिस्रोऽहीनस्य यज्ञस्य विलोम क्रियेत तिस्र एव साह्नस्योपसदो द्वादशा

(सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम्)

हीनस्य यज्ञस्य सवीर्यत्वायाथो सलोम क्रियते" [सं० का० ६ प्र० २ अ० ५] इति।

लोके यथाशक्तः कश्चित्प्रौढं भारं वोढुमाददीत तदा स विक्लिश्यते विशेषेणाल्पी भवति उत्थातुमशक्तो भूमौ पतेत्। तद्वदत्रापि योज्यते। अह्ना सह वर्तत इति साह्न एकाहो ज्योतिष्टोमः। अहःसंघसाध्योऽहीनो द्विरात्रादिः। तत्र यद्यल्पस्य साह्नस्य द्वादश स्युर्यदि वाऽधिकस्याहीनस्य तिस्रः स्युस्तदा विलोम विपरीतं क्रियेत। तथा सति साह्नस्य वीर्यं हीयेत। स्वपक्षे तु नास्ति तदुभयम्॥

यच्चान्यत्पूर्वं विहितमाराग्रामवान्तरदीक्षामुपेयादिति तत्प्रशंसति—

"वत्सस्यैकः स्तनो भागी हि सोऽथैकꣳ स्तनं व्रतमुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै क्षुरपवि नाम व्रतं येन प्र जातान्भ्रातृव्यान्नुदते प्रति जनिष्यमाणानथो कनीयसैव भूय उपैति" [सं० का० ६ प्र० २ अ० ५] इति।

वत्सस्य भागो यः स्तनस्तस्मिन्नप्यल्पं पयो यजमानश्चतुर्थे पर्याये स्वी करोति। ततोऽस्य चतुस्तननियमः सिध्यति। तदेतदेकस्तनादिकं व्रतं क्षुरपवीत्युच्यते। पविर्वज्रं तेन तीक्ष्णत्वमुपलक्ष्यते। क्षुरवत्पविस्तैक्ष्ण्यं यस्याऽऽराग्राव्रतस्य तेन व्रतेन पूर्वमुत्पन्नान्वैरिणो विनाशयति जनिष्यमाणांश्च प्रतिबध्नाति। किं चात्यल्पेन कर्मणा भूयः फलं प्राप्नोति। यथोप्तेनाल्पेन बीजेन प्रौढं वृक्षं फलं प्राप्नोति तद्वत्॥

यदन्यत्पूर्वं विहितं परोवरीयसीमवान्तरदीक्षामुपेयादिति तत्प्रशंसति—

"चतुरोऽग्रे स्तनान्व्रतमुपैत्यथ त्रीनथ द्वावथैकमेतद्वै सुजघनं नाम व्रतं तपस्यꣳ सुवर्ग्यमथो प्रैव जायते प्रजया पशुभिः" [सं० का० ६ प्र० २ अ० ५] इति।

यथा रूपवत्या युवत्या योषितो जघनप्रदेशः स्थूलस्तस्योपरि देहमध्यप्रदेशः कृशस्तद्वदस्य व्रतस्याधोभागश्चतुस्तन उपरिभाग एकस्तन इति सुजघनमिति नाम। तपस्यमुत्तरोत्तरमाहारक्षयात्तपसो योग्यम्। अत एव स्वर्गसाधनम्। किं च सुजघनत्वादेव प्रजाः पशूंश्च प्रजनयति॥

त्रैवर्णिकानां मध्ये क्षत्रियस्य द्रव्यं विधत्ते—

"यवागू राजन्यस्य व्रतं क्रूरेव वै यवागूः क्रूर इव राजन्यो वज्रस्य रूपꣳ समृद्ध्यै" [सं० का० ६ प्र० २ अ० ५] इति।

---

१ क. ग. घ. °रोतु। त°।

यवाग्वा ओदनवत्तृप्तिहेतुत्वाभावात्क्रूरत्वम् । राजन्यो दुष्टशिक्षकत्वात्क्रूरः । उभयं मिलित्वा यद्रूक्षसदृशं तच्चानिष्टनिवर्तकत्वेन समृद्ध्यै भवति ॥

विधत्ते—

"आमिक्षा वैश्यस्य पाकयज्ञस्य रूपं पुष्ट्यै" [सं०का०६प्र०२अ०५] इति।

तप्ते पयसि दधिप्रक्षेपेण घनीभूतो भागोऽसावामिक्षा । पक्वेन पुरोडाशादिना कृतो यज्ञः पाकयज्ञः । आमिक्षायाः पक्वपयोनिष्पन्नत्वात्पाकयज्ञस्य रूपमतः पुष्ट्यै भवति ॥

विधत्ते—

" पयो ब्राह्मणस्य तेजो वै ब्राह्मणस्तेजः पयस्तेजसैव तेजः पय आत्मन्धत्तेऽथो पयसा वै गर्भा वर्धन्ते गर्भ इव खलु वा एष यद्दीक्षितो यदस्य पयो व्रतं भवत्यात्मानमेव तद्वर्धयति " [ सं० का० ६ प्र० २ अ० ५ ] इति ।

ब्राह्मणोऽध्यापनादिरूपेण तेजसा युक्तः । पयसस्तेजोवत्स्वच्छरूपत्वात्स्वयमेव तेजस्वि । पयसि पीते सति स्वकीयेन तेजसा सह पयोरूपं तेज आत्मनि धृतं भवति । किं च दीक्षितस्य गर्भरूपत्वात्पयसा वृद्धिर्युज्यते ॥

मध्याह्नमध्यरात्रयोर्व्रतकालत्वं विधातुं प्रस्तौति—

" त्रिव्रतो वै मनुरासीद्द्विव्रता असुरा एकव्रता देवाः प्रातर्मध्यंदिने सायं तन्मनोर्व्रतमासीत्पाकयज्ञस्य रूपं पुष्ट्यै प्रातश्च सायं चासुराणां निर्मध्यं क्षुधो रूपं ततस्ते पराऽभवन्मध्यंदिने मध्यरात्रे देवानां ततस्तेऽभवन्त्सुवर्गं लोकमायन् " [ सं० का० ६ प्र० २ अ० ५ ] इति ।

अहनि त्रिषु कालेषु व्रतं भोजनं कुर्वतो मनोरेकस्मिन्नेव काले व्रतं कुर्वतां देवानां च मध्याह्नकाले व्रतमस्ति । स च कालः क्षुधः स्वरूपम् । तस्मिन्व्रतरहिता असुराः पराभूताः । व्रतयुक्तास्तु मनुर्देवाश्च पुष्टिं स्वर्गं च प्राप्ताः । अतो मध्याह्नकालः प्रशस्तः ॥

विधत्ते—

" यदस्य मध्यंदिने मध्यरात्रे व्रतं भवति मध्यतो वा अन्नेन भुञ्जते मध्यत एव तदूर्जं धत्ते भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति " [ सं० का० ६ प्र० २ अ० ५ ] इति ।

मुखमध्येऽन्नस्य भोजनमुदरमध्येऽन्नस्य च धारणं यथा लोके तथैवात्रापि मध्याह्ने मध्यरात्रे च व्रतं कर्तव्यम् ॥

१ ख. °न चरुपु° । २ क. घ. °यस्ते° ।

( सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम् )

दीक्षितस्य स्वनिवासस्थानात्प्रवासं निषेधति—

" गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात्प्रवसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तन्न प्रवस्तव्यमात्मनो गोपीथाय " [ सं० का० ६ प्र० २ अ० ५ ] इति।

दीक्षितो विशेषेण मीयते प्रक्षिप्यते यस्मिञ्शालास्थाने तद्दीक्षितविमितं तस्य योनिरूपत्वात्। ततोऽस्य निर्गमनं गर्भस्रावसमम्। तत आत्मरक्षणार्थं न निर्गन्तव्यम् ॥

एतमेव निषेधं प्रकारान्तरेण प्रशंसति—

" एष वै व्याघ्रः कुलगोपो यदग्निस्तस्माद्यद्दीक्षितः प्रवसेत्स एनमीश्वरोऽनूत्थाय हन्तोर्न प्रवस्तव्यमात्मनो गुप्त्यै " [सं० का०६ प्र०२ अ० ५] इति।

एष एवाऽऽहवनीयोऽग्निः प्रवसतो व्याघ्रवद्धिंसको निवसतः कुलरक्षकः। तस्मात्सोऽग्निः प्रवसन्तमेनमनु स्वयमुत्थाय हन्तुं समर्थः। प्रवासाभावस्त्वात्मनो रक्षणाय भवति ॥

आहवनीयस्य दक्षिणदेशं[1] शयनार्थं विधत्ते—

" दक्षिणतः शय एतद्वै यजमानस्याऽऽयतनꣳस्व एवाऽऽयतने शये " [ सं० का० ६ प्र० २ अ० ५ ] इति।

शेत इत्यर्थः[2] ॥

शयनस्याऽऽहवनीयाभिमुख्यं विधत्ते—

" अग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शये " [ सं० का० ६ प्र० २ अ० ५ ] इति।

अथ काम्यानि देवयजनानि विधीयन्ते। तत्र पुरोहविरादयः संज्ञाविशेषा उक्थ्यषोडश्यतिरात्राद्युत्तरयज्ञाः। स्वर्गकामिनं(णं) प्रति विधत्ते—

" पुरोहविषि देवयजने याजयेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदभि सुवर्गं लोकं जयेदिति " [ सं० का० ६ प्र० २ अ० ६ ] इति।

अनेन प्रकारेण यं यजमानमुद्दिश्य कामयेत तं पुरोहविर्नामके याजयेत् ॥

तस्य लक्षणमाह—

" एतद्वै पुरोहविर्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि विपश्यति " [ सं० का० ६ प्र० २ अ० ६ ] इति।

यस्य देवयजनस्य हविर्धानमण्डप आसीनः प्राङ्मुखो होता प्रातरनुवाकना-

---

१ क. ग. घ. °शं वसना°। २ ख. °र्थः। यजमान°।

मकं शस्त्रं पठेत् (ठन्) पुरोवर्तिनमाहवनीयाग्निं ततः प्राग्वर्तिनं नदीतडागादिजलं ततोऽपि प्राग्दिश्युद्यन्तमादित्यं चाऽऽभिमुख्येन युगपत्पश्यत्येताद्दग्देवयजनं पुरोहविरित्युच्यते ॥

कामितफलसिद्धिं दर्शयति—

"उपैनमुत्तरो यज्ञो नमत्यभि सुवर्गं लोकं जयति" [ सं० का० ६ प्र० २ अ० ६ ] इति ॥

अन्यद्विधत्ते—

"आप्ते देवयजने याजयेद्भ्रातृव्यवन्तम्" [सं०का०६प्र० २अ० ६] इति ॥

आप्तनामकस्य लक्षणमाह—

"पन्थां वाऽधिस्पर्शयेत्कर्तं वा यावन्नानसे यातवै न रथायैतद्वा आप्तं देवयजनम्" [ सं० का० ६ प्र० २ अ० ६ ] इति ।

प्रौढं राजमार्गं प्रौढं गर्तं वा विलोक्याऽऽधिक्येन तत्संस्पर्शो यथा भवति तथा देवयजनं निर्मातव्यम् । देवयजनगर्तयोर्मध्ये शकटस्य वा रथस्य वा यातवै गन्तुं यावदन्तरं न पर्याप्तं तावदेवान्तरं कर्तव्यम् । सोऽयमधिस्पर्शः । एतदेवाऽऽप्तनामकम् ॥

कामितार्थसिद्धिं दर्शयति—

"आप्नोत्येव भ्रातृव्यं नैनं भ्रातृव्य आप्नोति" [सं०का०६प्र०२अ०६] इति । जयतीत्यर्थः ॥

विधत्ते—

"एकोन्नते देवयजने याजयेत्पशुकामम्" [सं० का० ६ प्र० २ अ० ६] इति ॥

प्रशंसति—

"एकोन्नताद्वै देवयजनादङ्गिरसः पशूनसृजन्त" [ सं० का० ६ प्र० २ अ० ६ ] इति ॥

लक्षणमाह—

"अन्तरा सदोहविर्धाने उन्नतꣳ स्यादेतद्वा एकोन्नतं देवयजनम्" [ सं० का० ६ प्र० २ अ० ६ ] इति ।

प्राचीनवंशात्पुरतः प्रत्यासन्नं सदः, उत्तरवेदेः पश्चात्प्रत्यासन्नं हविर्धानं तयोर्मध्यमुन्नतं कुर्यात् ॥

फलमाह—

"पशुमानेव भवति" [ सं० का० ६ प्र० २ अ० ६ ] इति ॥

(सोमकरणककरिष्यमाणयागविघ्नकार्यसुरपराभवार्थोपसद्वर्णनम्)

विधत्ते—

"त्र्युन्नते देवयजने याजयेत्सुवर्गकामम्" [सं०का० ६प्र० २अ० ६] इति ॥

प्रशंसति—

"त्र्युन्नताद्वै देवयजनादङ्गिरसः सुवर्गं लोकमायन्" [सं० का० ६ प्र० २ अ० ६] इति ॥

लक्षणमाह—

"अन्तराऽऽहवनीयं च हविर्धानं चोन्नतꣳ स्यादन्तरा हविर्धानं च सदश्चा-न्तरा सदश्च गार्हपत्यं चैतद्वै त्र्युन्नतं देवयजनम्" [सं०का०६प्र०२अ०६] इति।

उत्तरवेदिहविर्धानसदःप्राचीनवंशानां चतुर्णामन्तरालप्रदेशेषु त्रिषून्नतं कुर्यात्॥

फलमाह—

"सुवर्गमेव लोकमेति" [सं० का० ६ प्र० २ अ० ६] इति ॥

विधत्ते—

"प्रतिष्ठिते देवयजने याजयेत्प्रतिष्ठाकामम्" [सं०का० ६प्र० २अ० ६] इति॥

लक्षणमाह—

"एतद्वै प्रतिष्ठितं देवयजनं यत्सर्वतः समम्" [सं०का०६प्र०२अ०६] इति॥

फलमाह—

"प्रत्येव तिष्ठति" [सं० का० ६ प्र० २ अ० ६] इति ॥

अथ नामविशेषमनुक्त्वा लक्षणपुरःसरं विधत्ते—

"यत्रान्याअन्या ओषधयो व्यतिषक्ताः स्युस्तद्याजयेत्पशुकामम्" [सं० का० ६ प्र० २ अ० ६] इति।

यवगोधूमप्रियंगुकोद्रवादिबीजानि परस्परविलक्षणानि यस्मिन्प्रदेशे सहो[1]-त्पद्यन्ते तत्र पशुकामं याजयेत् ॥

प्रशंसति—

"एतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै पशूनव रुन्धे" [सं० का० ६ प्र० २ अ० ६] इति॥

फलमाह—

"पशुमानेव भवति" [सं० का० ६ प्र० २ अ० ६] इति ॥

विधत्ते—

"निर्ऋतिगृहीते देवयजने याजयेद्यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहये-यमिति" सं० का० ६ प्र० २ अ० ६] इति।

---

१ क. ग. घ. 'द्योप्यन्ते।

निर्ऋतिर्यज्ञविघाती राक्षसः ॥

लक्षणमाह—

" एतद्वै निर्ऋतिगृहीतं देवयजनं यत्सदृश्यै सत्या ऋक्षम् " [ सं० का० ६ प्र० २ अ० ६ ] इति ।

निम्नोन्नतत्वराहित्येन सदृश्याः सत्या भूमेः संबन्धि यदृक्षं तृणादिशून्यं स्थानं तन्निर्ऋतिगृहीतम् ॥

कामितार्थसिद्धिमाह—

" निर्ऋत्यैवास्य यज्ञं ग्राहयति " [ सं० का० ६ प्र० २ अ० ६ ] इति॥

विधत्ते—

"व्यावृत्ते देवयजने याजयेद्भ्रातृव्यकामं यं पात्रे वा तल्पे वा मीमाꣳसेरन्" [ सं० का० ६ प्र० २ अ० ६ ] इति ।

पात्रोपलक्षिते सहपङ्क्तिभोजने तल्पोपलक्षिते विवाहे वा बन्धुमित्रादयो यं पुरुषमुद्दिश्य मीमांसेरन्संदिहीरन्स पुरुषः संदेहहेतोरपवादादेः पाप्मनो व्यावृत्तिं कामयते तं व्यावृत्ते याजयेत् ॥

व्यावृत्तस्य लक्षणमाह—

" प्राचीनमाहवनीयात्प्रवणꣳ स्यात्प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्तं देवयजनम् " [ सं० का० ६ प्र० २ अ० ६ ] इति ।

उभयतः प्रवणं निम्नम् ॥

फलसिद्धिमाह—

" वि पाप्मना भ्रातृव्येणाऽऽवर्तते नैनं पात्रे न तल्पे मीमाꣳसन्ते " [ सं० का० ६ प्र० २ अ० ६ ] इति ।

पापरूपेण वैरिणा व्यावर्तते वियुज्यते ततो न संदिहते ॥

विधत्ते—

" कार्ये देवयजने याजयेद्भूतिकामम् " [ सं०का०६प्र०२अ०६ ] इति ।

कार्ये मृच्छिलादिभिरुन्नतीकरणीये ॥

प्रशंसति—

" कार्यो वै पुरुषः " [ सं० का० ६ प्र० २ अ० ६ ] इति ।

उपनयनादिसंस्कारैरुन्नतीकरणीयः पुरुषस्ततस्तस्येदं योग्यम् ॥

फलसिद्धिं दर्शयति—

" भवत्येव " [ सं० का० ६ प्र० २ अ० ६ ] इति ।

---

१ ख. °तभागरा° ।

ऐश्वर्यं प्राप्नोत्येव। तदेतत्सर्वं या ते अग्नेऽयाशया रजाशयेत्यनेनमन्त्रेण साध्ययोः प्रातःकालीनसायंकालीनोपसदोर्मध्ये कर्तव्यम् ॥

अत्र विनियोगसंग्रहः—

अंशुराप्याययेत्सोममेष्टा प्रस्तरनिह्नवः।
अग्ने पूर्वाग्निमामन्त्र्य या ते मार्जयते तथा ॥ १ ॥
व्रतं च तेन कुरुते या ते त्र्युपसदाममी।
आज्यहोमा अयाशेति रजेति च हरेति च ॥ २ ॥
त्रिविधो मन्त्रभेदः स्यान्मन्त्राः सप्तेह ईरिताः[1] ॥ ३ ॥

अथ मीमांसा।

पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—

"आवृत्तिरुपसत्स्वेषा संघस्यैकैकगाऽथ वा।
त्रिरध्यायं पठेत्यादाविव स्यात्समुदायगा ॥
प्रथमा मध्यमाऽन्त्येति प्राकृतक्रमसिद्धये।
एकैकस्या द्विरभ्यासे षट्संख्याऽपि प्रसिध्यति" इति ॥

अग्नौ श्रूयते—"षडुपसदः" इति। तत्र चोदकप्राप्तानां तिसृणामुपसदां पूर्वन्यायेनाऽऽवृत्त्या षट्संख्या संपादनीया। यथा पूर्वाधिकरणे प्रयाजेषु संघावृत्त्यैकादशसंख्या संपादिता तद्वदत्रापि साऽऽवृत्तिर्दण्डकलितवत्समुदायस्य युक्ता। यथा दण्डेन भूप्रदेशं संमिमानः पुरुष आमूलाग्रं कृत्स्नदण्डं पुनः पुनः पातयति, न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति। यथा वा त्रिवारं रुद्राध्यायं जपतीत्यत्र कृत्स्न एवाध्याय आवर्त्यते न त्वध्यायैकदेश एकैकोऽनुवाकः पृथगेव त्रिः पठ्यते तथा तिसृणामुपसदां समुदाय आवर्तनीय इति चेन्मैवम्। प्राकृतक्रमबाधप्रसङ्गात्। प्रकृतौ हि दीक्षानन्तरभाविनि दिने होतव्या प्रथमोपसत्। तत उर्ध्वदिने द्वितीया। ततोऽप्यूर्ध्वदिने तृतीया। ता एताः सकृदनुष्ठाय पुनरुपरितनदिनेष्वनुष्ठीयन्ते चेत्पुनरनुष्ठीयमानायाः प्रथमायाः प्रथमात्वमपैति चतुर्थीत्वमायाति। तस्मात्प्राकृतक्रमसिद्धये प्रथमां द्विरभ्यस्य ततो द्वितीयां द्विरभ्यस्येत्येवं स्वस्थानवृद्ध्या तासामावृत्तिः कार्या। न चाध्यायदृष्टान्तो युक्तः। अनुवाकसमुदायस्यैवाध्यायत्वात्तस्यैव चाऽऽवृत्तिविधानात्। न त्विह समुदायस्योपसत्त्वमस्ति। तस्मात्प्रत्येकमुपसदावर्तनीया[2]। अनेन न्यायेन द्वादशाहीनस्येत्यत्रैकैकोपसच्चतुर्वारमावर्तनीया।

---

१ ख. वर्णिताः। २ ख. °त्राप्या इ°।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

" तिस्र एव हि साह्ने स्युरहीने द्वादशेत्यदः ।
ज्योतिष्टोमे द्वादशत्वमथ वाऽहर्गणो(णे) भवेत् ॥
अस्तु प्रकरणादाद्यो नाहीनत्वं विरुध्यते ।
प्रकृतित्वान्न केनापि हीनोऽतोऽत्र विकल्प्यताम् ॥
साह्नाद्भिन्नाऽहीनसंज्ञा रूढैषाऽहर्गणो(णे) भवेत् ।
षष्ठीश्रुत्या द्वादशत्वं प्रक्रियातोऽपकृष्यताम् " इति ॥

ज्योतिष्टोमप्रकरणे श्रूयते—" तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य " इति । एकेनाह्ना निष्पाद्यत्वात्साह्नो ज्योतिष्टोमः । दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कर्तव्या होमा उपसदः । तासां द्वादशत्वं प्रकरणबलाज्ज्योतिष्टोमे निविशते । अहीनशब्दश्च तस्मिन्नवकल्प्यते । ज्योतिष्टोमस्य निखिलसोमयागप्रकृतित्वेन सर्वेषामङ्गानां तत्रोपदेशे सति तदुपदेशविकलविकृतीनामिव हीनत्वाभावात् । अतो द्वादशत्वत्रित्वयोर्विकल्प इति प्राप्ते ब्रूमः— आवृत्तः सोमयागरूपो द्विरात्रत्रिरात्रादिरहर्गणः । तस्मिन्नहीनशब्दो रूढः । यौगिकत्वे तु न हीन इति विगृह्य समासे कृते सत्ययज्ञादिशब्दवदाद्युदात्तः स्यात् । मध्योदात्तस्त्वाम्नायते । रूढिश्च विग्रहनिरपेक्षत्वाच्छीघ्रबुद्धिहेतुः । अतो ज्योतिष्टोमवाचिनः साह्नशब्दाद्भिन्नेयमहीनसंज्ञा ज्योतिष्टोमाद्भिन्नमहर्गणमभिधत्ते । तस्मिन्नहर्गणे षष्ठीश्रुत्या तदुक्तं[1] द्वादशत्वं निवेश्यते । तत्सिद्धये प्रकरणादिदमपनेतव्यम्[2] ।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" मुख्यार्था सौमिकी वेदिरुभयार्थोत मुख्यगा ।
चिकीर्षितत्वान्मुख्यस्य वेद्यां तत्कृतिसंभवात् ॥
मुख्यपौष्कल्यहेतुत्वात्तदङ्गं च चिकीर्षितम् ।
मुख्यवत्तेन तद्वेदिरङ्गेष्वप्युपकारिणी " इति ॥

दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो मण्डपोऽवस्थितः । ततः पूर्वस्यां दिशि सदोहविर्धानादीनां पर्याप्तो भूभागविशेषः । तैः सदःप्रभृतिभिः सह सौमिकी वेदिरित्युच्यते । सेयं मुख्यस्य सोमयागस्यैवोपकारं करोति, न त्वमुख्यानामग्नीषोमीयाद्यङ्गानाम् । कुतः । मुख्यस्य चिकीर्षितत्वात् । न चाङ्गान्यपि चिकीर्षितानीति वाच्यम् । चिकीर्षास्वरूपस्य वेदेनैवाभिहितत्वात् ।

---

१ ख. यदुक्तं । २ ख. °दमुन्नेत° ।

एवं श्रूयते—" षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेने[य]ति शक्ष्यामहे " इति ।

अस्यायमर्थः—श्रूयमाणेनानेन दैर्घ्यप्रमाणेन तिर्यक्प्रमाणेन च प्रमिते भूभागे फलहेतुं सोमयागं कर्तुं शक्ष्यामह इति निश्चित्य तत्तथैव कुर्यादिति । सेयं चिकीर्षा मुख्यविषया । इ[य]ति शक्ष्यामह इति परिमाणस्य शक्तेश्चोपन्यासात् । अङ्गानां [तु]पशूनामिष्टीनां च सदोहविर्धानादिमण्डपनिरपेक्षाणां यथोक्तपरिमाणमन्तरेणाप्यनुष्ठातुं शक्यत्वात्स उपन्यासस्तत्र निरर्थकः । सोमस्य त्वनुष्ठानं यथोक्तवेद्यामेव संभवति न त्वन्यत्र । तस्मात्सा वेदिर्मुख्यस्यैवोपकरोतीति प्राप्ते ब्रूमः—इयति शक्ष्यामह इत्यत्र साङ्गप्रधानानुष्ठाने शक्तिरुक्ता । तादृशस्यैव फलं प्रति[1] पुष्कलहेतुत्वात् । अतो मुख्याङ्गयोश्चिकीर्षायास्तुल्यत्वाद्वेदिरुभयार्था । न चात्र वपनादिसाम्यं शङ्कनीयम् । दृष्टोपयोगाभावस्य तत्रोक्तत्वात् । इह तु हविरासादनादिर्दृष्ट उपयोगः । स च मुख्याङ्गयोः सम इत्युभयार्थत्वम् ।

षष्ठाध्यायस्याष्टमपादे चिन्तितम्—

" अन्याभावेऽन्यभावेऽपि पयोभक्षादयोऽग्रिमः ।
निमित्ते सत्यनुष्ठानान्नियमादृष्टतोऽन्तिमः " इति ॥

ज्योतिष्टोमे श्रूयते—" पयो ब्राह्मणस्य व्रतम् " इति । तदेतदसत्यन्यस्मिन्भक्ष्ये कर्तव्यम् । कुतः । अन्याभावस्य निमित्तत्वात् । निमित्ते सति नैमित्तिकस्यावश्यानुष्ठेयत्वादिति चेन्मैवम् । न ह्यत्रान्याभावो निमित्तत्वेन श्रुतः । तस्मात्सत्यप्यन्यस्मिन्भक्ष्ये नियमादृष्टाय पय एव भक्षयेत्[2] ।

तत्रैवान्यच्चिन्तितम्—

" अजीर्णिसंभवे कार्यं व्रतं नो वाऽग्रिमो विधेः ।
रोगोत्पत्त्या प्रधानस्य विरोधान्न पयोव्रतम् " इति ॥

ज्योतिष्टोमे श्रूयते—" मध्यंदिने मध्यरात्रे व्रतं व्रतयति " इति ।
तत्र यस्याजीर्णिः संभाविता तेनापि विहितत्वात्पयो व्रतयितव्यमेवेति चेन्मैवम् । प्रधानानुष्ठानविघ्नप्रसङ्गात् । तस्मात्तथाविधवेलायां पयो वर्जयेत् ॥

---

१ ख. 'ति दृष्टफल' । २ ख. व्रतयेत् ।

( मध्यमोपसद्दिने स्वीकृतषट्त्रिंशत्पदपरिमितवेदिप्रदेशपूर्वभाग उत्तरवेद्यभिधानम् )

अत्र सर्वाणि यजूंष्येवेति नास्ति च्छन्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः । )

---

वित्तायनी मेऽसि तिक्तायनी मेऽस्यवतान्मा नाथितमवतान्मा व्यथितं विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुषा नाम्नेहि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधेऽग्ने अङ्गिरो यो द्वितीयस्यां तृतीयस्यां पृथिव्यामस्यायुषा नाम्नेहि यत्तेऽनाधृष्टं नाम (१) यज्ञियं तेन त्वाऽऽदधे सिꣳहीरसि महिषीरस्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतां ध्रुवाऽसि देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पातु सिꣳहीरसि सपत्नसाही स्वाहा सिꣳहीरसि सुप्रजावनिः स्वाहा सिꣳहीः ( २ ) असि रायस्पोषवनिः स्वाहा सिꣳहीरस्यादित्यवनिः स्वाहा सिꣳहीरस्या वह देवान्देवयते यजमानाय स्वाहा

(मध्यमोपसद्दिने स्वीकृतषट्त्रिंशत्पदपरिमितवेदिप्रदेशपूर्वभाग उत्तरवेद्याभिधानम्)

भूतेभ्यस्त्वा विश्वायुरसि पृथिवीं दृꣳह ध्रुवक्षिदस्यन्तरिक्षं दृꣳहाच्युतक्षिदसि दिवं दृꣳहाग्नेर्भस्मास्यग्नेः पुरीषमसि (३)॥

(नाम सुप्रजावनिः स्वाहा सिꣳहीः पञ्चत्रिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ प्रथमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः।)

---

वित्तायनीति वित्त—अयनी। मे। असि। तिक्तायनीति तिक्त—अयनी। मे। असि। अवतात्। मा। नाथितम्। अवतात्। मा। व्यथितम्। विदेः। अग्निः। नभः। नाम। अग्ने। अङ्गिरः। यः। अस्याम्। पृथिव्याम्। असि। आयुषा। नाम्ना। एति। इहि। यत्। ते। अनाधृष्टमित्यना—धृष्टम्। नाम। यज्ञियम्। तेन। त्वा। एति। दधे। अग्ने। अङ्गिरः। यः। द्वितीयस्याम्। तृतीयस्याम्। पृथिव्याम्। असि। आयुषा। नाम्ना। एति। इहि। यत्। ते। अनाधृष्टमित्यना—धृष्टम्। नाम। (१) यज्ञियम्। तेन। त्वा। एति। दधे। सिꣳहीः। असि। महिषीः। असि। उरु। प्रथस्व। उरु। ते। यज्ञपतिरिति यज्ञ—पतिः। प्रथताम्।

( मध्यमोपसद्दिने स्त्रीकृतषट्त्रिंशत्पदपरिमितवेदिप्रदेशपूर्वभाग उत्तरवेद्यभिधानम् )

ध्रुवा । असि । देवेभ्यः । शुन्धस्व । देवेभ्यः । शुम्भस्व । इन्द्रघोष इतीन्द्र—घोषः । त्वा । वसुभिरिति वसु—भिः । पुरस्तात् । पातु । मनोजवा इति मनः—जवाः । त्वा । पितृभिरिति पितृ—भिः । दक्षिणतः । पातु । प्रचेता इति प्र—चेताः । त्वा । रुद्रैः । पश्चात् । पातु । विश्वकर्मेति विश्व—कर्मा । त्वा । आदित्यैः । उत्तरत इत्युत्—तरतः । पातु । सिꣳही । असि । सपत्नसाहीति सपत्न—साही । स्वाहा । सिꣳही । असि । सुप्रजावनिरिति सुप्रजा—वनिः । स्वाहा । सिꣳही । ( २ ) असि । रायस्पोषवनिरिति रायस्पोष—वनिः । स्वाहा । सिꣳही । असि । आदित्यवनिरित्यादित्य—वनिः । स्वाहा । सिꣳही । असि । एति । वह । देवान् । देवयत इति देव—यते । यजमानाय । स्वाहा । भूतेभ्यः । त्वा । विश्वायुरिति विश्व—आयुः । असि । पृथिवीम् । दृꣳह । ध्रुवक्षिदिति ध्रुव—क्षित् । असि । अन्तरिक्षम् । दृꣳह । अच्युतक्षिदित्यच्युत—क्षित् । असि । दिवम् । दृꣳह । अग्नेः । भस्म । असि । अग्नेः । पुरीषम् । असि ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

( मध्यमोपसद्दिने स्वीकृतषट्त्रिंशत्पदपरिमितवेदिप्रदेशपूर्वभाग उत्तरवेद्यभिधानम् )

( अथ प्रथमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः )

---

एकादशेऽनुवाक उपसदोऽभिहिताः। तत्र मध्यमोपसद्दिने षट्त्रिंशत्पद-परिमितो योऽयं वेदिप्रदेशः स्वीकृतस्तस्य पूर्वभाग उत्तरवेदिर्द्वादशेऽनुवाकेऽभिधीयते।

**वित्तायनी मेऽसि तिक्तायनी मेऽस्यव-तान्मा नाथितमवतान्मा व्यथितम्—**

बौधायनः—"उत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धत्यावोक्ष्य शम्यया चात्वालं परिमिमीते वित्तायनी मेऽसीति पुरस्तादुदीचीनकुम्बयाऽन्तरितस्फ्येनोल्लिखति, तिक्तायनी मेऽसीति दक्षिणतः प्राक्कुम्बयाऽन्तरितस्फ्येनोल्लिखति, अवतान्मा नाथितमिति पश्चादुदीचीनकुम्बयाऽन्तरितस्फ्येनोल्लिखति, अवतान्मा व्यथितमित्युत्तरतः प्राचीनकुम्बयाऽन्तरितस्फ्येनोल्लिखति" इति।

आपस्तम्बः—"अपरेण यूपावटदेशं संचरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोत्यंहीयसीं पुरस्तादित्येके तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते शम्यामात्री निरूढपशुबन्धस्योत्तरवेदिः शम्यां पुरस्तादुदगग्रां निधाय स्फ्येनोदीचीमभ्यन्तरमुपलिखति वित्तायनी मेऽसीत्येवं दक्षिणतः प्राचीं तिक्तायनी मेऽसीति पश्चादुदीचीमवतान्मा नाथितमित्युत्तरतः प्राचीमवतान्मा व्यथितमित्युत्तरस्माद्वेद्यंसादुदक्प्रक्रमे चात्वालस्तमुत्तरवेदिवत्तूष्णीं शम्यया परिमित्य" इति।

अत्रोत्तरवेदेर्द्वावाकारौ। महावेद्याः प्राग्भावे मृत्तिकाप्रक्षेपेण निष्पाद्यमान एक आकारः। आपस्तम्बमते तद्विषया मन्त्रा उक्ताः। मृत्तिका चात्वालगतेति तद्रूपोऽपर आकारः। तद्विषया बौधायनमते मन्त्राः। हे उत्तरवेदे त्वं मम वित्तायनी वह्निरूपस्य वित्तस्य प्रापिकाऽसि। तिक्तस्य वह्नितेजसो ज्वालारूपस्य प्रापिकाऽसि। नाथितं वह्नियाचकं मामवतात्, रक्ष। व्यथितं वह्न्यलाभाद्भीतं मां रक्ष॥

मन्त्रान्व्याचिख्यासुः शम्यया वेदिपरिमाणं विधातुमाख्यायिकया वेदिं स्तुवन्प्रसङ्गाद्व्याघारेणमभिधत्ते—

"तेभ्य उत्तरवेदिः सिꣳही रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठत्ते देवा अमन्यन्त यतरान्वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तामुपामन्त्रयन्त

---

१ क. घ. वह्निला°। २ ख. °रणं विध°।

साऽब्रवीद्वरं वृणै सर्वान्मया कामान्व्यश्नवथ पूर्वां तु माऽग्नेराहुतिरश्नवता इति तस्मादुत्तरवेदिं पूर्वामग्नेर्व्याघारयन्ति वारेवृतꣳ ह्यस्यै " [ सं० का० ६ प्र० २ अ० ७ ] इति ।

अत्रोभयोरन्तरेणेत्यभिधानात्तेभ्यो देवासुरेभ्य इति लभ्यते । ते देवास्तामुपामन्त्रयन्त प्रार्थितवन्तः । मया मदनुग्रहेण भ्रातृव्याभिभवात्सर्वान्कामान्यूयं व्यश्नवथ विशेषेण प्राप्स्यथ । तदर्थं त्वाद्याऽऽहुतिर्व्याघारणरूपा युष्माभिर्हुता प्रणेष्यमाणादग्नेः पूर्वभाविनीं मां व्यश्नवतै विशेषेण व्याप्नोतु मामेवोद्दिश्य हूयताम् । सोऽयं वरः । यस्माद्वरो वृतस्तस्मात्तथा व्याघारयेयुः । तत्प्रकारस्तु सिꣳहीरसि महिषीरसीत्यादिमन्त्रव्याख्यानावसरे वक्ष्यते[1] ॥

विधत्ते—

" शम्यया परि मिमीते मात्रैवास्यै साऽथो युक्तेनैव युक्तमव रुन्धे" [ सं० का० ६ प्र० २ अ० ७ ] इति ।

गदया सदृशी बाहुपरिमिता शम्या तया चतुर्दिक्षूत्तरवेदिं परिमिमीते । अस्या उत्तरवेदेः सेयं भूमिः शम्यया[2] निर्णीता मात्रैव न न्यूना ग्रहचमसादिप्रचारस्य पर्याप्तत्वात् । नाप्यधिका यथोक्तप्रचारानुपयुक्तभागस्याभावात् । किं च युक्तेनैव योग्येनैवोत्तरवेदिप्रमाणेन योग्यफलं प्राप्नोति ॥

मन्त्रान्व्याचष्टे—

" वित्तायनी मेऽसीत्याह वित्ता ह्येनानावत्तिक्तायनी मेऽसीत्याह तिक्तान्ह्येनानावदवतान्मा नाथितमित्याह नाथितान्ह्येनानावदवतान्मा व्यथितमित्याह व्यथितान्ह्येनानावत् " [ सं० का० ६ प्र० २ अ० ७ ] इति ।

वित्तं वह्निरूपम् । वित्तार्थिन एतान्यज्ञक्रतून्वह्निमापणेनेयमुत्तरवेदिररक्षत् । तिक्तं वह्निज्वालारूपं तेजनं तदर्थिन एतान्यागकर्तॄन् ॥

**विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुषा नाम्नेहि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदधे—**

बौधायनः—" अथ चात्वाले बर्हिर्निधाय तस्मिन्स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुषा नाम्नेहीति, तद्धृत्वोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदध इति " इति ।

---

१ क. घ. 'ख्याने वक्ष्य' । २ ख. 'या परिमिता नि' ।

( मध्यमोपसद्दिने स्वीकृतषट्त्रिंशत्पदपरिमितवेदिप्रदेशपूर्वभाग उत्तरवेद्यभिधानम् )

आपस्तम्बस्त्वेकमन्त्रतामाह—

" तूष्णीं जानुदघ्नं त्रिवितस्तिं वा खात्वोत्तरवेद्यर्थान्पांसून्हरति विदेरग्निरिति " इति ।

विदेरुत्तरवेदेः संबन्धी योऽग्निस्तस्य नभ इत्येतन्नाम। अङ्गानां रस इत्यङ्गिरःशब्दस्य निर्वचनम् ।

तथा च च्छन्दोगाः प्राणोपास्तावामनन्ति—" एतंमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसस्तेन " इति ।

वाजसनेयिनोऽप्यधीयते—" यं(?) अङ्गिरसोऽङ्गानां रसः " इति ।

अयं चाग्निः सोमाहुत्याधारत्वाद्गार्हपत्यदक्षिणाग्न्यादीनां[3] मध्ये सारः । हेऽङ्गिरो यस्त्वमस्यां चात्वालगतमृद्रूपायां पृथिव्यामसि वर्तसे स त्वमायुष्प्रदेन नभोनाम्ना सहित एहि उत्तरवेद्यामागच्छ । यत्तवानाधृष्टं केनाप्यतिरस्कृतं नाम यज्ञसंबद्धं तेन नाम्ना व्यवहृत्य त्वामुत्तरवेद्यामादधे ॥

अग्ने अङ्गिरो यो द्वितीयस्यां तृतीयस्यां पृथिव्यामस्यायुषा नाम्नेहि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽ दधे—

बौधायनः—" द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामसीत्यादत्ते—आयुषा नाम्नेहीति हृत्वोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽ दध इति, तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसीत्यादत्ते—आयुषा नाम्नेहीति हृत्वोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽ दध इति, तूष्णीं चतुर्थं हरति सह बर्हिषा " इति ।

आपस्तम्बः—" एतेनैव यो द्वितीयस्यामिति द्वितीयं यस्तृतीयस्यामिति तृतीयं तूष्णीं चतुर्थं हरति " इति ।

अत्राग्ने अङ्गिरो यो द्वितीयस्यामित्याम्नातो द्वितीयमन्त्रस्तस्याऽऽदौ विदेरित्यादिरनुषज्यते । अवसाने च पृथिव्यामित्यादिरनुषज्यते । तृतीयस्यामित्यादिश्चरममन्त्रस्तस्य विदेरित्यादिरेवानुषज्यते । चात्वालस्थितायाः पृथिव्या अंशभेदेन द्वितीयत्वं तृतीयत्वं च द्रष्टव्यम् ॥

विधत्ते—

" विदेरग्निर्नभो नामाग्ने अङ्गिर इति त्रिर्हरति य एवैषु लोकेष्वग्नयस्ता-

१ ख. °तमेवा° । २ क. घ. ङ. च. या । ३ ख. °ग्न्याद्यङ्गानां । ४ ख. ग. च. हत्वा ।

नेवाव रुन्धे तूष्णीं चतुर्थꣳ हरत्यनिरुक्तमेवाव रुन्धे " [ सं० का० ६ प्र० २ अ० ७ ] इति ।

लोकत्रयवर्तिनां त्रयाणामग्नीनामवरोधाय त्रिर्हरणमेतल्लोकवर्तीति निश्चित्य वक्तुमशक्यत्वेनानिरुक्तस्याग्निसामान्यस्यावरोधाय तूष्णीं हरणम् ॥

## सिꣳहीरसि महिषीरसि—

बौधायनः—" अथाध्वर्युरुत्तरवेद्यै पुरीषं संप्रयौति सिꣳहीरसि महिषीरसीति " इति ।

संप्रयौति मिश्रयति ॥

आपस्तम्बः—" सिꣳहीरसीत्युत्तरवेद्यां निवपति " इति ॥

वेदेः सिंहमृगत्वं दर्शयति—

" सिꣳहीरसि महिषीरसीत्याह सिꣳहीर्ह्येषा रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठत् " [ सं० का० ६ प्र० २ अ० ७ ] इति ।

महिषीर्महनीया । ब्राह्मणान्तरे वा महिषीजातित्वं द्रष्टव्यम् ॥

## उरु प्रथस्वोरु ते यज्ञपतिः प्रथतां ध्रुवाऽसि देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्व—

कल्पः—" उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयित्वा ध्रुवाऽसीति शम्यया संहत्य देवेभ्यः शुन्धस्वेत्यद्भिः प्रोक्ष्य देवेभ्यः शुम्भस्वेति सिकताभिरवकीर्य " इति ।

प्रथस्व प्रसर । ध्रुवा दृढा[1] । शुन्धस्व शुद्धा भव । शुम्भस्व शोभिता भव ॥

व्याचक्षाणं क्रमेण विधत्ते—

" उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह यजमानमेव प्रजया पशुभिः प्रथयति ध्रुवाऽसीति सꣳ हन्ति धृत्यै देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेत्यव चोक्षति प्र च किरति शुद्ध्यै " [ सं० का० ६ प्र० २ अ०७ ] इति ।

## इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पातु—

कल्पः—" प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति—इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति पुरस्तान्मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः प्रचेता-

१ ख. °ढा भव । शु° ।

( मध्यमोपसद्दिने स्वीकृतषट्त्रिंशत्पदपरिमितवेदिप्रदेशपूर्वभाग उत्तरवेद्यभिधानम् )
त्वा रुद्रैः पश्चात्पात्विति पश्चाद्विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पात्वित्युत्तरतः" इति।

इन्द्रघोषादिनामका देवाः परिवृढास्तदनुचरा वस्वादिगणास्तैर्गणैः सहितास्ते देवाः पान्तु ॥

पुरस्तादित्यादिदिग्वाचकशब्दप्रयोगेण दिग्देवतातुष्टिकरं प्रोक्षणमित्याह—
"इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वित्याह दिग्भ्य एवैनां प्रोक्षति" [सं० का० ६ प्र० २ अ० ७] इति ॥

प्रोक्षणं विधातुं प्रस्तौति—

"देवाꣳश्चेदुत्तरवेदिरुपावर्तीहैव वि जयामहा इत्यसुरा वज्रमुद्यत्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपानुदत मनोजवाः पितृभिर्दक्षिणतः प्रचेता रुद्रैः पश्चाद्विश्वकर्माऽऽदित्यैरुत्तरतः" [सं० का० ६ प्र० २ अ० ७] इति।

अपक्रम्य देवासुरसेनयोर्मध्ये तिष्ठन्तीमुत्तरवेदिं यदा देवा उपामन्त्रयन्त तदानीमसुरा एवमचिन्तयन्। यद्येषा देवानुपावर्तेत तदा त एव विजयेरन्। तस्मादिहैवेदानीमेव तदुपावर्तनात्प्रागेव देवान्विजयामह इति विचिन्त्य वज्रमुद्यत्य देवानभिलक्ष्य प्रहर्तुमागताः। तानसुरानिन्द्रघोषादयो दिग्भ्योऽपाकुर्वन् ॥

विधत्ते—

"यदेवमुत्तरवेदिं प्रोक्षति दिग्भ्य एव तद्यजमानो भ्रातृव्यान्प्र णुदते" [सं० का० ६ प्र० २ अ० ७] इति ॥

प्रोक्षणशेषस्य निनयनं विधत्ते—

"इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत्तान्दक्षिणत उत्तरवेद्या आदन्यत्प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै नि नयेद्यदेव तत्र क्रूरं तत्तेन शमयति" [सं० का० ६ प्र० २ अ० ७] इति।

यतयो देवान्हन्तुं सर्वदा प्रयतमाना उत्तमाश्रयेण प्रच्छन्नवेषा असुरास्तान्हत्वा सालावृकेभ्यः[1] श्वभ्यो दत्तवान् ॥

निनयनकाले ध्यानं विधत्ते—

"यं द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयति" [सं० का० ६ प्र० २ अ० ७] इति।

---

१ ख. °केभ्य आरण्यश्व°।

शुचा शोकेनार्पयति योजयति ॥

सिꣳहीरसि सपत्नसाही स्वाहा सिꣳहीरसि सुप्रजावनिः स्वाहा सिꣳहीरसि रायस्पोषवनिः स्वाहा सिꣳहीरस्यादित्यवनिः स्वाहा सिꣳहीरस्या वह देवान्देवयते यजमानाय स्वाहा—

कल्पः—“ अथैनां हिरण्यमन्तर्धायाक्ष्णया पञ्चगृहीतेन व्याघारयति सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणेंऽसे, सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्यां श्रोण्यां, सिꣳहीरसि रायस्पोषवनिः स्वाहेति दक्षिणस्यां श्रोण्यां, सिꣳहीरस्यादित्यवनिः स्वाहेति उत्तरेंऽसे, सिꣳहीरस्या वह देवान्देवयते यजमानाय स्वाहेति मध्ये ” इति ।

हे उत्तरवेदे त्वं सिंहरूपधारिण्यसि । सपत्नसाही वैरिघातिनी । सुप्रजावनिः शोभनापत्यभृत्यप्रदा । रायस्पोषवनिः पश्वादिधनसमृद्धिदा । आदित्यवनिर्भूतिसंबन्धिप्रतिष्ठाप्रदा[१] । देवयते देवानिच्छते यजमानाय देवानानय तवेदं हुतमस्तु ॥

उत्तरवेदेर्वरवाक्यमनुसृत्यैकैकं काममेकैकाहुत्या प्राप्नुवन्नित्येतं मन्त्रसूचितमर्थं दर्शयति—

“सोत्तरवेदिरब्रवीत्सर्वान्मया कामान्व्यश्नवथेति ते देवा अकामयन्तासुरान्भ्रातृव्यानभि भवेमेति तेऽजुहवुः सिꣳहीरसि सपत्नसाही स्वाहेति तेऽसुरान्भ्रातृव्यानभ्यभवन्तेऽसुरान्भ्रातृव्यानभिभूयाकामयन्त प्रजां विन्देमहीति तेऽजुहवुः सिꣳहीरसि सुप्रजावनिः स्वाहेति ते प्रजामविन्दन्त ते प्रजां वित्त्वाऽकामयन्त पशून्विन्देमहीति तेऽजुहवुः सिꣳहीरसि रायस्पोषवनिः स्वाहेति ते पशूनविन्दन्त ते पशून्वित्त्वाऽकामयन्त प्रतिष्ठां विन्देमहीति तेऽजुहवुः सिꣳहीरस्यादित्यवनिः स्वाहेति त इमां प्रतिष्ठामविन्दन्त त इमां प्रतिष्ठां वित्त्वाऽकामयन्त देवता आशिष उपेयामेति तेऽजुहवुः सिꣳहीरस्या वह देवान्देवयते यजमानाय स्वाहेति ते देवता आशिष उपाऽऽयन् ” [सं०का०६प्र०२अ०८] इति ।

आशिष इष्यमाणा हविःस्वीकारिणीर्देवता उपेयाम प्राप्नुयामेति कामयमाना यष्टारस्ते देवाश्चरमाहुत्या तथैव प्राप्नुवन् । कर्मफलानि वाऽत्राऽऽशीःशब्देनोच्यन्ते ॥

---

१ ख. °भूमिसं ।

आहुतिसंख्यां विधत्ते—

"पञ्च कृत्वो व्याघारयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे" [सं० का० ६ प्र० २ अ० ८] इति ॥

गुणं विधत्ते—

"अक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै" [सं० का० ६ प्र० २ अ० ८] इति।

अक्ष्णया वक्रगत्या। दक्षिणेंऽस उत्तरश्रोणिरित्यादिका वक्रगतिः। पशवः शयनकाले पादाद्यङ्गानि वक्रत्वेन प्रहरन्ति संकोचयन्ति। अत आहुतिवक्रत्वं प्रतिष्ठित्यै भवति ॥

## भूतेभ्यस्त्वा—

कल्पः—"भूतेभ्यस्त्वेति स्रुचमुद्गृह्य" इति।

हे जुहूस्त्वां भूतेभ्यश्चिरंतनेभ्यो देवेभ्य उद्गृह्णामि ॥

विधत्ते—

"भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं तानेव तेन प्रीणाति" [सं० का० ६ प्र० २ अ० ८ इति।

भूतोद्देशेन स्रुगुद्ग्रहणे सत्कृताः सन्तः प्रीयन्ते ॥

## विश्वायुरसि पृथिवीं दृꣳह ध्रुवक्षिदस्यन्तरिक्षं दृꣳहाच्युतक्षिदसि दिवं दृꣳह—

कल्पः—"अथ पौतुद्रवान्परिधीन्परिदधाति विश्वायुरसि पृथिवीं दृꣳहेति मध्यमं, ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणम्, अच्युतक्षिदसि दिवं दृꣳहेत्युत्तरम्" इति।

हे मध्यमपरिधे त्वं कृत्स्नायुःप्रदोऽसि पृथिवीं दृढां कुरु। हे दक्षिणपरिधे त्वं स्थिरनिवासोऽसि। हे उत्तरपरिधे त्वमविनष्टनिवासोऽसि ॥

विधत्ते—

"पौतुद्रवान्परिधीन्परि दधात्येषां लोकानां विधृत्यै" [सं० का० ६ प्र० २ अ० ८] इति।

परिधित्रयेण त्रयो लोका विधृता भवन्ति। पूतुद्रुर्देवदारुः ॥

## अग्नेर्भस्मास्यग्नेः पुरीषमसि ॥

---

१ ग. गुणान्तरं।

कल्पः—" अथातिशिष्टान्संभारान्निवपति गुल्गुलु सुगन्धितेजनं शुक्लामूर्णास्तुकामग्नेर्भस्मास्यग्नेः पुरीषमसीति " इति ।

हे संभारस्वरूप त्वमग्नेर्भासकं पूरकं चासि ॥

संभारान्विधातुं प्रस्तौति—

" अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत स यां वनस्पतिष्ववसत्तां पूतुद्रौ यामोषधीषु ताꣳ सुगन्धितेजने यां पशुषु तां पेत्वस्यान्तरा शृङ्गे तं देवताः प्रैषमैच्छन्तमन्वविन्दन्तमब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणे यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात्तन्मे भ्रातॄणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति सोऽमन्यतास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषतास्थानि शातया इति स यान्यस्थान्यशातयत तत्पूतुद्र्वभवद्यन्माꣳसमुपभृतं तद्गुल्गुलु [ सं० का० ६ प्र० २ अ० ८ ] इति ।

भ्रातरो हविर्वहनप्रयासेन यथा मृता इत्थमेव सोऽन्योऽपि मृतिं प्राप्स्यतीति भीतोऽग्निर्निरूढो वनस्पत्योषधिपशुष्वेकैकां रात्रिमवसत् । देवदारुवृक्षे सुगन्धयुक्ततृणे पेत्वस्य[1] मेषस्य शृङ्गयोर्मध्ये च क्रमेण तं वसन्तं देवा हविर्वहने प्रेरयितुमैच्छन् । तमन्विष्यालभन्त । स्रुगुद्गृहीतस्य हविषो यल्लेशरूपं होमात्पूर्वं परिधिभ्यो बहिर्हविः स्कन्देत्स भ्रातृभागोऽस्त्वित्यग्नेर्वरः । अस्थन्वन्तस्त्वगस्थिमांसोपेताः प्रामेषत मृतास्तदीयान्यस्थीनि मांसानि च शातये परित्यजानि । परित्यक्तानि तानि पूतुद्रु गुल्गुल्वभवताम् ॥

विधत्ते—

" यदेतान्त्संभारान्त्संभरत्यग्निमेव तत्सं भरति " [ सं० का० ६ प्र० २ अ० ८ ] इति ॥

मन्त्रगतेन पुरीषशब्देन संभाररूपं वह्निपूरणं विवक्षितमित्याह—

" अग्नेः पुरीषमसीत्याहाग्नेर्ह्येतत्पुरीषं यत्संभाराः " [ सं० का० ६ प्र० २ अ० ८ ] इति ।

गुल्गुलुसुगन्धितेजनशुक्लोर्णास्तुकाः संभाराः ॥

किं च देवदारुपरिधिरूपेण वह्निना भ्रातरोऽस्य संनिधीयन्त इत्याह—

" अथो खल्वाहुरेते वावैनं ते भ्रातरः परि शेरे यत्पौतुद्रवाः परिधय इति " [ सं० का० ६ प्र० २ अ० ८ ] इति ।

१ क. ग. घ. °स्य शृ° ।

( उत्तरवेदिसमीपवर्तिहविर्धानाभिधानम् )

एनमाग्निं परितः शेरते ॥

अथ विनियोगसंग्रहः—

"वित्तोत्तराख्यवेद्यर्थं चतुर्भिः परितो लिखेत्।
विदेस्त्रिभिर्हरेत्पांसून्सिंहीर्वेद्यां विनिक्षिपेत् ॥ १ ॥
उरु प्रथयते वेदिं ध्रुवा संहृत्य शम्यया।
देवे प्रोक्ष्य तथा देवे सिकताऽत्रावकीर्यते ॥ २ ॥
इन्द्र प्रोक्ष्य चतुर्दिक्षु सिंहीरंसद्वये तथा।
श्रोणिद्वये च मध्ये च व्याघारयति पञ्चभिः ॥ ३ ॥
भूतेभ्यः स्रुचमुद्गृह्य विश्वा परिधयस्त्रयः।
अग्नेः संस्थाप्य संभारान्मन्त्राः षड्विंशतिर्मताः ॥४॥" इति ॥

नात्र विशेषमीमांसा ॥

नापि च्छन्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके त्रयोदशोऽनुवाकः। )

---

युञ्जते मनं उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रां दधे वयुनाविदेक इन्मही देवस्यं सवितुः परिंष्टुतिः। सुवाग्देव दुर्यां॑ आ वंद देवश्रुतौ देवेष्वा घोषेथामा नो वीरो जायतां कर्मण्यो यं॑ सर्वेऽनुजीवाम यो बहूनामसद्वशी। इदं विष्णुर्वि चक्रमे त्रेधा नि दंधे पदम्। समूढमस्य (१) पां॑सुर इरावती धेनुमती हि भूतं॑ सूयव-

सिनी मनवे यशस्ये। व्यस्कभ्नाद्रोदसी विष्णु-
रेते दाधार पृथिवीमभितो मयूखैः । प्राची
प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा
जीह्वरतमत्र रमेथां वर्ष्मन्पृथिव्या दिवो वा
विष्णवुत वा पृथिव्या महो वा विष्णवुत
वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यै रा प्र
यच्छ (२) दक्षिणादोत सव्यात् । विष्णो-
र्नुकं वीर्याणि प्र वोचं यः पार्थिवानि विममे
रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थं विच-
क्रमाणस्त्रेधोरुगायो विष्णो ररटमसि विष्णोः
पृष्ठमसि विष्णोः श्न्यप्त्रे स्थो विष्णोः स्यूरसि
विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा (३)॥

( अस्य यच्छैकान्नचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके त्रयोदशोऽनुवाकः )

---

युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः ।
विप्रस्य । बृहतः । विपश्चितः । वीति । होत्राः ।
दधे । वयुनाविदिति वयुन—वित् । एकः । इत् ।

(उत्तरवेदिसमीपवर्तिहविर्धानाभिधानम्)

मही। देवस्य। सवितुः। परिष्टुतिरिति परि—स्तुतिः। सुवागिति सु—वाक्। देव। दुर्यान्। एति। वद। देवश्रुताविति देव—श्रुतौ। देवेषु। एति। घोषेथाम्। एति। नः। वीरः। जायताम्। कर्मण्यः। यम्। सर्वे। अनुजीवामेत्यनु—जीवाम। यः। बहूनाम्। असत्। वशी। इदम्। विष्णुः। वीति। चक्रमे। त्रेधा। नीति। दधे। पदम्। समूढमिति सम्—ऊढम्। अस्य। (१) पांसुरे। इरावती इतीरा—वती। धेनुमती इति धेनु—मती। हि। भूतम्। सूयवसिनी इति सु—यवसिनी। मनवे। यशस्ये इति। वीति। अस्कभ्नात्। रोदसी इति। विष्णुः। एते इति। दाधार। पृथिवीम्। अभितः। मयूखैः। प्राची इति। प्रेति। इतम्। अध्वरम्। कल्पयन्ती इति। ऊर्ध्वम्। यज्ञम्। नयतम्। मा। जीह्वरतम्। अत्र। रमेथाम्। वर्ष्मन्। पृथिव्याः। दिवः। वा। विष्णो। उत। वा। पृथिव्याः। महः। वा। विष्णो। उत। वा। अन्तरिक्षात्। हस्तौ। पृणस्व। बहुभिरिति बहु—भिः। वसव्यैः। आ। प्रेति। यच्छ। (२) दक्षिणात्। एति। उत। सव्यात्। विष्णोः।

नुकम् । वीर्याणि । प्रेति । वोचम् । यः । पार्थिवानि । विमम इति वि—ममे । रजांसि । यः । अस्कभायत् । उत्तरमित्युत्—तरम् । सधस्थमिति सध—स्थम् । विचक्रमाण इति वि—चक्रमाणः । त्रेधा । उरुगाय इत्युरु—गायः । विष्णोः । रराटम् । असि । विष्णोः । पृष्ठम् । असि । विष्णोः । श्न्यप्त्रे इति । स्थः । विष्णोः । स्यूः । असि । विष्णोः । ध्रुवम् । असि । वैष्णवम् । असि । विष्णवे । त्वा ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ प्रथमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

द्वादशेऽनुवाक उत्तरवेदिरभिहिता । तत्समीपवर्तिहविर्धानं त्रयोदशेऽनुवाकेऽभिधीयते ।

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥

कल्पः—" गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेति " इति ।

( उत्तरवेदिसमीपवर्तिहविर्धानाभिधानम् )

होमार्थं स्वाहाशब्दोऽध्याहृतः । विप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनो विप्रा ब्राह्मणा ऋत्विजो मनो युञ्जते लौकिकचिन्ताभ्यो मनो निवार्य यज्ञचिन्तायां तत्प्रथमं नियमयन्ति । ततो धिय इन्द्रियाण्यपि[1] यज्ञार्थेषु स्वस्वव्यापारेषु नियमयन्ति । कीदृशस्य विप्रस्य । बृहतो विपश्चितः । अधीतवेदत्वाद्बृहत्त्वमर्थाभिज्ञत्वाद्विपश्चित्त्वम् । कीदृशा विप्राः । होत्रा होमकर्तारः । तदिदं विप्राणां मनोनियमनादिसामर्थ्यमेक इद्विदध एक एव ससर्ज । कीदृश एकः । वयुनावित्, मार्गान्वेत्ति सर्वज्ञ इत्यर्थः । न चैकस्य सर्वसृष्टौ[2] विस्मेतव्यम् । यतः सवितुः प्रेरकस्यान्तर्यामिणो देवस्य परिष्टुतिर्मही महती । तथा चाऽऽथर्वणिका अधीयते—" यः सर्वज्ञः[3] सर्वविद्यस्य ज्ञानमयं तपः " इति ।

वाजसनेयिनश्च—" स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच " इति ।

श्वेताश्वतराश्च—" पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च " इति ।

एवं सर्वत्रोदाहार्यम् ॥

एतं मन्त्रं विनियोक्तुमुपोद्घातत्वेनानुष्ठेयं विधत्ते—

" बद्धमव स्यति वरुणपाशादेवैने मुञ्चति प्र णेनेक्ति मेध्ये एवैने करोति " [ सं० का० ६ प्र० २ अ० ९ ] इति ।

हविर्धाननामकयोः शकटयोर्यत्पूर्वं[4] बद्धमासीत्तदवस्यति मुञ्चेत् । प्रणेनेक्ति प्रक्षालयेत् ।

अत्र सूत्रम्—" प्रयुक्तपूर्वशकटे नद्धयुगे[5] प्रविहितशम्ये प्रक्षाल्य तयोः प्रथमग्रथितान्ग्रन्थींन्विस्रस्य नवान्प्रज्ञातान्कृत्वाऽग्रेण प्राग्वंशमभितः पृष्ठ्यामव्यवनयन्परिश्रिते सच्छदिषी अवस्थापयति " इति ।

पृष्ठ्यां वेदिमध्ये प्राक्प्रतीचोः शङ्कोर्बद्धां रज्जुं मध्येऽव्यवनयन्व्यवधानमकुर्वन् ॥

मन्त्रविनियोगपूर्वकं शकटप्रेरणं विधत्ते—

" सावित्रियर्चा हुत्वा हविर्धाने प्र वर्तयति सवितृप्रसूत एवैने प्र वर्तयति " [ सं० का० ६ प्र० २ अ० ९ ] इति ॥

---

१ क. ग. घ. °पि स्व° । २ ख. °ष्टुतिः सर्ववेदोक्तस्तुति° । ३ ख. °ज्ञः स स° । ४ क. ग. घ. °यक्षं पूर्व । ख. °यदक्षं पूर्व । ५ ख. °गेऽप्रतिहि° ।

कल्पः—" स्याचेदक्षशब्दः सुवागित्यनुमन्त्रयते " इति ।

स च मन्त्र एवमाम्नातः—

सुवाग्देव दुर्याँ॑ आ वद देव-
श्रुतौ देवेष्वा घोषेथाम्, इति ।

हेऽक्षदेव दुर्यान्गृहान्प्रति सुवाग्भूत्वाऽऽ समन्ताच्छ्रेयस्करीं वाचं वद । हे देवश्रुतौ प्रख्यातावक्षौ यजमानोऽयं युष्मान्यजतीति देवेष्वाघोषेथाम् ॥

सुवाक्शब्दोपयोगं दर्शयति—

" वरुणो वा एष दुर्वागुभयतो बद्धो यदक्षः स यदुत्सर्जेद्यजमानस्य गृहानभ्युत्सर्जेत्सुवाग्देव दुर्याँ॑ आ वदेत्याह गृहा वै दुर्याः शान्त्यै " [ सं० का० ६ प्र० २ अ० ९ ] इति ।

अक्षस्य बन्धनहेतुपाशोपेतत्वाद्वरुणत्वम् । वरुणश्च क्रूरत्वाद्दुर्वाक् । उत्सर्जेत्, शब्दं कुर्यात् ॥

कल्पः—" अथैने पत्नी पदतृतीयेनाऽऽज्यमिश्रेणोपानक्त्या नो वीरो जायतामिति " इति ।

स चैवमाम्नातः—

आ नो वीरो जायतां कर्मण्यो यँ॑
सर्वेऽनुजीवाम यो बहूनामसद्वशी ।, इति ।

कर्मणि साधुः कुशलो वीर. आलस्यरहितः पुत्रोऽस्माकमाजायताम् । यं जीवाम यश्च बहूनां वशी नियमनशक्तिमानसद्भवेत्, तादृशो जायताम् । अत्र कल्पे पदतृतीयशब्देन सोमक्रयणीपदरजसस्तृतीयांशः पूर्वं संगृहीतो विवक्षितः॥

अक्षोपाञ्जनं विधत्ते—

" पत्न्युपानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै " [ सं० का० ६ प्र० २ अ० ९ ] इति ॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पाँ॑सुर इरावती धेनुमती हि भूतँ॑
सूयवसिनी मनवे यशस्ये । व्यस्कभ्नाद्रोदसी
विष्णुरेते दाधार पृथिवीमभितो मयूखैः ॥

---

१ ख. 'दक्षे श' ।

( उत्तरवेदिसमीपवर्तिहविर्धानाभिधानम् )

कल्पः—" दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य दक्षिणस्यां वर्तन्यां स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोति—इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूढमस्य पाꣳ सुरे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चादुपसृप्योत्तरस्यां वर्तन्यां स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्य जुहोति—इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे यशस्ये। व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहेति " इति।

विष्णुस्त्रिविक्रमावतारं धृत्वेदं विश्वं विभज्य क्रमते स्म। भूमावेकं पदमन्तरिक्षे द्वितीयं दिवि तृतीयमित्येवं त्रेधा पदं निदधे। पांसवो भूम्यादिलोकरूपा यस्य पदस्य सन्ति तत्पांसुरम्। अस्य विष्णोस्तस्मिन्पदे विश्वं समूढं सम्यगन्तर्भूतम्। किं च[1]—इरावती अन्नवती धेनुमती धेनुर्बहुक्षीरा गौस्तद्वत्यौ सूयवसिनी शोभनैर्यवसैरभ्यवहार्यैर्युक्ते मनवे मानवप्रजार्थं यशस्ये यशोनिमित्ते भवतम्। एते रोदसी द्यावापृथिव्यौ विष्णुर्व्यस्कभ्नाद्विभज्य स्थापितवान्[2]। तां च पृथिवीं मयूखैः स्वतेजोरूपैर्नानाजीवैरभितो दाधार पुपोष। स विष्णुरनयोत्तर[3]हविर्धानमार्गाहुत्या प्रीयताम्॥

विधत्ते—

" वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै विष्णुर्यज्ञादेव रक्षाꣳस्यप हन्ति " [ सं० का० ६ प्र० २ अ० ९ ] इति।

वर्त्मना शकटमार्गेण। अन्वित्यानुप्रविश्य। यज्ञो देवेभ्यो निलायत विष्णूरूपं कृत्वेत्युक्तत्वाद्यज्ञस्य विष्णुत्वम्। अत एव वैष्णवमन्त्रोऽत्र[4] न व्यधिकरणः। यज्ञादेव विष्णुरूपयज्ञद्वारेणैव॥

होमाधारत्वेन हिरण्यप्रक्षेपं विधत्ते—

" यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति " [ सं० का० ६ प्र० २ अ० ९ ] इति॥

**प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं**
**यज्ञं नयतं मा जीह्वरतम्—**

---

[1] ख. च सू°। [2] ख. °वान्प्रजार्थं तां। [3] ख. °योर्दक्षिणोत्त°। [4] क. ग. घ. °न्त्रो न।

कल्पः—" अथैने संपरिगृह्य संप्रैषमाह हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति त्रिरुक्तायां प्रवर्तयन्ति प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जीह्वरतमिति " इति ।

हे शकटे प्राङ्मुखे गच्छतम् । कीदृशे । अध्वरं कल्पयन्ती देवकर्म बाधरहितं कुर्वाणे । किं चोर्ध्वमुपरिवर्तिदेवान्प्रति यज्ञं नयतं मा कुटिले भवतमसुरान्मा प्रापयतम् ॥

प्रोक्तशब्दतात्पर्यमाह—

" प्राची प्रेतमध्वरं कल्पयन्ती इत्याह सुवर्गमेवैने लोकं गमयति " [ सं० का० ६ प्र० २ अ० ९ ] इति ॥

कल्पः—" आहवनीयात्प्रतीचस्त्रीन्प्रक्रमानुच्छि (च्छे) ष्यात्र रमेथामिति नभ्यस्थे स्थापयित्वा " इति ।

नभ्यशब्देन फलकत्रयोपेते चक्रे नाभियुक्तं मध्यमफलकमुच्यते । तस्मिन्यथा शकटं तिष्ठति तथा स्थापयेत् । प्राचीनवंशस्थो यः पुरातन आहवनीयस्तस्येत ऊर्ध्वं गार्हपत्यत्वम् । आहवनीयस्तूत्तरवेदिस्थ एव । तत्रत्यपुरातनगार्हपत्यस्य शालामुखीयत्वमिति ।

तथा च सूत्रम्—" प्रवर्ग्यमुद्वास्य पशुबन्धवदग्निं प्रणयत्येष सोमस्याऽऽहवनीयो यतः प्रणयति स गार्हपत्यः " इति ।

मन्त्रपाठस्तु—

अत्र रमेथां वर्ष्मन्पृथिव्याः, इति ।

हे शकटे देवयजनाख्ये पृथिव्याः शरीर उत्तरवेद्याः पश्चिमभागे प्रक्रमत्रयमवशेष्य यत्स्थानमस्ति अत्र स्थाने क्रीडतम् ॥

देवयजनरूपाया वेदेः पृथिवीशरीरत्वं यदिमामविन्दन्त तद्वेदे वेदित्वमित्येतस्मिन्ब्राह्मणे प्रसिद्धमाह—

" अत्र रमेथां वर्ष्मन्पृथिव्या इत्याह वर्ष्म ह्येतत्पृथिव्या यद्देवयजनम्' [ सं० का० ६ प्र० २ अ० ९ ] इति ॥

कल्पः—" दिवो वा विष्णवित्यध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणं कर्णातर्दमनु मेथीं निहन्ति तस्यामीषां निनह्यत्येवमुत्तरस्य प्रतिप्रस्थाता विष्णोर्नुकमित्युत्तरस्योत्तरं कर्णातर्दमनु " इति ।

युगस्य दक्षिणोत्तरभागौ शकटस्य कर्णस्थानीयौ । तयोरातर्दं ईषाभ्यां सह दृढबन्धनम् । दक्षिणबन्धनसंधौ मेथी निखातव्या ।

---

१ ख. 'वर्तमा' । २ ख. प्राचीशब्द' । ३ क. ग. घ. तथा ।

(उत्तरवेदिसमीपवर्तिहविर्धानाभिधानम्)

मन्त्रौ त्वेवं पठितौ—

दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्व-सव्यैरा प्र यच्छ दक्षिणादोत सव्यात् । विष्णोर्नुकं वीर्याणि प्र वोचं यः पार्थि-वानि विममे रजाꣳसि यो अस्कभाय-दुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः, इति।

हे विष्णो द्युलोकाद्वा भूलोकाद्वा महर्लोकाद्वाऽन्तरिक्षलोकाद्वा समानीतैर्ब-हुभिर्धनसमूहैः स्वहस्तौ पूरय। हे विष्णो पूर्णधनाद्दक्षिणात्सव्याच्च हस्तादा-प्रयच्छ बहुकृत्व आवृत्य प्रकृष्टं मणिमुक्तादिकं देहि। नुकमित्यव्ययं कर्मवा-चकम्। विष्णोर्वीर्याणि कर्माणि प्रवोचं ब्रवीमि। कानि कर्माणि। यो विष्णुः पार्थिवानि रजांसि परमाणून्विममे निर्मितवान्परिगणितवांश्च । पुनरपि यो विष्णुरुत्तरमुपरिवर्ति सधस्थं देवानां सह वासस्थानं द्युलोकमस्कभायत्, यथाऽधो न पतति तथा स्तम्भितवान् । पुनरपि यस्त्रेधा विचक्रमाणस्त्रिषु लोकेषु पदत्रयं निदधौ, उरुभिर्महात्मभिर्गीयते च ॥

मेथ्या निखननं विधत्ते—

"शिरो वा एतद्यज्ञस्य यद्धविर्धानं दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं नि हन्ति. शीर्षत एव यज्ञस्य यजमान आशिषोऽव रुन्धे" [सं० का० ६ प्र० २ अ० ९] इति।

यथा शिरसि चक्षुरादीनि गोलकानि निधीयन्ते तथा हविर्द्रव्याणि शकटे निधीयन्त इति हविर्धानस्य यज्ञशिरस्त्वम्। हस्तौ पृणस्वाऽऽप्रयच्छेत्याशी-र्यस्या ऋचः पदेषु प्रतीयते सेयमृगाशीर्पदा। यद्यप्येषा मेथीं न प्रकाशयति तथाऽपि वाचनिकोऽत्र विनियोगः। अनेन मन्त्रेण यज्ञशिरसो हविर्धानाद्यज-मान आशिषः प्राप्नोति ॥

आच्छादकं विधत्ते—

"दण्डो वा औपरस्तृतीयस्य हविर्धानस्य वषट्कारेणाक्षमाच्छिनद्यत्तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुद्ध्यै" [सं० का० ६ प्र० २ अ० ९] इति।

दण्डो नाम कश्चिदसुर उपरनामकस्यासुरस्य पुत्रो वषट्कारदेवेन सह मैत्रीं कृत्वा तद्द्वारा प्रविश्य तृतीयस्य शकटस्याक्षमच्छिनत् । अतस्तृतीयस्य शकटस्य प्रतिनिधित्वेनैकैकस्य शकटस्योर्ध्वं तृणादिनिर्मितं छदिः स्थापयेत् । तत्र दक्षिणोत्तरपार्श्वयोः परिश्रयणार्थे द्वे छदिषी अपेक्ष्य तृतीयम् । अथ शकटे अन्तर्भाव्य हविर्धानाख्यं मण्डपं निर्मातव्यम् । तत्र दक्षिणशकटात्पुरतो ग्रहासादनायावकाशं शिष्ट्वा दक्षिणोत्तररूपेण षट्संख्याकाः स्थूणा निखातव्याः । एवं पश्चाद्भागे षट्स्थूणा निखातव्याः । तयोः स्थूणापङ्क्त्योरुदञ्चौ वंशावादधाति ॥

## विष्णो रराटमसि—

अत्र कल्पः—" तासूदञ्चौ वंशौ प्रोहत्यध्यस्यति पुरस्ताद्रराटीं विष्णो रराटमसीति " इति ।

हविर्धानमण्डपस्य विष्णुदेवताकत्वाद्विष्णुत्वम् । पूर्वद्वारवर्तिस्तम्भयोर्मध्ये काचिद्दर्भमाला ग्रथ्यते, तां दर्भमालां तद्बन्धनाधारं तिर्यग्वंशं वा संबोध्य पुरुषललाटत्वेनोपचरितुं विष्णो रराटमसीत्युच्यते ॥

## विष्णोः पृष्ठमसि—

कल्पः—" प्राचो वंशानत्याधाय विष्णोः पृष्ठमसीति तेषु मध्यमं छदिरध्यूहति अरत्निविस्तारं नवायामम् " इति ॥

यज्ञपुरुषस्य हविर्धानाख्यं मण्डपं शिरस्तत्साम्यं मन्त्रैरुच्यत इत्याह—

" शिरो वा एतद्यज्ञस्य यद्धविर्धानं विष्णो रराटमसि विष्णोः पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूतम् " [ सं०का०६ प्र०२ अ०९ ] इति ।

एका रराटी, एकं छदिः, द्वौ रराट्यन्तावििति यावन्तो मण्डपस्य प्रकारा एतावद्धैतावत्प्रकारं शिरो विश्वकर्मणा विशेषेण स्यूतं, शिरस्याच्छादिका त्वगेव च्छदिः स्थापनीया ॥

## विष्णोः श्न्यप्त्रे स्थः—

कल्पः—"पार्श्वयोश्छादिषी निदधाति विष्णोः श्न्यप्त्रे स्थ इति" इति ॥

## विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ।

कल्पः—" विष्णोः स्यूरसीत्यध्वर्युर्दक्षिणं बाहुं स्यूत्वा विष्णोर्ध्रुवमसीति प्रज्ञातं ग्रन्थिं करोति वैष्णवमसि विष्णवे त्वेति संमितमभिमृशति " इति ।

१ ख. °ट्कारेण दे° ।

सीव्यतेऽनया रज्ज्वेति स्यूः। हे बन्धनहेतो त्वं विष्णुदेवताकस्य रज्जुरसि। हे ग्रन्थिरूप त्वं विष्णुसंबन्धि दृढमसि। हे मण्डप त्वं विष्णुदेवताकमस्यतो विष्णुप्रीतये त्वां स्पृशामि ॥

अत्र विष्णोरिति षष्ठ्या देवतात्वलक्षणः संबन्धो विवक्षित इत्याह—
"विष्णोः स्यूरसि विष्णोर्ध्रुवमसीत्याह वैष्णवꣳ हि देवतया हविर्धानम्" [सं० का० ६ प्र० २ अ० ९] इति ॥

प्रज्ञातग्रन्थेर्विस्रंसनं विधत्ते—
"यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्रꣳसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात्स विस्रस्यः" [सं० का० ६ प्र० २ अ० ९] इति।
अमेहेन मूत्रनिरोधेन ॥

अत्र विनियोगसंग्रहः—

"युञ्ज हुत्वा स्रुवागक्षे शब्दश्चेन्मन्त्रयेत तम्[1]।
आ नोऽक्षमञ्ज्याज्जुहुयात्पथोरिदमिराद्वयात् ॥ १ ॥
प्राची प्रवर्त्ये शकटे अत्रेति स्थापयेदिमे।
दिवो विष्णोर्द्वयान्मेथ्यावनसो विनिहन्त्युभे ॥ २ ॥
विष्णोर्मण्डपनिर्माणं पञ्चभिर्द्वारि वंशकः।
मध्यच्छदिर्ललाट्यन्तौ रज्जुस्यूतिश्च बन्धने ॥
वैष्ण स्पृशेन्निर्मितं तन्मन्त्राः[2] पञ्चदशोदिताः ॥ ३ ॥" इति ॥

## अथ मीमांसा।

दशमाध्यायस्याष्टमपादे चिन्तितम्—

"विकल्प्यते[3] बाध्यते वाऽऽहवनीयः पदादिभिः।
सामान्यस्य विशेषेण प्रत्यक्षोक्तित्वसाम्यतः ॥
लिङ्गचोदकवद्बाधो नास्ति तेन विकल्प्यते[4]।
विशेषार्थे लक्षणा स्यादतो मुख्येन बाध्यते" इति ॥

अनारभ्य श्रूयते—"यदाहवनीये जुहोति। तेन सोऽस्याभीष्टः प्रीतः" इति। ज्योतिष्टोमे श्रूयते—"पदे जुहोति वर्त्मनि जुहोति" इति। राजसूये श्रूयते—"वल्मीकवपामुत्खृज्य[5] जुहोति" इति। तथाऽन्यत्र श्रूयते—"गार्हपत्ये पत्नीसंयाजाञ्जुहोति" इति।

---

१ ख. ताम्। २ ख. °तं ते मन्त्राः। ३ क. ग. घ. °कल्पते। ४ क. ग. घ. °कल्पते। ५ ख. °मुद्धृत्य जु°।

तत्रानारभ्यवादेन होमसामान्यमनूद्याऽऽहवनीयो विहितः। प्रकरणनियमितैः पदादिवाक्यैस्तदनुबन्धविशिष्टा होमा विहिताः। गार्हपत्यवाक्येन होमविशेषमनूद्य गार्हपत्यो विहितः। तत्र पदादिहोमेषु सामान्यशास्त्रेण प्राप्त आहवनीयो विशेषशास्त्रप्राप्तैः पदादिभिः सह विकल्प्यते[1]। कुतः। प्रत्यक्षवचनोक्तत्वेन समानबलत्वात्। नन्वैन्द्या गार्हपत्यमुपतिष्ठत इत्यत्र यथा श्रुत्या लिङ्गं बाध्यते, यथा वा चोदकातिदिष्टानां कुशानामुपदिष्टैः शरैर्बाधस्तथा सामान्यस्य विशेषेण बाधोऽस्त्विति चेन्न। वैषम्यात्। लिङ्गं विलम्बितत्वाद्दुर्बलम्। चोदकश्चानुमेयतया दुर्बलः। न त्वेवं[2] सामान्यशास्त्रं विलम्ब्यते, नाप्यनुमीयते। ततो[3] दौर्बल्याभावाद्विकल्प इति प्राप्ते ब्रूमः—होमसामान्यानुवादकं यच्छास्त्रं तत्सामान्ये मुख्यत्वाद्धोमविशेषानुवादे लाक्षणिकतया दुर्बलं, विशेषशास्त्रं तु मुख्यवृत्त्या विधायकत्वात्प्रबलम्। न च पदादिशास्त्रमपि होमसामान्यमेवानूद्य पदादिविधायकं सत्समानबलं स्यादिति शङ्कनीयम्। प्रकरणनियमितत्वेन विशिष्टविधायकस्य सामान्यानुवादायोगात्। तस्मात्प्रबलेन विशेषेण सामान्यं बाध्यते।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

"हविर्धाने स्थितो ब्रूयात्सामिधेनीरिहाङ्गता।
हविर्धानस्य तास्वाहो तद्देशोऽनेन लक्ष्यते॥
वाक्यैक्यादङ्गता मैवं प्रकृत्या पश्चिमोऽग्नितः।
देशः प्राप्तो लाघवेन लक्ष्यः शकटसंनिधिः" इति॥

ज्योतिष्टोमे श्रूयते—"उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः" इति। हविर्धानमण्डपगतयोर्दक्षिणोत्तरभागावस्थितयोर्हविर्धाननामकयोः शकटयोर्मध्ये दक्षिणं शकटमत्र यत्तच्छब्दाभ्यामभिधीयते। तस्य समीपे सोमस्याभिषवः। उतेत्ययं शब्दोऽथशब्दार्थे वर्तते। अथ यस्मिन्हविर्धाने सोममभिषुण्वन्ति तस्मिन्सामिधेनीरनुब्रूयुरित्यर्थः। इह दक्षिणस्य हविर्धानस्य सामिधेनीष्वङ्गत्वं प्रतीयते। न चात्रार्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीत्युदाहरण इव वाक्यभेदे दोषः शङ्कितुं शक्यः। एकवाक्यतायाः स्पष्टं प्रतिभासादिति प्राप्ते ब्रूमः—सामिधेनीनामिष्ट्यङ्गतया दर्शपूर्णमासावत्र प्रकृतिः। प्रकृतौ चाऽऽहवनीयाग्नेः पश्चिमो देशः सामिधेनीनां स्थानम्। इहोत्तरवेदेराहवनीयत्वात्तदपेक्षया हविर्धानस्य पश्चिमदेशावस्थानात्स देशश्चोदकेन प्राप्त इति न देशस्य सामिधेन्यङ्गत्वं विधातव्यं, किं तु दक्षिणोत्तरहविर्धानसमीपदेशयोरनियमप्राप्तौ

१ क. °कल्पते। २ क. ख. ग. घ. नन्वेवं। ३ ख. अतो।

(काम्यसामिधेनीयाज्यापुरोनुवाक्यानामभिधानम्)

दक्षिणस्य हविर्धानस्य समीपदेशं नियन्तुं हविर्धानेन संनिधिर्लक्ष्यते। तथा सति नियममात्रविधानाल्लाघवं भवति। त्वत्पक्षे त्वभिषवोपलक्षितस्य दक्षिणस्य हविर्धानस्यात्यन्तमप्राप्तं सामिधेन्यङ्गत्वं विधीयत इति गौरवम्। तस्माद्देशलक्षणा।

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

"हविर्धानोर्ध्वकाले किमौषधार्थमनोन्तरम्।
नास्त्यस्ति वा न शक्तत्वाद्देशभेदादितोऽन्तिमः" इति॥

ज्योतिष्टोमे हविर्धाननामकयोः शकटयोः प्रवर्तनादूर्ध्वमौषधद्रव्यकाणां पुरोडाशादीनां निर्वापाय तयोरेव शक्तत्वान्न शकटान्तरमन्वेष्यमिति चेन्न। देशभेदात्। महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपे हविर्धानाख्ये शकटे स्थापिते। निर्वापस्तु मुख्यगार्हपत्यात्पश्चिमदेशे। किं चास्त्यत्र तृतीयं शकटम्। अनांसि प्रवर्तयन्तीति बहुवचनोक्तेः। तस्माच्छकटान्तरे निर्वापः॥

अथ च्छन्दः—

युञ्जते मन इति जगती। आ नो वीर इति विराड्गायत्री। इदं विष्णुरिति गायत्री। इरावतीति त्रिष्टुप्। प्राची प्रेतमिति द्विपदा त्रिष्टुप्। अत्र रमेथामित्येकपदा विराट्। दिवो वा विष्णो विष्णोर्नुकमिति त्रिष्टुभौ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ प्रथमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः।)

---

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य रक्षसस्तपिष्ठैः। तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः। तपूꣳष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्व-

---

१ क. ख. ग. घ. ङ. शक्यत्वा°।

गुल्काः । प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशꣳसः (१) यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् । उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राꣳ ओषतात्तिग्महेते । यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् । ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् । स ते (२) जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् । विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् । सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना साऽसदिष्टिः । अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरताम् (३) इयं गीः । स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् । इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवाꣳसमनु द्यून् । क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थि-

वाꣳसो जनानाम् । यस्त्वा स्वश्वः सुहिरण्यो अंग्न उपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् । महो रुजामि ( ४ ) बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः । अस्वप्रजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते पायवः सध्रियञ्चो निषद्याग्ने तव नः पान्त्वमूर । ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् । ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह ( ५ ) देभुः । त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण । अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमानं गृभाय । दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् । रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा ( ६ ) स रिषः पातु

नक्तम् । वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे । उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ । मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः ( ७ ) ॥

( अघशꣳसः स ते जरतास्ꣳ रुजामि ह द्विवैकचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

( आप उन्दन्त्वाकूत्यै दैवीमियं वस्व्यस्यꣳशुना सोममुदायुषा प्र च्यवस्वाग्नेरातिथ्यमꣳशुरꣳशुर्वित्तायनी मेऽसि युञ्जते कृणुष्व पाजश्चतुर्दश ॥१४॥)

( आपो वस्व्यसि या तवेयं गीश्चतुस्त्रिꣳशत् ॥ ३४ ॥ )

हरिः ॐ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ प्रथमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः । )

---

कृणुष्व । पाजः । प्रसितिमिति प्र—सितिम् । न । पृथ्वीम् । याहि । राजा । इव । अमवानित्यम—वान् । इभेन । तृष्वीम् । अन्विति । प्रसितिमिति प्र—सितिम् । द्रूणानः । अस्ता । असि ।

विध्यं। रक्षसंः। तपिंष्ठैः। तवं। भ्रमासंः। आशुया। पतन्ति। अन्वितिं। स्पृश। धृषता। शोशुंचानः। तपूंꣳषि। अग्ने। जुह्वां। पतङ्गान्। असंदित इत्यसं—दितः। वीतिं। सृज। विष्वंक्। उल्काः। प्रतीतिं। स्पशंः। वीतिं। सृज। तूर्णितम इति तूर्णि—तमः। भवं। पायुः। विशः। अस्याः। अदंब्धः। यः। नः। दूरे। अघशंꣳस इत्यघ—शꣳसः। (१) यः। अन्तिं। अग्ने। माकिंः। ते। व्यथिंः। एतिं। दधर्षीत्। उदितिं। अग्ने। तिष्ठ। प्रतिं। एतिं। तनुष्व। नीतिं। अमित्रान्। ओषतात्। तिग्महेत इतिं तिग्म—हेते। यः। नः। अरांतिम्। समिधानेतिं सम्—इधान। चक्रे। नीचा। तम्। धक्षि। अतसम्। न। शुष्कंम्। ऊर्ध्वः। भव। प्रतीतिं। विध्य। अधीतिं। अस्मत्। आविः। कृणुष्व। दैव्यांनि। अग्ने। अवेतिं। स्थिरा। तनुहि। यातुजूनांम्। जामिम्। अजांमिम्। प्रेतिं। मृणीहि। शत्रून्। सः। ते। (२) जानाति। सुमतिमितिं सु—मतिम्। यविष्ठ। यः। ईवंते। ब्रह्मणे। गातुम्। ऐरंत्। विश्वांनि। अस्मै। सुदिनानीतिं सु—दिनांनि। रायः।

द्युम्नानि । अर्यः । वीति । दुरः । अभीति । द्यौः । सः । इव । अग्ने । अस्तु । सुभग इति सु—भगः । सुदानुरिति सु—दानुः । यः । त्वा । नित्येन । हविषा । यः । उक्थैः । पिप्रीषति । स्वे । आयुषि । दुरोण इति दुः—ओने । विश्वा । इव । अस्मै । सुदिनेति सु—दिना । सा । असत् । इष्टिः । अर्चामि । ते । सुमतिमिति सु—मतिम् । घोषि । अर्वाक् । समिति । ते । वावाता । जरताम् ।(३) इयम् । गीः । स्वश्वा इति सु—अश्वाः । त्वा । सुरथा इति सु—रथाः । मर्जयेम । अस्मे इति । क्षत्राणि । धारयेः । अन्विति । द्यून् । इह । त्वा । भूरि । एति । चरेत् । उपेति । त्मन् । दोषावस्तरिति दोषा—वस्तः । दीदिवांसम् । अन्विति । द्यून् । क्रीडन्तः । त्वा । सुमनस इति सु—मनसः । सपेम । अभीति । द्युम्ना । तस्थिवांसः । जनानाम् । यः । त्वा । स्वश्व इति सु—अश्वः । सुहिरण्य इति सु—हिरण्यः । अग्ने । उपयातीत्युप—याति । वसुमतेति वसु—मता । रथेन । तस्य । त्राता । भवसि । तस्य । सखा । यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् । महः । रुजामि । (४) बन्धुता । वचोभिरिति वचः—भिः । तत् । मा ।

( काम्यसामिधेनीयाज्यापुरोनुवाक्यानामभिधानम् )

पितुः। गोतमात्। अन्विति। इयाय। त्वम्। नः। अस्य। वचसः। चिकिद्धि। होतः। यविष्ठ। सुक्रतो इति सु—क्रतो। दमूनाः। अस्वप्नज इत्यस्वप्न—जः। तरणयः। सुशेवा इति सु—शेवाः। अतन्द्रासः। अवृकाः। अश्रमिष्ठाः। ते। पायवः। सध्रियञ्चः। निषद्येति नि—सद्य। अग्ने। तव। नः। पान्तु। अमूर। ये। पायवः। मामतेयम्। ते। अग्ने। पश्यन्तः। अन्धम्। दुरितादिति दुः—इतात्। अरक्षन्। ररक्ष। तान्। सुकृत इति सु—कृतः। विश्ववेदा इति विश्व—वेदाः। दिप्सन्तः। इत्। रिपवः। न। ह।( ५ )देभुः। त्वया। वयम्। सधन्य इति सध—न्यः। त्वोताः। तव। प्रणीतीति प्र—नीती। अश्याम। वाजान्। उभा। शꣳसा। सूदय। सत्यतात इति सत्य—ताते। अनुष्ठुया। कृणुहि। अह्रयाण। अया। ते। अग्ने। समिधेति सम्—इधा। विधेम। प्रतीति। स्तोमम्। शस्यमानम्। गृभाय। दह। अशसः। रक्षसः। पाहि। अस्मान्। द्रुहः। निदः। मित्रमह इति मित्र—महः। अवद्यात्। रक्षोहणमिति रक्षः—हनम्। वाजिनम्। एति। जिघर्मि। मित्रम्। प्रथिष्ठम्। उपेति।

यामि । शर्म । शिशानः । अग्निः । क्रतुभिरिति क्रतु—भिः । समिद्ध इति सम्—इद्धः । सः । नः । दिवा । ( ६ ) सः । रिषः । पातु । नक्तम् । वीति । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि । कृणुते । महित्वेति महि—त्वा । प्रेति । अदेवीः । मायाः । सहते । दुरेवा इति दुः—एवाः । शिशीते । शृङ्गे इति । रक्षसे । विनिक्ष इति वि—निक्षे । उत । स्वानासः । दिवि । सन्तु । अग्नेः । तिग्मायुधा इति तिग्म—आयुधाः । रक्षसे । हन्तवै । उ । मदे । चित् । अस्य । प्रेति । रुजन्ति । भामाः । न । वरन्ते । परिबाध इति परि—बाधः । अदेवीः ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके द्वितीयः प्रपाठकः ॥ २ ॥

---

(अथ प्रथमकाण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ।)

---

त्रयोदशेऽनुवाके हविर्धानमण्डपनिर्माणमुक्तम् । यद्यपि नैतावता किंचि त्प्रमेयं परिसमाप्तं तथाऽप्यध्यापकसंप्रदायपरम्परया प्रपाठक उत्तरानुवा

समाप्यत इत्यन्तिमानुवाकत्वाच्चतुर्दशे काम्याः सामिधेन्यः पुरोनुवाक्या याज्याश्चोच्यन्ते । तत्रेष्टिकाण्डे व्रातपत्येष्टेरूर्ध्वं रक्षोघ्नेष्टिरेवमाम्नायते—

"अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्य॑ रक्षा॑सि सचेरन्नग्निमेव रक्षोहण॑ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षा॑स्यप हन्ति" [ सं० का० २ प्र० २ अ० २ ] इति ।

सचेरन्समवेयुर्बाधेरन्नित्यर्थः ॥

मध्यरात्रिकालं विधत्ते—

"निशितायां निर्वपेन्निशिताया॑ हि रक्षा॑सि प्रेरते संप्रेर्णान्येवैनानि हन्ति" [ सं० का० २ प्र० २ अ० २ ] इति ।

प्रेरते प्रकर्षेण चरन्ति । अतस्तस्यां वेलायां निर्वापेण प्रचारवन्त्येवैनानि रक्षांसि हन्ति ॥

यागभूमेः परितो वेष्टनं विधत्ते—

"परिश्रिते याजयेद्रक्षसामनन्ववचाराय" [सं०का०२प्र०२अ०२] इति ।

अनुप्रवेशाभावायेत्यर्थः ॥

रक्षोहणं वाजिनं वि ज्योतिषेत्येतौ मन्त्रौ विधत्ते—

"रक्षोघ्नी याज्यानुवाक्ये भवतो रक्षसा॑ स्तृत्यै" [ सं० का० २ प्र० २ अ० २ ] इति ।

हिंसार्थमित्यर्थः ॥

अस्यामिष्टौ कृणुष्व पाज इत्यनुवाकः कृत्स्नो विनियुक्तः । तस्मिन्नृचोऽष्टादश । तासु पञ्चदश सामिधेन्यः । एका पुरोनुवाक्या, द्वे याज्ये विकल्पिते ।

तत्रेयं प्रथमा—

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवा॑ इभेन । तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥, इति ।

कृणुष्व कुरुष्व । पाजो बलम् । प्रसितिं न मृगबन्धनहेतुभूतपाशयामिव पृथ्वीं प्रसारिताम् । अमवानमात्ययुक्तः । इभेन हस्तिना तृष्वीं शीघ्रगामिनीं प्रसितिं प्रकृष्टसेनां द्रूणानो हिंसन् । अस्ता क्षेप्ता धावयिता । रक्षसो राक्षसान् । तपिष्ठैरतिसंतापकैर्बाणैः । हेऽग्ने मृगबन्धनाय प्रसारितां पाशयामिव

१ क. ग. घ. ङ. काम्ययाज्या उच्य° ।

रक्षोनिरोधाय प्रौढं बलं कुरु । अमात्ययुक्तो गजेन सहितो राजेव रक्षसामुपरि याहि । क्षिप्रगामिनीं परकीयसेनामनु पृष्ठतो गत्वा मारयन्नवशिष्टाया धावयिता भव । पलायमानानपि राक्षसान्बाणैस्तीक्ष्णैर्विध्य ॥ १ ॥

अथ द्वितीया—

तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः । तपूꣳष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्वगुल्काः ॥ २ ॥, इति ।

भ्रमासो भ्रमणशालिनो विस्फुलिङ्गाः । असंदितोऽखण्डितः । (*आशुया शीघ्रगामिनः(णः) । धृषता धार्ष्ट्येन । शोशुचानो भृशं दीप्यमानः । तपूंषि संतापान् । पतङ्गान्पतनशीलान्) । विसृज विशेषेणोत्पादय । विष्वक्सर्वतः । उल्का महाज्वालाः । हेऽग्ने तव संबन्धिनो विस्फुलिङ्गाः शीघ्रगामिनः(णः) सर्वतः पतन्ति । त्वमपि भृशं दीप्यमानस्तैर्विस्फुलिङ्गैस्तानसुरान्धार्ष्ट्येनात्यन्तगाढमनुस्पृश । पुनरपि जुह्वा हुतेन हविषा त्वमविच्छिन्नः सन्संतापान्विस्फुलिङ्गान्महाज्वालाश्चासुरबाधनाय सर्वतो बाहुल्येनोत्पादय ॥ २ ॥

अथ तृतीया—

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशꣳसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥३॥, इति ।

स्पशः पाशान् । तूर्णितमोऽतित्वरितः । पायुः पालयिता । विशः प्रजायाः । अदब्धः केनाप्यहिंसितः । अघशंसो विचित्रवधकारी । अन्ति समीपे । माकिर्मा । व्यथिर्व्यथाकारी । आदधर्षीत्सर्वतो धृष्टो भवतु । हेऽग्ने चित्रवधकारी राक्षसो योऽस्माकं वैरी दूरे वर्तते, यश्चान्तिके वर्तते तं प्रति त्वमतित्वरितो बन्धनहेतून्पाशान्विविधान्सृज । केनाप्यहिंसितस्त्वमस्मदादिकाया अस्याः प्रजायाः पालको भव । कोऽपि व्यथयिता राक्षसस्ते समीपे सर्वत्र धृष्टो मा भवतु ॥ ३ ॥

अथ चतुर्थी—

उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राꣳ ओषता-

* धनुश्चिह्नान्तर्गतं ख. पुस्तक एव ।

१ क. ख. ग. घ. ङ. °लिङ्गान् । अ° ।

(काम्यसामिधेनीयाज्यापुरोनुवाक्यानामभिधानम्)

त्तिग्महेते। यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ ४ ॥, इति।

हेऽग्ने त्वमुत्तिष्ठ शत्रून्प्रति सर्वतः प्रवर्तस्व। हे तीक्ष्णायुध त्वममित्रान्नितरां दह। हे समिध्यमान वह्ने योऽस्माकं शत्रुत्वं चक्रे तं नीचं कृत्वा शुष्कमतसमिव काष्ठमिव भस्मी कुरु ॥ ४ ॥

अथ पञ्चमी—

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥५॥, इति।

हेऽग्ने त्वमूर्ध्वो भवोद्युक्तो भव। अस्मदाधि अस्माकमुपरि ये शत्रवः संवृत्तास्तान्प्रति विध्य। हेऽग्ने दैव्यानि वीर्याण्याविष्कुरु। यातुजूनां यातुधानानां स्थिराणि वीर्याणि अवमतानि यथा भवन्ति तथा तनुहि कुरु। जामिः पुनः पुनस्ताडितः, अजामिरताडितस्तादृशान्सर्वान्प्रमृणीहि मारय ॥ ५ ॥

अथ षष्ठी—

स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत्। विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥ ६ ॥, इति।

हे यविष्ठ युवतम यो यजमान ईवते स्वगृहं प्रति गमनवते ब्रह्मणे परिवृढाय तुभ्यं गातुं हविर्लक्षणमन्नमैरत्प्रददाति स एव यजमानस्त्वदनुग्रहयुक्तां सुमतिं जानाति। त्वमपि अर्यः स्वामी भूत्वा रायो धनानि द्युम्नानि यशांसि दुरो गृहांश्चाभिलक्ष्यास्मै यजमानाय विश्वानि सुदिनानि यथा भवन्ति तथा द्यौत्प्रकाशयानुगृहाण ॥ ६ ॥

अथ सप्तमी—

सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः। पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना साऽसदिष्टिः ॥ ७ ॥, इति।

---

१ ख. 'तसं न शुष्कका'। २ क. ग. घ. ङ. 'नस्तवानु'।

हेऽग्ने यो यजमानः स्व आयुषि यावज्जीवं दुरोणे स्वगृहे नित्येन प्रतिदिनमनुष्ठेयेन हविषा त्वां पिप्रीषति प्रीणयितुमिच्छति यश्चोक्थैः शस्त्रैः पिप्रीषति स एव सुभगः सौभाग्यवान्सुदानुः शोभनदानवानप्यस्तु । अस्मा अस्य यजमानस्य सा सर्वाऽपीष्टिः सुदिनैवासन्नवति ॥ ७ ॥

अथाष्टमी—

अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता
जरतामियं गीः । स्वश्वास्त्वा सुरथा मर्जये-
मास्मे क्षत्राणि धारयेरनु द्यून् ॥८॥, इति ।

हेऽग्ने तव सुमतिमनुग्रहरूपामर्चामि मनसा पूजयामि । अर्वागर्वाचीनाऽपि घोषि घोषवतीयं स्तुतिरूपा मदीया गीर्वावाता पौनःपुन्येन प्रसृता ते त्वयि सम्यग्जरतां जीर्यतां त्वां विहायान्यत्र मा गच्छतु । वयं तु त्वत्प्रसादाच्छोभनैरश्वै रथैश्च युक्ताः सन्तस्त्वा मर्जयेम सेवेमहि । त्वमप्यनुद्यूननुदिनमस्मे अस्मासु क्षत्राणि सामर्थ्यानि धारयेर्धारय ॥ ८ ॥

अथ नवमी—

इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवाꣳ-
समनु द्यून् । क्रीडन्तस्त्वा सुमनसः सपेमाभि
द्युम्ना तस्थिवाꣳसो जनानाम् ॥ ९ ॥, इति ।

हेऽग्ने इहास्मिँल्लोके श्रेयोर्थी पुरुषस्त्वामेव भूरि बाहुल्येन सर्वत उपचरेत्त्मन्नात्मनि स्वनिमित्तम् । कीदृशं त्वां, दोषावस्तर्दीदिवांसं रात्रिंदिवं दीप्यमानम् । कियन्तं कालमुपचारः, अनुद्यूननुदिनम् । तस्माद्वयं क्रीडन्तो हृष्टमनसस्त्वां सपेम संगच्छेम भजेम । किं कुर्वन्तः, जनानां मध्ये द्युम्नानि धनानि अभितस्थिवांसस्त्वत्प्रसादादधिष्ठितवन्तः ॥ ९ ॥

अथ दशमी—

यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसु-
मता रथेन । तस्य त्राता भवसि तस्य सखा
यस्त आतिथ्यमानुषग्जुजोषत् ॥ १० ॥, इति ।

हेऽग्ने त्वत्प्रसादाच्छोभनैरश्वैः समीचीनेन हिरण्येन च युक्तो यो यजमानो हविःस्वरूपधनवता रथेन सह त्वामुपयाति तस्य त्वं त्राता भवसि । किं च

यस्त्वातिथिसत्कारमानुषक्प्रतिदिनं जुजोषत्प्रीतिपुरःसरं करोति तस्य त्वं सखिवत्स्वाधीनो भवसि ॥ १० ॥

अथैकादशी—

महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोत-
मादन्वियाय । त्वं नो अस्य वचसश्चिकिद्धि
होतर्यविष्ठ सुक्रतो दमूनाः ॥ ११ ॥, इति ।

हेऽग्ने बन्धुता त्वदीयेन बन्धुत्वेन महोऽसुराणां तेजोऽधिक्षेपरूपैर्वचोभिरेव रुजामि भञ्जयामि । तत्त्वदीयं बन्धुत्वं गोतमाद्गोतमसदृशादध्यापकात्पितुर्मामनुप्राप । हे होतर्देवानामाह्वातर्यविष्ठ युवतम सुक्रतो शोभनक्रतो यागनिष्पादक दमूना दान्तमनास्त्वं नोऽस्मदीयस्य वचसोऽधीतवेदस्य रहस्यं चिकिद्धि जानासि ॥ ११ ॥

अथ द्वादशी—

अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका
अश्रमिष्ठाः । ते पायवः सध्रियञ्चो निष-
द्याग्ने तव नः पान्त्वमूर ॥ १२ ॥, इति ।

हेऽग्ने तव ते[1] नः पान्तु, त्वदीयास्तथाविधा रश्मयोऽस्मान्पालयन्तु । अमूरेत्यग्निविशेषणम् । मूर्मूर्छा तद्वान्मूरस्ततोऽन्यत्वादमूरस्तस्य संबोधनम् । कीदृशास्ते रश्मयः, स्वप्नजन्मानो मिथ्याभूता न भवन्तीति अस्वप्नजः । व्यत्ययेनैकवचनम् । तरणयो दुरितरूपं तमस्तारयन्ति । सुशेवाः सुखेन सेवितुं योग्याः । अतन्द्रासोऽप्रमत्ताः । अवृका अहिंसकाः । अश्रमिष्ठाः श्रमरहिताः । पायवः पालकाः । सध्रियञ्चः सह प्रवर्तमानाः । निषद्य यागप्रदेशे स्थित्वा ॥ १२ ॥

अथ त्रयोदशी—

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं
दुरितादरक्षन् । ररक्ष तान्त्सुकृतो विश्ववेदा
दिप्सन्त इद्रिपवो ना ह देभुः ॥ १३ ॥, इति ।

हेऽग्ने तव संबन्धिनः पालका ये रश्मयो ममताख्यायाः कस्याश्चिद्योषि-

---

१ ख. ते रश्मयो नोऽस्मान्पान्तु । २ ख. शक्याः ।

तोऽपत्यं कचिदन्धं पश्यन्तो दुरितादान्ध्यलक्षणादरक्षन् । इयं त्वाख्यायिका कापि ब्राह्मणान्तरे द्रष्टव्या । विश्वं वेत्तीति विश्ववेदाः । तादृशो भवान्सुकृतः शोभनकर्मकारिणस्तान्त्रशमीत्ररक्ष । ते रिपवो राक्षसास्तान्दिप्सन्त इदिव परिभवितुमिच्छन्तोऽपि *ना (न) ह देभुर्नैव परिबभूवुः ॥ १३ ॥

अथ चतुर्दशी—

त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ १४ ॥, इति ।

हेऽग्ने वयं तव प्रणीती प्रेरणया वाजानन्नान्यश्याम । कीदृशा वयं, त्वया सधन्यः । सह यज्ञकर्म नयन्तीति सधन्याः । त्वोतास्त्वया रक्षिताः । हे सत्यताते सत्यविस्तार, उभा शंसा त्वदग्रेऽस्माभिः शंसनीयावैहिकामुष्मिकौ पुरुषार्थावुभौ सूदयं [क्षर देहि] । हेऽह्रयाण भक्तानामलज्जाकरानुष्ठुया कृणुहि साधनानुष्ठापनेन तावुभौ कुरु ॥ १४ ॥

अथ पञ्चदशी—

अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमानं गृभाय । दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ १५ ॥, इति ।

हेऽग्नेऽया समिधाऽनया सामिधेन्या ते त्वां विधेम परिचरेम । अस्माभिः शस्यमानं स्तोमं स्तोत्रं प्रतिगृभाय प्रतिगृहाण । अशसोऽप्रशस्तान्रक्षसो राक्षसान्दह । मित्रमुपकारकं महस्तेजो यस्यासौ मित्रमहा हे मित्रमहो द्रुहो वैरिकृतद्रोहान्निदो निन्दाया अवद्यादनुष्ठानदोषाच्चास्मान्पाहि ॥ १५ ॥

अथ षोडशी । सा तु पुरोनुवाक्या—

रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥ १६ ॥, इति ।

---

* तैत्तिरीयसंहितापदपाठानुरोधेन न हेत्यपेक्षितम् ।

---

१ ख. °य रक्ष । हेऽ° । २ ख. °दशास्त्रीयानु° । ३ ख. °हि ॥ १५ ॥ इति पञ्चदश सामिधेन्यः । अ° ।

रक्षसां हन्तारमन्नवन्तमग्निमाभिमुख्येन दीपयामि। जगतां मित्रं प्रथिष्ठं विस्तीर्णतमं शर्म शरणमुपयामि भजामि। एतदादिभिः क्रतुभिः समिद्धः[1] संज्वलितः शिशानस्तीक्ष्णः सोऽग्निर्दिवा रिषो हिंसकादस्मान्पातु। स एव नक्तमपि पातु ॥ १६ ॥

अथ सप्तदशी। सा तु याज्या—

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा। प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ १७ ॥, इति।

अयमग्निर्बृहता ज्योतिषा विभाति। विश्वानि महित्वा माहात्म्येनाऽऽविष्कुरुते। अदेवीरासुरीर्दुरेवा दुरत्यया मायाः प्रसहते विनाशयति। रक्षसे राक्षसान्विनिक्षे विनाशयितुं शृङ्गे द्वे ज्वाले शिशीते तीक्ष्णी करोति ॥ १७ ॥

अथाष्टादशी। सा तु विकल्पिता याज्या—

उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ। मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥ १८ ॥, इति।

तिग्मं तीक्ष्णत्वमेवाऽऽयुधं येषां रश्मीनां ते तिग्मायुधास्ते तव स्वानासोऽनेन पुरोडाशेन ध्वनिं कुर्वन्तः। तादृशा अग्ने रश्मय उत दिवि षन्तु द्युलोकेऽपि प्रसरन्तु। किमर्थं, रक्षसे हन्तवा उ राक्षसान्हन्तुमेव। अस्याग्नेर्भामा भासो रश्मयो मदे चिदस्मद्धर्षायैव प्ररुजन्ति प्रतिपक्षिणो भञ्जन्ति। अदेवीरासुर्यः परिबाधः सर्वतः कृता बाधा न वरन्ते नैवास्मानावृण्वन्ति। अत्र षोडशी विकल्पिता सामिधेनी[2]। उत्तरे याज्यानुवाक्ये इति केचित्। तथाऽस्तु ॥

अत्र विनियोगसंग्रहः—

"कृणु राक्षोघ्नके यागे सामिधेन्यस्तु षोडश।
याज्यानुवाक्ये द्वे अष्टादश मन्त्रा इहेरिताः[3] ॥ १ ॥" इति ॥

---

१ क. ग. घ. ङ. °मिद्धो ज्वालि°। २ ख. °नी।। तेन षोडश सामिधेन्य इत्यपि पक्षः। ३°। ख. इहोदिताः।

मीमांसा तु उभा वामिन्द्राग्नी इत्यत्रैवं सर्वत्र याज्याकाण्डे योजनीया ॥ छन्दोऽपि सर्वासामृचामत्र त्रिष्टुबेव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ प्रथमाष्टके तृतीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददेऽभ्रिरसि नारिरसि परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धतां लोकः पितृषदनो यवोऽसि यवयास्मद्द्वेषः ( १ ) यवयारातीः पितॄणाꣳ

१ क. ग. घ. ङ. °व या° ।

सदनमस्युद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीं दृꣳह द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह घृतेन द्यावापृथिवी आ पृणेथामिन्द्रस्य सदोऽसि विश्वजनस्य छाया परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमस्यैन्द्रमसीन्द्राय त्वा ( २ ) ॥

( द्वेष इमा अष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टके तृतीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । पूष्णः । हस्ताभ्याम् । एति । ददे । अभ्रिः । असि । नारिः । असि । परिलिखितमिति परि—लिखितम् । रक्षः । परिलिखिता इति परि—लिखिताः । अरा-

तयः । इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् । अस्य । ग्रीवाः । अपीति । कृन्तामि । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । शुन्धताम् । लोकः । पितृषदन इति पितृ—सदनः । यवः । असि । यवय । अस्मत् । द्वेषः । (१) यवय । अरातीः । पितृणाम् । सदनम् । असि । उदिति । दिवम् । स्तभान । एति । अन्तरिक्षम् । पृण । पृथिवीम् । दृꣳह । द्युतानः । त्वा । मारुतः । मिनोतु । मित्रावरुणयोरिति मित्रा—वरुणयोः । ध्रुवेण । धर्मणा । ब्रह्मवनिमिति ब्रह्म—वनिम् । त्वा । क्षत्रवनिमिति क्षत्र—वनिम् । सुप्रजावनिमिति सुप्रजा—वनिम् । रायस्पोषवनिमिति रायस्पोष—वनिम् । परीति । ऊहामि । ब्रह्म । दृꣳह । क्षत्रम् । दृꣳह । प्रजामिति प्र—जाम् । दृꣳह । रायः । पोषम् । दृꣳह । घृतेन । द्यावापृथिवी इति द्यावा—पृथिवी । एति । पृणेथाम् । इन्द्रस्य । सदः । असि । विश्वजनस्येति विश्व—जनस्य । छाया । परीति । त्वा । गिर्वणः । गिरः । इमाः । भवन्तु । विश्वतः । वृद्धायुमिति वृद्ध—आयुम् । अन्विति । वृद्धयः ।

( अग्नीषोमीयपश्वङ्गत्वेन पूर्वोक्तशेषभूतसदोनिर्माणादि )

जुष्टाः। भवन्तु। जुष्टयः। इन्द्रस्य। स्यूः। असि। इन्द्रस्य। ध्रुवम्। असि। ऐन्द्रम्। असि। इन्द्राय। त्वा (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमकाण्डे तृतीयः प्रपाठकः। )
( तत्र प्रथमोऽनुवाकः। )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

द्वितीयस्मिन्प्रपाठके[1] सोमक्रयं प्राधान्येन प्रतिपाद्य ततो हविर्धानमण्डपनिर्माणपर्यन्तं कर्मजातं प्रतिपादितम्। अथ तृतीयेऽस्मिन्प्रपाठकेऽग्नीषोमीयपशुः प्राधान्येन प्रतिपाद्यते। आदौ तावत्पूर्वशेषः सदोमण्डपनिर्माणादिः प्रतिपाद्यते। तत्रानुवाकार्था विनियोगसंग्रहकारेणाभिहिताः—

"पशुप्रश्ने तृतीयेऽस्मिन्ननुवाकाश्चतुर्दश।
सदश्चोपरवा धिष्ण्या वैसर्जनहुतिस्तथा ॥ १ ॥
यूपच्छेदस्तत्प्रतिष्ठा पशूपाकृतिहिंसने।
वपोत्खेदो वसाहोमो गुदकाण्डाहुतिस्तथा ॥ २ ॥
वसतीवर्युपादानं सोमोपावहृतिस्तथा।
काम्ययाज्या इति प्रोक्ता अर्था अत्रानुवाकगाः॥३॥" इति॥

**देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे—**

कल्पः—"अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य शालामुखीयाच्छङ्कोरनुस्यन्त्यां षट्प्राचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं तत्राभ्रिं[2] निदधाति स औदुम्बर्यै काल औदुम्बर्यै कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा दद इति" इति।

---

१ ख. °तीये प्रपा°। २ क. घ. ङ. तदाभ्रिं।

अभ्र्यादानं विधत्ते—

" देवस्य त्वा सवितुः प्रसव इत्यभ्रिमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामि त्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै " [ सं० का० ६ प्र० २ अ० १० ] इति ॥

## अभ्रिरसि नारिरसि—

कल्पः—" आदायाभिमन्त्रयतेऽभ्रिरसि नारिरसीति " इति ।

खननसाधनभूता काष्ठमयी तीक्ष्णमुखाग्राऽभ्रिरित्युच्यते । यद्यपि त्वम भ्रिरसि तथाऽप्यस्मान्प्रति नारिरशत्रुरसि ॥

नारिशब्दप्रयोजनमाह—

" वज्र इव वा एषा यदभ्रिरभ्रिरसि नारिरसीत्याह शान्त्यै " [ सं० का० ६ प्र० २ अ० १० ] इति ॥

## परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि—

कल्पः—" तयौदुम्बर्या अवटं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामीति " इति ॥

परिलेखनप्रयोजनमाह—

" काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति " [सं०का०६प्र०२अ०१०] इति॥

## दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा—

बौधायनः—" औदुम्बर्येषा स्थूणा प्रक्षालिता प्रपन्ना प्रागवटादुपशेते तां परस्तादर्वाचीं प्रोक्षति दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति " इति ।

आपस्तम्बः—" दिवे त्वेत्यग्रं [१]प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम् " इति ।

१ क. घ. ङ. कालस्थानं ।

प्रोक्षामीत्यध्याहारः । औदुम्बरीभागानां(णां) लोकत्रयात्मकत्वं मन्त्रेणाभिप्रेतमित्याह—

"दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेत्याहैभ्य एवैनां लोकेभ्यः प्रोक्षति" [ सं० का० ६ प्र० २ अ० १० ] इति ॥

अग्रमारभ्य मूलपर्यन्तं प्रोक्षणं विधत्ते—

"परस्तादर्वाचीं प्रोक्षति तस्मात्परस्तादर्वाचीं मनुष्या ऊर्जमुप जीवन्ति" [ सं० का० ६ प्र० २ अ० १० ] इति ।

ऊर्ध्ववर्तिनो मुख्या( खा )दारभ्यार्वाचीमुदरावसानम् ॥

## शुन्धतां लोकः पितृषदनः—

कल्पः—"अवटेऽपोऽवनयति शुन्धतां लोकः पितृषदन इति" इति ।

पितरः सीदन्त्यस्मिन्निति पितृषदनोऽवटाख्यो लोकः शुद्धो भवतु ॥

अववनयनं विधत्ते—

"क्रूरमिव वा एतत्करोति यत्खनत्यपोऽव नयति शान्त्यै" [ सं० का० ६ प्र० २ अ० १० ] इति ॥

## यवोऽसि यवयास्मद्द्वेषो यवयारातीः—

कल्पः—"यवान्प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति" इति ।

हे धान्य त्वं यवोऽसि अमिश्रीकर्तोऽसि । अतो द्वेषिणो राक्षसानितराणि शत्रूनस्मत्तो वियोजय ॥

पूर्वोक्तास्वप्सु यवप्रस्कन्दनं विधत्ते—

"यवमतीरव नयत्यूर्ग्वै यव ऊर्गुदुम्बर ऊर्जैवोर्ज्ँ समर्धयति" [ सं० का० ६ प्र० २ अ० १० ] इति ॥

औदुम्बर्या निखातभागादूर्ध्वभागे प्रमाणं विधत्ते—

"यजमानेन संमितौदुम्बरी भवति यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति" [ सं० का० ६ प्र० २ अ० १० ] इति ।

यजमानस्य यावत्पर्याप्तं तावदन्नं भवतीत्यर्थः ॥

## पितृणाँ सदनमसि—

कल्पः—"बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृणाँ सदनमसीति" इति ।

बर्हिर्हस्तो बर्हिर्मुष्टिः । हे बर्हिः पितृणां स्थानमसि ॥

विधत्ते—

" पितृणाꣳ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्यं ह्येतद्यन्निखातम् " [ सं० का० ६ प्र० २ अ० १० ] इति।

निखातस्य पितरो देवतेत्यर्थवादान्तरादवगन्तव्यम् ॥

## उद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीं दृꣳह—

कल्पः—" अथैनामुच्छ्रयति उद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीं दृꣳहेति " इति।

हे औदुम्बरि द्युलोकमूर्ध्वदेशे विधारय, अन्तरिक्षं पूरय, पृथिवीं दृढीं कुरु।

उच्छ्रयणं विधत्ते—

" यद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्या निखाता स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनां मिनोत्यथो स्वारुहमेवैनां करोति " [ सं० का० ६ प्र० २ अ० १० ] इति।

यदि बर्हिरस्तीर्त्वा प्रथमत एव तामुच्छ्रयेत्तदा पितॄणां निखातं मनुष्याणामूर्ध्वं निखातादित्ययं विभागो न स्यात्किं तु कृत्स्ना पितृदेवत्यैव स्थापिता भवेत्। बर्हिषः पृथिवीजन्यत्वेन तत्पृथिव्यामेव कृतं भवति। किं च स्वसंबद्धामेवैनां करोतीति नोक्तदोषः ॥

मन्त्रे दिवमित्यादिपदानामुपयोगमाह—

" उद्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै " [ सं० का० ६ प्र० २ अ० १० ] इति ॥

## द्युतानस्त्वा मारुतो मिनोतु
## मित्रावरुणयोर्ध्रुवेण धर्मणा—

कल्पः—"अथैनां प्राचीनकर्णामुच्छ्रितामवटे प्रक्षिपेत्—द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेति " इति।

हे औदुम्बरि मित्रावरुणयोः संबन्धिना दृढेन त्वदीयधारणेनेतस्ततः पतितां त्वां मरुत्पुत्रो द्युताननामको देवोऽवटे प्रक्षिपतु ॥

इतरपरित्यागेन द्युतानस्वीकारकारणमाह—

" द्युतानस्त्वा मारुतो मिनोत्वित्याह द्युतानो ह स्म वै मारुतो देवानामौदुम्बरीं मिनोति तेनैवैनां मिनोति " [सं० का० ६ प्र० २ अ० १०] इति

१ ख. तत्पितृदैवत्यमेवं कृ°।

(अग्नीषोमीयपश्वङ्गत्वेन पूर्वोक्तशेषभूतसदोनिर्माणादि)

## ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि—

कल्पः—“ अथैनां प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति ” इति ।

ब्रह्म ब्राह्मणजातिं वनति भजतीति ब्रह्मवनिः । हे औदुम्बरि ब्राह्मण्यादिप्रदां त्वां परितो मृत्तिकां प्रक्षिपामि ॥

मन्त्रस्य स्पष्टार्थतां दर्शयति—

“ ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत् ” [ सं० का० ६ प्र० २ अ० १० ] इति ॥

## ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह—

कल्पः—“ मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेति ” इति ।

हे दण्ड ब्राह्मण्यादीन्दृढी कुरु । मन्त्रोऽयं ब्राह्मणेनोपेक्षितः ॥

## घृतेन द्यावापृथिवी आ पृणेथाम्—

कल्पः—“ तस्या विशाखे हिरण्यं निधाय घृतेन द्यावापृथिवी आ पृणेथामिति स्रुवेण हिरण्ये जुह्वदान्तमौदुम्बरीमन्ववस्रावयति ” इति ।

हे द्यावापृथिवीरूपे औदुम्बर्या अग्रमूले घृतेनानेन समन्तात्पूर्येथाम् ॥

विधत्ते—

“ घृतेन द्यावापृथिवी आ पृणेथामित्यौदुम्बर्यां जुहोति द्यावापृथिवी एव रसेनानक्ति ” [ सं० का० ६ प्र० २ अ० १० ] इति ॥

अग्रे हुतस्याऽऽज्यस्य मूलपर्यन्ततां विधत्ते—

“ आन्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसाऽनक्ति ” [ सं० का० ६ प्र० २ अ० १० ] इति ।

यजमानस्य शिर आरभ्य पादपर्यन्तं तेजः संपादितं भवति ॥

## इन्द्रस्य सदोऽसि विश्वजनस्य छाया—

बौधायनः—“ तस्या उच्छ्रयणमनु प्राचीनकर्णाः स्थूणा उच्छ्रयन्ति तासू-

१ ख. °रि ब्रह्मदेवतां ब्रा° । २ ख. जुह्वा आन्त° ।

दीचो वंशान्प्रोहन्त्यध्यस्यन्ति मध्यमं छदिरिन्द्रस्य सदोऽसीति, विश्वजनस्य छायेति ये अभितो भवतः" इति।

आपस्तम्बः—"उदीचः प्राचश्च वंशानत्याधायैन्द्रमसीति तेषु मध्यमानि त्रीणि च्छर्दींष्यध्यूहति, विश्वजनस्य छायेति त्रीणि दक्षिणानि, इन्द्रस्य सदोऽसीति त्रीण्युत्तराणि" इति।

ऐन्द्रमसीति शाखान्तरेऽवगतो मन्त्रः। उत्तरयोर्मन्त्रयोरत्रैवाऽऽम्नातयोर्ब्राह्मणान्तरानुसारेण क्रमव्यत्ययः॥

विधत्ते—

"ऐन्द्रमसीति छदिरधि नि दधात्यैन्द्रꣳ हि देवतया सदो विश्वजनस्य छायेत्याह विश्वजनस्य ह्येषा छाया यत्सदः" [सं०का०६प्र०२अ०१०] इति।

इन्द्रस्य सदोऽसीत्ययं मन्त्र उपेक्षितः॥

सदस्थानां कामनाभेदेन च्छदिषां संख्यां विधत्ते—

"नवछदि तेजस्कामस्य मिनुयात्त्रिवृता स्तोमेन संमितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशछदीन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशछदि भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशछदि प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविꣳशतिछदि प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै" [सं० का० ६ प्र० २ अ० १० ] इति।

नवसंख्याकानि च्छर्दींषि यस्य सदसस्तन्नवछादि मिनुयात्कुर्यात्। त्रिवृत्पञ्चदशसप्तदशैकविंशशब्दैः साम्न आवृत्तिभेदेन निष्पन्नाः स्तोमा उच्यन्ते। त्रिवृत्स्तोमे सामावृत्त्यभावेऽपि ऋचां नवत्वात्संख्यासाम्यम्। प्रजापतिमुखादग्निना सहोत्पन्नत्वात्त्रिवृतस्तेजस्त्वम्। वीर्यवतः प्रजापतिबाहुत उत्पन्नतया पञ्चदशस्य वज्रत्वम्। आ श्रावयेत्यादिमन्त्राक्षराणां संख्यया समत्वात्सप्तदशस्य प्रजापतित्वम्। त्रिवृदादीनामन्तर्भावेनैकविंशस्य प्रतिष्ठात्वम्॥

औदुम्बरीस्थापनं सदोमण्डपमध्यप्रदेशं विधत्ते—

"उदरं वै सद ऊर्गुदुम्बरो मध्यत औदुम्बरीं मिनोति मध्यत एव प्रजानामूर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जते" [सं०का०६प्र०२अ०१०]इति॥

दक्षिणदिग्गतच्छदिषामग्राण्युत्तरदिग्गतच्छदिषामुपरि दृश्यमानतया स्थापनीयानीति विधत्ते—

१ ख. °येत्यभि°। २ ख. साम्नामावृ°। ३ ख. °न्नतया त्रिवृ°। ४ ख. °णां प्रजापतिस्वरूपाणां सं°। ५ ख. °नस्य स°।

( अग्नीषोमीयपश्वङ्गत्वेन पूर्वोक्तशेषभूतसदोनिर्माणादि )

" यजमानलोके वै दक्षिणानि छदीꣳषि भ्रातृव्यलोक उत्तराणि दाक्षिणान्युत्तराणि करोति यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः " [ सं० का० ६ प्र० २ अ० १० ] इति ।

लोके स्थाने । उत्तर उत्कृष्टः ॥

छदिषामन्तरालच्छिद्रेषु तृणमूलैराधानं विधत्ते—

" अन्तर्वर्तान्करोति व्यावृत्त्यै तस्मादरण्यं प्रजा उप जीवन्ति " [ सं० का० ६ प्र० २ अ० १० ] इति ।

मूलानां विलक्षणत्वाच्छदिर्भ्यो व्यावृत्तिर्भवति । यस्मात्तृणमरण्यजन्यं तस्मात्तृणकाष्ठलाभाय प्रजा अरण्यमुपजीवन्ति ॥

## परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः—

कल्पः—" अथैनान्परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इति " इति ।

गीर्भिः स्तुतिभिर्वननीयो भजनीय इन्द्रः सदोभिमानी गिर्वणः । हे गिर्वण इमाः स्तोत्रशस्त्ररूपा गिरः सर्वतः कटकरूपेण त्वां परिभवन्तु वेष्टयन्तु । कीदृश्यः । दीर्घायुषं त्वामनु स्वयमपि वृद्धिमत्यः । किं च, जुष्टयोऽस्मत्सेवास्तव जुष्टाः प्रिया भवन्तु ॥

मन्त्रस्य स्पष्टार्थतां दर्शयति—

" परि त्वा गिर्वणो गिर इत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० २ अ० १० ] इति ॥

## इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमस्यैन्द्रमसीन्द्राय त्वा ॥

*कल्पः—" अथ दक्षिणद्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भणं करोति प्रवर्तयति दर्भणे स्यन्द्यामिन्द्रस्य स्यूरसीति, इन्द्रस्य ध्रुवमसीति ग्रन्थिं करोति+ तं तदानीमेव विस्रस्याहाकुर्वन्तो हस्तान्ग्रन्थकौशलैर्निस्तिष्ठन्ति, एवमेवोत्तरं द्वार्बाहुमेवमेवापरौ द्वार्बाहू निस्तिष्ठन्ति " इति ।

---

* एतत्कल्पस्यार्थः सम्यक्तया न ज्ञायते । + अत्रैन्द्रमसीन्द्राय त्वेतिमन्त्रविनियोगप्रदर्शकं किंचित्त्रुटितं स्यादित्यनुमीयते ।

---

१ ख. °णपूतैः पिधा° । २ क. ख. °टरू° । ३ क. घ. °भंस्य° । ४ च. हस्तग्रन्थी कौ° । ५ ड. °न्ग्रन्थीन्कौश° ।

व्याख्यातं हविर्धानेन ॥

व्याचष्टे—

" इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमसीत्याहैन्द्रꣳ हि देवतया सदः " [ सं० का० ६ प्र० २ अ० १० ] इति ॥

प्रज्ञातग्रन्थेर्विस्रंसनं विधत्ते—

" यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्रꣳसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात्स विस्रस्यः " [ सं० का० ६ प्र० २ अ० १० ] इति ॥

अत्र विनियोगसंग्रहः—

" देवस्येत्यभ्रिमादत्ते ह्यभ्रिरित्यनुमन्त्रणम् ।
परीत्यवटमालिख्य दिवेऽग्रे मध्यमूलयोः ॥ १ ॥
प्रोक्षेदौदुम्बरीं शुन्ध शेषो गर्तेऽवनीयते ।
यवो यवं क्षिपेत्तत्र पितृ दर्भेण संस्तृतिः ॥ २ ॥
उदौदुम्बर्युच्छ्रयोऽथ द्युता तामवटे क्षिपेत् ।
ब्रह्म पांसुं क्षिपेद्गर्ते ब्रह्मे गर्तदृढीकृतिः ॥ ३ ॥
घृतेनौदुम्बरीहोम इन्द्रविश्वद्वयादिशोः ।
छर्दींष्यध्यू(ध्यु)ह्य कर्तव्यः परि त्वेति परिश्रयः ॥ ४ ॥
इन्द्र रज्जुं क्षिपेदिन्द्र बद्ध्वैन्द्रमिति मण्डपम् ।
स्पृशेद्धस्तेन मन्त्रास्तु विंशतिः समुदीरिताः ॥ ५ ॥" इति ॥

अथ मीमांसा ।

तृतीयाध्यायस्याष्टमपादे चिन्तितम्—

" वृष्टिकामी सदो नीचैर्मिनुयादिति कामना ।
अध्वर्योः स्वामिनो वाऽऽद्यो वाक्यान्मातुः स उच्यते ॥
परस्मैपदतोऽध्वर्युव्यापारस्य परार्थता ।
श्रुताऽतो वाक्यबाधेन तपोवत्स्वामिनोऽस्तु तत् " इति ॥

ज्योतिष्टोमे श्रूयते—" यः कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात् " इति ।

यथा पुरस्तात्पश्चाच्चावस्थितौ हविर्धानप्राचीनवंशावुच्चौ तथा सदो नोच्चं किं तु नीचं कार्यमित्यर्थः । इयं च वृष्टिकामनाऽध्वर्योर्युक्ता । यः कामयेत स मिनुयादिति वाक्येन कामयितृमात्रोरेकत्वावगमात् । मातृत्वं चाध्वर्योरित्यवि-

---

१ क. °धाने । व्या° । २ ख. °ह्म तत्र द° । ३ ख. यदि । ४ क. घ. ङ. °वुभौ त° । ५ ख. °र्थः । अत्र वृ° ।

(हविर्धानाभ्यन्तर उपरवाभिधानम्)

वादम्। तस्मात्स एव कामयितेति चेन्मैवम्। मिनुयादिति परस्मैपदेनाध्वर्यु-व्यापारफलस्य परगामिता प्रतीयते। ततो वृष्टिलक्षणफलस्य यजमानगामित्वात्परस्मैपदश्रुत्या वाक्यं बाधित्वा कामस्य यजमानकर्तृकत्वं द्रष्टव्यम्। यजमानकामितां वृष्टिं पर्जन्यः संपादयत्वित्येवं[1] योऽध्वर्युः कामयेत स मिनुयादिति वाक्यं व्याख्येयम्। "एवं विदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति" इत्यृत्विजोऽपि काम इति चेत्तर्हि तस्मिन्नुद्गीथोपासने वचनादृत्विजोऽपि फलमस्तु॥

अथ च्छन्दः—

परि त्वा गिर्वण इत्यनुष्टुप्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

(अथ प्रथमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः।)

---

रक्षोहणो वलगहनो वैष्णवान्खनामीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसाऽवबाढो वलगः किमत्र भद्रं तन्नौ सह विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणां हन्ता (१) रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वलगहनोऽव नयामि वैष्णवान्यवोऽसि यवयास्मद्द्वेषो यव-

---

१ क. घ. ङ. 'जन्यं संपादयामीति'।

यारांती रक्षोहणों वलगहनोऽवं स्तृणामि वैष्ण-
वान्रंक्षोहणों वलगहनोऽभि जुंहोमि वैष्ण-
वान्रंक्षोहणौं वलगहनावुपं दधामि वैष्णवी
रंक्षोहणौं वलगहनौ पर्यूंहामि वैष्णवी रंक्षो-
हणौं वलगहनौ परिं स्तृणामि वैष्णवी रंक्षो-
हणौं वलगहनौं वैष्णवी बृहन्नंसि बृहद्ग्रांवा
बृहतीमिन्द्रांय वाचं वद ( २ ) ॥

( हन्तेन्द्रांय द्वे चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

रक्षोहण इतिं रक्षः—हनंः । वलगहन इतिं वल-
ग—हनंः । वैष्णवान् । खनामि । इदम् । अहम् ।
तम् । वलगमितिं वल—गम् । उदितिं । वपामि ।
यम् । नः । समानः । यम् । असंमानः । निचखा-
नेतिं नि—चखानं । इदम् । एनम् । अधंरम् ।
करोमि । यः । नः । समानः । यः । असंमानः ।
अरातीयतिं । गायत्रेणं । छन्दंसा । अवंबाढ इत्य-
वं—बाढः । वलग इतिं वल—गः । किम् । अत्रं ।

भद्रम् । तत् । नौ । सह । विराडितिं वि-राट् । असि । सपत्नहेतिं सपत्न-हा । सम्राडितिं सम्-राट् । असि । भ्रातृव्यहेतिं भ्रातृव्य-हा । स्वराडितिं स्व-राट् । असि । अभिमातिहेत्यंभिमाति-हा । विश्वाराडितिं विश्व-राट् । असि । विश्वांसाम् । नाष्ट्राणांम् । हन्ता । ( १ ) रक्षोहण इतिं रक्षः-हनंः । वलगहन इतिं वलग-हनंः । प्रेतिं । उक्षामि । वैष्णवान् । रक्षोहण इतिं रक्षः-हनंः । वलगहन इतिं वलग-हनंः । अवेतिं । नयामि । वैष्णवान् । यवंः । असि । यवयं । अस्मत् । द्वेषंः । यवयं । अरांतीः । रक्षोहण इतिं रक्षः-हनंः । वलगहन इतिं वलग-हनंः । अवेतिं । स्तृणामि । वैष्णवान् । रक्षोहण इतिं रक्षः-हनंः । वलगहन इतिं वलग-हनंः । अभीतिं । जुहोमि । वैष्णवान् । रक्षोहणाविर्तिं रक्षः-हनौं । वलगहनाविर्तिं वलग-हनौं । उपेतिं । दधामि । वैष्णवी इतिं । रक्षोहणाविर्तिं रक्षः-हनौं । वलगहनाविर्तिं वलग-हनौं । परीतिं । ऊहामि । वैष्णवी इतिं । रक्षोहणाविर्तिं रक्षः-हनौं । वलगहनाविर्तिं वलग-हनौं । परीतिं । स्तृणामि । वैष्णवी इतिं । रक्षोहणाविर्तिं रक्षः-हनौं । वलग-

हनाविति वलग—हनौ । वैष्णवी इति । बृहन् । असि । बृहद्ग्रावेति बृहत्—ग्रावा । बृहतीम् । इन्द्राय । वाचम् । वद । ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरियसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रथमेऽनुवाके सदोनिर्माणमुक्तम् । एतावता षट्त्रिंशता पदैः परिमितायां महावेद्यां निर्मातव्यानि उत्तरवेदिहविर्धानसदांसि संपन्नानि । तस्याश्च महावेद्या उत्तरदक्षिणभागस्थयोराग्नीध्रीयमार्जालीययोर्मन्त्रा न सन्त्यतो निर्मितेषु स्थानेष्वभ्यन्तरे यदन्यत्समन्त्रकं निर्मातव्यं भवति तदभिधेयम् । तत्रोत्तरवेद्यां सर्वस्याभिहितत्वाद्धविर्धानाभ्यन्तर उपरवा द्वितीयानुवाक उच्यन्ते ।

रक्षोहणो वलगहनो वैष्णवान्खनामि—

कल्पः—" दक्षिणस्य हविर्धानस्याधस्तात्पुरोक्षं चतुर उपरवानवान्तरदेशेषु प्रादेशमुखान्प्रादेशान्तरालान्करोति रक्षोहणो वलगहनो वैष्णवान्खनामीति खनति " इति ।

विष्णुर्देवता येषामुपरवाणां ते वैष्णवाः । जीर्णकटपटादिखण्डबद्धा अस्थिनखरोमपादपांसुप्रभृतयो विरोधिनां मारणार्थं ये भूमौ निखन्यन्ते ते वलगास्तान्घ्नन्तीति वलगहनः । रक्षांसि घ्नन्तीति रक्षोहणः । तादृशानुपरवनामकान्गर्तान्खनामि ॥

विधत्ते—

" शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हविर्धाने खायन्ते तस्माच्छीर्षन्प्राणाः " [ सं० का० ६ प्र० २ अ० ११ ] इति ।

उपरवबिलानां श्रोत्रनासिकादिच्छिद्रगतप्राणस्थानीयत्वाच्छिरस्थानीये हविर्धाने खननं युक्तम् ॥

विधत्ते—

" अधस्तात्खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणाः " [ सं० का० ६ प्र० २ अ० ११ ] इति ।

( हविर्धानाभ्यन्तर उपरवाभिधानम् )

यस्माद्धविर्धानस्याधोभागे भूमावुपरवास्तस्माल्लोकेऽपि शिरस्यूर्ध्वकपालाद्धध एव प्राणसंचारः ॥

वैष्णवानिति तद्धितो देवतावाचीत्याह—

" रक्षोहणो वलगहनो वैष्णवान्खनामीत्याह वैष्णवा हि देवतयोपरवाः " [ सं० का० ६ प्र० २ अ० ११ ] इति ॥

वितस्तित्रयप्रमाणं विधत्ते—

" असुरा वै निर्यन्तो देवानां प्राणेषु वलगान्न्यखनन्तान्बाहुमात्रेऽन्वविन्दन्स्माद्बाहुमात्राः खायन्ते " [ सं० का० ६ प्र० २ अ० ११ ] इति ।

निर्यन्तः पलायनोद्युक्ताः । प्राणेषु प्राणविनाशनिमित्तम् । न्यखनन्निति नितरां भूमावन्तर्धापितवन्तः ॥

**इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसाऽवबाढो वलगः—**

बौधायनः—" अथैभ्यः पांसूनुद्वपतीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसाऽवबाढो वलग इति " इति ।

आपस्तम्बो मन्त्रभेदमाह—" इदमहं तं वलगमुद्वपामीत्युदुप्योपरवाः खन्यन्तेऽवबाधते गायत्रेण छन्दसाऽवबाढो वलग इति " इति ।

अस्मान्विनाशयितुं विद्यावित्तसौभाग्यादिभिः समानोऽसमानो वा यं वलगं निचखान तं वलगमहमिदमुद्वपामि । किं चास्मानुद्दिश्य समानोऽसमानो वा यः कोऽप्यरातिवदाचरति एनमिदमधरं यजमानपादस्याधोवर्तिनं करोमि॥

गायत्रच्छन्दोभिमानिदेवेन वलगोऽवबाधितः । अशेषशत्रुसंग्रहाय समानासमानशब्दावुभावप्युपादेयावित्याह—

" इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानो यमेवास्मै तौ वलगं निखनतस्तमेवोद्वपति " [ सं० का० ६ प्र० २ अ० ११ ] इति ॥

---

१ ख. °त्युप° । २ ख. °मिदानीम° ।

चतुर्णामुपरवाणामधस्तादेकीकरणं विधत्ते—

" सं तृणत्ति तस्मात्संतृण्णा अन्तरतः प्राणाः " [ सं० का० ६ प्र० २ अ० ११ ] इति ।

प्राणापानचक्षुःश्रोत्रादयः सर्वेऽपि शरीरस्याभ्यन्तरे हृद्येकीभूय वर्तन्ते ॥

तदुपरि चतुर्णां पृथक्करणं विधत्ते—

" न सं भिनत्ति तस्मादसंभिन्नाः प्राणाः "[सं०का०६प्र०२अ०११] इति।

संभेद एकीभावस्तं न कुर्यात् । प्राणाश्च बहिः स्वस्वगोलकेषु तिष्ठन्तो नैकी भवन्ति ॥

## किमत्र भद्रं तन्नौ सह—

कल्पः—" दक्षिणपूर्वं[1] यजमानोऽवमृशति[2], उत्तरापरमध्वर्युरथ[3] यजमानः पृच्छति अध्वर्यो किमत्रेति, भद्रमितीतरः[4] प्रत्याह, तन्नौ सहेत्युक्त्वा " इति ।

अध्वर्यो, इत्यध्याह्रियते । अत्रोपरवेष्वस्मदुपयुक्तं किमस्तीति प्रश्नः । भद्रं सोमाभिषवद्वारेण भजनीयं सर्वमस्तीत्युत्तरम् । तद्भद्रमावयोः सह भवे[5]दिति यजमानोक्तिः ॥

## विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणाꣳ हन्ता—

कल्पः—" अथैनाँनभिमृशति[6] विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणाꣳ हन्तेति " इति ।

दक्षिणपूर्वमुपक्रम्य प्रदक्षिणक्रमेण चतुर्षु चत्वारो मन्त्राः । विविधं राजते सम्यग्राजते स्वयमेव राजते विश्वेषु राजत इति विराडादयः । विरुद्धेन्द्रियवृत्तिरान्तरः शत्रुः । ततो बाह्यो विरुद्धजातिः । ततोऽपि बाह्यो ग्रामसीमादौ विवदमानोऽन्यगोत्रजः । ततोऽपि बाह्याः परराष्ट्रसेनाः सर्वनाशहेतवः । एतच्चतुष्टयं सपत्नादिशब्दैर्विवक्षितम् ॥

## रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वलगहनोऽव नयामि वैष्णवान्यवोऽसि यवयास्मद्द्वेषो यवयाराती रक्षोहणो वलग-

१ ख. उपरि । २ ख. °क्षिणं पू° । ३ ख. °नोऽभिमृ° । ४ ख. °त्तरमप° । ५ ख. °मित्यध्वर्युः प्र° । ६ ख. भवत्विति । ७ ख. °नानुपस्पृश° ।

( हविर्धानाभ्यन्तर उपरवाभिधानम् )

हनोऽव स्तृणामि वैष्णवान्रक्षोहणो
वलगहनोऽभि जुहोमि वैष्णवान्—

कल्पः—" अथैनानद्भिः प्रोक्षति रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति सर्वानेवानुपूर्वमथैतेष्वपोऽवनयति रक्षोहणो वलगहनोऽव नयामि वैष्णवानिति सर्वेष्वनुपूर्वमथैतेषु यवान्प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति सर्वेष्वनुपूर्वमथैनान्बर्हिषाऽवस्तृणाति रक्षोहणो वलगहनोऽव स्तृणामि वैष्णवानिति सर्वानेवानुपूर्वमथैनान्हिरण्यमन्तर्धाय स्रुवाहुत्याऽभिजुहोति रक्षोहणो वलगहनोऽभि जुहोमि वैष्णवानिति सर्वानेवानुपूर्वम् " इति ।

किमत्रेत्यादिमन्त्रा उपेक्षिताः ॥

प्रोक्षणशेषस्य जलस्योपरवदेशेऽवनयनं विधत्ते—

" अपोऽव नयति तस्मादार्द्रा अन्तरतः प्राणाः " [ सं० का० ६ प्र० २ अ० ११ ] इति ।

मुखनासिकाचक्षुरादिगोलकेषु द्रवदर्शनात्प्राणानामार्द्रत्वम् ॥

अवनीते जले यवप्रक्षेपं विधत्ते—

" यवमतीरव नयत्यूर्ग्वै यवः प्राणा उपरवाः प्राणेष्वेवोर्जं दधाति " [ सं० का० ६ प्र० २ अ० ११ ] इति ।

या अपोऽवनयति ता यवयुक्ताः कुर्यादिति योजना ॥

उपरवेषु दर्भप्रक्षेपणं विधत्ते—

"बर्हिरव स्तृणाति तस्माल्लोमशा अन्तरतः प्राणाः" [सं० का० ६ प्र० २ अ० ११ ] इति ।

अक्षिपक्ष्मनासिकादिषु लोमदर्शनाल्लोमशत्वम् ॥

होमं विधत्ते—

" आज्येन व्याघारयति तेजो वा आज्यं प्राणा उपरवाः प्राणेष्वेव तेजो दधाति " [ सं० का० ६ प्र० २ अ० ११ ] इति ॥

रक्षोहणौ वलगहनावुप दधामि वैष्णवी
रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी
रक्षोहणौ वलगहनौ परि स्तृणामि
वैष्णवी रक्षोहणौ वलगहनौ वैष्णवी—

१ ख. स्रुवेणाभि° । २ ख. °रवेष्वपन° । ३ ख. °षु अपां द° ।

कल्पः—"अथास्यैते फलके दीर्घसोमे संतृण्णे भवतोऽसंतृण्णे एकाहे ते संसृष्टे उपदधाति रक्षोहणौ वलगहनावुप दधामि वैष्णवी इत्यथैने शङ्कुभिः परिणिहन्ति द्वाभ्यां पुरस्ताद्द्वाभ्यां पश्चाद्द्वाभ्यामभितोऽनवसर्पणाय प्रदक्षिणं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इत्यथैने बर्हिषा परिस्तृणाति रक्षोहणौ वलगहनौ परि स्तृणामि वैष्णवी इत्यथैने अभिमृशति रक्षोहणौ वलगहनौ वैष्णवी इति" इति।

फलकविशेषविवक्षया रक्षोहणाविति पुंलिङ्गनिर्देशः। हनुत्वेन ब्राह्मणे निरूप्यमाणत्वाद्वैष्णवी इति स्त्रीलिङ्गनिर्देशः॥

## बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद॥

कल्पः—"अथैने चर्मफलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यैव प्रतिष्ठेति वा तूष्णीं वा तिरश्चर्मफलके ग्राव्णोद्वादयति बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति" इति।

उद्वादयति पाषाणेन फलके शब्दं जनयेत्। हे पाषाण त्वं वीर्येण बृहन्महानसि। किं च बृहन्तोऽवयवभूता ग्रावाणो यस्य स च त्वं बृहद्ग्रावाऽसि। इन्द्रार्थमिन्द्रो यथा शृणोति तथा बृहतीमुच्चध्वनिमस्मद्यज्ञविषयां वाचं वद। त एते मन्त्रा उपेक्षिताः॥

फलकयोरत्यन्तसंश्लेषं निषेधति—

"हनू वा एते यज्ञस्य यदधिषवणे न सं तृणत्त्यसंतृण्णे हि हनू" [ सं० का० ६ प्र० २ अ० ११ ] इति।

हनू मुखस्याऽऽधारफलके सोमाभिषवाधारफलके। संतर्दनं रज्जुबन्धनादिना दृढसंश्लेषस्तमत्र न कुर्यात्॥

तद्द्विरात्रादौ प्रसङ्गाद्विधत्ते—

"अथो खलु दीर्घसोमे संतृद्ये धृत्यै" [सं० का० ६ प्र०२अ० ११] इति।

आवृत्तत्वात्सोमस्य दीर्घत्वम्। अभिषवबाहुल्याद्दार्ढ्यार्थं तत्र संतर्दनम्॥

अथ रूपकेणोपरवान्प्रशंसन्प्रसङ्गात्सनिमित्तं सदसि सोमभक्षणं विधत्ते—

"शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदरं सदो यदा खलु वै जिह्वया दत्स्वाधि खादत्यथ मुखं गच्छति यदा मुखं गच्छत्यथोदरं

१ ङ. संतृद्ये। २ घ. ङ. संस्पृष्टे। ३ ख. °य, अथैने प्र°। ४ ख. यज्ञप्र°। ५ क. घ. ङ. °र्मन्फल°। ६ ख. °स्याधरोत्तरफ°। ७ ख. °के अत्र सो°।

गच्छति तस्माद्धविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति " [ सं० का० ६ प्र० २ अ० ११ ] इति।

अत्राभिषवहोमौ विधेयस्य भक्षणस्य निमित्तम् ॥

पुनरप्युपरवस्तुत्यै प्रकारान्तरेण रूपकं परिकल्प्य तद्वेदनं प्रशंसति—

" यो वै विराजो यज्ञमुखे दोहं वेद दुह एवैनामियं वै विराट्तस्यै त्वक्चर्मोधोऽधिषवणे स्तना उपरवा ग्रावाणो वत्सा ऋत्विजो दुहन्ति सोमः पयो य एवं वेद दुह एवैनाम् " [ सं० का० ६ प्र० २ अ० ११ ] इति।

अग्निष्टोमे द्वादशसु स्तोत्रेषु विद्यमाना ऋच आवर्त्यमानाः सत्यो नवतिः संपद्यन्ते। तत्र नवसु दशकेषु प्रत्येकं विराट्छन्दोक्षरसंख्याऽस्तीत्ययं यज्ञो विराडित्युच्यते। एतदेवाभिप्रेत्य सप्तमकाण्डस्य प्रथमानुवाके समाम्नायते—" विराजमभिसंपद्यते " इति। सोऽयं यज्ञो विराडत्र कामधेनुत्वेन निरूप्यते। इयं च महावेदिरेव विराडाख्या धेनुस्तस्या धेनोर्या त्वक्तदिदमास्तृतं चर्म। ऊध आपीनभारः। तद्रूपं फलकद्वयम्। एवमन्यद्योज्यम्। परेद्युः कर्तव्यस्य यज्ञस्यायं कल्पः प्रारम्भोऽन्तःपातित्वान्मुखं, तस्मिन्मुखे विराजो धेनोर्दोहनप्रकारं यो वेद स एनां कामधेनुं सर्वथा दुग्धे। य एवं वेद दुह एवैनामिति पुनर्वचनमुपसंहारार्थम्। सेयमुपरवप्रशंसेति केचित्। स्वतन्त्रोपास्तिविधिरित्यन्ये। यथा सप्तमकाण्डान्तेऽश्वमेधप्रकरणे—" उषा वा अश्वस्य मेध्यस्य शिरः " इति स्वतन्त्रोपास्तिराम्नाता तद्वत्। तस्याश्च स्वातन्त्र्यं बृहदारण्यकस्याऽऽदौ विस्पष्टम्। एतादृशानां वाक्यानां कर्मप्रकरणादुत्कर्ष उत्तरमीमांसायां गुणोपसंहारे[2] मनश्चिदाद्यधिकरणे निर्णीतः। तस्मादुत्कर्षे स्वातन्त्र्यमनुत्कर्षे तु स्तुतित्वेनोपरववाक्याङ्गत्वमित्याकारद्वयमभ्युपेयम्[3]। अवेष्टेश्चातुर्मास्यानां च राजसूयान्तःप्रयोगबहिष्प्रयोगो[5]( गौ[6] ) यथा तद्वदेतद्द्रष्टव्यम् ॥

अत्र विनियोगसंग्रहः—

" खनेदुपरवान्रक्ष इदं तन्मृदमुद्वपेत्।
गाय तत्रावबाधेत किं स्वामी पृच्छतीतरः ॥ १ ॥
भद्रमित्याह तन्नावित्याह स्वामीतरं प्रति।
विराट्चतुर्भिः संस्पर्शो रक्षःपञ्चस्फुटक्रिया ॥ २ ॥
रक्षोऽधिषवणाख्ये तु फलके स्थापयेत्तथा।

---

१ क. °काण्डेऽश्व°। २ ख. °हारपादे म°। ३ घ. ङ. °तिस्तेनो°। ४ घ. ङ. °म्युपे°।
५ क. °योगे ब°। ६ ख. °योगा य°।

पर्युह्य परितः स्तृत्वा मन्त्रयेच्च बृहन्निति ॥
उपांशु सेवनाश्मानं सा(नेऽश्मना वा)दयेद्विंशतिर्मिता॥३॥" इति॥

अथ मीमांसा ।

तृतीयाध्यायस्याष्टमपादे चिन्तितम्—

" भद्रं तन्नौ सहेत्येतत्कस्मिन्स्वामिनि युज्यते ।
द्वित्वश्रुत्या भवेदेतदध्वर्युयजमानयोः " इति ॥

ज्योतिष्टोमे हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोरधस्ताच्चतसृष्वाग्नेय्यादिविदिक्षु चत्वार उपरवनामका गर्ता बाहुमात्रखाता अधोभागे परस्परमिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता वर्तन्ते । तेष्वेकस्मिन्नुपरवे यजमानो दक्षिणहस्तं प्रसारयति । तथैवाध्वर्युरन्यस्मिन्स्वहस्तं प्रसार्याधस्ताद्यजमानहस्तं गृह्णाति । तदा यजमानः किमत्रेत्यनेन मन्त्रेण फलं पृच्छति । अध्वर्युश्च भद्रमित्यनेन मन्त्रेणोत्तरं ब्रूते । ततो यजमानस्तन्नौ सहेत्यनेन मन्त्रेण तत्फलं स्वकीयत्वेन स्वी करोति । तस्माद्यजमानस्यैतदिति चेन्मैवम् । नावित्यनेन द्विवचनेन सहेत्यनेन चोभयगामितयैव स्वीकारात् ।

तत्रैव तृतीयपादे चिन्तितम्—

" संतृद्ये दीर्घसोमे तत्प्रकृतौ विकृतावुत ।
दीर्घस्य सोम इत्युक्तेः प्रकृतावस्तु तर्दनम् ॥
सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वतः ।
दैर्घ्ययुक्तेऽन्य(क्तोक्थ्य)संस्थादावुत्कर्षोऽन्यत्र बाधनात्"इति।

ज्योतिष्टोमे श्रूयते—" दीर्घसोमे संतृद्ये धृत्यै " इति । सोमयागविशेषो दीर्घसोमः । तस्मिन्सोमाभिषवाधारयोरधिषवणफलकयोः संतर्दनं कार्यम् । अन्योन्यवियोगेन शैथिल्यं मा भूदिति दृढसंश्लेषः संतर्दनम् । तदेतत्प्रकरणबलात्प्रकृतौ विनिविशते । न च तत्र दीर्घसोमत्वानुपपत्तिः । दीर्घस्य सोम इत्येवं दीर्घत्वस्य यजमानविशेषणत्वेनाप्युपपत्तेरिति प्राप्ते ब्रूमः—षष्ठीसमासात्कर्मधारयो बलीयानिति वक्ष्यते । तथा सति दीर्घत्वं सोमस्य धर्मो न तु यजमानस्य । नन्वेवमपि प्रकृतिभूतस्य सोमस्येष्टिपश्वपेक्षया दीर्घत्वमस्त्येवेति चेन्न । सोमशब्देनैव तदवगतौ दीर्घशब्दवैयर्थ्यात् । न हीष्टिपश्वपेक्षया ह्रस्वः कश्चित्सोमोऽस्ति यस्य व्यावृत्तये दीर्घशब्दः प्रयुज्येत । तस्मात्प्रकृतिरूपं ह्रस्वसोमं व्यावर्तयितुमयं दीर्घशब्दः । विकृतिषूक्थ्यादिषु

१ क. घ. ङ. पर्युक्ष्य । २ ख. सदना° । ३ ख. °र्घशब्दस्य ।

ग्रहाधिक्येन दीर्घत्वम्। तस्माद्वाक्येन प्रकरणं बाधित्वा विकृतिषु तन्निवेशः। प्रकृतौ तु दीर्घशब्दस्य बाधः पूर्वमुक्तः। संतर्दनबाधश्च साक्षाच्छ्रूयते— "हनू वा एते यज्ञस्य यदधिषवणे न संतृणत्त्यसंतृण्णे हि हनू" इति। तस्मान्न प्रकृतौ निवेशः।

तत्रैव पञ्चमपादे चिन्तितम्—

" आख्यावचोवषट्कारा एव किं भक्षहेतवः।
किं वाऽभिषवहोमौ च तत्राऽऽद्योऽस्तूक्तया दिशा॥
हविर्धानेऽभिषुत्याथ हुत्वा सदसि भक्षयेत्।
इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरे " इति॥

प्रैतु होतुश्चमस इत्यत्र समाख्या भक्षहेतुः, हारियोजनवाक्यं, वषट्कर्तुः प्रथमभक्ष इत्यत्र वषट्कार इत्येवमुक्तत्वात्रय एव इति चेन्मैवम्। " हविर्धाने [चर्मन्नधि]ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" इति श्रूयते। उत्तरवेद्याः प्रतीचीने सदसः प्राचीने मण्डपेऽभिषवः। उत्तरवेद्यां होमः। सदसि भक्षणम्। तत्राभिषवहोमयोर्वचनान्तरप्राप्तयोरभि(वि)धेयतया तौ निमित्तत्वेनानूद्य भक्षणं विधीयते। तस्मात्समाख्यादिवदेतयोरपि [भक्ष]हेतुत्वमस्ति।

षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

" अभिषुत्य ततो हुत्वा खादेदेकैकहेतुना(ता)।
संहत्य वा निमित्तोक्तौ साहित्याविधितोऽग्रिमः॥
होमाभिषवकर्ताऽत्र भक्षाङ्गत्वेन चोद्यते।
निमित्तताऽऽर्थिकी तस्मात्साहित्यं हेतुगं मतम् " इति॥

ज्योतिष्टोमे श्रूयते—" हविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति " इति। तत्राभिषवहोमयोरेकैक एव भक्षहेतुः। साहित्यस्याविधेयत्वात्। अभिषवहोमावत्र निमित्तत्वेनोच्येते। तत्र साहित्यविधौ वाक्यं भिद्येत। अभिषवहोमौ भक्षहेतू। तौ च सहिताविति एवं तद्भेदः। तस्मात्साहित्यस्याविधेयत्वादभिषवहोमयोः प्रत्येकं भक्षणनिमित्तत्वमिति प्राप्ते ब्रूमः—नात्र निमित्तमुपन्यस्यते, किं तु होमाभिषवयोः कर्ता भक्षणं प्रत्यङ्गत्वेन पूर्वमप्राप्तत्वाद्विधीयते। तथा सत्यभिषवहोमयोर्यन्निमित्तत्वं प्रतीयते तदार्थिकमिति वाक्यभेददोषाभावात्साहित्यं प्रतीयमानं विवक्षितमिति सहितयोरेव तयोर्निमित्तत्वम्॥

* ( आग्नीध्रीयसदःप्रभृतिषु स्थानेषु धिष्णियाभिधानम् )

अत्र सर्वेषां यजुष्ट्वान्नास्ति च्छन्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदा उशिगसि कविरङ्घारिरसि बम्भारिरवस्युरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योऽसि पवमानः प्रतक्वाऽसि नभस्वानसंमृष्टोऽसि हव्यसूद ऋतधामाऽसि सुवर्ज्योतिर्ब्रह्मज्योतिरसि सुवर्धामाऽजोऽस्येकपादहिरसि बुध्नियो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिंसीः ( १ ) ॥

( अनीकेनाष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

विभूरिति वि—भूः । असि । प्रवाहण इति प्र—वाहनः । वह्निः । असि । हव्यवाहन इति

---

१ क. ग. घ. ङ. तत्र ।

हव्य—वाहनः । श्वात्रः । असि । प्रचेता इति प्र—चेताः । तुथः । असि । विश्ववेदा इति विश्व—वेदाः । उशिक् । असि । कविः । अङ्घारिः । असि । बम्भारिः । अवस्युः । असि । दुवस्वान् । शुन्ध्यूः । असि । मार्जालीयः । सम्राडिति सम्—राट् । असि । कृशानुरिति कृश—अनुः । परिषद्य इति परि—सद्यः । असि । पवमानः । प्रतक्वेति प्र—तक्वा । असि । नभस्वान् । असंमृष्ट इत्यसंम्—मृष्टः । असि । हव्यसूद इति हव्य—सूदः । ऋतधामेत्यृत—धामा । असि । सुवर्ज्योतिरिति सुवः—ज्योतिः । ब्रह्मज्योतिरिति ब्रह्म—ज्योतिः । असि । सुवर्धामेति सुवः—धामा । अजः । असि । एकपादित्येक—पात् । अहिः । असि । बुध्नियः । रौद्रेण । अनीकेन । पाहि । मा । अग्ने । पिपृहि । मा । मा । मा । हिंसीः ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीयेऽनुवाके हविर्धानगतोपरवनिर्माणमुक्तम् । अथावशिष्टेष्वाग्नीध्रीयसदःप्रभृतिस्थानेषु धिष्णियास्तृतीयेऽनुवाकेऽभिधीयन्ते ।

( आग्नीध्रीयसदःप्रभृतिस्थानेषु धिष्णियाभिधानम् )

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदा उशिगसि कविरङ्घारिरसि बम्भारिरवस्युरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योऽसि पवमानः प्रतक्काऽसि नभस्वानसंमृष्टोऽसि हव्यसूद ऋतधामाऽसि सुवर्ज्योतिर्ब्रह्मज्योतिरसि सुवर्धामाऽजोऽस्येकपादहिरसि बुध्नियो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा · मा मा हिꣳसीः ॥

कल्पः—" आग्नीध्रीयं[१] गत्वा स्फ्येनोद्धत्यावोक्ष्य चात्वालपुरीषं सिकता इति निवपति विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीरिति तं परिमण्डलं धिष्णियं करोत्यथैनं[४] सिकताभिराभ्राशितं करोत्यथान्तःसदसि धिष्णियान्निवपति होतुः प्रथमं वह्निरसि हव्यवाहन इति श्वात्रोऽसि प्रचेता इति दक्षिणतो मैत्रावरुणस्य, तुथोऽसि विश्ववेदा इत्युत्तरतो ब्राह्मणाच्छंसिनः, उशिगसि कविरित्युत्तरतः पोतुः, अङ्घारिरसि बम्भारिरित्युत्तरतो नेष्टुः, अवस्युरसि दुवस्वानित्युत्तरतोऽच्छावाकस्याथ दक्षिणे वेद्यन्ते मार्जालीयं निवपति शुन्ध्यूरसि मार्जालीय इति, सर्वेष्वेव रौद्रमनुवर्तयत्यथाष्टावनुदिशति सम्राडसि कृशानुरित्याहवनीयमुपतिष्ठते, परिषद्योऽसि पवमान इत्यास्तावं, प्रतक्काऽसि नभस्वानिति चात्वालमसंमृष्टोऽसि हव्यसूद इति पशुश्रपणमथ सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठत ऋतधामाऽसि सुवर्ज्योतिरिति, ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्मसदनमथात्रैव तिष्ठन्गार्हपत्यमुपतिष्ठतेऽजोऽस्येकपादिति, अहिरसि बुध्निय इति यं प्रहास्यन्तो भवन्ति " इति ।

अत्र[५] रौद्रेणेति वाक्यं सर्वमन्त्रशेषत्वादन्ते समाम्नायते । आभ्राशितं समन्ताद्यथा न भ्रश्यति तथा करोति शुभ्रं वा करोति । हे आग्नीध्रीय त्वत्तोऽन्यधिष्णियं[६] विहरंस्त्वं विभूरसि विविधं भवसि । हविषां प्रवाहयितृत्वात्प्रवा-

१ क. °ग्नीध्रं ग° । ग. घ. °ग्नीध्रं द्रुत्वा । ङ. °ग्नीध्रं द्रुत्वा । २ ख. खात्वा । ३ ख. °त्वाल पु° । ४ ख. °रोति सि° । ५ ख. तत्र । ६ ख. °ष्णियविहरणात्त्वं वि° ।

हृणोऽसि । हे होत्रीय त्वं यो वह्निर्हव्यवाहनस्तद्रूपोऽसि । हे मैत्रावरुणीय श्वात्रो मित्रः प्रचेता वरुणस्तदुभयरूपोऽसि । हे ब्राह्मणाच्छंसिसंबन्धिन्, तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजतीत्याम्नातो विश्वाभिज्ञो यस्तुथस्तद्रूपोऽसि । हे पोत्रीय त्वमुशिक्कमनीयः कविर्विद्वानासि । हे नेष्ट्रीय सोमरक्षकौ यावङ्घारिबम्भारिनामकौ तद्रूपोऽसि । हेऽच्छावाकसंबन्धिन्, अवस्यवे त्वा वाताय स्वाहा दुवस्वते त्वा वाताय स्वाहेत्याम्नातौ याववस्युदु-वस्वन्तौ वातविशेषौ तद्रूपोऽसि । हे मार्जालीय त्वं शुन्ध्यूः शोधकः पात्रप्रक्षा-लनेन लेपमार्जनस्थानभूतोऽसि । हे आहवनीय सम्यग्राजमानः कृशानुरासि । हे आस्ताव स्तोत्रस्थान परिषद्यः परितः सदनयोग्यः पवमानः पूतोऽसि । हे चात्वाल कृष्णविषाणत्यागार्थं प्रतक्वा प्रकृष्टगमनविषयो नभस्वानन्तरवकाश-वानसि । हे पशुश्रपणप्रदेश राक्षसैरसंमृष्टो हव्यसूदो हृदयादिहव्यपाचकोऽ-सि । हे औदुम्बरि त्वमृतधामा सामगानामृतमवश्यंभावि धामोपवेशनस्थानं यस्यास्तादृशी सुवर्ज्योतिरुन्नतत्वेन स्वर्गप्रकाशिकाऽसि । हे ब्रह्मसदन त्वं ब्रह्मज्योतिर्ब्रह्मनामकस्यर्त्विजः प्रोक्षणादिकर्माभ्यनुज्ञानरूपं ज्योतिर्यस्मि-न्स्थाने तादृशमसि, सुवर्धाम स्वर्गसदृशं स्थानं यस्य तथाविधमासि । हे नूतन-गार्हपत्य यो देवः प्रोष्ठपदा नक्षत्रमज एकपाद्देवतेत्याम्नातस्तद्रूपोऽसि । पुरा-तनं गार्हपत्यमित ऊर्ध्वमृत्विजः परित्यक्ष्यन्तो भवन्ति । हे त्याज्यगार्हपत्य यो देवः प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवतेत्याम्नातस्तद्रूपोऽसि । आग्नीध्रीय-मारभ्य पुराणगार्हपत्यान्तेषु षोडशसु स्थानेष्वभिमन्यमान हेऽग्ने त्वदीयेन रौद्रेण सैन्येन राक्षसेभ्यो मां पाहि, कर्मफलप्रदानेन मां पिपृहि पूर्णमनोरथं कुरु, मद्विनाशरूपां हिंसां मा कुरु ॥

तानेतान्सर्वानु(न)पेक्ष्यानुष्ठानं विधत्ते—

" चात्वालाद्धिष्णियानुप वपति योनिर्वै यज्ञस्य चात्वालं यज्ञस्य सयोनि-त्वाय " [ सं० का० ६ प्र० ३ अ० १ ] इति ।

ततः पुरीषमादायोत्तरवेद्याः करणाच्चात्वालं यज्ञस्य योनिः । तादृशाच्चा-त्वालाद्धिष्णियनामकानां स्थलविशेषाणां निवपने यज्ञः सर्वोऽपि स्वयोनि-को भवति ॥

कालान्तरेऽनुष्ठेयान्यपि कानिचिद्धिष्णियप्रसङ्गादिह विधीयन्ते । तत्राऽऽ-ग्नीध्रधिष्णियस्थिताद्वह्नेर्होत्रीयादिधिष्णियेष्वग्निस्थापनं विधत्ते—

" देवा वै यज्ञं पराऽजयन्त तमाग्नीध्रात्पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं

१ क. 'र्धामा स्व' ।

यदाग्नीध्रं यदाग्नीध्राद्धिष्णियान्विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते " [ सं० का० ६ प्र० ३ अ० १ ] इति ।

पराजयन्त पराजयमकुर्वत । यज्ञमसुरा अगृह्णन् । पुनस्तं यज्ञमाग्नीध्रदेवतासामर्थ्येनासुरेभ्योऽपच्छिद्य देवा अजयन् । आग्नीध्रस्यापराजितस्थानत्वात्ततो विहरणं युक्तम् ॥

प्रैषमन्त्रमुत्पादयति—

" पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानꣳ सर्पन्ति बहिष्पवमाने स्तुते आहाग्नीदग्नीन्वि हर बर्हिः स्तृणाहि पुरोडाशाꣳ अलं कुर्विति यज्ञमेवापजित्य पुनस्तन्वाना यन्ति " [ सं० का० ६ प्र० ३ अ० १ ] इति ।

बहिष्पवमानं नाम प्रातःसवने सामगैर्गीयमानमुपास्मै गायतेत्यादिकं स्तोत्रम् । तत्तु गायन्त ऋत्विजो धावन्ति यथा लोके पराजित्य पलायन्ते तद्वत् । ततः स्तोत्रे समापिते[1] सत्याग्नीध्रं संबोध्याग्निविहरणादिप्रैष उक्ते यज्ञं पराजयादपावृत्य पुनः प्रसारितवन्तो भवन्ति ॥

विहरणे विशेषं विधत्ते—

" अङ्गारैर्द्वे सवने वि हरति शलाकाभिस्तृतीयꣳ सशुक्रत्वायाꣳ■ म भरत्येवैनत् " [ सं० का० ६ प्र० ३ अ० १ ] इति ।

प्रातःसवनमाध्यंदिनसवनयोराग्नीध्रीयगतैर्[2]दग्धकाष्ठैर्विहरेत् । तृतीयसवने तु शलाकाभिर्दीप्ततृणमुष्टिभिर्विहरेत् । अत्र[3] सोमस्य गायत्रीमुखेन(ण) पीतत्वान्नास्ति सोमे तेजः । दीप्तासु शलाकासु साररूपं तेजोऽस्तीति सशुक्रत्वाय सतेजस्त्वाय तथा कुर्यात् । किं चैनत्तृतीयसवनमितरसदृशं कृत्वा संभरति सम्यक्पोषयति ॥

पूर्वोक्तं धिष्णियसंघं प्रशंसति—

" धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन्तेभ्योऽधि सोममाऽहरन्तमन्ववायन्तं पर्यविशन् " [ सं० का० ६ प्र० ३ अ० १ ] इति ।

स्वानभ्राजादय इव धिष्णियदेवता अपि सोमं रक्षन्ति । आह्रियमाणं सोममनु स्वयमप्यागत्य परित उपविष्टाः । तस्मात्प्रशस्ता धिष्णियाः ॥

एतद्वेदनं प्रशंसति—

"य एवं वेद विन्दते परिवेष्टारम्" [सं० का० ६ प्र० ३ अ० १] इति ।

सेवकजनमित्यर्थः ॥

---

१ ख. ग. घ. ङ. समर्पिते । २ ख. °तैरङ्गारैर्द° । ३ ख. तत्र । ४ क. ग. घ. ङ. °न्नाग्निष्ठोमे । ५ क. ग. घ. ङ. °संबन्धं प्र° ।

( आग्नीध्रीयसदःप्रभृतिस्थानेषु धिष्णियाभिधानम् )

केषुचिद्धिष्णियेषु सोमाहुतिं विदधाति—

" ते सोमपीथेन व्यार्ध्यन्त ते देवेषु सोमपीथमैच्छन्त तान्देवा अब्रुवन्द्वे द्वे नामनी कुरुध्वमथ प्र वाऽऽप्स्यथ न वेत्यग्नयो वा अथ धिष्णियास्तस्माद्द्विनामा ब्राह्मणोऽर्धुकस्तेषां ये नेदिष्ठं पर्यविशन्ते सोमपीथं प्राऽऽप्नुवन्नाहवनीय आग्नीध्रीयो होत्रीयो मार्जालीयस्तस्मात्तेषु जुह्वति " [ सं० का० ६ प्र० ३ अ० १ ] इति ।

ते धिष्णियाः सोमपानेन वियुक्ताः । ततस्ते देवेषु मध्ये सोमपानमस्माकमस्त्वित्यैच्छन्त । एकैकनाममात्रधारणेन युष्माकं सोमपानयोग्यता सर्वथा नास्ति । नामद्वये तु स्वीकृते पाक्षिकी तद्योग्यतेति देवैरुक्ता अग्निनाम धिष्णियनाम च कृतवन्तः । यस्मान्नामद्वयमुत्कर्षहेतुस्तस्माल्लोकेऽपि देवदत्तादिनाम प्रथमं धृत्वा पश्चात्तपोविद्यादिभिराचार्योपाध्यायादिकं द्वितीयं नाम दधत्सत्कारेण समृद्धो भवति । नामद्वयधारिणां तेषां मध्ये ये चत्वार आहवनीयादयः सोमस्यात्यन्तसमीपे निविष्टास्ते समीपवर्तित्वेन सोमपानयोग्या इति तेषु सोमं जुहुयुः ॥

द्विनामधारित्वेनेतरेषामपि प्रसक्तं सोमपानं वारयति—

" अतिहाय वषट्करोति वि ह्येते सोमपीथेनाऽऽर्ध्यन्त " [ सं० का० ६ प्र० ३ अ० १ ] इति ।

ये दूरवर्तिनो मैत्रावरुणधिष्णियादयस्तानतिलङ्घ्य समीपस्थेभ्य एव वषट्कारस्तथाऽपि अनुवषट्कारप्रदानाहुतिब्राह्मण ऐतरेयश्रुतौ तदाहुतिदेवतात्वेन चतुर्णामेव श्रवणात्तानतिहाय वषट्करोतीत्युक्तं युक्तम् । सा च श्रुतिः— " यदेव सोमस्याग्ने वीहीत्यनुवषट्करोति तेन धिष्णियान्प्रीणाति " इति । तस्मात्तेषां वषट्कारपूर्वको होमः । इतरे तु सोमपानेन व्यार्ध्यन्त, हि यस्मात्पूर्वोक्तस्य वियोगस्य प्रतीकारं सामीप्यलक्षणं न संपादितवन्तः । द्वितीयनामप्रयुक्तस्तूत्कर्षस्तेषां सोमाभावेऽप्याज्यव्याघारणादेवोपपद्यते ॥

सोमाहुतीनां व्यवस्थां विधत्ते—

" देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्तांस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्तांस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यङ्ङासीनो धिष्णियान्व्याघारयति पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्र णुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते [ सं० का० ६ प्र० ३ अ० १ ] इति ।

---

१ ख. °नां दिग्व्यव° ।

प्राङ्मुखेन हूयमानाः प्राचीरुत्तरवेदिगताः। यस्मादाहुतिषु द्वैविध्यं तस्माल्लोकेऽपि प्रजाः पित्रा यन्मुखेन प्रवीयन्ते निषिच्यन्ते तद्विपरीतदिङ्मुखा उत्पद्यन्ते ॥

अध्वर्योः प्रत्यग्गमननिषेधं निन्दाभ्यामुन्नयति—

"प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ्धिष्णियानतिसर्पेत्प्राणान्त्सं कर्षेत्प्रमायुकः स्यान्नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वः खलु वै नाभ्यै प्राणोऽवाङ्पानो यदध्वर्युः प्रत्यङ्होतारमतिसर्पेदपाने प्राणं दध्यात्प्रमायुकः स्यात्" [ सं० का० ६ प्र० ३ अ० १ ] इति।

अतिसर्पेदतिक्रम्य गच्छेत्। होता यज्ञस्य नाभिर्मध्यदेशे वर्तते। प्राणवत्प्राग्वर्तिनोऽध्वर्योः प्रत्यग्गमनमयुक्तम् ॥

ऋत्विज उपगायन्तीतिविधिप्राप्तगानमध्वर्योर्निषेधति—

"नाध्वर्युरुप गायेद्वाग्वीर्यो वा अध्वर्युर्यदध्वर्युरुपगायेदुद्गात्रे वाचꣳ सं प्र यच्छेदुपदासुकाऽस्य वाक्स्यात्" [ सं० का० ६ प्र० ३ अ० १ ] इति।

उद्गात्रा सामनि गीयमाने पृष्ठतस्तदङ्गीकरणमुपगानम्। उपदासुकोपक्षयशीला ॥

प्रकारान्तरेणाध्वर्योः प्रत्यग्गमनं विधातुं चोद्यमुद्भावयति—

"ब्रह्मवादिनो वदन्ति नासꣳस्थिते सोमेऽध्वर्युः प्रत्यङ्सदोऽतीयादथ कथा दाक्षिणानि होतुमेति" [ सं० का० ६ प्र० ३ अ० १ ] इति।

अध्वर्योः सद उल्लङ्घ्य प्रत्यग्गमनं निषिद्धम्। दाक्षिणहोमस्तु प्राचीनवंशे नूतनगार्हपत्ये कर्तव्यः। तत्कथं घटते। असंस्थितेऽसमाप्ते। कथा केन प्रकारेण॥

उक्तचोद्यस्य परिहाराभासमाशङ्कते—

"यामो हि स तेषाम्" [ सं० का० ६ प्र० ३ अ० १ ] इति।

याम उपरमः। यस्मात्स दाक्षिणहोमस्तेषां देवानां संबन्धिनः कर्मण उपरमकालीनोऽतो लौकिकगमनत्वाद्देवा अनुज्ञास्यन्ति[1] ॥

इत्थमुत्तराभासं दूषयति—

"कस्मा अह देवा यामं वाऽयामं वाऽनु ज्ञास्यन्तीति" [ सं० का० ६ प्र० ३ अ० १ ] इति।

अहेत्युक्त[2]निषेधे। यदुत्तरवादिनोक्तं तन्न भवति, देवाः कस्मै प्रयोजनाय कर्मण उपरतिमनुपरतिं वाऽनुज्ञास्यन्ति, न हि तदनुज्ञया देवानां किंचित्प्रयो-

---

१ क. ग. घ. ङ. °स्यन्तीति। इ°। २ ख. °क्तविषयमुक्त°।

जनं पश्यामः। ततः प्रत्यग्गमनस्य निषिद्धत्वाद्दाक्षिणहोमो न घटत एवेति चोद्यं सुस्थितम् ॥

तस्य मुख्यं परिहारं दर्शयन्प्रत्यग्गमनं विधत्ते—

" उत्तरेणाऽऽग्नीध्रं परीत्य जुहोति दाक्षिणानि न प्राणान्त्सं कर्षति " [सं० का० ६ प्र० ३ अ० १] इति।

आग्नीध्रहविर्धानयोर्मध्ये गत्वा यत्सदोतिक्रमणं तदेव निषिद्धम्। अयं त्वाग्नीध्रं वामतः परित्यज्य तस्मादुत्तरतः प्रत्यङ्मुखो गत्वा प्राचीनवंशे दाक्षिणानि जुहुयात्। ततो नोक्तदोषः ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति। तत्र चात्वालाद्धिष्णियानुपवपतीति सामान्यशास्त्रेणाऽऽग्नीध्रादीनां प्राजहितान्तानां षोडशानामपि निवपने प्रसक्ते मार्जालीयान्तानामेवेति विशेषं विधत्ते—

" न्यन्ये धिष्णिया उप्यन्ते नान्ये यान्निवपति तेन तान्प्रीणाति " [सं० का० ६ प्र० ३ अ० १] इति ॥

इतरेषामाहवनीयादीनां प्राजहितान्तानामष्टानामुपस्थानं विधत्ते—

" यान्न निवपति यदनुदिशति तेन तान् " [सं०का०६प्र०३अ०१] इति। प्रीणातीत्यनुवर्तते। अनुदेशनं मन्त्रेणोपस्थानम् ॥

अत्र विनियोगसंग्रहः—

" विभूपदत्रयात्मानो मन्त्राः षोडश निर्वपेत्।
धिष्ण्यान्दिशेच्च सर्वेषु रौद्रेणेत्यनुदिश्यते ॥ १ ॥ " इति ॥

अत्र मीमांसाछन्दसी न स्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः। )

---

## त्वꣳ सोम तनूकृभ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्ताऽसि वरूथꣳ स्वाहा जुषाणो अप्तुरा-

१ ख. °षः। इत्थं प्रा°। २ ख. °नामष्टानामे°। ३ ख. विभूः प°।

ज्यंस्य वेतु स्वाहाऽयं नो अग्निर्वरिवः कृणो-
त्वयं मृधः पुर एतु प्रभिन्दन् । अयꣳ शत्रूञ्ज-
यतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ । उरु
विष्णो वि क्रमस्वोरु क्षयाय नः कृधि । घृतं
घृतयोने पिब प्रप्र यज्ञपतिं तिर । सोमो
जिगाति गातुवित् ( १ ) देवानामेति निष्कृत-
मृतस्य योनिमासदमदित्याः सदोऽस्यदित्याः
सद आ सीदैष वो देव सवितः सोमस्तꣳ
रक्षध्वं मा वो दभदेतत्त्वꣳ सोम देवो देवानु-
पागा इदमहं मनुष्यो मनुष्यान्त्सह प्रजया सह
रायस्पोषेण नमो देवेभ्यः स्वधा पितृभ्य इद-
महं निर्वरुणस्य पाशात्सुवरभि ( २ ) वि
ख्येषं वैश्वानरं ज्योतिरग्ने व्रतपते त्वं व्रतानां
व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा
मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथा-
यथं नौ व्रतपते व्रतिनोर्व्रतानि ( ३ ) ॥

( गातुविद्भ्येकत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अग्नीषोमीयपशुभिधानायाग्नीषोमप्रणयनार्थवैसर्जनहोमाभिधानम् )

( अथ प्रथमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः। )

त्वम्। सोम। तनूकृभ्य इति तनूकृत्—भ्यः। द्वेषोभ्य इति द्वेषः—भ्यः। अन्यकृतेभ्य इत्यन्य—कृतेभ्यः। उरु। यन्ता। असि। वरूथम्। स्वाहा। जुषाणः। अप्तुः। आज्यस्य। वेतु। स्वाहा। अयम्। नः। अग्निः। वरिवः। कृणोतु। अयम्। मृधः। पुरः। एतु। प्रभिन्दन्निति प्र—भिन्दन्। अयम्। शत्रून्। जयतु। जर्हृषाणः। अयम्। वाजम्। जयतु। वाजसाताविति वाज—सातौ। उरु। विष्णो इति। वीति। क्रमस्व। उरु। क्षयाय। नः। कृधि। घृतम्। घृतयोन इति घृत—योने। पिब। प्रप्रेति प्र—प्र। यज्ञपतिमिति यज्ञ—पतिम्। तिर। सोमः। जिगाति। गातुविदिति गातु—वित्। (१) देवानाम्। एति। निष्कृतमिति निः—कृतम्। ऋतस्य। योनिम्। आसदमित्या—सदम्। अदित्याः। सदः। असि। अदित्याः। सदः। एति। सीद। एषः। वः। देव। सवितः। सोमः। तम्। रक्षध्वम्। मा। वः। दभत्। एतत्। त्वम्। सोम। देवः। देवान्। उपेति। अगाः। इदम्। अहम्। मनुष्यः। मनुष्यान्। सह। प्रजयेति प्र—जया।

सह । रायः । पोषेण । नमः । देवेभ्यः । स्वधेति स्व—धा । पितृभ्य इति पितृ—भ्यः । इदम् । अहम् । निरिति । वरुणस्य । पाशात् । सुवः । अभि । (२) वीति । ख्येषम् । वैश्वानरम् । ज्योतिः । अग्ने । व्रतपत इति व्रत—पते । त्वम् । व्रतानाम् । व्रतपतिरिति व्रत—पतिः । असि । या । मम । तनूः । त्वयि । अभूत् । इयम् । सा । मयि । या । तव । तनूः । मयि । अभूत् । एषा । सा । त्वयि । यथायथमिति यथा—यथम् । नौ । व्रतपत इति व्रत—पते । व्रतिनोः । व्रतानि ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयानुवाके धिष्णिया वर्णिताः । एतावता वेदिगतविशेषनिर्माणं समाप्तम्। अथ तस्यां वेद्यामग्नीषोमीयपशुर्वक्तव्यः । तस्य चाग्नीषोमयोः प्रणीतयोः पश्चाद्वक्तुमुचितत्वात्तत्प्रणयनाय वैसर्जनहोमश्चतुर्थेऽनुवाकेऽभिधीयते ।

त्वꣳ सोम तनूकृभ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्ताऽसि वरूथꣳ स्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहाऽयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयꣳ शत्रूञ्-

---

१ ख. 'षकृत्स्नावान्तरनि' ।

( अग्नीषोमीयपश्वभिधानायामग्नीषोमप्रणयनार्थवैसर्जनहोमाभिधानम् )

यतु जहृषाणोऽयं वाजं जयतु वाजसातौ । उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ।

कल्पः—"स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये वैसर्जनहोमं[1] जुहोति त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहेति, स्रुवेणास्तुं प्रस्कन्दयति जुषाणो अप्तुराज्यस्य वेतु स्वाहेति, पूर्वया द्वारोपनिष्क्रामत्ययं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयꣳ शत्रूञ्जयतु जहृषाणोऽयं वाजं जयतु वाजसाताविति, अथाऽऽहवनीये स्रुवाहुतिं जुहोति उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति" इति।

तनूं शरीरं कृन्तन्ति च्छिन्दन्तीति तनूकृन्ति रक्षांसि। द्विषन्तीति द्वेषांसि। अन्यैरस्मद्विरोधिभिरभिचरद्भिः कृतानि प्रेरितानीत्यन्यकृतानि। हे सोम त्वं तादृशेभ्यो नियन्तासि। यथा तादृशानि नास्मान्बाधन्ते तथाऽस्मानन्यत्र सुरक्षितप्रदेशे स्थापयित्वा पालयसि। तस्मात्त्वमेवास्माकमुरु प्रभूतं वरूथं गृहमसि, तस्मै तुभ्यमिदं हुतमस्तु। अस्तुं प्रस्कन्दयतीत्यत्रास्तुशब्द आज्यबिन्दुवाची। मन्त्रे त्वल्पदेहवाची। हे सोम त्वं जुषाणोऽस्मासु प्रीतिमान्रक्षसादर्शनायाप्तुरल्पदेहः सन्नाज्यस्य बिन्दुं वेतु पिब, तवेदं हुतमस्तु। पूर्वद्वारेण निष्क्रामन्तो यमग्निं प्रणयन्ति अयमग्निरस्माकं वरिवः कृणोतु श्रेयः करोतु। अयं मृधो वैरिणः प्रभिन्दन्पुर एतु अग्रे गच्छतु। अयं जहृषाणो हृष्टान्तःकरणः शत्रूञ्जयतु। वाजस्यान्नस्य सातिर्लाभो यस्मिन्सङ्ग्रामे स वाजसातिस्तस्मिन्नस्मदर्थं वाजं जयतु वशी करोतु। हे विष्णो व्यापिन्नाहवनीयास्मदनुग्रहार्थं विक्रमस्व वैरिषु बहुलं पराक्रमं कुरु। नोऽस्माकं क्षयाय निवासार्थमुरु कृधि बहुलं गृहधनादिकं संपादय। घृतेन ज्वालोद्भवाद्घृतयोनिः। हे घृतयोने मानमिदं घृतं पिब, यज्ञपतिं यजमानं [प्र]प्रतिरातिशयेन वर्धय॥

मन्त्रान्व्याचिख्यासुरादौ होमं[2] विधत्ते—

"सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि" [ सं० का० ६ प्र० ३ अ० २ ] इति।

अवान्तरदीक्षा[3]विसर्जनार्थत्वादेतानि होमकर्माणि वैसर्जनानि।

---

१ ग. घ. ङ. °र्जनं भवति। २ ख. हेतुं। ३ ख. °क्षाया वि°।

तत्प्रकारः सूत्रे[1] दर्शितः—" उपस्थे ब्रह्मा राजानं कुरुते समपि[2] व्रतान्ह्वयध्वमिति संप्रेष्यति यजमानस्यामात्यान्संह्वयन्न(न्तम)ध्वर्युं[3] यजमानोऽन्वारभते यजमानं पत्नी पत्नीमितरे पुत्रभ्रातरोऽहतेन वाससाऽमात्यान्संप्रच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनियम्य प्रचरण्या वैसर्जनानि जुहोति " इति ।

व्रतामात्यशब्दौ बन्धुवाचकौ । प्रचरणी जुह्वा सदृशी ॥

विशेषान्क्रमेण विधत्ते—

" द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमत आहवनीये जुहोति सुवर्गमेवैनं लोकं गमयति " [ सं० का० ६ प्र० ३ अ० २ ] इति ।

द्वाभ्यां त्वꣳ सोम जुषाण इत्येताभ्याम् । आग्नीध्रे होमस्य मन्त्रो विधास्यते । आहवनीय उरु विष्णो, इति मन्त्रः ॥

होमात्पूर्वमेव ब्रह्मणा सोम आदातव्य इति विधत्ते—

" देवान्वै सुवर्गं लोकं यतो रक्षाꣳस्यजिघाꣳसन्ते सोमेन राज्ञा रक्षाꣳस्यपहत्याप्तुमात्मानं कृत्वा सुवर्गं लोकमायन्रक्षसामनुपलाभायाऽऽत्तः सोमो भवत्यथ वैसर्जनानि जुहोति रक्षसामपहत्यै " [ सं० का० ६ प्र० ३ अ० २ ] इति ।

यतो गच्छतः । अप्तुं रक्षोभिरुपलब्धुमशक्यमल्पदेहम् । आत्तो भवति स्वीकृतो भवेत् । तत ऊर्ध्वं कृतो होमो रक्षांस्यपहन्ति ॥

प्रथममन्त्रस्य पूर्वभागेऽभिप्रेतं सोमस्य सामर्थ्यमुपपादयति—

" त्वꣳ सोम तनूकृद्भ्य इत्याह तनूकृद्ध्येषः " [सं०का०६प्र०३अ०२]इति ।

तनुच्छिदां रक्षसामपि तनूं कृणत्ति च्छिनत्तीत्येष सोमोऽत्यन्तं तनूकृत्तस्माद्रक्षोभ्योऽस्मान्पालयितुं समर्थः ॥

द्वितीयभागे विशेष्यं पूरयति—

" द्वेषोभ्योऽन्यकृतेभ्य इत्याहान्यकृतानि हि रक्षाꣳसि " [ सं० का० ६ प्र० ३ अ० २ ] इति ।

तृतीयभाग[4]स्योरु वरूथमित्यस्य वाक्यस्य शेषं पूरयति—

" उरु यन्ताऽसि वरूथमित्याहोरु णस्कृधीति वावैतदाह " [ सं० का० ६ प्र० ३ अ० २ ] इति ।

---

१ क. ग. घ. ङ. सूत्रेण । २ ख. स मयि व्रतानां ह्वय° । ३ ख. °ध्वर्युर्यज° । ४ ख. °ग उरु ।

बहुलमस्मदर्थं कुर्वित्येतदेव स भागो ब्रूते ॥

द्वितीयमन्त्रेऽप्तुशब्दसूचितमाह—

"जुषाणो अप्तुराज्यस्य वेत्वित्याहाप्तुमेव यजमानं कृत्वा सुवर्गं लोकं गमयति रक्षसामनुपलाभाय" [ सं० का० ६ प्र० ३ अ० २ ] इति ॥

प्राचीनवंशान्निष्क्रम्याऽऽग्नीध्रे जिगमिषुभिरनुष्ठेयानि सोमस्वीकारादीनि षड्विधत्ते—

"आ सोमं ददत आ ग्राव्ण आ वायव्यान्या द्रोणकलशमुत्पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्ति यावदेवास्यास्ति तेन सह सुवर्गं लोकमेति" [ सं० का० ६ प्र० ३ अ० २ ] इति।

सोमं हविर्धाने नेतुमाददीरन्। ग्रावाणोऽभिषवार्थाः। वायव्यान्युलूखलसदृशानि ग्रहपात्राणि। द्रोणकलशः प्रौढं काष्ठपात्रम्। एतान्याददीरन्। पत्नीं स्वस्थानादुत्थाप्याऽऽनयेयुः। व्रीह्याद्यौषधद्रव्यार्थं यत्तृतीयं शकटं तदेवासकृदावृत्तत्वादनांसीति बहुवचनेनोच्यते। तदनु पुनः पुनः प्रवर्तयेयुः। एवं सति यजमानस्य स्वं यावदस्ति तेन सर्वेण सह स्वर्गं प्राप्नोति ॥

विधत्ते—

"नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै" [ सं० का० ६ प्र० ३ अ० २ ] इति।

अग्ने नय सुपथेत्यसौ नयवती।

अत्र सूत्रम्—"शालामुखीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्याग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति प्रणीयमानायानुब्रूहीति वा प्रथमायां त्रिरनूक्तायामयं नो अग्निर्वरिवः कृणोत्वित्यग्निप्रथमाः सोमप्रथमा वा प्राञ्चोऽभिप्रव्रजन्त्याग्नीध्रीयेऽग्निं प्रतिष्ठाप्याग्रे नयेत्यर्धमाज्यशेषस्य जुहोति" इति।

प्रचरण्या[2] चतुर्गृहीतस्याऽऽज्यस्यार्धं गार्हपत्ये मन्त्रद्वयेन हुतमवशिष्टेऽप्यर्धमाज्यमाग्नीध्रे हुत्वेतरदाहवनीये होतुं शेषयेत् ॥

विधत्ते—

"ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उप वासयति" [ सं० का० ६ प्र० ३ अ० २ ] इति।

स्थापयेदित्यर्थः ॥

---

१ ख. तत्र। २ ख. °रण्यां च°।

तद्वत्सोमस्यापि स्थापनप्राप्तौ तद्वारयितुं ग्रहणं विधत्ते—

"वि ह्येनं तैर्गृह्णते यत्सहोपवासयेदपुवायेत" [सं०का०६प्र०३अ०२] इति।

एनं सोमं तैर्ग्रावादिभिर्वियुज्य नेतुं गृह्णीरन् । यदि कश्चित्तैः सह स्थापयेत्तदानीमभिषवभीत्या सोमस्योदरं पूति भवेत् । अत्राऽऽज्यशेषस्याऽऽहवनीये होमायोरु विष्णो, इति यो मन्त्रो यश्च ततः पूर्वोऽयं नो अग्निरिति मन्त्रस्तावुपेक्षितौ ॥

सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदम्—

कल्पः—"ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदमिति" इति।

गातुविन्मार्गज्ञः सोमो जिगाति गच्छति । कं देशं गच्छति, आसीदत्यस्मिन्हविर्धानदेश इत्यासदः । देवानामासदमेति । कीदृशं, निष्कृतमलंकृतम् । ऋतस्य यज्ञस्य योनिं कारणं ग्रहचमसादिहविषामत्रावस्थितत्वात् ॥

विधत्ते—

" सौम्यर्चा प्र पादयति स्वयैवैनं देवतया प्र पादयति " [ सं० का० ६ प्र० ३ अ० २ ] इति ॥

अदित्याः सदोऽस्यदित्याः सद आ सीद—

कल्पः—"अथ दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति अदित्याः सदोऽसीत्यदित्याः सद आ सीदेति कृष्णाजिने राजानम्" इति ॥

स्पष्टार्थतां दर्शयति—

" अदित्याः सदोऽस्यदित्याः सद आ सीदेत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० ३ अ० २ ] इति ॥

एष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभत्—

कल्पः—" अथैनं देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभदिति " इति ।

एतावन्तं कालं यजमानः सोममरक्षत् । इत ऊर्ध्वं हे देवा युष्मदीयं सोमं यूयमेव रक्षध्वम् । यद्यपीन्द्रादयः सर्वे संबोधनीयास्तथाऽपि परिवृढत्वादशेषोपलक्षणार्थं सवितैव संबोध्यते । मा वो दभत्सोमं रक्षमाणान्युष्मान्कश्चिदपि मा हिंसीत् ॥

(अग्नीषोमीयपश्वभिधानायामग्नीषोमप्रणयनार्थवैसर्जनहोमाभिधानम्)

सवितृसंबोधनतात्पर्यमाह—

“यजमानो वा एतस्य पुरा गोप्ता भवत्येष वो देव सवितः सोम इत्याह सवितृप्रसूत एवैनं देवताभ्यः सं प्र यच्छति” [सं०का०६प्र०३अ०२] इति ॥

## एतत्त्वꣳ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्त्सह प्रजया सह रायस्पोषेण—

बौधायनः—“संप्रदायोपतिष्ठत एतत्त्वꣳ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्त्सह प्रजया सह रायस्पोषेणेति” इति।

हे सोम त्वं देवः सन्भवदीयान्देवानेतदिदानीं प्राप्तोऽसि। अहमपि मनुष्यः सन्मदीयान्मनुष्यानिदमिदानीं प्राप्तोऽस्मि। कीदृशोऽहं पुत्रादिप्रजया पश्वादिधनपुष्ट्या च सह वर्तमानः॥

मन्त्रभागयोर्द्वयोः प्रसिद्धिं तृतीयभागे विपक्षबाधं च दर्शयति—

“एतत्त्वꣳ सोम देवो देवानुपागा इत्याह देवो ह्येष सन्देवानुपैतीदमहं मनुष्यो मनुष्यानित्याह मनुष्यो ह्येष सन्मनुष्यानुपैति यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानः स्यात्सह प्रजया सह रायस्पोषेणेत्याह प्रजयैव पशुभिः सहेमं लोकमुपावर्तते” [सं० का० ६ प्र० ३ अ० २] इति॥

## नमो देवेभ्यः स्वधा पितृभ्य इदमहं निर्वरुणस्य पाशात्सुवरभि वि ख्येषं वैश्वानरं ज्योतिः—

बौधायनः—“नमो देवेभ्य इति प्राञ्चमञ्जलिं करोति स्वधा पितृभ्य इति दक्षिणाप्रत्यञ्चमथोपनिष्क्रामतीदमहं निर्वरुणस्य पाशादित्यथाऽऽहवनीयमुपतिष्ठते सुवरभि वि ख्येषं वैश्वानरं ज्योतिरिति” इति।

आपस्तम्बः—“इदमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावृत्य नमो देवेभ्य इति प्राचीनमञ्जलिं कृत्वा स्वधा पितृभ्य इति दक्षिणे, इदमहं निर्वरुणस्य पाशादित्युपनिष्क्रम्य सुवरभि वि ख्येषमिति सर्वं विहारमनुवीक्षते वैश्वानरं ज्योतिरित्याहवनीयम्” इति॥

मन्त्रद्वयार्थप्रसिद्धिं दर्शयति—

“नमो देवेभ्य इत्याह नमस्कारो हि देवानाꣳ स्वधा पितृभ्य इत्याह स्वधाकारो हि पितृणाम् [सं० का० ६ प्र० ३ अ० २] इति॥

निर्वरुणस्य पाशादित्यत्र निर्मुञ्चामीत्यध्याहर्तव्यम्।

एतमेवाभिप्रायं दर्शयति—

" इदमहं निर्वरुणस्य पाशादित्याह वरुणपाशादेव निर्मुच्यते " [ सं० का० ६ प्र० ३ अ० २ ] इति ॥

अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि
या मम तनूस्त्वय्यभूदियꣳ सा मयि
या तव तनूर्मय्यभूदेषा सा त्वयि यथा-
यथं नौ व्रतपते व्रतिनोर्व्रतानि ॥

कल्पः—" अथ यजमानोऽवान्तरदीक्षां विसर्जयति अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानीति " इति ।

अवान्तरदीक्षाया आदौ यजमानः स्वतनुमग्नौ संकल्पेनावस्थाप्याग्नितनुं च स्वस्मिन्नवस्थाप्य सह व्रतनियममुपचक्रमे । इदानीं तु शरीरव्यत्ययस्यासमाहितत्वाद्व्रतिनोरग्नियजमानयोः स्वोचितव्रतमेवास्तु । अत्र सुवरभि वि ख्येषं वैश्वानरं ज्योतिरित्येतौ मन्त्रौ पुरोडाशब्राह्मणे स्पष्टत्वादुपेक्षितौ ॥

अस्य तु मन्त्रस्य प्रतीकग्रहणपूर्वकं तात्पर्यमाह—

" अग्ने व्रतपत आत्मनः पूर्वा तनूरादेयेत्याहुः को हि तद्वेद यद्वसीयान्त्स्वे वशे भूते पुनर्वा ददाति न वेति " [ सं० का० ६ प्र० ३ अ० २ ] इति ।

अग्ने व्रतपत इत्येतावत्प्रतीकम् । स्वकीया पूर्वा तनूरग्निसकाशात्सहसा स्वीकार्येति बुद्धिमन्त आहुः । कुतः, वसीयानत्यन्तधनिकः प्रभुः परकीये वस्तुनि स्ववशीभूते सति पुनर्ददाति वा न वेति यत्तत्को नाम वेद । ततो वशीभावात्प्रागेवाऽऽदेया ॥

ग्रावादीनामाग्नीध्रे स्थापनं यत्पूर्वमुक्तं तत्प्रशंसति—

" ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना य एवं विद्वान्ग्राव्ण आग्नीध्र उपवासयति नैनं मलिम्लुसेना विन्दति " [सं० का० ६ प्र० ३अ०२] इति।

मलिम्लुसेना विरोधितस्करसेना ॥

अत्र विनियोगसंग्रहः—

" त्वं जुषा पश्चिमे वह्नौ वैसर्जनहुतिस्त्वयम् ।
शालामुखीयतो वह्निं धृत्वा प्राञ्चोऽभियान्ति हि ॥ १ ॥

१ क. ग. घ. ङ. 'मानमवा' । २ ग. घ. 'ह्व्रतं नि' । ३ ग. घ. ङ. 'यस्य स' ।

उरु हुत्वा पूर्ववह्नौ सोमो राजानमग्रतः ।
हविर्धानं नयत्यत्र चर्म संस्तीर्य सादयेत् ॥ २ ॥
अदिद्वयादेष सोमं निर्दिश्यैतन्निमन्त्रयेत् ।
इदं दक्षिणमावृत्य नमः प्रागञ्जलिः स्वधा ॥ ३ ॥
दक्षिणाञ्जलिरेतस्मान्निर्गच्छेन्मण्डपादिदम् ।
सुवर्विहारमीक्षित्वा वैश्वा पूर्वाग्निमीक्षते ॥
अग्ने वह्नेरुपस्थानं मन्त्राः षोडश कीर्तिताः ॥ ४ ॥ " इति ॥

अथ मीमांसा ।

प्रथमाध्यायस्य तृतीयपादे चिन्तितम्—

" वैसर्जनाख्यहोमीयवाससो ग्रहणस्मृतिः ।
प्रमा न वा श्रुत्यबाधात्प्रमा स्यादष्टकादिवत् ॥
दृष्टलोभैकमूलत्वसंभवे श्रुत्यकल्पनात् ।
सर्ववेष्टनवद्बाधहीनाऽप्येषा न हि प्रमा " इति ॥

इदं स्मर्यते—" वैसर्जनहोमवासोऽध्वर्युर्गृह्णाति " इति । सेयं स्मृतिः सर्ववेष्टनस्मृतिवत्प्रत्यक्षश्रुत्या न बाध्यते । ततोऽष्टकादिस्मृतिवन्मूलवेदानुमानेन प्रमाणमिति प्राप्ते ब्रूमः—कदाचित्कश्चिदध्वर्युर्लोभादेतद्वासो जग्राह । तन्मूलैषा स्मृतिरित्यपि कल्पना संभवति । दृष्टानुसारिणी चेयं कल्पना । दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात् । तथा सत्यस्याः स्मृतेरन्यथाऽप्युपपत्तावष्टकादिमूलश्रुतिवन्मूलश्रुतिर्न कल्पयितुं शक्यते । अतो बाधाभावेऽपि मूलवेदाभावान्नेयं स्मृतिः प्रमाणम् ॥

अथ च्छन्दः—

त्वꣳ सोमेति गायत्री । अयं नो अग्निरिति त्रिष्टुप् । उरु विष्णो, इत्यनुष्टुप् । सोमो जिगातीति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

अत्यन्यानगां नान्यानुपांगामर्वाक्त्वा परैं-

रविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्यायै देवस्त्वा सविता मध्वाऽनक्त्वोषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीर्दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या सं भव वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयꣳ रुहेम यं त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायाच्छिन्नो रायः सुवीरः ( १ ) ॥

( यं दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

अतीति । अन्यान् । अगाम् । न । अन्यान् । उपेति । अगाम् । अर्वाक् । त्वा । परैः । अविदम् । परः । अवरैः । तम् । त्वा । जुषे । वैष्णवम् । देवयज्याया इति देव—यज्यायै । देवः । त्वा । सविता । मध्वा । अनक्तु । ओषधे । त्रायस्व । एनम् । स्वधित इति स्व—धिते । मा । एनम् । हिꣳसीः । दिवम् । अग्रेण । मा । लेखीः । अन्तरिक्षम् । मध्येन ।

मा। हिꣳसीः। पृथिव्या। समिति। भव। वनस्पते। शतवल्श इति शत—वल्शः। वीति। रोह। सहस्रवल्शा इति सहस्र—वल्शाः। वीति। वयम्। रुहेम। यम्। त्वा। अयम्। स्वधितिरिति स्व—धितिः। तेतिजानः। प्रणिनायेति प्र—निनाय। महते। सौभगाय। अच्छिन्नः। रायः। सुवीर इति सु—वीरः ( १ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( अथ प्रथमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः। )

---

चतुर्थेऽनुवाके वैसर्जनहोमेऽवान्तरदीक्षां विसृज्याग्नीषोमयोराग्नीध्रीये हविर्धाने च प्रणयनमुक्तम्। अथ पञ्चममारभ्यैकादशान्तेषु सप्तस्वनुवाकेषु प्रणीतयोस्तयोरग्नीषोमयोः पशुर्वक्तव्यः। तत्रास्मिन्पञ्चमेऽनुवाके पश्वङ्गयूपस्य च्छेदनमभिधीयते।

अत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्यायै—

बौधायनः—"पुनः पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूपस्तष्टो भवति यत्र वा वत्स्यन्मन्यते स यः समे भूम्यै स्वाद्योने रूढो बहुपर्णो बहुशाखोऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठते—अत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इति" इति।

आपस्तम्बः—"अतिक्रम्य यूप्यानन्यं जोषयते तमभिमन्त्रयतेऽत्यन्यानगामित्यथैनमुपस्पृशति तं त्वा जुषे वैष्णवं देवयज्याया इति" इति।

वृक्षा द्विविधा यूप्या अयूप्याश्च। पलाशखदिरादयो यूप्याः। निम्बज-

ग्बीरादयस्त्वयूप्याः । हे पुरोवर्तियूप्यवृक्ष त्वत्तोऽन्यान्कांश्चिद्यूप्यानपि समप्रदेशजन्मादिलक्षणरहितानत्यगाम् । अन्यांस्त्वयूप्यान्नोपागाम् । त्वां त्वविदं लब्धवानस्मि । कीदृशं, परैरर्वागुत्कृष्टैर्लक्षणैः प्रत्यासन्नं तल्लक्षणयुक्तमित्यर्थः । पुनः कीदृशं, परोऽवरैर्निकृष्टैर्लक्षणैर्दूरवर्तिनं तद्रहितमित्यर्थः । हे वृक्ष तं त्वां विष्णुदेवताकं देवयजनार्थं सेवे ॥

विधत्ते—

" वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतयाऽच्छैति " [ सं० का० ६ प्र० ३ अ० ३ ] इति ।

उरु विष्णो वि क्रमस्वेति स्रुवेणाऽऽहवनीये यूपाहुतिं हुत्वा ततो यूपं प्राप्तुं गच्छेत् ॥

यथोक्तमन्त्रार्थे प्रसिद्धिं दर्शयति—

" अत्यन्यानगां नान्यानुपागामित्याहाति ह्यन्यानेति नान्यानुपैत्यर्वाक्त्वा परैरविदं परोऽवरैरित्याहार्वाग्घ्येनं परैर्विन्दति परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इत्याह देवयज्यायै ह्येनं जुषते " [सं०का०६प्र०३अ०३] इति ॥

## देवस्त्वा सविता मध्वाऽनक्त्वोषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीः—

कल्पः—" देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण सर्वतो मूलं पर्यणक्त्योषधे त्रायस्वैनमित्यूर्ध्वाग्रं दर्भद्वयमन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना प्रहरति " इति ।

मध्वा मधुरेणाऽऽज्येन ॥

एतदेवाभिप्रेत्याऽऽह—

" देवस्त्वा सविता मध्वाऽनक्त्वित्याह तेजसैवैनमनक्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै " [ सं० का० ६ प्र० ३ अ० ३ ] इति ॥

विधत्ते—

" स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति यः प्रथमः शकलः परापतेत्तमप्या हरेत्सतेजसमेवैनमा हरति " [ सं० का० ६ प्र० ३ अ० ३ ] इति ।

स्वधितिभयात्पतितस्य वृक्षतेजस आहरणायेहाऽऽद्यशकलाहरणम् ॥

---

१ ख. 'णाय श' ।

## दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या सं भव—

कल्पः—" प्राञ्चं वोदञ्चं वा प्रयन्तमनुमन्त्रयते दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या सं भवेति " इति।

हे छिन्नवृक्ष त्वं पतन्दिवं मा लेखीर्मा विदारीः। पृथिव्या संभव संयुज्यावतिष्ठस्व॥

अप्रसक्तप्रतिषेधबुद्धिं वारयति—

" इमे वै लोका यूपात्प्रयतो बिभ्यति दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीरित्याहैभ्य एवैनं लोकेभ्यः शमयति " [ सं० का० ६ प्र० ३ अ० ३ ] इति।

प्रयतः पततः॥

## वनस्पते शतवल्शो वि रोह—

कल्पः—" अथाऽऽव्रश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति वनस्पते शतवल्शो वि रोह स्वाहेति " इति॥

विधत्ते—

" वनस्पते शतवल्शो वि रोहेत्याव्रश्चने जुहोति तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति " [ सं० का० ६ प्र० ३ अ० ३ ] इति।

आवृश्च्यते वृक्षो यस्मान्मूलादित्याव्रश्चनम्। भूयांसो बहवो वल्शाः शाखा-विशेषाः॥

## सहस्रवल्शा वि वयꣳ रुहेम—

कल्पः—" सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृश्य " इति॥

विरोहैवेत्याशीरर्थो विवक्षित इत्याह—

" सहस्रवल्शा वि वयꣳ रुहेमेत्याहाऽऽशिषमेवैतामा शास्ते " [ सं० का० ६ प्र० ३ अ० ३ ] इति॥

## यं त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय—

कल्पः—" अन्वग्रꣳ शाखां[1] प्रसूदयति यं त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति " इति।

---

१ ख. शाखाः।

हे छिन्नवृक्ष तेतिजानस्तीक्ष्णोऽयं स्वधितिर्यं त्वां महते सौभगाय दर्शनीयत्वाय तिर्यक्शाखाछेदनेन प्रणिनाय प्रकृष्टं यूपत्वं प्रापयामास । ततस्तादृशेन त्वया छेदनान्न भेतव्यम् ॥

अच्छिन्नो रायः सुवीरः ॥

कल्पः—" अच्छिन्नो रायः सुवीर इत्यग्रं परिवासयति " इति ।

हे यूप त्वमच्छिन्नो भव । मन्त्रसामर्थ्येन च्छेदनव्यथा तव मा भूत् । कीदृशस्त्वं, सुवीरः शोभना वीरा यजमानपुत्रपौत्रादयो येन त्वया लभ्यन्ते स त्वं सुवीरः । तादृशस्त्वं रायो धनानि यजमानाय देहि । यं त्वाऽयमच्छिन्न इत्येतौ मन्त्रावुपेक्षितौ ॥

योऽयं यूपार्थो वृक्षच्छेदः पूर्वमुक्तस्तत्र च्छेदे छेद्यं वृक्षस्य प्रदेशं विधत्ते—

" अनक्षसङ्गं वृश्चेत् " [ सं० का० ६ प्र० ३ अ० ३ ] इति ।

छिन्नावशिष्टस्य मूलस्योपरि गच्छतः शकटस्याक्षो यथा न प्रसज्यते तथा नीचं मूलमवस्थाप्य छिन्द्यात् ॥

विपक्षे बाधकमाह—

" यदक्षसङ्गं वृश्चेदधईषं यजमानस्य प्रमायुक१ स्यात् " [ सं० का० ६ प्र० ३ अ० ३ ] इति ।

यदि च्छिन्ने वृक्षमूले शकटस्याक्षः प्रसज्येत तदा यजमानस्य संबन्धि गोवत्सादिकमीषाया अधो मरणशीलं भवेत् । शकटस्य प्राचीनं दीर्घकाष्ठमीषा ॥

शाखाया यूपार्थं छेदनं निन्दति—

" यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेदेष वै वनस्पतीनामप्रतिष्ठितोऽप्रतिष्ठित एव भवति " [ सं० का० ६ प्र० ३ अ० ३ ] इति ।

वृक्षमारुह्य जायत इत्यारोहः शाखा । स च भूमावनुत्पन्नत्वादप्रतिष्ठितः । तस्य यूपत्वे यजमानोऽप्रतिष्ठित एव भवति ॥

अपर्णमपि निन्दति—

" यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेदेष वै वनस्पतीनामपशव्योऽपशुरेव भवति " [ सं० का० ६ प्र० ३ अ० ३ ] इति ।

वनस्पतीनां मध्य एष पर्णरहितः शुष्काग्रश्चापशव्यः पशुभ्यो न हितः ॥

बहुपर्णं विधत्ते—

" यं कामयेत पशुमान्त्स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेदेष वै वन-

१ ख. छेद्यं ।

स्पतीनां पशव्यः पशुमानेव भवति" [ सं० का० ६ प्र० ३ अ० ३ ] इति॥

भूमौ समप्रदेशे स्वबीजादुत्पन्नं विधत्ते—

"प्रतिष्ठितं वृश्चेत्प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योने रूढः प्रत्येव तिष्ठति" [ सं० का० ६ प्र० ३ अ० ३ ] इति।

स्वाद्योनेरित्यनेन वृक्षजन्या शाखा व्यावर्त्यते॥

पश्चिमदिश्यानतं विधत्ते—

"यः प्रत्यङ्ङुपनतस्तं वृश्चेत्स हि मेधमभ्युपनतः" [ सं० का० ६ प्र० ३ अ० ३ ] इति।

मेधो यज्ञः। स चोत्तरवेद्यां क्रियमाणो यूपस्थानात्प्रत्यङ्भवति। अतो मेधमभिलक्ष्यैवोपनतः॥

यूपस्य काम्यानि परिमाणानि विधत्ते—

"पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञो नमति षडरत्निं प्रतिष्ठाकामस्य षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्करी पशवः शक्करी पशूनेवाव रुन्धे नवारत्निं तेजस्कामस्य त्रिवृता स्तोमेन संमितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निं प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविꣳशत्यरत्निं प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै" [ सं० का० ६ प्र० ३ अ० ३ ] इति।

चतुर्विंशतिरङ्गुल्योऽरत्निः। उत्तरो यज्ञः सोमविकृतिः॥

विधत्ते—

"अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजो गायत्री गायत्री यज्ञमुखं तेजसैव गायत्रिया यज्ञमुखेन संमितः" [ सं० का० ६ प्र० ३ अ० ३ ] इति।

गायत्र्यास्तेजस्त्वमग्निना सहोत्पन्नत्वात्। यज्ञमुखत्वं च प्रातःसवने प्रयोज्यत्वात्। अतोऽष्टसंख्याद्वारा तेजोगायत्रीयज्ञमुखैः समानो भवति। तस्मात्तक्षणेन यूपस्याष्टावश्रयः कार्याः॥

अत्र विनियोगसंग्रहः—

"अति वृक्षं मन्त्रयित्वा तं त्वा यूपतरुं स्पृशेत्।
देवस्तन्मूलमभ्यज्य ह्योष दर्भान्तरायतः॥ १॥

स्वधि च्छिन्द्यादिवं प्राच्यां पातयेद्वन शेषिते ।
मूले हुत्वा सहेत्यात्मस्पर्शो यं त्वाऽङ्कानि च ॥
अच्छीत्यग्रं च संछिन्द्याद्दश मन्त्रा उदीरिताः ॥२॥" इति ॥

अथ मीमांसा ।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" यूपच्छेदापकर्षः किं तदन्ते श्रुत एव वा ।
प्रयाजवत्तदन्तत्वान्नयनं चापकृष्यताम् ॥
अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा ।
प्रयाजाघारवैषम्याच्छ्रुतमात्रापकर्षणम् " इति ॥

ज्योतिष्टोमे वैसर्जनहोमकाले प्राचीनवंशगतो वह्निराग्नीध्रीये प्रणेतव्यः । सोमश्च प्राचीनवंशे पूर्वं स्थापित इदानीं हविर्धाने प्रणेतव्यः । तयोरुभयोः प्रणयनादूर्ध्वं यूपच्छेद आम्नातः । तदेतत्सर्वं सुत्यादिनात्प्राचीन औपवसथ्ये दिने प्राप्तम् । तत्र यूपच्छेदो दिनत्रयात्पूर्वस्मिन्दीक्षाकालेऽपकृष्टः । दीक्षासु यूपं छिनत्तीति तद्विधानात् । तस्मिन्नपकृष्टे प्रयाजन्यायेन तदन्ताङ्गसमूहस्यापकर्षात्प्रणयनमप्यपकृष्यतामिति प्राप्ते ब्रूमः—प्रयाजाघारादीनामेकमेव प्रधानं प्रत्यङ्गत्वेनैकप्रयोगान्तःपातित्वादवश्यंभावी परस्परक्रम इति प्रयाजापकर्षे तदन्ताङ्गसमूहापकर्षो युक्तः । इह तु प्रणयनं सोमयागाङ्गम् । यूपच्छेदस्त्वग्नीषोमीयपशोरङ्गमिति प्रणयनच्छेदनयोर्नान्योन्यक्रमोऽपेक्षितः । तस्माच्छ्रुतस्य यूपच्छेदनमात्रस्यापकर्षः ।

एकादशाध्यायस्य तृतीयपादे चिन्तितम्—

" अग्नीषोमीयमुख्येषु यूपो भिन्नोऽथ तन्त्रता ।
उपदेशातिदेशाभ्यां भिन्नो नो कालभेदतः " इति ॥

ज्योतिष्टोमे पशवोऽग्नीषोमीयसवनीयानुबन्ध्यास्त्रयो विहिताः । तेषु यूपभेदो युक्तः । कुतः । अग्नीषोमीये प्रत्यक्षवचनेन तदुपदेशादितरयोश्चोदकाभ्यामतिदेशादिति प्राप्ते ब्रूमः—न तावदग्नीषोमीयपशोः कर्मणः काले यूपस्योत्पत्तिः । [ किं तु ] ततः प्रागेव यूपोत्पत्तिकालः । दीक्षासु यूपं छिनत्ति क्रीते वा राजनीति तत्कालविधानात् । अत आधानवत्सर्वार्थत्वं संभवति । यथा स्वकाले संपन्नमाधानं तत्तद्वाक्यविशेषैस्तेषु तेषु कर्मसु संबध्यते तथा स्वकाले छेदनादिना निष्पन्नो यूपः प्रत्यक्षचोदकोक्तिभ्यां तत्र तत्र विनियुज्यते । तस्मात्तन्त्रेण यूपः संपादनीयः ।

---

१ ख. °दङ्गत्वा° । २ ख. ग. घ. ङ. °यानूब° ।

तत्रैव द्वितीयपादे चिन्तितम्—

" यूपैकादशिनीयूपाहुतेर्भेदोऽथ तन्त्रता ।
सामीप्यभेदादाद्योऽन्त्यः सामीप्यं दृष्टिगं यतः " इति ॥

यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः प्रतियूपं भिद्यते । कुतः । यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति तद्विधानात्सामीप्यानां च भेदादिति प्राप्ते ब्रूमः—न तावदत्यन्तसामीप्यं संभवति यूपदाहप्रसङ्गात् । अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य समीपत्वमभ्युपेयम् । तथा सति देशैक्यसंभवादाहुतेस्तन्त्रता ॥

षष्ठस्य तृतीयपादे चिन्तितम्—

" अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः ।
अमुख्यस्तक्षणाद्यूपः खादिरस्तक्षणात्पुनः " इति ॥

यदा यूपार्थे खादिरमलब्ध्वा[1] कदरे तक्षणादिसंस्कृते सति पश्चान्मुख्यः खदिरो यदि पशुनियोजनात्प्रागेव लभ्यते तदा तक्षणादिसंस्कृतः प्रतिनिधिः[2] कदर एव ग्राह्यः, असंस्कृतात्संस्कृतस्य प्रशस्तत्वादिति चेन्मैवम् । मुख्ये खदिरे लब्धे पुनस्तक्षणादिसंस्कारः कर्तव्यः । तथा सति संस्कृतस्य मुख्यस्य लाभात्प्रतिनिधिः संस्कृतोऽपि परित्याज्यः ॥

तत्रैवान्यच्चिन्तितम्—

" पशौ नियुक्ते खदिरलाभे कार्यं पुनर्न वा ।
साद्गुण्याय पुनः कार्यं मुख्यात्प्रवृत्तिर्गुणान्न हि" इति ॥

यदा संस्कृते प्रतिनिधौ पशुर्नियुज्यते तत ऊर्ध्वं खदिरो यदि लभ्येत तदाऽपि पूर्वन्यायेन मुख्यलाभात्साद्गुण्याय मुख्ये यूपे पुनर्नियोजनं कार्यमिति चेन्मैवम् । गुणभूतो यूपः, पशुनियोजनं प्रधानं, न हि गुणानुसारेण प्रधानस्याऽऽवृत्तिर्युक्ता । तस्मान्न नियोजनं पुनः कार्यम् ॥

तत्रैवान्यच्चिन्तितम्—

" अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा तु किम् ।
आद्यो बहुगुणालोपान्न मुख्यायास्तु लोपनम् " इति ॥

यदाऽमुख्यः[3] कदरः स्थूलत्वात्तक्षणादिसंस्कारयोग्यः, मुख्यस्तु खदिरः सूक्ष्मत्वादयोग्यस्तदा तक्षणादिबहुगुणलोपो मा भूदिति प्रतिनिधिरेवाऽऽदरणीय इति चेन्मैवम् । मुख्यसिद्धये गुणलोपस्य सोढुं शक्यत्वात् । तस्मात्कृशोऽपि मुख्य एवोपादेयः ।

---

१ ख. °ब्ध्वाऽखादिरे । २ ख. °निधिरखादिर । ३ ख. °मुख्योऽखादिरः ।

(छिन्नस्य यूपस्य स्थापनम्)

तत्रैवान्यच्चिन्तितम्—

" नियोजनेऽप्ययोग्यश्चेत्खदिरः किं तदा भवेत् ।
मुख्यत्वेन स एव स्यात्तद्वैयर्थ्येन हीतरः " इति ॥

यदा त्वत्यन्तकृशत्वाच्चक्षणादिरहितोऽपि खदिरो नियोजनेऽप्ययोग्यस्तदाऽपि मुख्यत्वात्खदिर एवोपादेय इति चेन्मैवम् । उपात्तस्य प्रयोजनाभावान्नियोजनयोग्यः प्रतिनिधिरेव ग्राह्यः ॥

अत्र नास्ति च्छन्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ प्रथमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ।)

---

पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा शुन्धतां लोकः पितृषदनो यवोऽसि यवयास्मद्द्वेषो यवयारातीः पितृणाꣳ सदनमसि स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्ताद्देवस्त्वा सविता मध्वाऽनक्तु सुपिप्पलाभ्यस्त्वौषधीभ्य उद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीमुपरेण दृꣳह ते ते धामान्युश्मसि (१) गमध्ये गावो यत्र भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमव भाति भूरेः । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा । तद्विष्णोः परमं पदꣳ सदा

पश्यन्ति सूरयः। दिवीव चक्षुराततम्। ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या अन्तरिक्षस्य त्वा सानाववं गूहामि ( २ ) ॥

( उश्मसी पोषमेकान्नविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ प्रथमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

पृथिव्यै। त्वा। अन्तरिक्षाय। त्वा। दिवे। त्वा। शुन्धताम्। लोकः। पितृषदन इति पितृ—सदनः। यवः। असि। यवय। अस्मत्। द्वेषः। यवय। अरातीः। पितृणाम्। सदनम्। असि। स्वावेश इति सु—आवेशः। असि। अग्रेगा इत्यग्रे—गाः। नेतृणाम्। वनस्पतिः। अधीति। त्वा। स्थास्यति। तस्य। वित्तात्। देवः। त्वा। सविता। मध्वा। अनक्तु। सुपिप्पलाभ्य इति सु—पिप्पलाभ्यः। त्वा। ओषधीभ्य इत्योषधि—भ्यः। उदिति। दिवम्।

स्तभान । एति । अन्तरिक्षम् । पृण । पृथिवीम् । उपरेण । दृꣳह । ते । ते । धामानि । उश्मसि । (१) गमध्ये । गावः । यत्र । भूरिशृङ्गा इति भूरि—शृङ्गाः । अयासः । अत्र । अह । तत् । उरुगायस्येत्युरु—गायस्य । विष्णोः । परमम् । पदम् । अवेति । भाति । भूरेः । विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य । युज्यः । सखा । तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः । दिवि । इव । चक्षुः । आततमित्या—ततम् । ब्रह्मवनिमिति ब्रह्म—वनिम् । त्वा । क्षत्रवनिमिति क्षत्र—वनिम् । सुप्रजावनिमिति सुप्रजा—वनिम् । रायस्पोषवनिमिति रायस्पोष—वनिम् । परीति । ऊहामि । ब्रह्म । दृꣳह । क्षत्रम् । दृꣳह । प्रजामिति प्र—जाम् । दृꣳह । रायः । पोषम् । दृꣳह । परिवीरिति परि—वीः । असि । परीति । त्वा । दैवीः । विशः । व्ययन्ताम् । परीति । इमम् । रायः । पोषः । यजमानम् । मनुष्याः । अन्तरिक्षस्य । त्वा । सानौ । अवेति । गूहामि ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

(छिन्नस्य यूपस्य स्थापनम्)

( अथ प्रथमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः। )

---

पञ्चमेऽनुवाके यूपच्छेदो वर्णितः। छिन्नस्य यूपस्य स्थापनं षष्ठेऽनुवाके वर्ण्यते।

## पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा—

कल्पः—" यूप एष प्रक्षालितः प्रपन्नः संपन्नचषालः प्रागवटादुपशेते तमुत्तरेणाऽऽहवनीयं तिष्ठन्पराञ्चं प्रोक्षति पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेति " इति।

प्रोक्षामीति शेषः। चषालो यूपाग्रे प्रतिमुच्यमानः कटकः॥

लोकत्रयाभिमानिदेवताप्रीत्यर्थं प्रोक्षणमित्याह—

"पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्यः प्रोक्षति" [ सं० का० ६ प्र० ३ अ० ४ ] इति॥

नात्रौदुम्बर्या इवाग्रमारभ्याधोमुखप्रोक्षणं किं तु मूलमारभ्योर्ध्वमुखमिति विधत्ते—

" पराञ्चं प्रोक्षति पराङिव हि सुवर्गो लोकः " [ सं० का० ६ प्र० ३ अ० ४ इति॥

## शुन्धतां लोकः पितृषदनो यवोऽसि यवयास्मद्द्वेषो यवयारातीः पितृणाᳪ सदनमसि—

कल्पः—" अवटेऽपोऽवनयति शुन्धतां लोकः पितृषदन इति, यवान्प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति, बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृणाᳪ सदनमसीति " इति।

यूपस्थापनार्थो योऽवटस्तस्मिन्प्रोक्षणशेषं निनीय यवान्प्रक्षिप्य बर्हिर्मुष्टेरर्धं प्रागग्रमर्धमुदगग्रमित्येवं व्यतिषज्य बर्हिरवस्तृणीयात्॥

एतानर्थान्विधत्ते—

" क्रूरमिव वा एतत्करोति यत्खनत्यपोऽव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यवो यजमानेन यूपः संमितो यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति पितृणाᳪ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्यᳪ ह्येतद्यन्निखातं यद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्यो निखातः स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनं मिनोति " [ सं० का० ६ प्र० ३ अ० ४ ] इति।

यद्यप्यत्र यूपावटखननं नाऽऽम्नातं तथाऽप्यौदुम्बर्यामाम्नातं तस्येहानुवृत्ति-मभिप्रेत्य यत्खनतीत्यनूद्यते । तदनुवृत्तये समानविषयत्वं प्रत्यभिज्ञापयितुं तत्र विहितमप्यवनयनादिकं पुनरत्र विधीयते ॥

## स्वावेशोऽस्यग्रेगा नेतृणां वनस्पति-रधि त्वा स्थास्यति तस्य वित्तात्—

कल्पः—" यूपशकलमवास्यति स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्तादिति " इति ।

शोभन आवेशो यूपावस्थितिलक्षणो यस्मिन्प्रथमशकले स स्वावेशः । हे शकल त्वं स्वावेशोऽसि । यूपस्य त्रयो नेतारः प्रथमशकलः स्वरुश्चषालश्चेति । तेषां नेतृणां मध्ये त्वमग्रेगाः प्रथमभावी । वनस्पतिरूपो यूपस्त्वामधिष्ठास्यति । तस्य वित्तात्, तं यूपमनुजानीहि ॥

विधत्ते—

" यूपशकलमवास्यति सतेजसमेवैनं मिनोति " [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

यत्पूर्वोक्तं स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परापततीति शकले प्रक्षिप्ते सति तेन तेजसा सहितमेवैनं यूपं स्थापितवान्भवति ॥

## देवस्त्वा सविता मध्वाऽनक्तु—

कल्पः—" अथ प्रवृह्य चषालं यूपस्याग्रमनक्ति देवस्त्वा सविता मध्वाऽन-क्त्विति " इति ।

मध्वा मधुरेण तेजोरूपेणाऽऽज्येन ॥

तदिदं दर्शयति—

" देवस्त्वा सविता मध्वाऽनक्त्वित्याह तेजसैवैनमनक्ति " [ सं० का० ६ प्र० ३ अ० ४ ] इति ॥

## सुपिप्पलाभ्यस्त्वौषधीभ्यः—

कल्पः—" अन्तरतश्च बाह्यतश्च स्वभ्यक्तं कृत्वा चषालं प्रतिमुञ्चति सुपि-प्पलाभ्यस्त्वौषधीभ्य इति " इति ।

यूपस्याग्रभागः पूर्वमच्छिन्नो रायः सुवीर इति मन्त्रेण च्छिन्नस्तेन निष्पा-दितश्चतुरङ्गुलोच्छ्रितः सच्छिद्रश्चषालः । हे चषाल त्वां यूपाग्रे प्रतिमुञ्चामि । किमर्थम् । शोभनफलसंयुक्तौषध्यर्थम् ॥

---

१ ख. तस्यैवानु॰ । २ ख. ॰त्पूर्वत्रोक्तं । ३ क. ॰वृह्य च॰ । ४ ख. ॰रतो बा॰ ।

( छिन्नस्य यूपस्य स्थापनम् )

विधत्ते—

"सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालं प्रति मुञ्चति तस्माच्छीर्षत ओषधयः फलं गृह्णन्ति" [ सं० का० ६ प्र० ३ अ० ४ ] इति।

यस्मात्फलार्थमग्रे चषालः प्रतिमुक्तस्तस्माच्छिरस्यग्रे फलग्रहणम् ॥

विधत्ते—

"अनक्ति तेजो वा आज्यं यजमानेनाग्निष्ठाऽश्रिः संमिता यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसाऽनक्त्यान्तमनक्त्यान्तमेव यजमानं तेजसाऽनक्ति" [ सं० का० ६ प्र० ३ अ० ४ ] इति।

तक्षणेन निष्पादितास्वष्टासु यूपाश्रिषु मध्ये येयमाहवनीयाग्निसमीपे स्थिता साऽग्निष्ठा तामाज्येनानक्ति। तदिदमञ्जनममन्त्रकमिति बौधायनस्य मतम्। अथ स्रुवेणाग्निष्ठामश्रिमभिघारयन्नाह यूपायाज्यमानायानुब्रूहीत्येतावत एवाभिधानात्।

आपस्तम्बस्तु समन्त्रकतामाह—"देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण संततमविच्छिन्दन्नग्निष्ठामश्रिमनक्त्योपरात्" इति।

अवटे क्षिप्यमाणो मूलभाग उपरम्। मूलतोऽतष्टमुपरमिति ॥

विधत्ते—

"सर्वतः परि मृशत्यपरिवर्गमेवास्मिन्तेजो दधाति" [ सं० का० ६ प्र० ३ अ० ४ ] इति।

यजमाने कमप्यवयवमवर्जयित्वा तेजो दधाति ॥

## उद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीमुपरेण दृꣳह—

कल्पः—" उच्छ्रयत्युद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीमुपरेण दृꣳहेति" इति ॥

वाक्यत्रयप्रयोजनमाह—

"उद्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै" [ सं० का० ६ प्र० ३ अ० ४ ] इति ॥

बौधायनः—" अथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति ते ते धामानि विष्णोः कर्माणि पश्यतेति द्वाभ्यां स यत्राग्निष्ठामश्रिमाहवनीये संपादयति तद्यूपस्य चषालं [1]परीक्षयति तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततमिति" इति।

---

१ क. ग. घ. परेक्षयन्ति।

आपस्तम्बः—"ते ते धामानीत्यवटेऽवदधाति विष्णोः कर्माणि पश्यतेति द्वाभ्यामाहवनीयेनाग्निष्ठाᳪं संमिनोति" इति ।

आद्यो मन्त्र एवमाम्नातः—

ते ते धामान्युश्मसी गमध्ये गावो यत्र भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमव भाति भूरेः ।, इति ।

ते तानि, ते तव, धामानि स्थानानि उश्मसि कामयामहे गमध्ये गन्तुं, गावो गन्तारः, भूरिशृङ्गा बहुदीप्तयः, अयासोऽनपायाः, अह, एव । उरुगायस्य महात्मभिर्गीयमानस्य, भूरेर्महतः । हे यूपाभिमानिन्विष्णो तव तानि स्थानानि गन्तुं कामयामहे । येषु गन्तारो बहुदीप्तयो वर्तन्ते न कदाचिदपयन्ति । एष्वेव स्थानेषु महात्मभिर्गीयमानस्य महतो विष्णोस्तत्परमं पदमवभाति । तादृशस्थानप्राप्तिहेतवे कर्मणे यूपोऽस्मिन्नवटे तिष्ठतु ॥

विधत्ते—

"वैष्णव्यर्चा कल्पयति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतया कल्पयति" [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

ते ते धामानीत्यसौ वैष्णवी । कल्पयति उच्छ्रयेत् ॥

मन्त्रान्तरं त्वेवमाम्नातम्—

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ।, इति ।

हे जना विष्णोः कर्माणि सृष्टिस्थितिसंहारचरितानि पश्यत, यतो यैः कर्मभिर्व्रतानि भवदीयलौकिकवैदिककर्माणि पस्पशे सृष्टवान्निर्मितवान् । स विष्णुरिन्द्रस्य युज्यो योग्यः सखा ॥

तद्विष्णोः परमं पदᳪं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।

तद्विष्णोरिति मन्त्रस्यायमर्थः—सूरयो विद्वांसो वेदान्तपारं गता विष्णोस्तत्परमं पदं स्वरूपं सदा पश्यन्ति । कीदृशं दिव्याकाशे निरावरणे प्रसृतं चक्षुरिवाऽऽततं व्याप्तम् । तादृशस्य विष्णोरनुग्रहाद्वैष्णवस्य यूपस्याग्निष्ठामग्निमाहवनीयेन संमितां स्थापयामीत्यर्थः ॥

( छिन्नस्य यूपस्य स्थापनम् )

अस्मिन्स्थापने विष्णोः कर्माणि तद्विष्णोरिति मन्त्रद्वयं विनियुङ्क्ते—

" द्वाभ्यां कल्पयति द्विपाद्यजमानः प्रतिष्ठित्यै " [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

ते ते धामानीत्यादीनां त्रयाणां मन्त्राणां पदार्था उपेक्षिताः ॥

अग्निष्ठाश्रिस्थापने पूर्वपक्षं दर्शयति—

" यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं वाऽति नावयेत्तेजसैवैनं देवताभिरिन्द्रियेण व्यर्धयति " [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

तक्षणवेलायामष्टास्वश्रिषु कांचिदश्रिमियमग्निष्ठेति प्रज्ञातां कुर्यात् । तामश्रिं यूपस्य पश्चिमभागे स्थितादा (तमा) हवनीयमतिलङ्घ्य दक्षिणत उत्तरतो वा नावयेत्प्रापयेत् । तथा सति तेजआदिभिर्व्यर्धयति वियोजयति ॥

सिद्धान्तं दर्शयति—

" यं कामयेत तेजसैनं देवताभिरिन्द्रियेण समर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयेन सं मिनुयात्तेजसैवैनं देवताभिरिन्द्रियेण समर्धयति " [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

संमिनुयात्संमुखां स्थापयेत् ॥

ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह—

कल्पः—" अथैनं प्रदक्षिणं पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति, मैत्रावरुणदण्डेन संहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेति " इति ॥

मन्त्रयोः स्पष्टार्थतां दर्शयति—

" ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० ३ अ० ४ ] इति ॥

परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्याः—

कल्प[1]ः—" प्रदक्षिणं परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या इति " इति ।

---

१ ख.° ल्पः—" त्रिः प्र° ।

हे यूप त्वं परिवीरासि परितो रशनया वीतो वेष्टितोऽसि । दैवीर्विशो देवसंबन्धिन्यः प्रजा मरुद्गणादयस्त्वां परितो व्ययन्तां वेष्टयन्तु । तद्वदिमं यजमानं धनपुत्रभृत्यादिमनुष्याश्च परिव्ययन्तु ॥

## अन्तरिक्षस्य त्वा सानाववं गूहामि—

कल्पः—"स्वरुमादायान्तरिक्षस्य त्वा सानाववं गूहामीत्युत्तरेणाग्निष्ठां मध्यमे रशनागुणेऽवगूहति" इति ।

हे स्वरो त्वामन्तरिक्षलोकमध्यवर्तिनो रशनागुणस्य सानौ पार्श्वेऽवगूढं करोमि । मन्त्रयोरर्थ उपेक्षितः ॥

विधत्ते—

"परि व्ययत्यूर्ग्वै रशना यजमानेन यूपः संमितो यजमानमेवोर्जा समर्धयति" [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

ओषधिविशेषैर्दर्भैरुत्पन्नत्वाद्रशनाया ऊर्ग्रूपत्वम् । तया यूपस्य संबन्धे सति यूपप्रमाणहेतुर्यजमान एवान्नेन समृद्धो भवति ॥

रशनाया मध्यमगुणस्य देशं विधत्ते—

"नाभिदघ्ने परि व्ययति नाभिदघ्न एवास्मा ऊर्जं दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जते" [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

अस्मा अस्य यजमानस्य नाभिदघ्न उदर ऊर्जं स्थापयति । ततः सर्वे तत्रोर्जा भुञ्जते भुक्तामूर्जं धारयन्ति ॥

नाभिदघ्नप्रशंसार्थं निन्द्यं पक्षमुपन्यस्यति—

"यं कामयेतोर्जैनं व्यर्धयेयमित्यूर्ध्वां वा तस्यावाचीं वाऽवोहेदूर्जैवैनं व्यर्धयति" [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

उदरसदृशान्नाभिदघ्नादूर्ध्वमधो वा रशनावेष्टने यजमानमन्नेन वियोजयति ॥

कामनाभेदेन देशविशेषं विधत्ते—

"यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेद्वृष्टिमेव नियच्छति यदि कामयेतावर्षुकः स्यादित्यूर्ध्वामुदूहेद्वृष्टिमेवोद्यच्छति" [ सं० का० ६ प्र० ३ अ० ४ ] इति ।

नाभिदघ्नदेशादवाचीनमधोदेशे बद्धां पुनरप्यवोहेदपकर्षेत्तेन वृष्टिं नियच्छति न्यग्भावेन प्रवर्तयति । ऊर्ध्वप्रदेशे बद्धां पुनरप्युदूहेदुत्कर्षेत्तेन वृष्टिमुद्यच्छति ऊर्ध्वं प्रवर्तयति निवारयतीत्यर्थः ॥

( छिन्नस्य यूपस्य स्थापनम् )

यूपं सर्वदेवताप्रीतिहेतुतया स्तौति—

" पितॄणां निखातं मनुष्याणामूर्ध्वं निखातादा रशनाया ओषधीना९ रशना विश्वेषां देवानामूर्ध्व९ रशनाया आ चषालादिन्द्रस्य चषाल९ साध्यानामतिरिक्त९ स वा एष सर्वदेवत्यो यद्यूपो यद्यूपं मिनोति सर्वा एव देवताः प्रीणाति " [ सं० का० ६ प्र० ३ अ० ४ ] इति।

निखातमुपरं पितॄणां प्रियं, निखातरशनादेशयोर्मध्यं मनुष्याणां, रशनादेश ओषधीनां, तद्देशचषालयोर्मध्यं विश्वेषां देवानां, चषालदेश इन्द्रस्य, अतिरिक्तं तु साध्यानाम्। तच्च सूत्रे दर्शितम्—" यावदुत्तममङ्गुलिकाण्डं तावदूर्ध्वं चषालाद्यूपस्यातिरिक्तं द्व्यङ्गुलं त्र्यङ्गुलं[1] वा " इति॥

पुनरपि स्वर्गलोकावगतिहेतुतया यूपं स्तौति—

" यज्ञेन वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायन्तमृषयो यूपेनैवानु प्राजानन्तद्यूपस्य यूपत्वं यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै " [ सं० का० ६ प्र० ३ अ० ४ ] इति।

देवाः पुरा कदाचिद्यज्ञं कृत्वा तेन यज्ञेन स्वर्गं गच्छन्तो मनुष्या अप्यस्मानन्वागत्यास्मत्सदृशास्ते भविष्यन्तीति मत्वा यूपेन मनुष्यान्योपयित्वा मोहयित्वा स्वयमेव स्वर्गं गताः। यूपः सर्वदेवत्य इत्यज्ञात्वा काष्ठमात्ररूप इति बुद्धिर्मोहः। ऋषयस्तु यूपमाहात्म्यस्यातीन्द्रियस्यापि द्रष्टारस्तेनैव विदिततत्त्वेन यूपेन देवाननु तं स्वर्गं प्रज्ञातवन्तः। तत्तस्मान्मनुष्यमोहनहेतुत्वाद्यूपस्य यूपत्वं यूपनाम संपन्नम्। "यू (यु) प विमोहने" इत्यस्माद्धातोर्यूपशब्दो निष्पन्नः। एवं च सति विदितमाहात्म्यस्य यूपस्य स्थापनेन स्वर्गः प्रज्ञायते॥

आहवनीयात्पूर्वदेशे[2] यूपस्थापनाय विधत्ते—

" पुरस्तान्मिनोति पुरस्ताद्धि यज्ञस्य प्रज्ञायते प्रज्ञात९ हि तद्यदतिपन्न आहुरिदं कार्यमासीदिति " [ सं० का० ६ प्र० ३ अ० ४ ] इति।

अत्र सूत्रम्—" अग्रेणाऽऽहवनीयं यूपावटं[3] परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि " इति।

विधिवाक्ये पुरस्ताच्छब्दः पूर्वदेशवाची। अर्थवादे तु पूर्वकालवाची। यज्ञस्य संबन्धि यत्कर्तव्यमङ्गजातं तत्सर्वमनुष्ठानात्पूर्वमेव प्रज्ञायते। तथा च

---

१ ख. °लं चतुरङ्गुलं वा। २ ख. °देशं यू°। ३ ख. °टं खनत्य°।

ब्राह्मणान्तरे—" आ चतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामि " इति। यत्तु पूर्वं न ज्ञातं तत्पश्चाद्बुद्धमपि सदज्ञातमेव यस्माल्लोके विस्मरणेनान्यथाकरणेन वा कस्मिंश्चिदनुष्ठेयेऽतिपन्ने विनष्टे सति पश्चात्क्लिश्यन्त आहुरिदं गमनादिकमध्ययनादिकं वा तस्मिन्नेव दिने कार्यमासीन्न चास्माभिस्तदानीं प्रज्ञातमिति। तस्मात्पूर्वकालस्य प्रज्ञानार्हत्वेन प्रशस्तत्वात्पूर्वदेशोऽपि पूर्वत्वसाम्येन प्रशस्तः ॥

यदुक्तं चषालादतिरिक्तं साध्यानामिति तत्समर्थ्यते—

" साध्या वै देवा यज्ञमत्यमन्यन्त तान्यज्ञो नास्पृशत्तान्यद्यज्ञस्यातिरिक्तमासीत्तदस्पृशदतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरत्यतिरिक्तमेतद्यूपस्य यदूर्ध्वं चषालात्तेषां तद्भागधेयं तानेव तेन प्रीणाति " [ सं० का० ६ प्र० ३ अ० ४ ] इति।

साध्यनामका देवाः पुरा यज्ञं कृत्स्नं यज्ञभागमतिलङ्घ्याधिको भागोऽस्माकमस्त्वित्यमन्यन्त। तानाधिकं लिप्समानान्यज्ञो नास्पृशत्। तर्हि किमस्पृशत्। यद्यज्ञस्यातिरिक्तमिहाऽऽसीत्तत्तानस्पृशत्। किमतिरिक्तम्। यदग्नावग्निं मथित्वा प्रहरणमस्ति एतदन्ययज्ञेऽभावादिहातिरिक्तम्। यदपि चषालादूर्ध्वं यूपाग्रमेतदपि यजमानपरिमाणादधिकत्वादतिरिक्तम्। तदुभयं साध्यानां प्रीतिहेतुः ॥

यूपप्रसङ्गात्स्वकाले स्वरुहोमं विधत्ते—

" देवा वै सꣳस्थिते सोमे प्र स्रुचोऽहरन्प्र यूपं तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरꣳ स्रुचां निष्क्रयणमपश्यन्त्स्वरुं यूपस्य सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति जुहोति स्वरुमयज्ञवेशसाय" [सं०का०६ प्र०३अ०४] इति।

पुरा देवाः समाप्ते सोमयज्ञे स्रुचो यूपं चाग्नौ प्राहरन्नग्नौ प्रहर्तुं संकल्पितवन्तः। ततो यज्ञविनाशो मा भूदिति विचार्य प्रस्तरेण स्रुचः स्वरुणा यूपं च निष्क्रीतवन्तः। तस्मात्सोमसमाप्तौ प्रस्तरमग्नौ प्रहरेत्स्वरुं च जुहुयात्। स्वरुर्यूपतक्षणे प्रथमः शकलः। तथा च सूत्रम्—

" अवतक्षणानां स्वरुमधिमन्थनशकलम् " इति ॥

अत्र विनियोगसंग्रहः—

" पृथिपदर्कं पुरेवात्र स्वावे प्रथमपातितम्।
शकलं चावटे क्षिप्त्वा देवोऽग्निष्ठाश्रिकाञ्जनम् ॥ १ ॥

---

१ ख. °स्तः। अथ य°। २ क. ग. घ. ङ. °रुस्तक्ष°।

सुप्यारोपश्चषालाग्रे हृदि यूपं समुच्छ्रयेत् ।
ते तेऽवटे क्षिपेद्विष्णोर्द्वाभ्यां यूपस्य कल्पनम् ॥ २ ॥
ब्रह्मद्वयं गतं[1] यूपो(पे) रज्ज्वा संवेष्टनं[2] परि[3] ।
अन्त स्वरुं तत्र गूहेदिति सप्तदशेरिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—
" अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत् ।
देशं यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते ॥
बहिर्वेद्यर्धमित्येतद्वाक्यं भिद्येत तद्विधौ ।
मीयमानस्य यूपस्य तावान्देशोऽत्र लक्ष्यते " इति ॥

अग्नीषोमीये पशौ यूपं मिनोतीति प्रकृत्य श्रूयते—" अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि " इति ।

यूपं स्थापयितुं कियद्विस्तारवानवटोऽपेक्षित इति बुभुत्सायां तन्निर्णयायैतन्मूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यम्[4] । तस्य च मीयमानस्य वेद्यभ्यन्तरभागोऽङ्गत्वेन विधीयत इति चेन्मैवम् । यथा संस्कृतो वेद्यभ्यन्तरभागोऽर्धमन्तर्वेदीत्यनेन वाक्येन विधीयते तद्वदसंस्कृतो वेदिबहिर्भागोऽप्यर्धं बहिर्वेदीत्यनेन वाक्येन विधातव्यः । ततो वाक्यं भिद्येत । यदा तु वेदेरभ्यन्तरबाह्यभागाभ्यामुपलक्षितोऽसंस्कृतो लौकिको देशो मीयमानयूपोचितो विधीयते तदा नास्ति वाक्यभेदः । तस्माल्लौकिकदेश एवात्र यूपाङ्गत्वेन विधीयते न तु संस्कृतवेदिभागः ॥

अथ च्छन्दः—

ते ते धामानीति त्रिष्टुप् । विष्णोः कर्माणि तद्विष्णोरित्युभे गायत्र्यौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

## इषे त्वोपवीरस्युपो देवान्दैवीर्विशः प्रागु-

---

१ ख. गतो । २ ख. ॰वेष्टयते प॰ । ३ ग. घ. ङ. ॰ष्टने प॰ । ४ ख. ॰याय यूपमूल॰ ।

वह्नींरुशिजो बृहंस्पते धारया वसूंनि हव्या तें स्वदन्तां देवं त्वष्टर्वसुं रण्व रेवंती रमंध्वम- ग्नेर्जनित्रंमसि वृषंणौ स्थ उर्वश्यंस्यायुरंसि पुरूरवां घृतेनाक्ते वृषंणं दधाथां गायत्रं छन्दोऽ- नु प्र जांयस्व त्रैष्टुंभं जागंतं छन्दोऽनु प्र जांयस्व भवंतम् ( १ ) नः समंनसौ समोंक- सावरेपसौं । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपंतिं जातवेदसौ शिवौ भंवतमद्य नंः । अग्नावग्नि- श्चरति प्रविंष्ट ऋषींणां पुत्रो अंधिराज एषः । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कंर्भागधेयंम् ( २ ) ॥

( भवंतमेकंत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

इषे । त्वा । उपवीरित्युंप—वीः । असि । उपो इतिं । देवान् । दैवींः । विशंः । प्रेतिं । अगुः । वह्नींः । उशिजंः । बृहंस्पते । धारयं । वसूंनि । हव्या । ते । स्वदन्ताम् । देवं । त्वष्टः । वसुं । रण्व । रेवंतीः । रमंध्वम् । अग्नेः । जनित्रंम् । असि ।

( यूपे पशुनियोजनार्थमुपाकरणाभिधानम् )

वृषणौ। स्थः। उर्वशी। असि। आयुः। असि। पुरूरवाः। घृतेन। अक्ते इति। वृषणम्। दधाथाम्। गायत्रम्। छन्दः। अनु। प्रेति। जायस्व। त्रैष्टुभम्। जागतम्। छन्दः। अनु। प्रेति। जायस्व। भवतम्। (१) नः। समनसाविति स—मनसौ। समोकसाविति सम्—ओकसौ। अरेपसौ। मा। यज्ञम्। हिꣳसिष्टम्। मा। यज्ञपतिमिति यज्ञ—पतिम्। जातवेदसाविति जात—वेदसौ। शिवौ। भवतम्। अद्य। नः। अग्नौ। अग्निः। चरति। प्रविष्ट इति प्र—विष्टः। ऋषीणाम्। पुत्रः। अधिराज इत्यधि—राजः। एषः। स्वाहाकृत्येति स्वाहा—कृत्य। ब्रह्मणा। ते। जुहोमि। मा। देवानाम्। मिथुया। कः। भागधेयमिति भाग—धेयम् (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

( अथ प्रथमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः। )

---

षष्ठेऽनुवाके यूपस्थापनमुक्तम्। तस्मिन्यूपे पशुं नियोक्तुमुपाकरणमस्मिन्सप्तमेऽनुवाकेऽभिधीयते।

इषे त्वोपवीरस्युपो देवान्दैवीर्विशः प्रागुर्वह्नी-

## रुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वम्—

बौधायनः—" अथैनं पशुं पल्पूलितमन्तरेण चात्वालोत्करौ प्रपाद्याग्रेण यूपं पुरस्तात्प्रत्यङ्मुखं स्थापयति तमिषे त्वेति बर्हिषी आदायोपाकरोति उपवीरस्युपो देवान्दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वामिति " इति ।

पल्पूलितं स्नापितम् ।

आपस्तम्बः—" इषे त्वेति बर्हिषी आदत्त उपवीरसीति प्लक्षशाखां बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात्प्रत्यञ्चं पशुमुपाकरोति उपो देवान्दैवीर्विश इति " इति ।

हे बर्हिरिषे पशुलक्षणाय देवान्नायेष्यमाणाय त्वामाददे । बर्हिरिति जात्येकवचनम् । उपाकर्तुं वेति गच्छतीत्युपवीः । हे प्लक्षशाखे त्वमुपवीरसि । उपो समीपे प्रागुः प्राप्ताः । के, उपाक्रियमाणपशुसंबन्धिहृदयाद्यवयवा इत्यर्थाल्लभ्यते । कान्प्राप्ताः, देवानग्नीषोमादीन्दैवीर्विशस्तद्देवसंबन्धिनीः प्रजाश्च । किं च वह्नीर्यागनिर्वाहकानुशिजः शेषभक्षणकामान्प्राप्ताः । हे बृहस्पते वसूनि हृदयादिद्रव्याणि धारय पोषय । हे पशो ते त्वदीयानि हव्यानि स्वदन्तां स्वादूनि भवन्तु । हे देव त्वष्टृनामक वसु पशुद्रव्यं रण्व रमणीयं कुरु । हे रेवतीः क्षीरादिधनवन्तः पशवो रमध्वं यजमानगृहे क्रीडध्वम् ॥

## अग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा घृतेनाक्ते वृषणं दधाथाम्—

कल्पः—" अग्नेर्जनित्रमसीत्यधिमन्थनशकलं निदधाति, वृषणौ स्थ इति प्राञ्चौ दर्भौ, उर्वश्यसीत्यधरारणिमादत्ते, पुरूरवा इत्युत्तरारणिं, घृतेनाक्ते वृषणं दधाथामित्युभे अभिमन्त्र्याऽऽयुरसीति समवधाय " इति ।

हे शकल त्वमग्नेर्जनकमसि । हे दर्भौ युवां वृषणौ वीर्यसेचकौ स्थः । हेऽधरारणे त्वमुर्वश्या सदृशी भवसि । हे उत्तरारणे त्वं पुरूरवसा समानाऽसि । हे उभे अरणी युवां घृतेनाक्ते सत्यौ सेचनं पोषयतम् । हेऽरणिद्वय मातापितृस्थानीय त्वमायुरसि यज्ञस्याऽऽयुस्थानीयमसि । पुत्रस्थानीयं वह्निमुत्पाद्य यज्ञाभिवृद्धिकरत्वात् ॥

---

१ ख. ग. घ. ङ. 'थैतं प' । २ क. ग. घ. ङ. 'वास्त्वर्यालभ्यन्ते । वा' । ३ क. ग. घ. ङ. 'राणिं पु' ।

( यूपे पशुनियोजनार्थमुपाकरणाभिधानम् )

यद्यप्यत्र पाठक्रमेणेषे त्वेत्यादय उपाकरणमन्त्रा[1] व्याख्यातव्यास्तथाऽपि पूर्वानुवाके प्रसङ्गाद्यदुक्तमतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरतीति तद्विस्पष्टयितुमादावग्निमन्थनमन्त्रान्व्याचिख्यासुर्मन्थनविशिष्टमग्निप्रहरणं विधत्ते—

"साध्या वै देवा अस्मिँल्लोक आसन्नान्यत्किंचन मिषत्तेऽग्निमेवाग्नये मेधायाऽलभन्त न ह्यन्यदालम्भ्यमविन्दन्ततो वा इमाः प्रजाः प्राजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय" [सं०का०६प्र०३अ०५]इति।

मनुष्यपश्वादिसृष्टेः पुरा लोके साध्यनामका देवा एवाऽऽसन्। अन्यत्किमपि मिषत्प्राणिजातं नाऽऽसीत्। ते च साध्याः प्रजाकामास्तद्धेतवे यज्ञायाऽऽलभन्ते(म्भन्त) योग्यमन्यत्पशुजातमलब्ध्वाऽग्निमेव[2] पशुत्वेनाग्नये देवताया आलभन्त पुरुषारण्यपशुन्यायेन पर्यग्निकरणान्तान्संस्कारानकुर्वत। तथा चाश्वमेधकाण्डे श्रूयते—"पर्यग्निकृतं पुरुषं चाऽऽरण्याꣳश्चोत्सृजन्त्यहिꣳसायै" इति। ततोऽग्न्यालम्भनरूपाद्यज्ञादेव प्रजा असृजन्त। तस्मात्पूर्वसिद्धाग्नौ मथिताग्नेः प्रहरणं प्रजोत्पत्तये भवति॥

अथ मन्थनकालश्चिन्त्यते—उपाकरणमारभ्य मारणपर्यन्तो व्यापार आलम्भशब्दार्थः, किं तस्मादालम्भादूर्ध्वमग्निर्मन्थनीय आहोस्विदुपाकरणानन्तरमिति। तत्र[3] प्रथमपक्षे दोषमाह—

"रुद्रो वा एष यदग्निर्यजमानः पशुर्यत्पशुमालभ्याग्निं मन्थेद्रुद्राय यजमानमपि दध्यात्प्रमायुकः स्यात्" [सं० का० ६ प्र० ३ अ० ५] इति।

रुद्रः क्रूरः। पशोर्यजमाननिष्क्रयणरूपत्वात्पशुरेव यजमानः। तत आलम्भादूर्ध्वमग्निमन्थने हविर्भूतं यजमानमपि रुद्राय दद्यात्। ततो यजमानो मरणशीलः स्यात्॥

तस्मिन्नेव पक्षे गुणमपि दर्शयति—

"अथो खल्वाहुरग्निः सर्वा देवता हविरेतद्यत्पशुरिति यत्पशुमालभ्याग्निं मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयति" [सं० का० ६ प्र० ३ अ० ५] इति।

"ते देवा अग्नौ तनूः संन्यदधत। तस्मादाहुः। अग्निः सर्वा देवताः" इति श्रुतेरग्नेः सर्वदेवतारूपत्वम्। पशोर्हविष्ट्वं प्रसिद्धम्। तथा सत्यालभ्य मन्थने प्रत्यासन्नाय हविषे सर्वा देवता जनयति संनिधापयति॥

---

१ ख. °मन्त्राः प्रथमं व्या°। २ ख. °न्त, अन्यदालम्भनयोग्यं पशु°। ३ ख. ग. घ. ङ. अत्र।

द्वितीयपक्षं सिद्धान्तत्वेनोपादत्ते—

" उपाकृत्यैव मन्थ्यस्तन्नेवाऽऽलब्धं नेवानालब्धम् " [ सं० का० ६ प्र० ३ अ० ५ ] इति ।

उपाकरणेनाऽऽलम्भ उपक्रान्तोऽतो यथोक्तगुणः सिध्यति । अमारणेनासमाप्तत्वाद्यथोक्तदोषो न भविष्यति ॥

द्वयोर्मन्त्रयोरर्थे प्रसिद्धिं दर्शयति—

" अग्नेर्जनित्रमसीत्याहाग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इत्याह वृषणौ ह्येतौ " [ सं० का० ६ प्र० ३ अ० ५ ] इति ॥

स्त्रीमन्त्रपुरुषमन्त्रतत्समवधानमन्त्रैर्मिथुनत्वसिद्धिं दर्शयति—

" उर्वश्यस्यायुरसीत्याह मिथुनत्वाय " [ सं०का०६प्र०३अ०५ ] इति ।

वृषणशब्देन निषिक्तवीर्यस्थानीय उत्पाद्यो वह्निर्विवक्षित इत्याह—

" घृतेनाक्ते वृषणं दधाथामित्याह वृषणꣳ ह्येते दधाते ये अग्निम् " [ सं० का० ६ प्र० ३ अ० ५ ] इति ।

ये अधरोत्तरारणी वह्निं धारयत एते वृषणं सिक्तवीर्यं दधाते इति मन्त्रेणोच्यते ॥

## गायत्रं छन्दोऽनु प्र जायस्व त्रैष्टुभं जागतं छन्दोऽनु प्र जायस्व—

बौधायनः—" अथ प्रजातीर्वाचयति गायत्रं छन्दोऽनु प्र जायस्व त्रैष्टुभं[1] जागतं छन्दोऽनु प्रजायस्वेति[2] "[3] इति ।

त्रैष्टुभमित्यत्र च्छन्द इत्यनुषङ्गः ।

आपस्तम्बः—" अग्नये मथ्यमानायानु ब्रूहीति संप्रेष्यति मथ्यमानायानुब्रूहीति वा, प्रथमायां त्रिरनूक्तायां त्रिः प्रदक्षिणमग्निं मन्थति गायत्रं छन्दोऽनु प्र जायस्वेति[4] प्रथमं, त्रैष्टुभमिति द्वितीयं, जागतमिति तृतीयं, ततो यथाप्राशु मन्थति " इति ।

हेऽग्ने होत्रा पठ्यमानं गायत्रं छन्दोऽनुलक्ष्य त्वं प्रजायस्व । एवमितरत्रापि योज्यम्[5] । प्राशु क्षिप्रमित्यर्थः ॥

छन्दसां साधनत्वमनेन मन्त्रेण दर्शितमित्याह—

" गायत्रं छन्दोऽनु प्र जायस्वेत्याह छन्दोभिरेवैनं प्र जनयति " [ सं० का० ६ प्र० ३ अ० ५ ] इति ।

१ ख. °भं छन्दोऽनु प्रजायस्व जा° । २ ख. °ति प्रदक्षिणमग्निं मन्थति " इ° । ३ ख. °ति । आ° । ४ ग. घ. ङ. °ति त्रै° । ५ क ग. घ. ङ. °म् । छ° ।

( यूपे पशुनियोजनार्थमुपाकरणाभिधानम् )

होतारं प्रत्यध्वर्योः प्रैषमन्त्रमुत्पादयति—

" अग्नये मथ्यमानायानु ब्रूहीत्याह " [ सं० का० ६ प्र० ३ अ० ५ ] इति ॥

होतुरभि त्वा देव सवितरित्येतामृचं विधत्ते—

" सावित्रीमृचमन्वाह सवितृप्रसूत एवैनं मन्थति " [ सं० का० ६ प्र० ३ अ० ५ ] इति ॥

पुनः प्रैषद्वयमुत्पादयति—

" जातायानु ब्रूहि प्रह्रियमाणायानु ब्रूहीत्याह काण्डेकाण्ड एवैनं क्रियमाणे समर्धयति " [ सं० का० ६ प्र० ३ अ० ५ ] इति ।

मन्थनकाण्ड एकः । मथितस्य जन्मकाण्डोऽपरः । जातस्य पूर्वाग्नौ प्रहरणकाण्डोऽन्यः । तत्र सर्वत्र प्रैषे सति मन्त्रैरग्निः समृद्धो भवति ॥

होतृमन्त्रान्विधत्ते—

" गायत्रीः सर्वा अन्वाह गायत्रछन्दा वा अग्निः स्वेनैवैनं छन्दसा समर्धयति " [ सं० का० ६ प्र० ३ अ० ५ ] इति ।

मन्थनकालेऽनुवचनीया अभि त्वा देव सवितरित्याद्याः । जाते सति उत ब्रुवन्तु जन्तव इत्यादिकमनुब्रूयात् । प्रहरणकाले प्र देवं देववीतय इत्यादिकमनुब्रूयात् । ताः सर्वा ऋचो गायत्र्यः । अग्निश्च गायत्र्या सहोत्पन्नत्वाद्गायत्रछन्दाः ॥

कल्पः—" भवतं नः समनसावित्यग्रेणोत्तरं परिधिमाहवनीये प्रहरति इधिना वाऽग्नावग्निश्चरति प्रविष्ट इति प्रहृत्य स्रुवेणाभिजुहोति " इति ॥

मन्त्रौ त्वेवमाम्नातौ—

भवतं नः समनसौ समोकसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः । अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम् ।, इति ॥

योऽग्निः पुराऽऽहवनीये वर्तते, यश्चेदानीं मथितस्तस्मिन्प्रह्रियते, तौ युवामस्मान्प्रति समनसौ समानमनस्कौ विप्रतिपत्तिरहितौ समोकसौ समाननिवासस्थानावरेपसौ पापचित्तरहितौ भवतम् । यज्ञस्य यज्ञपतेश्च हिंसां मा कुरुतम् । अद्यास्मिन्कर्मणि नोऽस्मान्प्रति शिवौ शान्तौ भवतम् । एष मथितोऽ-

ग्निराहवनीयाग्नौ प्रविष्टश्चरति। कीदृशः। ऋषीणां मन्त्राणामृत्विजां वा पुत्रः। तैरुत्पादितत्वात्। अधिकं राजत इत्यधिराजः। हे मथिताग्ने ते तुभ्यं स्वाहाशब्दमुच्चार्य मन्त्रेण जुहोमि। देवानां भागधेयं मिथुया कः, मिथ्याभूतं मा कुरु॥

शिवौ भवतमिति प्रार्थनायाः प्रसक्तिं दर्शयति—

" अग्निः पुरा भवत्यग्निं मथित्वा प्र हरति तौ संभवन्तौ यजमानमभि संभवतो भवतं नः समनसावित्याह शान्त्यै " [ सं०का०६प्र०३अ०५ ] इति।

यजमानं भक्षयितुमभिलक्ष्य परस्परसंयुक्तत्वात्तच्छान्त्यै प्रार्थनीयौ। अग्नावग्निरिति मन्त्र उपेक्षितः॥

विधत्ते—

" प्रहृत्य जुहोति जातायैवास्मा अन्नमपि दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा " [ सं० का० ६ प्र० ३ अ० ५ ] इति।

समर्धयतीत्यन्वयः॥

उत्तरभाविनोऽपि मन्थनमन्त्रा औत्सुक्येनाऽऽदौ व्याख्याताः। अथ पूर्वभाविन उपाकरणमन्त्रान्व्याचिख्यासुर्विधत्ते—

" इषे त्वेति बर्हिरा दत्त इच्छत इव ह्येष यो यजते " [ सं० का० ६ प्र० ३ अ० ६ ] इति।

एष यजमानो देवेभ्यो दातुं पशुरूपं हविरिच्छत्येव। तस्मादिष इत्युच्यते॥

पशुसमीपे देवानाह्वयतीति प्लक्षशाखोपवीरित्युच्यते, तदेतद्दर्शयति—

" उपवीरसीत्याहोप ह्येनानाकरोति " [ सं०का०६प्र०३अ०६ ] इति॥

हृदयाद्यवयवा देवान्देवप्रजाश्च प्राप्ता इति यद्व्याख्यातं तत्प्रसिद्धमित्याह—

" उपो देवान्दैवीर्विशः प्रागुरित्याह दैवीर्ह्येता विशः सतीर्देवानुपयन्ति " [ सं० का० ६ प्र० ३ अ० ६ ] इति।

यद्वा हृदयादय एव पदार्थत्वेन दैवप्रजा भूत्वा देवान्प्राप्नुवन्ति॥

वह्निशब्दो वाहकवाचीत्यभिप्रेत्य दर्शयति—

" वह्नीरुशिज इत्याहर्त्विजो वै वह्नय उशिजस्तस्मादेवमाह " [ सं० का० ६ प्र० ३ अ० ६ ] इति॥

अत्र पशुप्रदत्वेन बृहस्पतिप्रार्थनमित्याह—

" बृहस्पते धारया वसूनीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे " [ सं० का० ६ प्र० ३ अ० ६ ] इति॥

( उपाकृताग्नीषोमीयपशुविशसनाभिधानम् )

हृदयादीनि स्वादूकर्तुमियमाशीरित्याह—

" हव्या ते स्वदन्तामित्याह स्वदयत्येवैनान् " [ सं० का० ६ प्र० ३ अ० ६ ] इति ॥

मिथुनरूपपशुप्रदत्वेन त्वष्टुः प्रार्थनमित्याह—

" देव त्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति " [ सं० का० ६ प्र० ३ अ० ६ ] इति ॥

रेवतीशब्दः पशुपर इत्याह—

" रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवास्मै रमयति " [ सं० का० ६ प्र० ३ अ० ६ ] इति ॥

अत्र विनियोगसंग्रहः—

" इषे बर्हिः समादत्त उपेति प्लक्षशाखिकाम् ।
उपो पशुमुपाकृत्य ह्यग्नेः शकलसंस्थितिः ॥ १ ॥
तृपात्र दर्भौ संस्थाप्य ध्रुवारणिमधः क्षिपेत् ।
पुरूत्तरां समादत्त आयुरित्युपरि क्षिपेत् ॥ २ ॥
घृते संमन्त्र्य गायेति त्रिभिर्मथ्नाति निक्षिपेत् ।
भव पूर्वानलेऽथाग्नौ होमो मन्त्राश्चतुर्दश " इति ॥ ३ ॥

अत्र विशेषमीमांसा नास्ति ॥

अथ च्छन्दः—

भवतं नः समनसाविति पङ्क्तिः । अग्नावग्निरिति त्रिष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

आ द॑द ऋ॒तस्य॑ त्वा दे॒वह॒विः पा॒शेना॑ऽऽर॑भे ध॒र्षा मानु॑षान॒भ्यस्त्वौष॑धीभ्य॒ः प्रोक्षा॑म्य॒पां पे॒रुर॑सि स्वा॒त्तं चि॒त्सदे॑वꣳ ह॒व्यमापो॑ दे॒वीः॒ स्वद॑तैनꣳ सं ते॑ प्रा॒णो वा॒युना॑ गच्छता॒ꣳ सं

यजत्रैरङ्गानि सं यज्ञपतिराशिषा घृतेनाक्तौ पशुं त्रायेथाꣳ रेवतीर्यज्ञपतिं प्रियधाऽऽ विशतोरो अन्तरिक्ष सजूर्देवेन (१) वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः पृथिव्याः संपृचः पाहि नमस्त आतानानर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणाऽऽपो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊड्ढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म (२) ॥

( देवेन चतुश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

एति । ददे । ऋतस्य । त्वा । देवहविरिति देव—हविः । पाशेन । एति । रभे । धर्ष । मानुषान् । अद्भ्य इत्यत्—भ्यः । त्वा । ओषधीभ्य इत्योषधि—भ्यः । प्रेति । उक्षामि । अपाम् । पेरुः । असि । स्वात्तम् । चित्र । सदेवमिति स—देवम् । हव्यम् । आपः । देवीः । स्वदत । एनम् । समिति । ते ।

प्राण इतिं प्र—अनः । वायुनां । गच्छताम् । समितिं । यजंत्रैः । अङ्गांनि । समितिं । यज्ञपंतिरितिं यज्ञ—पतिः । आशिषेत्यां—शिषां । घृतेनं । अक्तौ । पशुम् । त्रायेथाम् । रेवंतीः । यज्ञपंतिमितिं यज्ञ—पतिम् । प्रियधेतिं प्रिय—धा । एतिं । विशत । उरो इतिं । अन्तरिक्ष । सजूरितिं स—जूः । देवेनं ।(१) वातेंन । अस्य । हविषंः । त्मनां । यज । समितिं । अस्य । तनुवां । भव । वर्षीयः । वर्षीयसि । यज्ञे । यज्ञपंतिमितिं यज्ञ—पतिम् । धाः । पृथिव्याः । संपृच इतिं सं—पृचंः । पाहि । नमंः । ते । आतानेत्यां—तान । अनर्वा । प्रेतिं । इहि । घृतस्यं । कुल्याम् । अन्वितिं । सह । प्रजयेतिं प्र—जयां । सह । रायः । पोषेंण । आपंः । देवीः । शुद्धायुव इतिं शुद्ध—युवः । शुद्धाः । यूयम् । देवान् । ऊड्ढ्वम् । शुद्धाः । वयम् । परिंविष्टा इति परिं—विष्टाः । परिवेष्टार इतिं परि—वेष्टारंः । वः । भूयास्म । ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

———

( अथ प्रथमकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमेऽनुवाके पशोरुपाकरणं प्राधान्येनोक्तम् । अथोपाकृतस्य विशसनमष्टमेऽनुवाके विधीयते ।

आ दद ऋतस्य त्वा देवहविः
पाशेनाऽऽ रभे धर्षा मानुषान्—

बौधायनः—" अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा दद इति " इति ।

अत्राऽऽम्नात आ दद इति मन्त्रो देवस्य त्वेत्यनेन पूर्यते ।

आपस्तम्बः—" सावित्रेण रशनामादाय पशोर्दक्षिणे बाहौ परिवीयोर्ध्वमुत्कृष्यर्तस्य त्वा देवहविः पाशेनाऽऽ रभ इति दक्षिणेऽर्धशिरसि पाशेनाक्ष्णया प्रतिमुच्य धर्षा मानुषानित्युत्तरतो यूपस्य नियुनक्ति दक्षिणत ऐकादशिनान् " इति ।

हे रशने त्वामाददे । हे देवहविः पशो, ऋतस्य यज्ञस्य सिद्ध्यर्थं त्वां पाशेनाववध्नामि । हे विनियुज्यमानपशो देवत्वप्राप्त्या मानुषानुपद्रवांस्ताडनादीन्धर्षाभिभव ॥

विधत्ते—

"देवस्य त्वा सवितुः प्रसव इति रशनामा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै " [ सं० का० ६ प्र० ३ अ० ६ ] इति ॥

ऋतशब्दार्थमाह—

" ऋतस्य त्वा देवहविः पाशेनाऽऽ रभ इत्याह सत्यं वा ऋत१ सत्येनैवैनमृतेनाऽऽ रभते " [ सं० का० ६ प्र० ३ अ० ६ ] इति ।

अवश्यंभाविफलोपेतत्वाद्यज्ञस्वरूपं सत्यं, तेन निमित्तेनैनं पशुं बध्नाति ॥

बन्धनप्रकारं विधत्ते—

" अक्ष्णया परि हरति वध्य१ हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै " [ सं० का० ६ प्र० ३ अ० ६ ] इति ।

अक्ष्णया पूर्वोक्तया दक्षिणपादादिशिरोभागपर्यन्तया वक्रया परिहरति

---

१ ख. 'णेऽधःशि' । २ ग. ङ. 'मुञ्चति ध' ।

वेष्टयति। लोके तु मांसभक्षिणो वध्यं पशुं प्रत्यञ्चं स्वाभिमुखमवस्थाप्य गले पाशं प्रतिमुञ्चन्ति। अतस्तद्व्यावृत्तये वक्रबन्धनम् ॥

विधत्ते—

" धर्षा मानुषानिति नि युनक्ति धृत्यै " [ सं० का० ६ प्र० ३ अ० ६ ] इति। नियुनक्ति निरन्तरं बध्नीयात्। तच्च बन्धनं धृत्यर्थं पलायननिवारणार्थम् ॥

## अद्भ्यस्त्वौषधीभ्यः प्रोक्षाम्यपां पेरुरसि स्वात्तं चित्सदेवꣳ हव्यमापो देवीः स्वदतैनम्—

कल्पः—" अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षति, अपां पेरुरसीति पाययति, स्वात्तं चित्सदेवꣳ हव्यमापो देवीः स्वदतैनमित्युपरिष्टादधस्तात्सर्वतश्च प्रोक्ष्य " इति।

हे पशो त्वामद्भिरोषधीभिश्च प्रोक्षामि। दर्भैरपामुत्पूतत्वादस्त्योषधीनामपि प्रोक्षणसाधनत्वम् ॥

पातृस्वीकृताभ्यां तृणोदकाभ्यां पशोरुत्पन्नत्वेनोभयेन प्रोक्षणं युक्तमित्याह—

" अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः संभवति यत्पशुः " [ सं० का० ६ प्र० ३ अ० ६ ] इति ॥

पेरुशब्दः पातृवाचीत्याह—

" अपां पेरुरसीत्याहैष ह्यपां पाता यो मेधायाऽऽरभ्यते " [ सं० का० ६ प्र० ३ अ० ६ ] इति।

यज्ञार्थमालभ्यमानस्य पशोरित ऊर्ध्वमुदकपानाभावादिदानीमेव पातृत्वम्। हे आपो देव्यः स्वात्तं चित्स्वादुभूतमपि सदेवं देवतार्थं हव्यं होतुं योग्यमेनं पशुं स्वदत स्वादुं कुरुत ॥

अनेन मन्त्रेण स्वादुता भवतीत्याह—

" स्वात्तं चित्सदेवꣳ हव्यमापो देवीः स्वदतैनमित्याह स्वदयत्येवैनम् " [ सं० का० ६ प्र० ३ अ० ६ ] इति ॥

त्रिभिर्मन्त्रैरनुष्ठेयानि विधत्ते—

" उपरिष्टात्प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत एवैनं मेध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोति"[सं० का० ६ प्र० ३ अ० ६] इति ॥

अथ होतारं प्रत्यध्वर्योः प्रैषमुत्पादयति—

"अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिध्यमानायानु ब्रूहीत्याह भ्रातृव्याभिभूत्यै" [ सं० का० ६ प्र० ३ अ० ७ ] इति।

अग्निः समिद्धो भ्रातृव्यानभिभवति ॥

अग्निसमिन्धनाय होत्राऽनूच्यमानानामृचां चोदकप्राप्तां पञ्चदशसंख्यामपोद्य सप्तदशसंख्यां विधत्ते—

"सप्तदश सामिधेनीरन्वाह सप्तदशः प्रजापतिः प्रजापतेराप्त्यै" [ सं० का० ६ प्र० ३ अ० ७ ] इति।

आश्रावयेत्यादिभिरक्षरैः प्रजापतेः सप्तदशत्वम् ॥

तमेव विधिमनूद्य प्रशंसति—

"सप्तदशान्वाह द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरं प्रजा अनु प्र जायन्ते प्रजानां प्रजननाय" [ सं० का० ६ प्र० ३ अ० ७ ] इति।

हेमन्तशिशिरयोः समासेनेति बह्वृचब्राह्मणाम्नानादृतूनां पञ्चसंख्या। प्रजाः संवत्सरं गर्भे स्थित्वा पश्चात्प्रजायन्ते ॥

अमन्त्रकं प्रथममाघारं विधत्ते—

"देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमाघारयत्ततो वै देवा यज्ञमन्वपश्यन्यत्तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्यै" [ सं० का० ६ प्र० ३ अ० ७ ] इति।

बहुनियमोपेते[१] सामिधेन्यनुवचने[२] व्यापृता बुद्धिः श्रान्ता[३] सती पश्चात्कर्तव्यं यज्ञं नान्वपश्यत्[४]। ततः प्रजापतिस्तूष्णीमाघारेण मन्त्रविषयव्यापारजन्यं[५] बुद्धेः श्रममपनीतवान् ॥

तमेव विधिमनूद्य प्रशंसति—

"असुरेषु वै यज्ञ आसीत्तं देवास्तूष्णीꣳहोमेनावृञ्जत यत्तूष्णीमाघारमाघारयति भ्रातृव्यस्यैव तद्यज्ञं वृङ्क्ते" [ सं० का० ६ प्र० ३ अ० ७ ] इति।

असुरा गूढचारिणो भूत्वा देवैरनुष्ठितमवगत्य स्वयमपि तथैवानुतिष्ठन्ति। तथा च श्रुत्यन्तरम्—"देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत" इति। तं वृत्तान्तमवगत्य देवा गूढचारिणां समीपे प्रथममाघारममन्त्रकं हुतवन्तः। तं

१ ख. °पमन्त्रमु°। २ ख. °पेतसा°। ३ ख. °नेन श्रान्ताः सन्तः प°। ४ ख. °श्यन्। तं°। ५ ख °जन्यवु°।

दृष्टवन्तोऽसुराः सहसा गत्वा कृत्स्नं यज्ञं तूष्णीं कृत्वा[1] नाशितवन्तः । तमभिप्रेत्य तं देवास्तूष्णींहोमेनावृञ्जतेत्युच्यते ॥

त्रयाणां परिधीनां मार्जनं प्रत्येकं तदावृत्तिं च विधत्ते—

"परिधीन्त्सं मार्ष्टि पुनात्येवैनान्त्रिस्त्रिः सं मार्ष्टि त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै" [ सं० का० ६ प्र० ३ अ० ७ ] इति ।

परिधिषु पतितस्य भस्मादेरपनयनेन ते शुद्धा भवन्ति । तिस्र आवृत्तयो यस्यासौ त्र्यावृत् । त्रिः प्रथमामन्वाहेत्यादिषु तत्प्रसिद्धम् । त्र्यावृत्त्या तदादरं दृष्ट्वा रक्षसां भयातिशयो भवति । त्रिषु परिधिषु नव संमार्जनान्युक्तानि । अत्रानुक्तैस्त्रिभिर्बर्हिसंमार्जनैः सह द्वादशसंपत्तिः । अत एव दर्शपूर्णमासब्राह्मणे श्रूयते—

"परिधीन्त्संमार्ष्टि पुनात्येवैनान्त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभिजयति त्रिर्दक्षिणार्ध्यं त्रय इमे लोका इमानेव लोकानभिजयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभिजयति त्रिरुपवाजयति त्रयो वै देवलोका देवलोकानेवाभिजयति द्वादश संपद्यन्ते" इति ।

तया संख्यया संवत्सरदेवतां तोषयति । किं चास्य यजमानस्य स्वर्गप्रापणाय तां संवत्सरदेवतामुपदधाति समीपे समानयति ॥

पूर्वं स्रौवाघारो विहितः । अथ स्रुच्याघारं विधत्ते—

"शिरो वा एतद्यज्ञस्य यदाघारोऽग्निः सर्वा देवता यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानः सर्वा देवता अव रुन्धे" [ सं० का० ६ प्र० ३ अ० ७ ] इति ।

आघारस्य होमेषु प्रथमभावित्वेन शिरोरूपत्वम् । यद्यपि पशोरिष्टिविकृतित्वादेवाऽऽघारद्वयं प्राप्नोति तथाऽपि तद्विकृतित्वमेव निश्चेतुं तदीयलिङ्गत्वेनात्र पुनर्विहितम् ॥

## सं ते प्राणो वायुना गच्छताꣳ सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा—

कल्पः—"स्रुच्यमाघार्य[2] प्रत्याक्रम्य जुह्वा पशुं समनक्ति सं ते प्राणो वायुना गच्छतामिति शिरसि सं यजत्रैरङ्गानीत्यंसोच्चलयोः, सं यज्ञपतिरा-

1 ख. हुत्वा । 2 क. ख. ग. स्रुचाऽऽघा° ।

शिषेति श्रोण्याम् ” इति ।

उच्चलशब्देन ककुदुच्यते । हे पशो ते तव प्राणो वायुना संगच्छताम् । हृदयाद्यङ्गानि यजत्रैर्यागविशेषैः संयुज्यन्ताम् । यज्ञपतिराशिषा संयुज्यताम् ॥

स्रुचाऽऽघारशेषेण पश्वञ्जनं विधत्ते—

“ शिरो वा एतद्यज्ञस्य यदाघार आत्मा पशुराघारमाघार्य पशु समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधाति ” [सं० का० ६ प्र० ३ अ०७] इति।

आत्मा ग्रीवाया अधोवर्तिदेहः ॥

प्राणस्य बाह्यवायुसंगमो युक्त इत्याह—

“ सं ते प्राणो वायुना गच्छतामित्याह वायुदेवत्यो वै प्राणो वायावेवास्य प्राणं जुहोति ” [ सं० का० ६ प्र० ३ अ० ७ ] इति ॥

अस्य यज्ञस्य फलेन यजमानो युज्यत इत्येतमर्थमन्त्यमन्त्रे दर्शयति—

“ सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्याह यज्ञपतिमेवास्याऽऽशिषं गमयति ” [ सं० का० ६ प्र० ३ अ० ७ ] इति ।

मध्यममन्त्रेण हृदयाद्यङ्गानि यागविशेषैर्योजयतीत्येतावदुन्नेयम्[1] ॥

पूर्वं शिरस्यञ्जनं विहितम् । इदानीं ककुदि श्रोण्यां चाञ्जनं विधत्ते। अथ वा पूर्वविधेः साधारणत्वात्तमेवानूद्य प्रशंसति—

“ विश्वरूपो वै त्वाष्ट्र उपरिष्टात्पशुमभ्यवमीत्तस्मादुपरिष्टात्पशोर्नाव द्यन्ति यदुपरिष्टात्पशु समनक्ति मेध्यमेवैनं करोति ” [ सं० का० ६ प्र० ३ अ० ७ ] इति ।

त्वष्टुः पुत्रो विश्वरूपः पशुमभि प्राप्योपरिष्टात्पृष्ठभागे वमनमकरोत्। तस्माद्याज्ञिका हृदयादिवदुपरिभागान्नावद्यन्ति । तं भागमञ्जनेन शुद्धं करोति ॥

विधत्ते—

“ ऋत्विजो वृणीते छन्दांस्येव वृणीते ” [सं०का०६प्र०३अ०७] इति।

वक्ष्यमाणसंख्यासाम्यादृत्विजां छन्दस्त्वम् ॥

सप्तत्वसंख्यां विधत्ते—

“ सप्त वृणीते सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दांस्युभयस्यावरुद्ध्यै ” [ सं० का० ६ प्र० ३ अ० ७ ] इति ।

होताऽऽग्नीध्रोऽध्वर्युर्मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टेति [सप्तर्त्विजः] । सप्तग्राम्यादिकं व्याख्यातम् ॥

---

१ ग. घ. ङ. 'शेषे योज' ।

चोदकप्राप्तेषु प्रयाजेषु संख्यां विधत्ते—

" एकादश प्रयाजान्यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तं प्र यजति " [ सं० का० ६ प्र० ३ अ० ७ ] इति।

प्राणशब्देन तदाधारभूतानि च्छिद्राण्युच्यन्ते। तानि च शिरसि सप्त, अधस्ताद्द्वे, नाभिर्दशमी। आत्मा देहः। अत एकादशसंख्यया कृत्स्नं पशुं प्रयजति॥

अन्तिमप्रयाजस्य कालान्तरं विधत्ते—

" वपामेकः परि शय आत्मैवाऽऽत्मानं परि शये " [ सं० का० ६ प्र० ३ अ० ७ ] इति।

वपां परि वपाहोमसमीपे शये शेते तस्मिन्काले यजेदित्यर्थः। चरमः प्रयाजो देहत्वेन निरूपितत्वात्पशोरात्मा, वपाऽपि मुख्यावयवत्वादात्माऽतस्तयोः सामीप्यं युक्तम्॥

## घृतेनाक्तौ पशुं त्रायेथाम्—

कल्पः—" जुह्वा स्वरुस्वधिती अनक्ति, द्विः स्वरुं सकृत्स्वधितेरन्यतरां धारां स्वरुमन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति शिरसि" इति।

हे स्वरुस्वधिती इति संबोधनीयम्॥

स्वरुस्वधितिघृतानामुपयोगं दर्शयति—

" वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्घृतेनाक्तौ पशुं त्रायेथामित्याह वज्रेणैवैनं वशे कृत्वाऽऽलभते " [ सं० का० ६ प्र० ३ अ० ७ ] इति।

त्रिविधेन वज्रेणैनं पशुं वशीकृत्य मारयति॥

विधत्ते—

" पर्यग्नि करोति सर्वहुतमेवैनं करोत्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति " [ सं० का० ६ प्र० ३ अ० ८ ] इति।

अत्र प्रकारः सूत्रेऽभिहितः—" आहवनीयादुल्मुकमादायाऽऽग्नीध्रः परिव्राजयति कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुं यूपमाहवनीयं शामित्रदेशं चात्वालमाज्यानि चेत्येके " इति। तेन पर्यग्निकरणेनैनं पशुं सर्वमपि हुतमेव करोति। तद्धुतत्वं स्कन्दनदोषराहित्याय भवति। होमादूर्ध्वं स्कन्देऽपि तद्दोषो न भवति॥

आवृत्तिं विधत्ते—
" त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै " [ सं० का० ६ प्र० ३ अ० ८ ] इति ॥

## रेवतीर्यज्ञपतिं प्रियधाऽऽ विशत—

कल्पः—" रेवतीर्यज्ञपतिं प्रियधाऽऽ विशतेति वपाश्रपणीभ्यां पशुमन्वारभेते अध्वर्युर्यजमानश्च " इति ।

हे रेवतीर्धनवन्तः पश्ववयवा यजमानं प्रति प्रियधारिण्यो भवत, हविष्ट्वेन यज्ञमाविशत ॥

अत्र विचारं दर्शयति—
" ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वारभ्या३ इति " [ सं० का० ६ प्र० ३ अ० ८ ] इति ॥

प्रथमपक्षे दोषमाह—
" मृत्यवे वा एष नीयते यत्पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यात् " [ सं० का० ६ प्र० ३ अ० ८ ] इति ॥

द्वितीयपक्षे दोषमाह—
" अथो खल्वाहुः सुवर्गाय वा एष लोकाय नीयते यत्पशुरिति यन्नान्वारभेत सुवर्गाल्लोकाद्यजमानो हीयेत " [ सं० का०६प्र०३अ०८ ] इति ॥

दोषद्वयपरिहाराय प्रकारान्तरं विधत्ते—
" वपाश्रपणीभ्यामन्वारभते तन्नेवान्वारब्धं नेवानन्वारब्धम् " [ सं० का० ६ प्र० ३ अ० ८ ] इति ।

याभ्यां दारुमयीभ्यां वपा पच्यते ते वपाश्रपण्यौ ॥

प्रैषमन्त्रमुत्पादयति—
" उप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितꣳ हि कर्म क्रियते " [ सं० का० ६ प्र० ३ अ० ८ ] इति ।

हे होतर्देवेभ्यो वपादीनि हव्यानि कर्तुमुपप्रेष्य पशुसमीपे शमितृन्प्रेरय[1]। लोके हि प्रभुणा प्रेषितं कर्म सहसा क्रियते ॥

मन्त्रस्तु स्पष्टार्थ इत्याह—
" रेवतीर्यज्ञपतिं प्रियधाऽऽ विशतेत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० ३ अ० ८ ] इति ॥

१ ख. तत्र ।

( उपाकृताग्नीषोमीयपशुविशसनाभिधानम् )

कल्पः—" आहवनीयादुल्मुकमादायाऽऽग्नीध्रः पूर्वः प्रतिपद्यते शमिता पशुं नयन्नुरो अन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयति " इति ।

मन्त्रस्त्वेवमाम्नातः—

उरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः, इति ।

अत्रान्तरिक्षशब्देन पशोः श्रोत्रादिच्छिद्रेष्ववस्थित इन्द्रियसमुदाय उपलक्ष्यते । हे उरो अन्तरिक्ष विस्तीर्णेन्द्रियसमुदायास्य पशोरभिमानिदेवेन वातेन प्राणवायुना त्मना जीवात्मना च सजूः सह हविषो यज हविर्देहि । किं चास्य पशोस्तनुवा भविष्यता देवशरीरेण संभव संयुज्यस्व । हे वर्षीयोऽतिविस्तीर्णेन्द्रियसमुदाय वर्षीयस्यतिविस्तीर्णे यज्ञे यज्ञपतिं यजमानं धाः स्थापय । मन्त्रोऽयमुपेक्षितः ॥

विधत्ते—

" अग्निना पुरस्तादेति रक्षसामपहत्यै " [ सं०का०६प्र०३अ०८ ] इति ।

उल्मुकेन सह पशोः पुरस्तादाग्नीध्रो गच्छेत् ॥

पृथिव्याः संपृचः पाहि—

कल्पः—" अभिपर्यग्निकृते देश उल्मुकं निदधाति स शामित्रस्तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्याः संपृचः पाहीति बर्हिरुपास्यत्युपाकरणयोरन्यतरत् " इति ।

हे बर्हिर्भूसंपर्कात्पालय ॥

विधत्ते—

" पृथिव्याः संपृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्न[१] हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति " [ सं० का० ६ प्र० ३ अ० ८ ] इति ।

पशुसंबन्धि यदङ्गं बर्हिषि स्कन्देत्तद्भूमावपतनादस्कन्नमेव । अथ कथंचिदधः पतितेऽप्येनं बर्हिषदमेव करोति ॥

विधत्ते—

" पराङा वर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्पशुभ्य एव तन्निह्नुत आत्मनोऽनाव्रस्काय " [ सं० का० ६ प्र० ३ अ० ८ ] इति ।

१ क. ग. घ. ङ. °तेऽधन° ।

अध्वर्युर्मार्यमाणं पशुमदृष्ट्वा ततः पराङ्मुखः प्रत्यावर्तेत । तेन पशुभ्यो निह्नुते पशुं न मारयामीत्येवमपलपति । स चापलापः स्वस्य दोषाभावाय भवति ॥

वेदनं प्रशंसति—

" गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद " [ सं० का० ६ प्र० ३ अ० ८ ] इति ।

अत्र सूत्रम्—" प्रत्यक्शिरसमुदीचीनपादममायुं कृण्वन्तं संज्ञपयेत्युक्त्वा पराङावर्ततेऽध्वर्युः " इति ॥

## नमस्त आतान—

कल्पः—" ततः प्रतिप्रस्थाता पत्नीमुदानयति नमस्त आतानेति पत्न्यादित्यमुपतिष्ठते " इति ।

आ समन्तात्तानो व्याप्तिर्यस्य सूर्यरश्मेः स आतानः ॥

एतदेव दर्शयति—

" पश्चाल्लोका वा एषा प्राच्युदानीयते यत्पत्नी नमस्त आतानेत्याहाऽऽदित्यस्य वै रश्मय आतानास्तेभ्य एव नमस्करोति " [ सं० का० ६ प्र० ३ अ० ८ ] इति ।

पश्चात्प्रतीच्यां दिशि निर्मिता शाला लोको निवासस्थानं यस्याः सा पश्चाल्लोका । तादृशी यदा प्राचीं गच्छति तदानीमाभिमुख्येन सूर्यरश्मिर्भवतीति तन्नमस्कारो युक्तः ॥

अनर्वा प्रेहि घृतस्य कुल्यामनु सह
प्रजया सह रायस्पोषेणाऽऽपो देवीः
शुद्धायुवः शुद्धा यूयं देवाꣳ ऊड्ढ्वꣳ शुद्धा
वयं परिविष्टाः परिवेष्टारो वो भूयास्म ॥

बौधायनः—" अथैनामन्तरेण चात्वालोत्करावुदगुपनिष्क्रमय्य प्राचीमुदानयन्वाचयत्यनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्यागतामध्वर्युरप्सु वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊड्ढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति " इति ।

---

१ ख. ग. घ. ङ. °पयेतेत्यु° । २ ख. °परि नि° ।

आपस्तम्बः—" अनर्वा प्रेहीति प्राचीमुदानयत्यनुमन्त्रयत इत्येक आपो देवीः शुद्धायुव इति चात्वाले पत्न्यपोऽवमृशति " इति ।

हे पत्नि त्वमनर्वा शत्रुरहिता सती घृतप्रवाहमनु प्रजया सह धनपुष्ट्या च सह प्रयाहि । घृतस्य कुल्यामित्यनेन सर्ववस्तुसंपूर्णं स्थानमुपलक्ष्यते । हे आपो देव्यो यूयं देवानुद्दद्ध्वं यागप्रदेशे प्रापयत । कीदृश्यो यूयम् । शुद्धायुवः शुद्धिमस्मदीयामिच्छन्तीति शुद्धायुवः । यूयं तु स्वत एव शुद्धाः । वयमपि युष्माभिः परिवेष्टिताः शुद्धाः सन्तो युष्माकं परिवेष्टारो भूयास्म ॥

एतौ मन्त्रौ व्याचष्टे—

" अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाऽऽशिषमेवैतामा शास्त आपो देवीः शुद्धायुव इत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० ३ अ० ८ ] इति ॥

अत्र विनियोगसंग्रहः—

" आ ददे रज्जुमादाय ऋत बध्नाति तं पशुम् ।
धर्षं यूपे नियुङ्क्तेऽद्भ्यः प्रोक्ष्यापां पाययेदपः ॥ १ ॥
स्वात्तं सर्वत्र संप्रोक्ष्य सं ते मूर्ध्नि समञ्जनम् ।
सं यांसयोः सं य पश्चाद्घृते सस्वरुशस्त्रके ॥ २ ॥
रेव श्रपण्युपस्पर्श उरो उत्तरतो नयेत् ।
पृथि बर्हिरवस्थाप्य नमः पत्नी रविं भजेत् ॥
अन पत्नीं नयेदापः स्पृश(शे)न्मन्त्रास्तु षोडश ॥३॥ " इति ॥

## अथ मीमांसा ।

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

" गच्छतामिति शब्दस्यानुषङ्गोऽस्ति न वोपरि ।
सं यज्ञपतिरित्यत्र योग्यत्वात्सोऽस्ति पूर्ववत् ॥
तदेकवचनं मध्यमन्त्रेऽङ्गानीत्यनेन हि ।
नान्वेति तद्व्यवायेन नोपर्यप्यनुषज्यते " इति ॥

अग्नीषोमीयपशौ श्रूयते—" सं ते प्राणो वायुना गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा " इति ।

अयमर्थः—भोः पशो तव प्राणवायुर्वायुना संगच्छतां, तव हृदयाद्यङ्गानि यागविशेषैः संयुज्यन्तां, यज्ञपतिराशिषा संयुज्यतामिति । तत्र यज्ञपतिरित्यस्मिंस्तृतीयमन्त्रे समित्युपसर्गस्य क्रियापदाकाङ्क्षत्वात्प्रथममन्त्रगतस्य गच्छ-

नामिति पदस्यैकवचनान्तस्य यज्ञपतिशब्देनान्वेतुं योग्यत्वात्पूर्ववद्बुद्धिस्थत्वेन संनिहितत्वादाकाङ्क्षासंनिधियोग्यतानां सद्भावेन क्रियापदमनुषज्यत इति प्राप्ते ब्रूमः—मध्यममन्त्रे बहुवचनान्तेनाङ्गानीत्यनेनान्वेतुमयोग्यत्वात्तद्व्यवायेन बुद्धिसंनिधिलोपान्नास्त्यनुषङ्गः। ततो द्वितीयतृतीयमन्त्रयोर्यथोचितं वाक्यशेषोऽध्याहर्तव्यः।

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

"न पैशावैष्टिकः स्याद्वा न कपालाद्यभावतः।
स्याद्व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यसाम्यतः" इति॥

अग्नीषोमीयपशावैष्टिको विध्यन्तो नास्ति। कुतः। पूर्ववदत्र निर्वापकपालादिलिङ्गाभावादिति चेन्मैवम्। आग्नेयमष्टाकपालमित्यत्रोत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते तथाऽग्नीषोमीयं पशुमित्यत्रापि। न तु सोमेन यजेतेत्यत्रेव देवताया अव्यक्तत्वम्। तदेतद्व्यक्तद्रव्यदेवत्वमेकं लिङ्गम्। एकादश प्रयाजान्यजतीति प्रयाजवत्त्वं द्वितीयम्। स्रुच्यमाघार्य जुह्वा पशुमनक्तीत्याघाराञ्जने लिङ्गान्तरे। आलम्भो लिङ्गान्तरम्। इष्टावपीषामालभत इति दर्शनात्। तस्मादस्ति पशावैष्टिको विध्यन्तः।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

"प्रयाजेष्वपकर्षोऽनुयाजेषूत्कर्ष इत्यमू।
श्रुतमात्रे तदन्तेषु तदाद्येषु च वाऽग्रिमः॥
अन्येषां मुख्यकालत्वान्मैवं व्युत्क्रमशक्तितः।
प्रयाजान्ते ह्यनुयाजादिके चैतौ समूहके" इति॥

अग्नीषोमीयपशौ प्रयाजानामपकर्षः श्रूयते—"तिष्ठन्तं पशुं प्रयजन्ति" इति। प्रकृतौ हविष्यासादिते पश्चात्प्रयाजा इज्यन्ते। इहापि पशुसंज्ञपनादूर्ध्वं हविष्यासादिते पश्चादेव प्रयाजाश्चोदकेन प्राप्ताः। ते चात्र वचनाज्जीवत्येव पशावपकृष्यन्ते। तथा सवनीयपशावनुयाजानामुत्कर्षः श्रूयते—"आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति। तत्र प्रयाजमात्रस्यापकर्षः श्रुतः। अनुयाजमात्रस्योत्कर्षः। तावुभौ श्रुत्यनुसारेण तथैवाङ्गीकर्तव्यौ। यदि प्रयाजान्तस्याङ्गकलापस्यापकर्षः स्यात्तदा प्रयाजेभ्यः पूर्वभाविनामाघारसामिधेन्यादीनां ततोऽप्यपकर्षादत्यन्तव्यवहितानां प्रधानकालीनत्वं न स्यात्। प्रयाजमात्रेऽपकृष्टे सत्याघारादीनां मुख्यकालीनत्वं न लुप्यते। एवमनुयाजमात्र उत्कृष्टे तत

१ क. ग. घ. ङ. पशौ चोदकं स्या°।

( संज्ञपितस्य पशोर्वपोत्खेदनम् )

ऊर्ध्वभाविनां सूक्तवाकशंयुवाकादीनामनुत्कर्षात्प्रधानसंनिधिर्न विनश्यति। तस्मात्प्रयाजमात्रस्यापकर्षोऽनुयाजमात्रस्योत्कर्ष इति प्राप्ते ब्रूमः—प्रकृतौ पदार्थानुष्ठानक्रमस्य क्लृप्तत्वात्सक्रमाणामेव पदार्थानां चोदकेनातिदेशाद्व्युत्क्रमे सति पूर्वेण पदार्थेनोत्तरपदार्थस्य बुद्धावनुपस्थापितत्वादनुष्ठानमेव लुप्येत। तस्मात्प्रयाजान्तस्य कर्मसमूहस्यापकर्षः, अनुयाजादेरङ्गसमूहस्योत्कर्षः।

तत्रैव तृतीयपादे चिन्तितम्—

" एकादश प्रयाजाः किं प्रत्येकं स्यादुतान्यथा।
संख्यावृद्धिरिहाऽऽद्योऽस्तु प्रतिमुख्यं गुणो यतः॥
प्रत्येकं समुदाये वा स्वरूपेण न सिध्यति।
संख्यावृद्धिः प्रयोगात्तु साऽऽवृत्त्या संभविष्यति " इति॥

अग्नीषोमीयपशौ श्रूयते—" एकादश प्रयाजान्यजति " इति।

तत्र चोदकप्राप्तेषु पञ्चसु प्रयाजेष्वेकैकस्य प्रयाजस्येयमेकादशत्वसंख्या युक्ता। कुतः। प्रयाजानुद्दिश्य संख्यागुणे विहिते सति प्रतिप्रधानं गुणस्याभ्युपेयत्वादिति प्राप्ते ब्रूमः—न ह्येकैकस्य प्रयाजस्य[1] स्वरूपमात्रमुपजीव्येयमेकादशत्वसंख्या संपादयितुं शक्या। नापि पञ्चप्रयाजसमुदायस्य स्वरूपे साऽस्ति। तस्मात्प्रयोगद्वारा सा संपादनीया। प्रयोगस्य चाऽऽवर्तयितुं शक्यत्वात्। पञ्च प्रयाजान्द्विरावर्त्य पुनरपि चरमप्रयाजे सकृदावर्तिते सत्येकादशत्वसंख्या संपद्यते॥

अथ च्छन्दः—

उरो अन्तरिक्षेति त्रिष्टुप्। आपो देवीः शुद्धायुव इत्यनुष्टुप्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः। )

---

वाक्त आ प्यायतां प्राणस्त आ प्यायतां
चक्षुस्त आ प्यायताꣳ श्रोत्रं त आ प्यायतां

---

1 ख. प्रयाजस्य।

या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आ प्यायतां तत्त एतेन शुन्धतां नाभिस्त आ प्यायतां पायुस्त आ प्यायताꣳ शुद्धाश्चरित्राः शमद्भ्यः (१) शमोषधीभ्यः शं पृथिव्यै शमहोभ्यामोषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसी रक्षसां भागोऽसीदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामीषे त्वा घृतेन द्यावापृथिवी प्रोर्ण्वाथामच्छिन्नो रायः सुवीर उर्वन्तरिक्षमन्विहि वायो वीहि स्तोकानाꣳ स्वाहोर्ध्वनभसं मारुतं गच्छतम्(२)॥

( अद्भ्यो वीहि पञ्च च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

---

वाक् । ते । एति । प्यायताम् । प्राण इति प्र—अनः । ते । एति । प्यायताम् । चक्षुः । ते । एति । प्यायताम् । श्रोत्रम् । ते । एति । प्यायताम् । या । ते । प्राणानिति प्र—अनान् । शुक् । जगाम । या । चक्षुः । या । श्रोत्रम् । यत् । ते । क्रूरम् । यत् ।

( संज्ञपितस्य पशोर्वपोत्खेदनम् )

आस्थितमित्या—स्थितम् । तत् । ते । एति । प्यायताम् । तत् । ते । एतेन । शुन्धताम् । नाभिः । ते । एति । प्यायताम् । पायुः । ते । एति । प्यायताम् । शुद्धाः । चरित्राः । शम् । अद्भ्य इत्यत्—भ्यः । ( १ ) शम् । ओषधीभ्य इत्योषधि—भ्यः । शम् । पृथिव्यै । शम् । अहोभ्यामित्यहः—भ्याम् । ओषधे । त्रायस्व । एनम् । स्वधित इति स्व—धिते । मा । एनम् । हिंसीः । रक्षसाम् । भागः । असि । इदम् । अहम् । रक्षः । अधमम् । तमः । नयामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् । एनम् । अधमम् । तमः । नयामि । इषे । त्वा । घृतेन । द्यावापृथिवी इति द्यावा—पृथिवी । प्रेति । ऊर्णवाथाम् । अच्छिन्नः । रायः । सुवीर इति सु—वीरः । उरु । अन्तरिक्षम् । अन्विति । इहि । वायो इति । वीति । इहि । स्तोकानाम् । स्वाहा । ऊर्ध्वनभसमित्यूर्ध्व—नभसम् । मारुतम् । गच्छतम् । ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ प्रथमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाके संज्ञपनमुक्तम् । संज्ञपितस्य पशोर्वपोत्खेदनमभिधीयते[1] ।

वाक्त आ प्यायतां प्राणस्त आ प्यायतां चक्षुस्त आ प्यायताꣳ श्रोत्रं त आ प्यायतां या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आ प्यायतां तत्त एतेन शुन्धतां नाभिस्त आ प्यायतां पायुस्त आ प्यायताꣳ शुद्धाश्चरित्राः शमद्भ्यः शमोषधीभ्यः शं पृथिव्यै शमहोभ्याम्—

बौधायनः—" सानुपूर्वं पशोः प्राणानाप्याययति वाक्त आ प्यायतामिति वाचं, प्राणस्त आ प्यायतामिति प्राणं, चक्षुस्त आ प्यायतामिति चक्षुः, श्रोत्रं त आ प्यायतामिति श्रोत्रं तानेव पुनः संमृशति या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आ प्यायतां तत्त एतेन[2] शुन्धतामिति नाभिस्त आ प्यायतामिति नाभिं, पायुस्त आ प्यायतामिति पायुं, संप्रगृह्य[3] पदः प्रक्षालयति शुद्धाश्चरित्राः शमद्भ्यः शमोषधीभ्यः शं पृथिव्या इति, शमहोभ्यामिति शिष्टा दक्षिणतोऽनुपृष्ठं निनयेत् " इति ।

आपस्तम्बोऽत्र कंचिद्विशेषमाह—" या ते प्राणाञ्छुग्जगामेति हृदयदेशं शुद्धाश्चरित्रा इति पादानेकैकमाप्याय्य जपति शमद्भ्य इति पुरा स्तोकानां भूमेः प्रापणाच्छमोषधीभ्यः शं पृथिव्या इति भूम्यां शेषं निनीय " इति ।

हे पशो त्वदीयं वागिन्द्रियं गोलकपरित्यागशोकं संत्यज्य स्वीकरिष्यमाणदेवतादेहे सुखेनाऽऽप्यायतां वर्धताम् । एवमन्यत्रापि । किं च निर्याणकाले[4] हृदयपुण्डरीके संकुचितास्तव प्राणवायूंश्चक्षुरादीन्द्रियाणि च यः शोको जगाम, यच्च बन्धनमुखनिरोधनादिकं क्रूरमस्माभिः कृतं, यदपि च्छेदादिकमास्थितं कर्तुमुपस्थितं तव तत्सर्वमाप्यायतां शाम्यतु । किं च तव तत्प्राणादिकमेतेन जलेन शुन्धतां भाविदेहप्रवेशाय शुद्धं भवतु । चरत्येभिरिति चरित्राः पादास्तेऽपि शुद्धाः सन्तु । याभिरद्भिः प्रोक्षणं क्रियते, याश्चौषधयो बर्हिःस्वरूपेण

---

१ ख. °त्खेदो नवमे विधी° । २ ग. घ. ङ. °युं, प्र° । ३ ख. संगृ° । ४ क. ग. घ. ङ. निर्वाण° ।

पशोरधः स्थापिताः, या च पृथिवी म्रियमाणं पशुं बिभर्ति, यौ चाहोरात्रौ पशुमारणकाले उपस्थितौ, तेषां सर्वेषां शं सुखं भवतु ॥

शोकप्रसक्तिं दर्शयन्व्याचष्टे—

"पशोर्वा आलब्धस्य प्राणाञ्छुगृच्छति वाक्त आ प्यायतां प्राणस्त आ प्यायतामित्याह प्राणेभ्य एवास्य शुचꣳ शमयति" [ सं० का० ६ प्र० ३ अ० ९ ] इति ॥

शुगव्यर्थां विधत्ते—

"सा प्राणेभ्योऽधि पृथिवीꣳ शुक्प्र विशति शमहोभ्यामिति नि नयत्यहोरात्राभ्यामेव पृथिव्यै शुचꣳ शमयति" [सं० का० ६ प्र० ३ अ० ९] इति ।

प्राणेभ्योऽपनीता शुक्पृथिवीमधिष्ठाय तदीयदेवताशरीरे प्रविशति । एवं कालादौ प्रवेशः । प्रविष्टायाः शुचः शान्तिर्निनयनेन भवति ॥

## ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीः—

कल्पः—"ओषधे त्रायस्वैनमित्युपाकरणयोरवशिष्टं दक्षिणेन नाभिमन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना पार्श्वतस्तिर्यगाच्छ्यति" इति ।

मा हिꣳसीरित्येतस्याभिप्रायमाह—

"ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै" [ सं० का० ६ प्र० ३ अ० ९ ] इति ॥

विधत्ते—

"पार्श्वत आ च्छ्यति मध्यतो हि मनुष्या आच्छ्यन्ति तिरश्चीनमा च्छ्यत्यनूचीनꣳ हि मनुष्या आच्छ्यन्ति व्यावृत्त्यै" [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

वपोत्खेदनार्थं दक्षिणपार्श्वे छिन्द्यात् । मांसाहारास्तु मनुष्या नाभिदेशे छिन्दन्ति । तत्राप्यनूचीनं पशोर्दैर्घ्यमनुसृत्य तदुभयवैलक्षण्यमिह कार्यम् ॥

## रक्षसां भागोऽसीदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामि—

बौधायनः—"अथैतस्यैव बर्हिषोऽणिमत्सचते स्थविमदुभयतो लोहितेनाङ्क्त्वेमां दिशं निरस्यति रक्षसां भागोऽसीदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामीति" इति ।

---

१ ख. °लतयोप° । २ क. ख. ग. ङ. शुगव्यर्थां । ३ ख. °रणतृण° ।

आपस्तम्बः—" बर्हिषोऽग्रं सव्येन पाणिनाऽऽदत्तेऽथ मध्यं यत आच्छ्यति तदुभयतो लोहितेनाङ्क्त्वा रक्षसां भागोऽसीत्युत्तरमपरमवान्तरदेशं निरस्याथैनत्सव्येन पदाऽधितिष्ठतीदमहꣳ रक्ष इति " इति ॥

विधत्ते—

" रक्षसां भागोऽसीति स्थविमतो बर्हिरक्त्वाऽपास्यत्यस्नैव रक्षाꣳसि निरवदयते " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

स्थूलस्य भावः स्थविमा तस्मात्सप्तम्यर्थे तसिल् । स्थविमतः । स्थविमशब्देन बर्हिषो मूलभागः स्थूलत्वादुपलक्ष्यते । तस्मिन्भागे रक्तेन बर्हिरङ्क्त्वा निरस्येत् । तथा सत्यसृजैव रक्षांसि निःशेषेण भागवन्ति कृत्वाऽपनयति ॥

द्वितीयमन्त्रं व्याचष्टे—

" इदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तावुभावधमं तमो नयति " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

अधमं तमो महद्दुःखम् ॥

## इषे त्वा घृतेन द्यावापृथिवी प्रोर्ण्वाथाम्—

कल्पः—" इषे त्वेति वपामुत्खिदति घृतेन द्यावापृथिवी प्रोर्ण्वाथामिति वपया द्विशूलां प्रच्छाद्य " इति ।

हे वपे यजमानस्य देवतायाश्चेष्यमाणान्नसिद्ध्यर्थं त्वामुत्खिदामि । हे शूलद्वयरूपे द्यावापृथिवीतुल्ये वपाश्रपण्यौ घृतसमानया वपया भवदीयस्वरूपं प्रोर्ण्वाथामाच्छादयतम् ॥

विधत्ते—

" इषे त्वेति वपामुत्खिदतीच्छत इव ह्येष यो यजते " [ सं० का० ६ प्र० ३ अ० ९ ] इति ॥

अत्र शूलाग्रेण वपां[3] भिन्द्यान्न वेति विचारं हृदि निधाय पक्षद्वयेऽपि दूषणमुपन्यस्यति—

" यदुपतृन्द्याद्रुद्रोऽस्य पशून्घातुकः स्याद्यन्नोपतृन्द्यादयता स्यात् " [ सं० का० ६ प्र० ३ अ० ९ ] इति[4] ।

भेदनमन्तरेण धृताऽपि नियन्तुमशक्यत्वादितस्ततः पतेत् ॥

---

१ क. ग. घ. ङ. 'स्मात्स्थवि' । २ ख. 'त्खिद्य घृ' । ३ ख. 'पां छिन्द्या' । ४ ख. 'ति । छेद' ।

( संज्ञपितस्य पशोर्वपोत्खेदनम् )

दोषद्वयास्पृष्टं पक्षान्तरं विधत्ते—

" अन्ययोपतृणत्त्यन्यया न धृत्यै " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

एकया शाखया भिन्द्यादितरया न भिन्द्यात्तथा सति धृताऽपि भवति रुद्रश्च न हिनस्ति ॥

वपाशब्दशूलशब्दौ परित्यज्य घृतशब्दप्रयोगस्य द्यावापृथिवीशब्दप्रयोगस्य च तात्पर्यमाह—

" घृतेन द्यावापृथिवी प्रोर्ण्वाथामित्याह द्यावापृथिवी एव रसेनानक्ति " [ सं० का० ६ प्र० ३ अ० ९ ] इति ॥

## अच्छिन्नो रायः सुवीरः—

कल्पः—" अधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इति " इति ।

अयं वपाभागश्छिद्यमानोऽपि मन्त्रसामर्थ्येन व्यथानुत्पत्तेर्न च्छिन्नः । कीदृशो भागः, शोभना वीरा यजमानस्य पुत्रपौत्रादयो यस्य स सुवीरः । तादृशो रायो धनानि प्रयच्छतु ॥

स्पष्टार्थतामाह—

" अच्छिन्नो रायः सुवीर इत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० ३ अ० ९ ] इति ॥

## उर्वन्तरिक्षमन्विहि—

कल्पः—" उर्वन्तरिक्षमन्विहीत्यभिप्रव्रजति " इति ।

हे वपे त्वमुत्खेदनरूपस्य क्रौर्यस्य शान्तये विस्तीर्णमन्तरिक्षमनुप्रविश्याऽऽहवनीयदेशं गच्छ ॥

इममेवार्थं दर्शयति—

" क्रूरमिव वा एतत्करोति यद्वपामुत्खिदत्युर्वन्तरिक्षमन्विहीत्याह शान्त्यै " [ सं० का० ६ प्र० ३ अ० ९ ] इति ॥

वपाश्रपण्योः स्पर्शं विधत्ते—

" प्र वा एषोऽस्माल्लोकाच्च्यवते यः पशुं मृत्यवे नीयमानमन्वारभते वपाश्रपणी पुनरन्वारभतेऽस्मिन्नेव लोके प्रति तिष्ठति " [ सं० का० ६ प्र० ३ अ० ९ ] इति ॥

---

१ ख. °या छिन्द्या° । २ ख. न च्छिन्द्या° । ३ क. ग. घ. ङ. °ज्य या° । ४ क. ग. घ. ङ. °स्य ता° ।

वपायाः पुरतः पशोरिव वह्निं विधत्ते—

" अग्निना पुरस्तादेति रक्षसामपहत्या अथो देवता एव हव्येनान्वेति " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

अग्नेः सर्वदेवतात्मकत्वात्तस्य पृष्ठतो वपानयने सर्वा अपि देवता हव्येनानुगता भवन्ति ॥

## वायो वीहि स्तोकानाम्—

कल्पः—" आहवनीयस्यान्तिमेष्वङ्गारेषु वपायै प्रतितप्यमानायै बर्हिषोऽग्रमुपास्यति वायो वीहि स्तोकानामिति " इति ।

द्विशूलया शाखया धार्यमाणाया वपाया उपरि त्वामु ते दधिर इति मन्त्रेणाऽऽज्ये हुते सति तत्सकाशात्पतन्तो बिन्दवः स्तोकाः । हे वायो तान्स्तोकान्वीहि विभक्तान्कुरु पिबेत्यर्थः ॥

व्यतिरेकमुखेनाऽऽहवनीयस्योत्तरपार्श्ववर्तिष्वङ्गारेषु वपायाः श्रपणं विधत्ते—

" नान्तममङ्गारमति हरेद्यदन्तममङ्गारमतिहरेद्देवता अति मन्येत " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

अङ्गारस्य सर्वदेवतात्मकत्वेन तदवज्ञया देवता एवावज्ञाता भवन्ति । तस्मादस्मिन्नेवाङ्गारे वपां श्रपयेत् ॥

वीहीत्यत्र विशब्दस्यार्थं दर्शयति—

" वायो वीहि स्तोकानामित्याह तस्माद्विभक्ताः स्तोका अव पद्यन्ते " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

पतन्तीत्यर्थः । वपाया अधस्ताद्बर्हिरग्रस्थापनविधिमर्थवादेनोन्नयति—

" अग्रं वा एतत्पशूनां यद्वपाऽग्रमोपधीनां बर्हिरग्रेणैवाग्रꣳ समर्धयत्यथो ओपधीष्वेव पशून्प्रति ष्ठापयति " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

अग्रं श्रेष्ठम् । ओषध्यग्रेण बर्हिषा पश्वग्ररूपाया वपायाः समृद्ध्यर्थमोषधीषु पशुप्रतिष्ठापनार्थं बर्हिरग्रं वपाया अधः स्थापयेदित्यर्थः ॥

अथान्तिमप्रयाजार्थं मैत्रावरुणं प्रत्यध्वर्योः प्रैषमन्त्रमुत्पादयति—

" स्वाहाकृतीभ्यः प्रेष्येत्याह यज्ञस्य समिष्ट्यै " [ सं० का० ६ प्र० ३ अ० ९ ] इति ।

स्वाहाशब्दबहुला कृतिर्मन्त्रप्रयोगो यासामन्तिमप्रयाजदेवतानां ताः स्वाहाकृतयस्तदर्थं हे मैत्रावरुण होतारं प्रेरय । मैत्रावरुणस्तु होता यक्षदग्निं स्वाहाऽऽज्यस्येत्यादिमन्त्रेण होतारं प्रेष्यति । स च होता सद्यो जातो व्यमि-

मीत यज्ञमित्यादिकां याज्यां पठति । ततोऽध्वर्युरन्तिमप्रयाजं यजति। एव-मयं प्रैषो यज्ञस्य सम्यगिष्ट्यै संपद्यते ॥

प्रयाजशेषेण हविरभिघारणं विधत्ते—

" प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यमात्मा वपा पृषदाज्यमभिघार्य वपामभि घारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति " [ सं०का० ६ प्र० ३ अ० ९ ] इति।

दधिमिश्रमाज्यं पृषदाज्यम्। पृषदाज्यस्य वपायाश्चाभिघारणेन वपारूपे पश्वात्मनि पृषदाज्यरूपौ पशूनां प्राणापानौ स्थापयति ॥

## स्वाहोर्ध्वनभसं मारुतं गच्छतम्—

कल्पः—" प्रतिप्रस्थाताऽऽहवनीये वपाश्रपणी प्रहरति स्वाहोर्ध्वनभसं मारुतं गच्छतमिति प्राचीं द्विशूलां प्रतीचीमेकशूलाम् " इति।

हे वपाश्रपण्यौ युवां स्वाहुते सत्यावूर्ध्वनभःसंज्ञकं मरुत्पुत्रं गच्छतम् ॥

तत्माम्नावुपयोगं दर्शयति—

" स्वाहोर्ध्वनभसं मारुतं गच्छतमित्याहोर्ध्वनभा ह स्म वै मारुतो देवानां वपाश्रपणी प्र हरति तेनैवैने प्र हरति " [ सं०का०६ प्र० ३ अ० ९ ] इति॥

व्यत्यस्ताग्रतां विधत्ते—

" विषूची प्र हरति तस्माद्विष्वञ्चौ प्राणापानौ " [ सं० का० ६ प्र० ३ अ० ९ ] इति।

प्राण ऊर्ध्ववृत्तिरपानोऽधोवृत्तिरित्युभयोर्व्यत्यासः ॥

अत्र विनियोगसंग्रहः—

" वागष्टाऽऽप्यायने शेषं शमहो निनयेद्भुवि।
ओष स्वधि यथापूर्वं रक्ष दर्भं सलोहितम् ॥ १ ॥
त्यजेदिदं बाधनीयमिष उत्खिद्यते वपा।
घृते श्रपण्यावाच्छाद्ये अच्छि सा कृत्यते वपा ॥ २ ॥
उरु पूर्वानलं गत्वा वायो दर्भमधः क्षिपेत्।
स्वाहा श्रपण्युपक्षेपो मन्त्रा एकोनविंशतिः ॥ ३ ॥"[इति] ॥

अत्र मीमांसाछन्दसी न स्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ प्रथमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ।)

सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहैन्द्रः प्राणो अङ्गे-अङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्स-लक्ष्माणो भवथ देवत्रा यन्तमवसे सखा-योऽनु त्वा माता पितरो मदन्तु श्रीरस्य-ग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य (१) त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै घृतं घृतपावानः पिबत वसां वसा-पावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः (२) ॥

(वातस्याष्टाविꣳशतिश्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

(अथ प्रथमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ।)

समिति । ते । मनसा । मनः । समिति । प्राणेनेति प्र—अनेन । प्राण इति प्र—अनः । जुष्टम् ।

देवेभ्यः। हव्यम्। घृतवदिति घृत—वत्। स्वाहा। ऐन्द्रः। प्राण इति प्र—अनः। अङ्गेअङ्ग इत्यङ्गे—अङ्गे। नीति। देध्यत्। ऐन्द्रः। अपान इत्यप—अनः। अङ्गेअङ्ग इत्यङ्गे—अङ्गे। वीति। बोभुवत्। देव। त्वष्टः। भूरि। ते। सꣳसमिति सं—सम्। एतु। विषुरूपा इति विषु—रूपाः। यत्। सलक्ष्माण इति स—लक्ष्माणः। भवथ। देवत्रेति देव—त्रा। यन्तम्। अवसे। सखायः। अन्विति। त्वा। माता। पितरः। मदन्तु। श्रीः। असि। अग्निः। त्वा। श्रीणातु। आपः। समिति। अरिणन्। वातस्य। (१) त्वा। ध्रज्यै। पूष्णः। रꣳह्यै। अपाम्। ओषधीनाम्। रोहिष्यै। घृतम्। घृतपावान इति घृत—पावानः। पिबत। वसाम्। वसापावान इति वसा—पावानः। पिबत। अन्तरिक्षस्य। हविः। असि। स्वाहा। त्वा। अन्तरिक्षाय। दिशः। प्रदिश इति प्र—दिशः। आदिश इत्या—दिशः। विदिश इति वि—दिशः। उद्दिश इत्युत्—दिशः। स्वाहा। दिग्भ्य इति दिक्—भ्यः। नमः। दिग्भ्य इति दिक्—भ्यः (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः॥ १०॥

( अथ प्रथमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः । )

नवमेऽनुवाके वपाप्रयोगोऽभिहितः। दशमे तु वसाहोमोऽभिधीयते ।

सं ते मनसा मनः सं प्राणेन प्राणो
जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहा—

कल्पः—"शमितुर्हृदयशूलमादाय तेन हृदयमुपतृद्य तं शमित्रे प्रदाय पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहेति" इति ।

हे हृदय ते मनस्थानीयेन पृषदाज्येन देवानां मनः संगतमस्तु । एवं प्राणेऽपि योज्यम् । हव्यं त्वां देवानां प्रियं घृतवद्यथा भवति तथा स्वाहाऽभिघारयामि । सोऽयं मन्त्र उपेक्षितः ॥

अभिघारणं विधित्सुरादौ वपोत्खेदप्रयुक्तच्छिद्रापिधानरूपं पश्वङ्गं पुरोडाशं विधत्ते—

"पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमा लभते" [सं० का० ६ प्र०३ अ० १०] इति ।

मेधः सारः । पुरोडाशस्य व्रीहिसारत्वात्सारोपेतं पशुमालब्धवान्भवति ॥

निरुप्तस्य होमकालं विधत्ते—

"वपया प्रचर्य पुरोडाशेन प्र चरत्यूर्ग्वै पुरोडाश ऊर्जमेव पशूनां मध्यतो दधात्यथो पशोरेव छिद्रमपि दधाति" [सं० का० ६ प्र० ३ अ० १०] इति।

जातवेदो वपया गच्छ देवानिति मन्त्रेण वपां हुत्वा पश्चात्पुरोडाशहोमः। वपाहृदयादिहोमयोर्मध्यं पशूनामुदरस्थानमतस्तत्रैवोर्जं पुरोडाशरूपमन्नं स्थापितवान्भवति । किं च वपाछेदेन यत्पशोश्छिद्रं तत्पिहितं भवति ॥

उत्तरदेशे हृदयादिहविः पचन्तं शमितारं प्रति प्रश्नमन्त्रमुत्पादयति—

"पृषदाज्यस्योपहत्य त्रिः पृच्छति शृत१ हवी३ः शमितरिति त्रिषत्या हि देवाः" [ सं० का० ६ प्र० ३ अ० १० ] इति ।

पृषदाज्यस्य पात्रगतस्यांशं स्रुवेणोपहत्य पृथक्स्वीकृत्य मन्त्रेण त्रिः पृच्छेत् । शृतं पक्वम् । प्लुतिः प्रश्नार्था । त्रिरुक्तं सत्यमिति बुद्धिर्येषां ते त्रिषत्याः ॥

व्यतिरेकमुखेणोत्तराविधिमुन्नयति—

१ ख. °मुत्खिद्य ।

"योऽशृतꣳ शृतमाह स एनसा" [ सं० का० ६ प्र० ३ अ० १० ] इति। युज्यत इति शेषः। तस्माच्छृते सत्युत्तरं ब्रूयादिति विधिः।

अत्र सूत्रम्—"अथ प्रतिप्रस्थाता पृषदाज्यं विहृत्य जुह्वां समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य पृच्छति शृतꣳ हवी३ः शमितरिति शमितैष उत्तरतो हृदयशूलं धारयंस्तिष्ठति स शृतमिति प्रत्याह तं तथैव द्वितीयमुत्क्रम्य पृच्छति तं तथैवेतरः प्रत्याह तं तथैव तृतीयमुत्क्रम्य पृच्छति तं तथैवेतरः प्रत्याह" इति॥

अत्र सं ते मनसा मन इत्यस्य मन्त्रस्यार्थमुपेक्ष्याभिघारणं विधत्ते—

"प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यं पशोः खलु वा आलब्धस्य हृदयमात्माऽभि समेति यत्पृषदाज्येन हृदयमभिघारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति" [ सं० का० ६ प्र० ३ अ० १० ] इति।

अभिसमेत्याभिमुख्येनाऽऽत्मा हृदयदेशमागच्छति॥

अथ प्लक्षनामकस्य शाखामवदानाधारत्वेन विधत्ते—

"पशुना वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति तस्य शिरश्छित्त्वा मेधं प्राक्षारयन्त्स प्रक्षोऽभवत्तत्प्रक्षस्य प्रक्षत्वं यत्प्लक्षशाखोत्तरबर्हिर्भवति समेधस्यैव पशोरव द्यति" [ सं० का० ६ प्र० ३ अ० १० ] इति।

पशुना सह स्वर्गं गच्छन्तो देवा मनुष्याणां स्वैः सहाऽऽगमनं मा भूदित्यभिप्रेत्य तद्वारयितुं पशोः शिरश्छित्त्वा मेधं रसं प्राक्षारयन्नस्रावयन्। स रसो भूमौ पतित्वा प्लक्षवृक्षोऽभवत्। तस्मात्क्षरणादुत्पन्नस्य प्लक्षनाम संपन्नम्। तच्छाखा बर्हिष ऊर्ध्वं स्थापनादुत्तरबर्हिरित्युच्यते। तदवस्थापनेन सरसस्यैव पशोर्हविरवत्तं भवति।

अत्र सूत्रम्—"जुहूपभृतोर्हिरण्यशकलमवधाय बर्हिषि प्लक्षशाखायामवदानान्यवद्यन्संप्रेष्यति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति, हृदयस्याऽवद्यत्यथ जिह्वाया अथ वक्षसो यथाकाममितरेषां मध्यतो गुदस्यावद्यतीत्युक्तम्" इति।

पक्वस्य हृदयादिहविष आहवनीयं प्रत्यानयने मार्गविशेषं विधत्ते—

"पशुं वै ह्रियमाणꣳ रक्षाꣳस्यनु सचन्तेऽन्तरा यूपं चाऽऽहवनीयं च हरति रक्षसामपहत्यै" [ सं० का० ६ प्र० ३ अ० १० ] इति।

---

१ ख °दाज्यस्योपहत्य।

अनुसचन्तेऽनुगच्छन्ति। यूपस्याऽऽहवनीयस्य च रक्षोघातित्वात्तयोरन्तराळे भयं नास्ति ॥

होतारं प्रति प्रैषमन्त्रमुत्पादयति—

" पशोर्वा आलब्धस्य मनोऽप क्रामति मनोतायै हविषोऽवदीयमानस्यानु ब्रूहीत्याह मन एवास्याव रुन्धे " सं० का० ६ प्र० ३ अ० १० ] इति।

अग्निर्देवता मनोता। त्वं ह्यग्ने प्रथमो मनोतेतिमन्त्राम्नानात्। मनस्यूता संबद्धेति मनोता ॥

संख्याविशिष्टान्यवदानानि विधत्ते—

" एकादशावदानान्यव द्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्याव द्यति " [ सं० का० ६ प्र० ३ अ० १० ] इति।

नाभिसहितानि दश च्छिद्राणि प्राणा देह आत्माऽत एकादशसंख्यया कृत्स्नोऽपि पशुरवत्तो भवति। तान्येकादशाङ्गानि सूत्रेऽभिहितानि—" हृदयं जिह्वा वक्षो यकृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयामिति दैवतानि " इति ॥

क्रमं विधत्ते—

"हृदयस्याग्रेऽव द्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधि निर्वदत्येतद्वै पशोर्यथापूर्वम् " [ सं० का० ६ प्र० ३ अ० १० ] इति।

लोके प्रथमं हृदयेन यन्निश्चिनोति तत्पश्चाज्जिह्वया वदति। पुनरपि तदेव निःशेषेणोच्चध्वनिना यदा वदति तदानीमुरस ऊर्ध्वदेशगतबलेन वदति। तस्माद्धृदयादीनां त्रयाणामंशक्रमेणावद्येत्। एतदेव क्रमावदानं पशोरङ्गेषु यथापूर्वं भवति। यथा लोकेऽभिवदनव्यवहारः पूर्वं प्रवृत्तस्तथैव भवति ॥

उत्तरेष्वङ्गेषु हृदयादिवत्प्रसक्तं क्रमं वारयति—

" यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति यथापूर्वमेवास्य पशोरवत्तं भवति " [ सं० का० ६ प्र० ३ अ० १० ] इति।

उक्तप्रकारेण यस्य पशोर्हृदयादीनि त्रीण्यङ्गान्यवदायोत्तरेषामैच्छिकक्रमेऽपि पूर्वं हृदयाद्यङ्गं यथा न दोषकारि तथैवोत्तरमपि भवति ॥

एकादशस्वङ्गेषु गुदकाण्डरूपमङ्गमुत्तममध्यमाधमभागैस्त्रेधा विभज्य त्रि तेषु भागेषु मध्यमोत्तमभागयोर्विकल्पेनावदानं विधत्ते—

" मध्यतो गुदस्याव द्यति मध्यतो हि प्राण उत्तमस्याव द्यत्युत्तमो हि प्राणो यदीतरं यदीतरमुभयमेवाजामि " [ सं० का० ६ प्र० ३ अ० १० ] इति

( वसाहोमः )

प्राणवायुर्मुखमध्ये वर्तते, स्वयं जीवनहेतुत्वाच्चक्षुरादिषु सर्वेषूत्तमश्च । अतो यदीतरं मध्यमभागं स्वी कुर्यात्, यदीतरमुत्तमभागं तदुभयमपि जामिकृत्म भवति, किं त्वनालस्यं दोषरहितमित्यर्थः ॥

हृदयाद्यवदानानि प्रशंसति—

" जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाव दयते तदवदानानामवदानत्वम् " [ सं० का० ६ प्र० ३ अ० १० ] इति ।

ब्रह्मचर्येण वेदाभ्यासेन ब्रह्मचारित्वेन गुरुगृहे वसतीति ब्रह्मचारिवासी वेदाभ्यासादिभिरपाकर्तव्यं यदृणं तद्धृदयाद्यवदानैरेवापाकरोति । ऋणमवद्यत एभिरित्यवदानत्वम् ॥

स्विष्टकृदर्थं त्र्यङ्गावदानं विधत्ते—

" देवासुराः संयत्ता आसन्ते देवा अग्निमब्रुवन्त्वया वीरेणासुरानभिभवामेति सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्धस्य ततो देवा अभवन्पराऽसुरा यत्त्र्यङ्गाणाᳬ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति " [ सं० का० ६ प्र० ३ अ० १० ] इति ।

उद्धारमुत्कृष्टं ध्रियमाणमुत्तमं भागमुद्धरै स्वी करवाणि । पशोः पूर्वार्धस्य संबन्धि दोर्हस्तम् । मध्यतः पशुमध्यभागसंबन्धि गुदम् । अपरार्धस्य संबन्धिनीं श्रोणिम् ॥

वक्रगतिं विधत्ते—

" अक्ष्णयाऽव द्यति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै " [ सं० का० ६ प्र० ३ अ० १० ] इति ।

गवादयः शयनकालेऽङ्गानि पादानक्ष्णया वक्रत्वेनावस्थापयन्ति । अत्र वक्रगतिः सूत्रे दर्शिता—" दक्षिणं दोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि " इति ॥

विधत्ते—

" मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै पशवो रूपमेव पशुषु दधाति " [ सं० का० ६ प्र० ३ अ० ११ ] इति ।

जीर्णपटसदृशं हृदयवेष्टनं मेदः । स्रुचौ जुहूपभृतौ । उभयं मेदसाऽऽच्छादयेत् । सति मेदोबाहुल्ये पशवो रूपवन्तो भवन्ति ॥

तत्र कंचिद्विशेषं विधत्ते—

" यूषन्नवधाय प्रोर्णोति रसो वा एष पशूनां यद्यू रसमेव पशुषु दधाति " [ सं० का० ६ प्र० ३ अ० ११ ] इति ।

यूषशब्देन मांसेन सह पक्वं जलमुच्यते । तस्मिञ्जले मेदः प्रक्षिप्य तेनाऽऽच्छादयेत् ॥

इन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु—

कल्पः—" अथ पशोरवदानानि संमृशत्यैन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्विति " इति ।

इन्द्रदेवताकः प्राणोऽस्य पशोस्तस्मिंस्तस्मिन्हृदयाद्यङ्गे नि देध्यन्नितरां धीयतां स्थाप्यताम् । तद्वदपानोऽपि विबोभुवद्विशेषेण भवतु । हे देव त्वष्टस्ते तवानुग्रहेण भूरि सर्वमङ्गजातं संसमेतु च्छेदनेन विश्लिष्टमपि समवेतं भवतु । हे हृदयाद्यवयवा यूयं विषुरूपा विलक्षणरूपा अपि सलक्ष्माणो हविष्ट्वेन समानलक्षणा भवथ । यद्यस्मात्पूर्वं विषुरूपास्तस्मादित ऊर्ध्वं सलक्ष्मत्वं संपादनीयम् । हे पशो देवत्रा देवेषु यन्तं गच्छन्तं त्वां सखाय इतरे पशवो माता पितरश्चानुमदन्तु । किमर्थम् । अवसे त्वन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्वं सेवितुम् ॥

श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै—

बौधायनः—" अथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्बतः श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्या इति " इति ।

आपस्तम्बः—" श्रीरसीति पार्श्वेन वसाहोमं प्रयौति वातस्य त्वा ध्रज्या इति तेनैवापि दधाति " इति ।

मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा। सा च हूयत इति होमशब्दाभिधेया। पार्श्वशब्देन तत्रत्यमस्थि विवक्षितं, तस्यास्थ्नोऽग्रभागः स्थूलः कुम्बशब्दाभिधेयः। तेन वसारूपं होमद्रव्यं पात्रे गृहीतं प्रयौत्यालोडयेदिति बौधायनवाक्यार्थः।

मन्त्रार्थस्तु—हे वसे श्रीरसि आश्रयणीयाऽसि। तस्मादाहवनीयोऽग्निस्त्वां श्रीणात्वाश्रयतु स्वी करोतु। आपश्च त्वां समरिणन्सम्यक्प्राप्नुवन्तु तव शोषो मा भूत्। हे वसे त्वामपिदधामि। किमर्थम्। वातस्य ध्राज्यै वायोर्गतये। पूष्णो रंह्यै, आदित्यस्य गतये। अप्संबन्धिनीनामोषधीनां रोहिष्यै प्ररोहार्थम्। त्वयि पिधानेन सुरक्षितायां त्वदीयहोमसुकृतेन वायुगमनादिरूपो जगद्व्यवहारः सुस्थितो भवतीति स्तूयते॥

आलोडनं विधत्ते—

“ पार्श्वेन वसाहोमं प्र यौति मध्यं वा एतत्पशूनां यत्पार्श्वꣳ रस एष पशूनां यद्वसा यत्पार्श्वेन वसाहोमं प्रयौति मध्यत एव पशूनाꣳ रसं दधाति ” [ सं० का० ६ प्र० ३ अ० ११ ] इति।

अवदानसंमर्शनमन्त्रस्य पूर्वभागे श्रुत ऐन्द्र इत्यसौ तद्धितो देवतावाचीत्याह—

“ घ्नन्ति वा एतत्पशुं यत्संज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण ऐन्द्रोऽपान ऐन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदित्याह प्राणापानावेव पशुषु दधाति ” [सं० का० ६ प्र० ३ अ० ११ ] इति।

संज्ञपनं हननेन[1] गलनिरोधनाद्युपघातेन[2] संपद्यते। तेनोपद्रवेणापवीतयोः प्राणापानयोः पुनः स्थापनं कर्तव्यम्॥

द्वितीयभागे त्वष्टृशब्दाभिप्रायमा---

“ देव त्वष्टर्भूरि ते सꣳसमेत्वित्याह त्वाष्ट्रा हि देवतया पशवः ” [ सं० का० ६ प्र० ३ अ० ११ ] इति।

तृतीयभागे हृदयाद्याकारेण वैलक्षण्यं हविष्ट्वेन सालक्षण्यं च प्रसिद्धमित्याह—

“ विषुरूपा यत्सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तः सलक्ष्माण एतर्हि भवन्ति ” [ सं० का० ६ प्र० ३ अ० ११ ] इति॥

---

१ ख. हननं। ग. हनने। २ ख. 'रोधाद्यु'।

चतुर्थभागेऽनुमदन्तुशब्दस्याभिप्रायमाह—

" देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्याहानुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमयति " [सं०का०६प्र०३अ०११] इति।

श्रीरसि वातस्य त्वेत्येतौ मन्त्रावुपेक्षितौ ॥

घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः ॥

बौधायनः—" सोऽर्धर्चे याज्यायै वसाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय स्वाहेति वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्य इति " इति।

आपस्तम्बः—" याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति घृतं घृतपावानः पिबतेत्युद्रेकेण दिशः प्रदिश इति प्रतिदिशं जुहोति मध्ये पञ्चमेन प्राञ्चमुत्तमं संस्थाप्य नमो दिग्भ्य इत्युपतिष्ठते " इति।

उद्रेकः शेषः। हे घृतपावानो देवा अत्रत्यं घृतं पिबत[1]। एवमुत्तरत्र। हे पशो त्वमन्तरिक्षवासिनो देवगणस्य हविरस्यतोऽन्तरिक्षवासिने त्वां स्वाहा जुहोमि। दिशः प्राच्यै दिशे स्वाहेति शेषः। प्रदिशः, दक्षिणायै। एवमन्यत्रापि। षष्ठे तु मन्त्रे सर्वाभ्यो दिग्भ्यः स्वाहेति योज्यम्। मन्त्रा उपेक्षिताः ॥

विधत्ते—

" अर्धर्चे वसाहोमं जुहोत्यसौ वा अर्धर्च इयमर्धर्च इमे एव रसेनानक्ति दिशो जुहोति दिश एव रसेनानक्त्यथो दिग्भ्य एवोर्जꣳ रसमव रुन्धे " [ सं० का० ६ प्र० ३ अ० ११ ] इति।

याज्यायाः पूर्वोत्तरयोरर्धर्चयोरभिमानिनौ देवौ द्यावापृथिव्याविति मध्ये होमेनोभे अपि रसेनाक्ते भवतः। उद्रेकहोमेन दिग्देवतास्तृप्यन्ति। यजमानस्यापि दिशां सकाशादन्नरसप्राप्तिर्भवति ॥

अवदानपूर्वकं द्वौ प्रैषमन्त्रौ मैत्रावरुणं प्रत्युत्पादयति—

---

१ ख. °त। हे वसापावान इमां वसां पिबत। हे वसे त्व°।

" प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यं वानस्पत्याः खलु वै देवतया पशवो यत्पृषदाज्यस्योपहत्याऽऽह वनस्पतयेऽनु ब्रूहि वनस्पतये प्रेष्येति प्राणापानावेव पशुषु दधाति " [ सं० का० ६ प्र० ३ अ० ११ ] इति।

पृषदाज्यस्योपहत्य पात्रगतं पृषदाज्यं स्रुवेण जुह्वामवदायेत्यर्थः। प्रैषयोरयमर्थः—हे मैत्रावरुण वनस्पतिदेवतायै त्वमनुब्रूहि पुरोनुवाक्यां पठ, ततो याज्यां पठितुं होतारं प्रेरयेति। एवं सति वनस्पतिदेवताकेषु पशुषु पृषदाज्यरूपौ प्राणापानौ दधाति॥

अथेडार्थं तस्य तस्य हृदयाद्यङ्गस्यांशमेकत्र समवद्यतीति विधत्ते—

" अन्यस्यान्यस्य समवत्तꣳ समवद्यति तस्मान्नानारूपाः पशवः " [ सं० का० ६ प्र० ३ अ० ११ ] इति।

समवत्तमवत्तशेषम्। अवदेयानामङ्गानां बहुविधत्वाद्धोमलभ्याः पशवोऽपि बहुविधाः॥

सर्वेष्ववदानेषु मांसानिःस्रुतजलेनोपसेचनं विधत्ते—

" यूष्णोप सिञ्चति रसो वा एष पशूनां यद्यू रसमेव पशुषु दधाति " [ सं० का० ६ प्र० ३ अ० ११ ] इति।

हविःशेषस्येडाभागस्य भक्षणायेडोपाह्वानं होतुर्विधत्ते—

" इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवः " [ सं० का० ६ प्र० ३ अ० ११ ] इति॥

इडादेवताया गोरूपत्वात्पशव इडेत्युक्तम्। यद्यप्येतच्चोदकादेव प्राप्तं तथाऽप्याघारवदिष्टिविकृतित्वद्योतनाय पुनर्विधानम्॥

अत्रेडावदाने मेदसोपस्तरणाभिघारणे विधातुं तद्व्यतिरेकं निन्दति—

" यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भजत्यपशुरेव भवति " [सं०का०६प्र०३अ०११] इति।

स्निग्धद्रवरहितं मांसममेदस्कम्। एनं यजमानं पशूनां(शुभ्यो) निर्भजति निरस्यति। अतो यजमानः पशुरहितो भवति॥

विधत्ते—

" यं कामयेत पशुमान्त्स्यादिति मेदस्वत्तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवति " [सं०का०६प्र०३अ०११] इति।

अत्र सूत्रम्—" मेदसोपस्तीर्य मेदसाऽभिघारयति " इति॥

पृषदाज्येनानुयाजहोमं विधत्ते—

" प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं

पश्चात्तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्येनानूयाजास्तस्मा देतन्मिश्रमिव पश्चात्सृष्ट्ँ हि " [ सं० का० ६ प्र० ३ अ० ११ ] इति ।

यथा प्रथमसृष्टेनाऽऽज्येन प्रथमभाविनः प्रयाजा इज्यन्ते, यथा वा मध्यत सृष्टेन पशुना मध्यतो यजते, तथा पश्चात्सृष्टेन पृषदाज्येन पश्चाद्भाविनोऽ याजा यष्टव्याः । यस्मादेकं द्रव्यं न पर्याप्तमिति बुद्ध्या पश्चाद्द्रव्यान्तरेण सं तद्विहितं तस्मादेतत्पृषदाज्यं दधिमिश्रमेव चोदकप्राप्तम् ॥

त्रित्वसंख्यामपोह्य संख्यान्तरं विधत्ते—

" एकादशानूयाजान्यजति दश वै पशोः प्राणा आत्मैकादशो यावा पशुस्तमनु यजति " [ सं० का० ६ प्र० ३ अ० ११ ] इति ॥

पृषदाज्यं प्रशंसति—

" घ्नन्ति वा एतत्पशुं यत्संज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनां य षदाज्यं यत्पृषदाज्येनानूयाजान्यजति प्राणापानावेव पशुषु दधाति " [ का० ६ प्र० ३ अ० ११ ] इति ॥

अत्र विनियोगसंग्रहः—

" सं तेऽभिघार्य हृदयमैन्द्रोऽवत्ताभिमर्शनम् ।
श्रीः पार्श्वेन वसां यौति वात पार्श्वाहृता वसा ॥ १ ॥
घृतं वसाहुतिः षड्भिर्दिग्घोमा नम इत्यतः ।
दिश्युपस्थानमन्त्रैते मन्त्रा द्वादश वर्णिताः ॥ २ ॥ " इति ।

अथ मीमांसा ।

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

" पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया ।
अस्ति वा विध्यभावान्नो *ह्यस्त्यवार्यत्वतोऽध्ववत् " इ

अग्नीषोमीयस्य पशोर्यानि चोदकप्राप्तानि प्रयाजादीन्यङ्गान्यनुष्ठितानि पशुपुरोडाश उपकारो नास्ति । कुतः । तदुपकारबोधकस्य विधेरभावात् । च कस्तु दर्शपूर्णमासवत्पशुरनुष्ठेय इत्येवंरूपत्वात्पशावेव तदुपकारं बोधय ननु पशुपुरोडाशस्यापीष्टिविकृतित्वात्तत्रापि चोदकोऽस्तीति चेद्बाढम् । एव भिन्नचोदकबलात्पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेया प्राप्ते ब्रूमः—यद्यपि पश्वर्थैः पुरोडाशस्योपकार इत्येतादृशं शास्त्रं नास्ति त प्ययमुपकारोऽर्थतः प्राप्तो न वारयितुं शक्यते । यथा प्रदीपस्य वेदिप्रका

* जैमिनीयन्यायमालाविस्तरे तु " ह्यर्थतस्त्वस्तु लोकवत् " इति पाठः ।

निर्मितस्यार्थसिद्धं मार्गप्रकाशकत्वमनिवार्यं तथा पशुतन्त्रमध्येऽनुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरङ्गैरुपकारः केन वार्येत। तस्मादन्यार्थैरस्तूपकारः।

तत्रैवान्यच्चिन्तितम्—

"आज्यभागौ पुरोडाशे न स्तः स्तो वाऽस्य चोदकः।
लुप्तस्ततो न तौ मैवं प्रयोगांशस्य लोपनात्" इति॥

तौ न पशौ करोतीति निषेधादाज्यभागयोः पशावभावेन पुरोडाशे प्रसङ्ग-सिद्धिर्नास्ति। ततस्तौ विचार्येते। तत्र पुरोडाश आज्यभागौ न स्त इति तावत्प्राप्तम्[1]। कुतः। पुरोडाशविषयस्य चोदकस्य लुप्तत्वात्। अन्यथा प्रयाजादीनामपि पुनरनुष्ठानापत्तेरिति प्राप्ते ब्रूमः—न तावत्पुरोडाशे चोदको लुप्यते चोद(बाध)काभावात्। पूर्वोक्तप्रसङ्गसिद्धिस्तु प्रयोगवचनमेव बाधते न चोदकम्। अन्यथा प्रयाजादीनां पुरोडाशाङ्गत्वाभावेन प्रसङ्गसिद्धेरप्यवक्तव्यत्वात्। ननु प्रयोगबाधेऽप्याज्यभागौ न स्त इति चेन्न। आज्यभागौ प्रति बाधिता(का)याः प्रसङ्गसिद्धेरभावात्। ततः प्रसङ्गसिद्धाङ्गविषयप्रयोगांशस्यैव बाधादबाधितेन प्रयोगवचनांशेनाऽऽज्यभागावनुष्ठाप्येते। यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्त्यते न तु वस्त्रालंकारादि तद्वत्।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

"प्रयाजैकादशत्वादिविशेषविधिभिर्युते।
पश्वादौ सामिधेन्यादिविध्यन्तो नास्त्युतास्त्यसौ॥
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः।
लाघवाद्गुणमात्रस्य विधेः साऽ(सोऽ)स्त्यतिदेशतः" इति॥

अग्नीषोमीयपशावेकादश प्रयाजाः श्रुताः, चातुर्मास्येषु नव प्रयाजाः, वायव्यपशौ हिरण्यगर्भ इत्याघारमन्त्रः, इत्यादिभिर्युतेषु पश्वादिषु प्राकृतेतिकर्तव्यता सामिधेन्यादिर्नास्ति। कुतः। संख्यामन्त्रादिगुणविशिष्टस्य प्रयाजाघाराद्यङ्गस्य प्रत्यक्षविधौ सत्युपदिष्टेनैवाङ्गेन निराकाङ्क्षे पश्वादौ चोदकस्याप्रवृत्तेरिति पूर्वः पक्षः। पश्वादिविधिस्तावदितिकर्तव्यतामाकाङ्क्षति। तत्र प्राकृताङ्गान्यतिदिश्य वा तदाकाङ्क्षा पूर्यतां विधास्यमानान्यङ्गान्तराण्युपदिश्य वेति विवक्षायां क्लृप्तोपकारतया प्राकृताङ्गातिदेश एव न्याय्यः। ततश्चातिदेशतः प्राप्तप्रयाजाद्यङ्गमनूद्य गुणमात्रविधौ लाघवं भवति। गुणविशिष्टाङ्गविधौ तु गौरवं स्यात्। तस्मात्संख्यान्तरमन्त्रान्तराभ्यां पूर्वयोः संख्यामन्त्रयोर्बाधेऽपि प्रयाजाघारसामिधेन्यादीतिकर्तव्यता प्राप्नोत्येवातिदेशादिति राद्धान्तः।

---

१ ख. °डाशांशे। २ ख. प्रसङ्गत्वा°।

दशमाध्यायस्य सप्तमे पादे चिन्तितम्—

" पशुः कृत्स्नो हविः किं वा प्रत्यङ्गं हविरन्यता ।
आद्यश्चोदनया मैवमवदानपृथक्त्वतः " इति ॥

अग्नीषोमीयं पशुमालभेतेत्यत्र कृत्स्नस्य पशोरेकहविष्ट्वं युक्तम् । कुतः अग्नीषोमीयदेवतां प्रति द्रव्यत्वेन पशोश्चोदितत्वात् । न हि हृदयाद्यङ्गं साक्षात्पशुर्भवतीति प्राप्ते ब्रूमः—" हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः " " दोष्णोरवद्यति पार्श्वयोरवद्यति " इत्यादिना हृदयाद्यङ्गानामवदानानि पृथगाम्नायन्ते । अवदानं च हविष्ट्वप्रयोजकः संस्कारः । पुरोडाशादौ होतुमवदीयमानत्वदर्शनात् । हविःशब्दश्च कर्मव्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते । पश्वाकृतिचोदना तु हृदयाद्यङ्गद्वारेण देवतासंबन्धादुपपद्यते । तस्मात्प्रत्यङ्गं हविर्भेदः ।

तत्रैवान्यच्चिन्तितम्—

" एकेनाङ्गेन सर्वैर्वा यद्वैकादशभिर्यजिः ।
एकेन यागसंसिद्धेर्हविषां भेदतोऽखिलैः ॥
एकादशभिरन्येषां परिसंख्या भवेद्यतः ।
न त्रिदोषी गत्यभावादशृतोक्तेश्च सोचिता " इति ॥

प्रत्यङ्गं हविर्भेदे स्थिते सति त्रेधा यागे संशयः । तत्रानिर्दिष्टविशेषेण येन केनाप्यङ्गेन यागः कर्तव्यस्तावतैव यागस्य सिद्धेरित्येकः पक्षः । चोदितपश्वङ्गत्वं परिगणितेषु हृदयादिष्वङ्गेषु चांसशिरःप्रभृतिषु समानम् । ततो हृदयादिवदंसादीनां हविर्भेदत्वाद्यागमन्तरेण हूयमानत्वलक्षणहविष्ट्वस्यापर्यवसानात्सर्वैरङ्गैर्याग इति द्वितीयः पक्षः । हृदयादिभिरेकादशभिरेवाङ्गैर्यागः कर्तव्यः । कुतः । अन्येषामंसादीनां परिसंख्यातत्वात् । कुतः, चोदकेन सर्वेषामङ्गानामवदाने प्राप्ते हृदयादिवाक्येनांसादयः परिसंख्यायन्ते । ननु परिसंख्यायां विधिः स्वार्थं जह्यात्परार्थः कल्पेत प्राप्तं च बाधेतेति दोषत्रयं प्रसज्येत । प्रसज्यतां नाम । सति हि गत्यन्तरे तेषां दोषत्वम् । परिसंख्यायास्तु ते त्रयः स्वरूपमिति कृत्वा न दोषतां भजन्ते । किं च द्वयानि मांसान्यभिमृशन्ति शृताशृतानीति केषांचिन्मांसानामपक्वत्वमुच्यते । पाकस्य हविषो मांसस्य प्रतिनियतः । तस्मादशृतत्वोक्तिरंसादिपरिसंख्यां गमयति एतदेवाभिप्रेत्यांसादिप्रतिषेधः श्रुत्या वर्ण्यते—" नांसयोरवद्यति न शिरसः " इत्यादिना । तस्मादेकादशभिरेव यागः कर्तव्यः ।

१ ख. °शति शृ° ।

( गुदकाण्डकरणकोपयट्संज्ञका होमाः )

तत्रैवान्यच्चिन्तितम्—

" इज्याशेषैरशेषैर्वा त्र्यङ्गैः स्विष्टकृतो हुतिः ।
आद्यः प्रकृतिवन्मैवं पूर्वार्धेत्युक्तिशेषतः " इति ॥

पशौ श्रूयते—" त्र्यङ्गैः स्विष्टकृतं यजति " इति । तत्रेज्यार्थानां हृदयाद्येकादशाङ्गानां मध्ये यैः कैश्चित्त्र्यङ्गैरिज्याशेषभूतैः स्विष्टकृद्धोतव्यः । कुतः । प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृतो हुतत्वादत्रापि चोदकेन तथात्वादिति प्राप्ते ब्रूमः—" दोष्णः पूर्वार्धादग्रये समवद्यति गुदस्य मध्यतः श्रोण्या जघनतः " इति वाक्यशेषेण हृदयादिभ्य एकादशभ्योऽन्यानि त्रीण्यङ्गानि स्विष्टकृते समाम्नायन्ते । न च हृदयादिष्वपि गुदादीन्याम्नातानीति शङ्कनीयं, तद्विशेषस्य कल्पसूत्रकारेण दर्शितत्वात् । " हृदयं जिह्वा वक्षो यकृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि, दक्षिणं दोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि " इति ।

तस्मादनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमः ।

अष्टमाध्यायस्य द्वितीयपादे चिन्तितम्—

" पुरोडाशस्य सांनाय्यस्य वा धर्मः पशौ यतः ।
देवैक्यमाद्यस्तस्मान्नो हविर्जन्मादिसाम्यतः " इति ॥

अग्नीषोमीये पशावग्नीषोमीयपुरोडाशस्य धर्मः कार्यः । कुतः । देवतैक्यादिति चेन्मैवम् । सांनाय्यं पशोरुत्पन्नं, पशुरपि पशोरुत्पन्नः, श्रपणार्थमुखा सांनाय्यपश्वोः समा । हविःसाम्यं च बलीय इत्युक्तम् । तस्मात्सांनाय्यस्य धर्मः ॥

अत्र च्छन्दो नास्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके एकादशोऽनुवाकः । )

---

समुद्रं गच्छ स्वाहाऽन्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहाऽहोरात्रे गच्छ

स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहाऽद्भ्य-स्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय शुगसि तमभि शोच योऽस्मान्द्वेष्टि यं च वयं द्विष्मो धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च ( १ ) ॥

( असि पङ्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

समुद्रम् । गच्छ । स्वाहा । अन्तरिक्षम् । गच्छ । स्वाहा । देवम् । सवितारम् । गच्छ । स्वाहा । अहोरात्रे इत्यहः—रात्रे । गच्छ । स्वाहा । मित्रावरुणाविति मित्रा—वरुणौ । गच्छ । स्वाहा । सोमम् । गच्छ । स्वाहा । यज्ञम् । गच्छ । स्वाहा । छन्दाꣳसि । गच्छ । स्वाहा । द्यावापृथिवी इति

द्यावा—पृथिवी । गच्छ । स्वाहा । नभः । दिव्यम् । गच्छ । स्वाहा । अग्निम् । वैश्वानरम् । गच्छ । स्वाहा । अद्भ्य इत्यत्—भ्यः । त्वा । ओषधीभ्य इत्योषधि—भ्यः । मनः । मे । हार्दि । यच्छ । तनूम् । त्वचम् । पुत्रम् । नप्तारम् । अशीय । शुक् । असि । तम् । अभीति । शोच । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । धाम्नोधाम्न इति धाम्नः—धाम्नः । राजन् । इतः । वरुण । नः । मुञ्च । यत् । आपः । अघ्नियाः । वरुण । इति । शपामहे । ततः । वरुण । नः । मुञ्च । ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

दशमेऽनुवाके वसाहोमो वर्णितः । एकादशे गुदकाण्डेनोपयट्संज्ञका होमा उच्यन्ते ।

कल्पः—" आग्नीध्रादौपयजानङ्गारानाहरति होत्रीय उपयज उपयजति शामित्रान्निरूढपशुबन्ध उत्तरस्यां वेदिश्रोण्यां गुदकाण्डमेकादशधा तिर्यक्छित्वाऽसंभिन्दन्नपर्यावर्तयन्ननूयाजानां वषट्कृते वषट्कृत एकैकं गुदकाण्डं प्रतिप्रस्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैः प्रतिमन्त्रं सर्वाणि हुत्वाऽद्भ्यस्त्वौषधीभ्य इति बर्हिषि लेपं निमृज्य[1] मनो मे हार्दि यच्छेति जपति " इति ।

---

१ ग. घ. ङ. °ज्य च म° ।

मन्त्रास्त्वेवमाम्नाताः—

समुद्रं गच्छ स्वाहाऽन्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहाऽद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय, इति।

हे हविस्त्वं समुद्रादिनामकान्देवान्गच्छ। हे लेप त्वामप्कार्यौषधिसिद्ध्यर्थं बर्हिषि निमार्ज्मि। हृदये भवो हार्दो हर्षः सोऽस्यातीति हार्दि। हे समुद्रादिदेवतासमूह मे हार्दि मनः प्रयच्छ। त्वत्प्रसादात्तनूमुत्तमजातियुक्तं शरीरं त्वचं कान्तिमद्रूपं तथा गुणवन्तं पुत्रं तत्पौत्रं चाशीय प्राप्नुयाम् ॥

उपयजो विधत्ते—

" यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेवासृजत यदुपयज उपयजति प्रजा एव तद्यजमानः सृजते " [ सं० का० ६ प्र० ४ अ० १ ] इति।

ज्योतिष्टोमयज्ञस्य सृष्टिसाधनत्वेऽपि साक्षात्साधनत्वमुपयजामेव। अनूयाजसमीप इज्यन्त इत्युपयजः ॥

पशोः पाश्चात्यभागं द्रव्यत्वेन विधत्ते—

" जघनार्धादव द्यति जघनार्धाद्धि प्रजाः प्रजायन्ते " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

त्रेधा विभक्ते गुदकाण्डे स्थूलभागं विधत्ते—

" स्थविमतोऽव द्यति स्थविमतो हि प्रजाः प्रजायन्ते " [ सं० का० ६ प्र० ४ अ० १ ] इति।

निर्गन्तुं सुकरात्स्थूलाच्छिद्रात्प्रजा उत्पद्यन्ते ॥

क्रमेण च्छिन्नानां भागानां सांकर्यं वारयति—

" असंभिन्दन्नव द्यति प्राणानामसंभेदाय " [ सं० का० ६ प्र० ४ अ० १ ] इति।

( गुदकाण्डकरणकोपयट्संज्ञका होमाः )

अग्रभागं प्रथमतोऽवदाय पश्चान्मूलभागमित्येतादृशं विपर्यासं निषेधति—

" न पर्यावर्तयति यत्पर्यावर्तयेदुदावर्तः प्रजा ग्राहुकः स्यात् " [सं० का० ६ प्र० ४ अ० १ ] इति।

उदावर्तो रोगविशेषः ॥

समुद्रादिमन्त्राणां सर्वेषां प्रजोत्पत्तावुपयोगं विवक्षुः समुद्रजलस्य रेतःसाम्यमभिप्रेत्याऽऽह—

" समुद्रं गच्छ स्वाहेत्याह रेत एव तद्दधाति " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

अन्तरिक्षशब्दस्यावकाशप्रदानोपयोगं दर्शयति—

" अन्तरिक्षं गच्छ स्वाहेत्याहान्तरिक्षेणैवास्मै प्रजाः प्र जनयत्यन्तरिक्षꣳ ह्यनु प्रजाः प्रजायन्ते " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

प्रेरकत्वेन सवितुरुपयोग इत्याह—

"देवꣳ सवितारं गच्छ स्वाहेत्याह सवितृप्रसूत एवास्मै प्रजाः प्र जनयति " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

उत्पत्तिकालत्वेनाहोरात्रोपयोगमाह—

" अहोरात्रे गच्छ स्वाहेत्याहाहोरात्राभ्यामेवास्मै प्रजाः प्र जनयत्यहोरात्रे ह्यनु प्रजाः प्रजायन्ते " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

प्राणापानप्रदत्वेन मित्रावरुणयोरुपयोगमाह—

" मित्रावरुणौ गच्छ स्वाहेत्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

देवतात्वेन सोमोपयोगमाह—

" सोमं गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजाः " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

प्रजाप्रदत्वेन यज्ञस्योपयोगमाह—

" यज्ञं गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति " [सं० का० ६ प्र० ४ अ० १ ] इति ॥

पशुप्रदत्वेन च्छन्दसामुपयोगमाह—

" छन्दाꣳसि गच्छ स्वाहेत्याह पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

---

१ ख. °क्षस्या° । २ ख. °दानेनो° । ३ ख. घ. ङ. °जापतेर्यजमानप्र° ।

धारणाय द्यावापृथिव्योरुपयोगमाह—

“ द्यावापृथिवी गच्छ स्वाहेत्याह प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति ” [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

वृष्टिप्रदानेन नभस उपयोगमाह—

“ नभो दिव्यं गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि यच्छति ” [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

प्रतिष्ठाप्रदानेन वैश्वानरस्योपयोगमाह—

“ अग्निं वैश्वानरं गच्छ स्वाहेत्याह प्रजा एव प्रजाता अस्यां प्रति ष्ठापयति ” [ सं० का० ६ प्र० ४ अ० १ ] इति ।

अद्भ्यस्त्वौषधीभ्य इति मन्त्र उपेक्षितः ॥

मनो मे हार्दि यच्छेति प्रार्थनायाः प्रसङ्गमाह—

“ प्राणानां वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते ” [ सं० का० ६ प्र० ४ अ० १ ] इति ।

गुदस्य प्राणाधारत्वेन तदवदाने सति स्थानभ्रष्टाः प्राणाः पुनर्मन्त्रेण यथास्थानं स्थापिता भवन्ति ॥

शुगसि तमभि शोच योऽस्मान्द्वेष्टि यं
च वयं द्विष्मो धाम्नोधाम्नो राजन्नितो
वरुण नो मुञ्च यदापो अघ्निया वरु-
णेति शपामहे ततो वरुण नो मुञ्च ॥

कल्पः—“अग्रेण यूपं स्फ्येनोद्धत्यावोक्ष्य शुष्कस्य चाऽऽर्द्रस्य च संधौ हृदयशूलमुद्वासयति शुगसि तमभि शोच योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्चेति ” इति ।

हे हृदयशूल त्वं शुगसि शोकरूपमसि । अतो द्वेष्टारं द्वेष्यं चाभिशोचाभिप्राप्य शोचय । हे वरुण त्वमितो धाम्नोधाम्नस्तत्तद्द्वेष्टृद्वेष्यस्थानाच्छोकप्रापकादस्मान्मोचय । किं च हे आपो हेऽघ्निया हे वरुणेत्येवं वयं तदाऽस्माकमिष्टप्राप्त्यनिष्टनिवारणार्थं देवं त्वां शपामहे बाधामहे । महतां प्रत्यक्षं नामग्रहणमेव तावन्महान्द्रोहः । तथा च श्रूयते—“ यो वै वसीयाꣳसं यथानाममुपचरति पुण्यार्तिं वै स तस्मै कामयते ” इति । न केवलमत्र नामग्रहणं किं त्वसम-

( सोमाभिषवोपयुक्तवसतीवरीसंज्ञकानामपामुपादानम् )

दपेक्षिततत्तत्कार्यसाधनप्रयासश्च । तेनोभयेन जन्यं यत्पापमस्ति हे वरुण ततः पापादस्मान्मोचय । मन्त्रावेतावुपेक्षितौ ॥

शूलोद्वासनं विधत्ते—

" पशोर्वा आलब्धस्य हृदयꣳ शुगृच्छति सा हृदयशूलमभि समेति यत्पृथिव्याꣳ हृदयशूलमुद्वासयेत्पृथिवीꣳ शुचाऽर्पयेद्यदप्स्वपः शुचाऽर्पयेच्छुष्कस्य चाऽऽर्द्रस्य च संधावुद्वासयत्युभयस्य शान्त्यै " [ सं० का० ६ प्र० ४ अ० १ ] इति ॥

उद्वासनकाले ध्यानं विधत्ते—

" यं द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयति " [ सं०का०६प्र०४अ०१ ]इति ॥

अत्र विनियोगसंग्रहः—

" समुद्रं गुदकाण्डस्य होमा अद्भ्यस्तु बर्हिषि ।
लेपं मार्ष्टि मनो जप्यः शुक्संधावार्द्रशुष्कयोः ॥
त्यक्त्वा शूलं धाम्नो मृज्यं भवेत्पञ्चदशोदिताः ॥१॥ " इति ॥

अत्र मीमांसाछन्दसी न स्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माꣳ आ विवासति हविष्माꣳ अस्तु सूर्यः । अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्तेन्द्राग्नियोर्भागधेयीः स्थ मित्रावरुणयोर्भागधेयीः स्थ

विश्वेषां देवानां भागधेयीः स्थ यज्ञे जागृत ( १ ) ॥

( हविष्मतीश्चतुस्त्रिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

हविष्मतीः । इमाः । आपः । हविष्मान् । देवः । अध्वरः । हविष्मान् । एति । विवासति । हविष्मान् । अस्तु । सूर्यः । अग्नेः । वः । अपन्नगृहस्येत्यपन्न—गृहस्य । सदसि । सादयामि । सुम्नाय । सुम्निनीः । सुम्ने । मा । धत्त । इन्द्राग्नियोरितीन्द्र—अग्नियोः । भागधेयीरिति भाग—धेयीः । स्थ । मित्रावरुणयोरिति मित्रा—वरुणयोः । भागधेयीरिति भाग—धेयीः । स्थ । विश्वेषाम् । देवानाम् । भागधेयीरिति भाग—धेयीः । स्थ । यज्ञे । जागृत ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

एकादशेऽनुवाके गुदकाण्डहोमो वर्णितः । एतावताऽग्नीषोमीयः पशुः

समाप्तः। अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञकानामपामुपादानं द्वादशेऽनुवाकेऽभिधीयते।

हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माꣳ आ विवासति हविष्माꣳ अस्तु सूर्यः।

कल्पः—"अथ यो वीडितः कुम्भस्तं याचति तमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्राऽऽपस्तदेति नान्तमा वहन्तीरत्येति न स्थावराणां गृह्णाति प्रतीपं तिष्ठन्गृह्णाति च्छायायै चाऽऽतपतश्च संधौ गृह्णाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माꣳ आ विवासति हविष्माꣳ अस्तु सूर्य इति" इति।

वीडितो दृढः। इमा गृह्यमाणा वसतीवरीसंज्ञका आपः स्वसंस्कारेण सोमेन हविष्मत्यो भवन्तु। देव इन्द्रोऽपि हविष्मानस्तु। अध्वरो यागोऽपि हविष्मानाविवासति समन्ताद्विशेषेण प्रवर्तताम्। वसतीवरीणां प्रकाशकत्वेन सूर्योऽपि हविष्मानस्तु॥

विधत्ते—

"देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत तदब्रुवन्वसतु नु न इदमिति तद्वसतीवरीणां वसतीवरित्वं तस्मिन्प्रातर्न समशक्नुवन्तदप्सु प्रावेशयन्ता वसतीवरीरभवन्वसतीवरीर्गृह्णाति यज्ञो वै वसतीवरीर्यज्ञमेवाऽऽरभ्य गृहीत्वोप वसति" [सं० का० ६ प्र० ४ अ० २] इति।

पुरा कदाचिद्देवा आग्नीध्रमण्डपे स्थित्वा यज्ञशालामंशेनेदं ममेदं ममेत्येवं व्यभजन्त। ततः सर्वैः स्वस्वभागेषु यदवशिष्टं तदुद्दिश्य परस्परमब्रुवन्निदमवशिष्टमिदानीं साधारण्येनास्माकमेव तिष्ठतु प्रातर्विभागं करिष्याम इति। यस्माद्वसत्विति देवैरुक्तं तस्मात्तस्यांशस्य देवोक्तियोगाद्वसतीवरीरिति नाम संपन्नम्। वसत्वित्युक्त्या यच्छेषभूतं तद्गत्य आपो वसतीवर्यः। ततः प्रातःकाले पुनः समागत्य तस्मिन्नवशिष्टे विभागं कर्तुं नाशक्नुवन्। तस्याल्पत्वेन बहूनामपर्याप्तत्वात्। तस्य साधारणस्यैकेन ग्रहीतुमशक्यत्वादप्सु परित्यक्तवन्तः। ताश्चाऽऽपो वसतीवर्योऽभवन्। ततो यज्ञांशत्वाद्वसतीवरीर्गृह्णीयात्। तद्ग्रहणेन यज्ञमेवोपक्रम्य दृढं धारयित्वा तत्समीपे वसति॥

---

१ घ. ङ. °स्य योगाद्°। २ क. ध. ङ. °सति त°।

तस्य ग्रहणस्य सूर्यास्तमयात्पूर्वकालं व्यतिरेकमुखेण विधत्ते—

"यस्यागृहीता अभि निम्रोचेदनारब्धोऽस्य यज्ञः स्याद्यज्ञं वि च्छिन्द्यात्" [ सं० का० ६ प्र० ४ अ० २ ] इति ।

अगृहीता एता अभिलक्ष्य यन्निम्रोचेदस्तमियात्तदा पूर्वदिने यज्ञोऽनुपक्रान्तो भवेत् । तदाऽपरेद्युरनुष्ठितोऽपि विच्छिन्न एव स्यात् ॥

कथंचिदस्तमये सति त्रेधा प्रतीकारं विधत्ते—

"ज्योतिष्या वा गृह्णीयाद्धिरण्यं वाऽवधाय सशुक्राणामेव गृह्णाति यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात्स हि गृहीतवसतीवरीकः" [ सं० का० ६ प्र० ४ अ० २ ] इति ।

उल्कया द्योतिता इत्याद्यः पक्षः । कुम्भे हिरण्यमवधाय तत्सहिता इति द्वितीयः पक्षः । सोमयाजिगृहे कुम्भगता इति तृतीयः पक्षः ॥

उक्तमेव विधिमनूद्य प्रशंसति—

"वसतीवरीर्गृह्णाति पशवो वै वसतीवरीः पशूनेवाऽऽरभ्य गृहीत्वोप वसति" [ सं० का० ६ प्र० ४ अ० २ ] इति ।

पशुप्राप्तिहेतुतया पशुत्वम् ॥

ग्रहणकाले प्रवाहाभिमुख्यं विधत्ते—

"यदन्वीपं तिष्ठन्गृह्णीयान्निर्मार्गुका अस्मात्पशवः स्युः प्रतीपं तिष्ठन्गृह्णाति प्रतिरुध्यैवास्मै पशून्गृह्णाति" [ सं० का० ६ प्र० ४ अ० २ ] इति ।

प्रवाहो यन्मुखस्तन्मुखत्वेनावस्थानमन्वीपत्वं, तद्वैपरीत्यं प्रतीपत्वं, निर्मार्गुका विनश्वराः, प्रतिरुध्य विनाशं निवार्य ॥

प्रवाहगतोदकं विधत्ते—

"इन्द्रो वृत्रमहन्त्सोऽपोऽभ्यम्रियत तासां यन्मेध्यं यज्ञिय१ सदेवमासीत्तदत्यमुच्यत ता वहन्तीरभवन्वहन्तीनां गृह्णाति या एव मेध्या यज्ञियाः सदेवा आपस्तासामेव गृह्णाति" [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

प्रवाहेष्वत्यन्तसमीपस्थं जलं व्यतिरेकमुखेण विधत्ते—

"नान्तमा वहन्तीरतीयाद्यदन्तमा वहन्तीरतीयाद्यज्ञमति मन्येत" [ सं० का० ६ प्र० ४ अ० २ ] इति ।

अन्तमा अन्तिकतमाः । अतिमन्येतावजानीयात् ॥

---

१ ख. ततः प° ।

वहन्तीष्वपि नदीषु या ह्रदवर्तिन्यः स्थावरा आपो याश्च तटाकादिस्थास्तासां ग्रहणं निषेधति—

"न स्थावराणां गृह्णीयाद्वरुणगृहीता वै स्थावरा यत्स्थावराणां गृह्णीयाद्वरुणेनास्य यज्ञं ग्राहयेत्" [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

अपां ग्रहणाय च्छायातपयोः संधिदेशं विधत्ते—

"यद्वै दिवा भवत्यपो रात्रिः प्र विशति तस्मात्ताम्रा आपो दिवा ददृश्रे यन्नक्तं भवत्यपोऽहः प्र विशति तस्माच्चन्द्रा आपो नक्तं ददृश्रे छायायै चाऽऽतपतश्च संधौ गृह्णात्यहोरात्रयोरेवास्मै वर्णं गृह्णाति" [सं० का० ६ प्र० ४ अ० २ ] इति ।

अहर्यदा वर्तते तदानीमप्सु रात्रिः प्रविशति । तत्र जलवर्णस्य शुक्लस्य रात्रिवर्णस्य कृष्णस्य च मेलनादीषत्ताम्रा इवाऽऽपो दिने दृश्यन्ते । यथा राहुग्रस्ते चन्द्रे ताम्रत्वं तद्वत् । यदा तु रात्रिः प्रवर्तते तदानीमहोऽप्सु प्रविशति । तत्र शुक्लवर्णयोर्मेलनादापो रात्रौ चन्द्रवदतिश्वेता दृश्यन्ते । तस्माद्वर्णद्वयोपेते संधिदेशे गृह्णीयात् ॥

जलविशेषणेन मन्त्रगतहविष्मच्छब्देन हविःसंपादकत्वं विवक्षितमित्याह—

"हविष्मतीरिमा आप इत्याह हविष्कृतानामेव गृह्णाति" [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

सूर्यशब्देनापां प्रकाशोपेतत्वं विवक्षितमित्याह—

"हविष्माꣳ अस्तु सूर्य इत्याह सशुक्राणामेव गृह्णाति" [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

मन्त्रगतस्य च्छन्दस उपयोगमाह—

"अनुष्टुभा गृह्णाति वाग्वा अनुष्टुग्वाचैवैनाः सर्वया गृह्णाति" [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्तेन्द्राग्नियोर्भागधेयीः स्थ मित्रावरुणयोर्भागधेयीः स्थ विश्वेषां देवानां भागधेयीः स्थ यज्ञे जागृत ॥

कल्पः—"अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीत्यपरेण शालामुखीयमुपसादयति, सुम्नाय सुम्निनीः सुम्ने मा धत्तेति सर्वेषु वसतीवरीणां सादनेषु

यजमानो जपति, निशायां वसतीवरीः परिहरत्यन्तर्वेद्यासीने यजमाने पत्न्यां च नादीक्षितमभिपरिहरेत्सव्येंऽसेऽत्याधायापरेण प्राजिहितं परिक्रम्य पूर्वया द्वारोपनिर्हृत्य दक्षिणेन वेदिं गत्वा दक्षिणेन मार्जालीयं धिष्णियं[1] परीत्य दक्षिणस्यामुत्तरवेदिश्रोण्यां सादयति—इन्द्राग्नियोर्भागधेयीः स्थेति, दक्षिणेंऽसेऽत्याधाय यथेतं गत्वा पूर्वया द्वारोपनिर्हृत्योत्तरेण वेदिं गत्वोत्तरेणाऽऽग्नीध्रीयं धिष्णियं[2] परीत्योत्तरस्यामुत्तरवेदिश्रोण्यां सादयति मित्रावरुणयोर्भागधेयीः स्थेति, सव्येंऽसेऽत्याधाय यथेतं गत्वाऽपरेणाऽऽग्नीध्रीयं धिष्णियमुप[3]सादयति विश्वेषां देवानां भागधेयीः स्थेति, यज्ञे जागृतेति सन्ना अनुमन्त्र[4]यते " इति ।

हे वसतीवर्यो युष्मानविनश्वरगृहस्य शालामुखीयस्याग्नेः सदसि सादयामि समीपस्थाने स्थापयामि । हे आपः सुम्नाय सर्वप्राणिसुखाय भद्रताः सुम्निनीः स्वयमपि सुखवत्यो यूयं मां यजमानं सुम्ने सुखे धत्त स्थापयत । यूयं यक्ष्यमाणानामिन्द्रादिदेवानां भागरूपाः स्थ । तस्माद्यज्ञे जागृत रक्षोनिवारणाय सावधाना भवत । अग्नेर्वः सुम्नायेति द्वौ मन्त्रावुपेक्षितौ ॥

हविष्मतीरित्यारभ्य ऋचः पादेषु या चतुःसंख्या या[5] च शालामुखीयोत्तरवेद्याग्नीध्रीयस्थानत्रयविशिष्टा सादनसंख्या तदुभयं प्रशंसति—

" चतुष्पदयर्चा गृह्णाति त्रिः सादयति सप्त सं पद्यन्ते सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे " [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

शालामुखीयोत्तरवेद्योः सादनं विधत्ते—

" अस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपसादयेदस्मिँल्लोके पशुमान्त्स्याद्यदाहवनीयेऽमुष्मिँल्लोके पशुमान्त्स्यादुभयोरुप सादयत्युभयोरेवैनं लोकयोः पशुमन्तं करोति " [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

स्थानत्रये यत्सूत्रोक्तं परिभ्रामणं तद्विधत्ते—

" सर्वतः परि हरति रक्षसामपहत्यै " [ सं० का०६ प्र० ४ अ०२ ] इति ॥

मन्त्रचतुष्टये स्पष्टार्थतां दर्शयति—

" इन्द्राग्नियोर्भागधेयीः स्थेत्याह यथायजुरेवैतत् " [ सं० का० ६ प्र० ४ अ० २ ] इति ॥

१ क. घ. ङ. धिष्ण्यं । २ क. घ. ङ. धिष्ण्यं । ३ क. घ. ङ. धिष्ण्यमु॰ । ४ ख. अभिम॰ । ५ ख. ॰यं सह प्र॰ ।

( सोमाभिषवोपयुक्तवसतीवरीसंज्ञकानामपामुपादानम् )

विधत्ते—

"आग्नीध्र उप वासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्यापराजितं तदेवैना उप वासयति" [ सं० का० ६ प्र० ४ अ० २ इति।

तदेव तस्मिन्नेव॥

यद्विहितं वहन्तीनां गृह्णातीति तदेव प्रशंसति—

"यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञ रक्षाꣳस्यव चरन्ति यद्वहन्तीनां गृह्णाति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय" [ सं० का० ६ प्र० ४ अ० २ ] इति।

विततस्य विस्तीर्णस्य यज्ञस्य यतो यदङ्गं विसृज्य न क्रियते तदेव च्छिद्रमनुप्रविश्य रक्षांस्यवचरन्ति आक्रमन्ति। वहन्तीग्रहणेन तदङ्गं क्रियमाणमेव शये शेते भवति॥

आग्नीध्रे सादितानां तृतीयसवनपर्यन्तमवस्थानं धारणं विधत्ते—

"न ह्येता ईलयन्त्या तृतीयसवनात्परि शेरे यज्ञस्य संतत्यै" [ सं०का० ६ प्र० ४ अ० २ ] इति।

एता आपो न ह्यपगमयन्ति,* किं तु परिशेरेऽवतिष्ठन्ते, स्थापयेदित्यर्थः॥

अत्र विनियोगसंग्रहः—

"हविर्गृह्णाति वसतीवरीरग्नेस्तु सादयेत्।
शालामुखीयतः पश्चात्सुम्ना स्वाघी जपेत्पुनः॥ १॥
इन्द्रमित्रद्वयाद्वेदिश्रोण्योरासादयेत्क्रमात्।
विश्वे ह्याग्नीध्रधिष्ण्यस्य पश्चादासादयेत्पुनः॥
यज्ञेति मन्त्रयेत्सप्त मन्त्रा इहोदिताः॥ २॥" इति॥

अत्र न मीमांसा॥

अथ च्छन्दः—

हविष्मतीरित्यनुष्टुप्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः॥ १२॥

---

* अपगमयन्तीत्यस्यापगच्छन्तीत्यर्थो ज्ञेयः। अथ वाऽऽत्मानमिति शेषो बोध्यः।

( अभिषोतव्यस्य सोमस्य शकटादुपावरोहः )

( अथ प्रथमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

हृदे त्वा मन॑से त्वा दि॒वे त्वा सूर्या॑य त्वो॒र्ध्वमि॒मम॑ध्व॒रं कृ॑धि दि॒वि दे॒वेषु॒ होत्रा॑ यच्छ॒ सोम॑ राजन्नेह्यव॒ रोह॒ मा भेर्मा सं वि॑क्था॒ मा त्वा॑ हिꣳसिषं प्र॒जास्त्वमु॒पाव॑रोह प्र॒जास्त्वामु॒पाव॑रोहन्तु शृ॒णोत्व॒ग्निः स॒मिधा॒ हवं॑ मे शृ॒ण्वन्त्वापो॑ धि॒षणा॑श्च दे॒वीः । शृणोत॑ ग्रावाणो वि॒दुषो॒ नु ( १ ) य॒ज्ञꣳ शृ॒णोतु॑ दे॒वः स॑वि॒ता हवं॑ मे । दे॒वीरा॑पो अपां नपा॒द्य ऊ॒र्मिर्ह॑वि॒ष्य॑ इन्द्रि॒यावा॑न्म॒दिन्त॑मस्तं दे॒वेभ्यो॑ देव॒त्रा ध॑त्त शु॒क्रꣳ शु॒क्रपे॒भ्यो॒ येषां॑ भा॒गः स्थ स्वाहा॒ कार्षि॑रस्यपापा॑ मृ॒ध्रꣳ स॑मु॒द्रस्य॒ वोऽक्षि॑त्या॒ उन्न॑ये । यम॑ग्ने पृ॒त्सु मर्त्य॒माव॒ वाजे॑षु॒ यं जु॒नाः । स यन्ता॒ शश्व॑ती॒रिषः॑ ( २ ) ॥

( नु स॒प्तच॑त्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

हृदे । त्वा॒ । मन॑से । त्वा॒ । दि॒वे । त्वा॒ ।

( अभिषोतव्यस्य सोमस्य शकटादुपावरोहः )

सूर्याय । त्वा । ऊर्ध्वम् । इमम् । अध्वरम् । कृधि । दिवि । देवेषु । होत्राः । यच्छ । सोम । राजन् । एति । इहि । अवेति । रोह । मा । भेः । मा । समिति । विक्थाः । मा । त्वा । हिꣳसिषम् । प्रजा इति प्र—जाः । त्वम् । उपावरोहेत्युप—अव-रोह । प्रजा इति प्र—जाः । त्वाम् । उपावरोहन्त्वि-त्युप—अवरोहन्तु । शृणोतु । अग्निः । समिधेति सम्—इधा । हवम् । मे । शृण्वन्तु । आपः । धिषणाः । च । देवीः । शृणोत । ग्रावाणः । विदुषः । नु । ( १ ) यज्ञम् । शृणोतु । देवः । सविता । हवम् । मे । देवीः । आपः । अपाम् । नपात् । यः । ऊर्मिः । हविष्यः । इन्द्रियावानितीन्द्रिय—वान् । मदिन्तमः । तम् । देवेभ्यः । देवत्रेति देव—त्रा । धत्त । शुक्रम् । शुक्रपेभ्य इति शुक्र—पेभ्यः । येषाम् । भागः । स्थ । स्वाहा । कार्षिः । असि । अपेति । अपाम् । मृध्रम् । समुद्रस्य । वः । आक्षित्यै । उदिति । नये । यम् । अग्ने । पृत्स्विति पृत्—सु । मर्त्यम् । आवः । वाजेषु । यम् । जुनाः । सः । यन्ता । शश्वतीः । इषः ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ प्रथमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

द्वादशेऽनुवाके सोमाभिषवार्थानां वसतीवरीणां ग्रहणमुक्तम् । अभिषोतव्यस्य सोमस्य शकटादुपावरोहस्त्रयोदशेऽनुवाकेऽभिधीयते । अथ महारात्रे प्रबुध्य सोमपात्राण्यासाद्य सोममवरोहयेत् ।

कल्पः—" अथैतच्चर्मफलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्र प्रतितिष्ठेति वा तूष्णीं वा तस्मिन्संमुखान्ग्राव्णः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेपे सोमं राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्याम् " इति ।

मन्त्रौ त्वेवमाम्नातौ—

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिमम-
ध्वरं कृधि दिवि देवेषु होत्रा यच्छ सोम राजन्ने-
ह्यव रोह मा भेर्मा सं विक्था मा त्वा हिꣳसिषं
प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु, इति ॥

हे सोम त्वां हृदे हृदयवद्भ्यो मनुष्येभ्यो मनसे मनस्विभ्यः पितृभ्यो दिवे द्युलोकवासिभ्यो देवेभ्यो विशेषतः सूर्याय चोपावहरामि । त्वमिमं प्रवृत्तमध्वरं विनाशरहितमूर्ध्वमुन्नतं समाप्तं कृधि कुरु । दिविष्ठेषु देवेषु होत्रा असमदीयान्याह्वानानि स्तोत्ररूपाणि यच्छावस्थापय । हे सोम राजन्नेह्यभिषवस्थाने समागच्छ । शकटादवरोह । मा भैषीः । मा च संविक्थाः कम्पिष्ठाः । अहं तु त्वां मा हिंसिषम् । अतस्त्वं देवलोके गत्वा दैवीः प्रजा उपावरोह प्राप्नुहि । प्रजाश्च त्वामुपावरोहन्तु प्राप्नुवन्तु ॥

अत्रोपावहरेदिति विधिं सूचयन्हृदयादिशब्दानां यथोक्तार्थं दर्शयति—

" ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरति " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

यो हृदे त्वेति मन्त्रेण सर्वदेवतार्थमुपावहर्तुं जानाति स एव मुख्योऽध्वर्युरिति ब्रह्मवादिनामुक्तिः । सोम राजन्निति मन्त्र उपेक्षितः ॥

( अभिषोतव्यस्य सोमस्य शकटादुपावरोहः )

विधत्ते—

" पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक्तामव रुन्धे " [ सं० का० ६ प्र० ४ अ० ३ ] इति।

रात्रौ निद्रां कुर्वन्तो मनुष्या उषःकाले प्रबुध्य परस्परं वाक्प्रसरं कुर्वन्ति। पक्षिणः शब्दं कुर्वन्ति। तद्धि वाचः प्रवदनम्। प्रातःकालात्पूर्वं होत्राऽनुवक्तव्य ऋक्समूहः प्रातरनुवाकः। उपाकरणं नाम होतारं प्रति प्रैषोक्तिः। अत्र सूत्रम्—" पुरा वाचः पुरा वा वयोभ्यः प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि " इति। प्रवदितोः प्रवदनात् ॥

प्रातरनुवाकस्य प्रथमामृचं विधत्ते—

" अपोऽग्रेऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाभि वाचं वि सृजति " [ सं० का० ६ प्र० ४ अ० ३ ] इति।

अपोऽभिलक्ष्य तत्प्रतिपादिकामृचमग्रे प्रथमं व्याहरेत्। आपो रेवतीः क्षयथा हि वस्व इत्येतामृचमित्यर्थः ॥

तत ऊर्ध्वं वक्तव्या ऋचो विधत्ते—

" सर्वाणि छन्दाꣳस्यन्वाह पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे " [ सं० का० ६ प्र० ४ अ० ३ ] इति।

तत्तच्छन्दोयुक्ता ऋग्विशेषा ग्रन्थबाहुल्यभयाद्बह्वृचब्राह्मणे स्पष्टत्वाच्च नात्र प्रदर्श्यन्ते ॥

प्रातरनुवाकसमाप्तौ पठनीयामृचं कामनाभेदेन विकल्पितां विधत्ते—

" गायत्रिया तेजस्कामस्य परि दध्यात्त्रिष्टुभेन्द्रियकामस्य जगत्या पशुकामस्यानुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजाऽन्नकामस्य " [ सं० का० ६ प्र० ४ अ० ३ ] इति।

परिदध्यात्समापयेत् ॥

कल्पः—" यत्राभिजानात्यभूदुषा रुशत्पशुरिति तत्प्रचरण्या जुहोति शृणोत्वग्निः समिधा हवं म इति " इति।

अभूदुषा इत्येषा प्रातरनुवाकस्य परिधानीया तां होत्रा पठ्यमानां यदाऽध्वर्युर्जानाति तदा जुहुयात्।

मन्त्रस्त्वेवमाम्नायते—

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिष-

---

१ ख. 'क्प्रवचनं कु'।

णाश्च देवीः । शृणोत ग्रावाणो विदुषो नु यज्ञꣳ शृणोतु देवः सविता हवं मे ॥, इति ।

सम्यगिध्यतेऽनयाऽऽज्याहुत्येति समिदाहुतिस्तया समिद्धोऽग्निर्मे हवं मदीयमाह्वानं शृणोतु । हे आपो ग्रहीष्यमाणा यूयमपि शृणुत । कीदृश्यः । धिषणा विद्योपेताः । देव्यो देवतारूपाश्च । हे ग्रावाणोऽभिषवार्थमिहोपस्थिता यूयं विदुषो नु विद्वांस एव सन्तो यज्ञं शृणुत । सविता देवो मदीयमाह्वानं शृणोतु ॥

अग्न्यादिश्रवणप्रयोजनमाह—

" शृणोत्वग्निः समिधा हवं म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्यापोऽच्छैति " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

एकधनसंज्ञकाः पत्नेजनीसंज्ञकाश्चाऽऽप आनेतव्याः । अतो मन्त्रेण देवताभ्यो विज्ञाप्य ता अपः प्राप्तुं गच्छति ॥

प्रैषमन्त्रमुत्पादयति—

" अप इष्य होतरित्याहेषितꣳ हि कर्म क्रियते " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

हे होतरानेतव्या अप उद्दिश्य प्र देवत्रा ब्रह्मणे गातुरेत्वित्यादिका ऋच इष्य पठेत्यर्थः । लोकेऽपीषितमभीष्टं कर्म सम्यक्क्रियते ॥

प्रैषान्तरमुत्पादयति—

" मैत्रावरुणस्य चमसाध्वर्यवा द्रवेत्याह मित्रावरुणौ वा अपां नेतारौ ताभ्यामेवैना अच्छैति " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

चमसिनामृत्विजां परिचारकाश्चमसाध्वर्यवः । तत्र मैत्रावरुणनाम्न ऋत्विजो यश्चमसाध्वर्युस्तं संबोध्याऽऽगच्छेति ब्रूयात् । तदनेन प्रैषेणोदकप्रवर्तकमित्रावरुणदेवद्वयेन सहैवैना अपः प्राप्तुं गच्छति ॥

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भागः स्थ स्वाहा—

कल्पः—" अपरं चतुर्गृहीतं गृहीत्वा बर्हिरादाय संप्रैषमाह—अप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयाग्नीध्रो-

तृचमसेन वसतीवरीभिश्च चात्वाले प्रत्युपलम्बस्वेति यथासंप्रैषं ते कुर्वन्ति यत्राऽऽपस्तद्यन्त्यथाप्सु बर्हिः प्रास्याभिजुहोति देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भागः स्थ स्वाहेति " इति ।

न पातयत्युदकमध्ये गूढतया स्थितोऽपि तदुदकं न विनाशयतीति नपात् । अपां नपादिति वह्निविशेषस्य संज्ञा । हे आपो देव्यो हे वह्ने यूयं य ऊर्मिर्युष्मदीयस्तं देवत्रा देवेषु धत्त स्थापयत । किमर्थम् । देवेभ्यो देवार्थमस्माभिर्देवानुद्दिश्य होतुमित्यर्थः । कीदृश ऊर्मिः । हविष्यो हविषे सोमरूपाय हितः । इन्द्रियावान्प्रीतः सन्निन्द्रियवृद्धिकारी । मदिन्तमः पीयमानोऽत्यन्तहर्षकारी । कीदृशं तम् । शुक्रं दीप्तिमन्तम् । कीदृशेभ्यो देवेभ्यः । येषां यूयं भागभूताः स्थ तेभ्यः शुक्रपेभ्यः सोमपेभ्यः । इदमाज्यं युष्मभ्यं हुतमस्तु ॥

ग्रहीष्यमाणानामपां मूल्यत्वेन हविष्ट्वसंपादनेन चेयमाहुतिरुपयुज्यत इत्याह–

" देवीरापो अपां नपादित्याहाऽऽहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभिघृतानां गृह्णाति " [ सं० का० ६ प्र० ४ अ० ३ ] इति ॥

कल्पः—" कार्षिरसीति दर्भैराहुतिमपप्लाव्य" इति ।

## कार्षिरस्यपापां मृध्रम्, इति मन्त्रपाठः ।

हे आज्य त्वमप्सु हुतं सत्कार्षिः कर्षणीयमपनेतव्यमसि । अपां मृध्रं युद्धोपलक्षितानिष्टरूपं त्वामपनयामि ॥

एतमर्थं दर्शयति—

" कार्षिरसीत्याह शमलमेवाऽऽसामप प्लावयति " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

शमलं मलिनांशम् ॥

## समुद्रस्य वोऽक्षित्या उन्नये ।

कल्पः—" समुद्रस्य वोऽक्षित्या उन्नय इत्यभिहुतानां मैत्रावरुणचमसेन गृह्णाति " इति ।

हे आपः समुद्रवद्युष्माकमक्षीणत्वाय पूर्वेद्युर्वसतीवरीर्गृहीत्वाऽपि पुनरिदानीमुन्नयामि ॥

अक्षितिं विशदयति—

" समुद्रस्य वोऽक्षित्या उन्नय इत्याह तस्मादद्यमानाः पीयमाना आपो न क्षीयन्ते " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

यथा चमसेन जलं गृहीतं तथा त्रिभिः कुम्भैरेकधना गृह्णीयात्पन्नेजनीश्च गृह्णीयात् । तथा च सूत्रम्—"अथैकधना गृह्णातीन्द्राय वो जुष्टान्गृ(गृ)ह्णामीति वा तूष्णीं वाऽथ पन्नेजनीर्गृह्णाति " इति ॥

विधत्ते—

" योनिर्वै यज्ञस्य चात्वालं यज्ञो वसतीवरीर्होतृचमसं च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाथो स्वादेवैना योनेः प्र जनयति " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

उत्तरवेदिनिष्पादकतया चात्वालो यज्ञयोनिः । देवविभक्तयज्ञावशेषत्वाद्वसतीवरीणां यज्ञत्वम् । व्यानयति व्याप्ता अधिकाः करोति । तत्प्रकारः सूत्रे दर्शितः—" होतृचमसे वसतीवरीभ्यो निषिच्योपरिचात्वालं होतृचमसं च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति समन्या यन्तीत्यभिज्ञाय होतृचमसान्मैत्रावरुणचमस आनयति मैत्रावरुणचमसाद्धोतृचमसे" इति ।

प्रश्नोत्तरमन्त्रावुत्पादयति—

" अध्वर्योऽवेरपा३ इत्याहोतेमनन्नमुरुतेमाः पश्येति वावैतदाह " [ सं० का० ६ प्र० ४ अ० ३ ] इति ।

प्लुतिः प्रश्नार्था । हेऽध्वर्यो, अपः किमवेर्लब्धवानसि । सोऽयं होतुः प्रश्नः । उतेमनन्नमुरित्यध्वर्योरुत्तरमन्त्रः । लब्धवानस्मीत्येतावदेव न भवति उतापि तु ईं ता अनन्नमुरुपसंप्राप्ताः । दूरवर्तित्वेऽपि सत्त्वमात्रेण लाभो भवति तदुपसंप्राप्तिर्लाभादतिरिच्यते । उतेमा इति वाक्यं मन्त्रस्य व्याख्यानम् । हे होतर्न केवलं मद्वचनमात्रेण विश्वसिहि किं त्विमाः पुरोवर्तिनीः पश्येत्येवमेव सर्वमन्त्रेणाध्वर्युर्ब्रूते ॥

कल्पः—" अध्वर्योऽवेरपा३ इति होताऽध्वर्युं पृच्छत्युतेमनन्नमुरिति प्रत्युक्त्वा प्रचरणीशेषात्क्रतुकरणं जुहोति यमग्ने पृत्सु मर्त्यमिति " इति ।

यमग्ने पृत्सु मर्त्यमावो वाजेषु यं
जुनाः । स यन्ता शश्वतीरिषः॥, इति मन्त्रपाठः ।

( अभिषोतव्यस्य सोमस्य शकटादुपावरोहः )

हेऽग्ने यं मर्त्यं पृत्सु सङ्ग्रामेषु आवो रक्षसि, किं च वाजेष्वन्ननिमित्तं यं मर्त्यं जुना गच्छसि हवींषि ग्रहीतुं यस्य सकाशं गच्छसीत्यर्थः। स मर्त्यस्त्वदनुग्रहेण शश्वतीरिषो नित्यान्यन्नानि धनरूपाणि यन्ता नियंस्यति प्राप्स्यतीत्यर्थः। मन्त्रोऽयमुपेक्षितः॥

अस्य च क्रतुकरणाख्यस्य होमस्य विषयविशेषव्यवस्थितिं विधत्ते—

"यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ नि मार्ष्टि यद्यतिरात्रो यजुर्वदन्प्र पद्यते यज्ञक्रतूनां व्यावृत्त्यै" [ सं० का० ६ प्र० ४ अ० ३ ] इति।

अनुष्ठीयमानस्य कर्मणोऽग्निष्टोमत्वे मन्त्रेण क्रतुकरणं जुहुयात्। उक्थ्यत्वे परिधावाज्यलेपं निमृज्यात्। अतिरात्रत्वे मन्त्रं पठन्हविर्धानं प्राप्नुयात्। एवं सत्यग्निष्टोमादीनामनुष्ठास्यमानानां परस्परं व्यावृत्तिरिदानीमेवावगता। सक्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप इत्युपनिषदि तत्क्रत्विति वैयासिकसूत्रे चोपास्तिष्वपि क्रतुशब्दस्य प्रयोगात्तद्व्यवच्छेदार्थं यज्ञशब्दः। द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपर इत्यादौ तपःप्रभृतिष्वपि यज्ञशब्दप्रयोगात्तद्व्यवच्छेदाय क्रतुशब्दप्रयोगः॥

अत्र विनियोगसंग्रहः—

"ह्रदे सोमद्वयात्सोमं शकटादवरोहयेत्।
शृणोऽग्नौ जुहुयादेवीरप्सु हुत्वाऽथ दर्भकैः॥ १॥
अप्सूपप्लावयेत्काषिः समुद्रो गृह्यते जलम्।
यमग्ने क्रतुकृद्धोमो मन्त्राः सप्तेह वर्णिताः॥ २॥" इति॥

अथ मीमांसा।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

"चमसाध्वर्यवो नान्य ऋत्विग्भ्योऽन्येऽथ वाऽग्रिमः।
यौगिक्या संज्ञया मैवं षष्ठ्या तेभ्यो विभेदनात्" इति॥

ज्योतिष्टोमे श्रूयते—"चमसाध्वर्यून्वृणीते" इति। ये पूर्वं त्वत्र कार्यानुसारेणाध्वर्युप्रमुखा ऋत्विज उक्तास्तेभ्यो न व्यतिरिक्ताश्चमसाध्वर्यवः। कुतः। यौगिकसंज्ञया तदभेदप्रतीतेः। यथा देवदत्त एव पचिक्रियायोगात्पाचको भवति तद्वदध्वर्युप्रमुखा एव चमसयोगाच्चमसाध्वर्यव इति चेन्मैवम्। मध्यतःकारिणां चमसाध्वर्यवो[1] होत्रकाणां चमसाध्वर्यव इति षष्ठ्या भेदाव-

---

१ क. ख. ग. घ. ङ. 'वो न हो'।

भासात्। मध्यतःकारिणो होत्रादयः। होत्रकाः प्रतिप्रस्थातृमैत्रावरुणादयः। तस्मादृत्विग्भ्योऽन्ये।

तत्रैवान्यच्चिन्तितम्—

"तान्वृणीतेति बहुता नास्ति वाऽस्ति ग्रहैक्यवत्।
नैवेति चेन्न वैषम्यादुत्पत्तौ बहुताश्रुतेः" इति॥

चमसाध्वर्यून्वृणीत इति यद्बहुत्वं श्रुतं तन्न विवक्षितं, ग्रहैकत्ववदुद्देश्यगतत्वादिति चेन्नैवम्। ग्रहवैषम्यात्। ग्रहं संमार्ष्टीत्येतन्न ग्रहाणामुत्पत्तिवाक्यं, चमसाध्वर्यूणां त्वेतदेवोत्पत्तिवाक्यं, ततस्तेषामुपादेयत्वात्तद्गतं बहुत्वं विवक्षितम्।

तत्रैवान्यच्चिन्तितम्—

"नेयत्ताऽस्त्यस्ति वा तेषां न नियामकवर्जनात्।
चमसानां दशत्वेन चमसाध्वर्यवो दश" इति॥

स्पष्टोऽर्थः॥

अथ च्छन्दः—

शृणोत्वग्निरिति त्रिष्टुप्। यमग्ने पृत्स्विति गायत्री॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ प्रथमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः।)

---

त्वम॑ग्ने रु॒द्रो असु॑रो म॒हो दि॒वस्त्वꣳ शर्धो॒ मारु॑तं पृ॒क्ष ई॑शिषे। त्वं वातै॑रru॒णैर्या॑सि शंग॒यस्त्वं पू॒षा वि॑ध॒तः पा॑सि॒ नु त्मना॑। आ वो॒ राजा॑नमध्व॒रस्य॑ रु॒द्रꣳ होता॑रꣳ सत्य॒यजꣳ॒ रोद॑स्योः। अ॒ग्निं पु॒रात॑नयि॒त्नोर॒चित्ता॒द्धिर॑-

ण्यरूपमवसे कृणुध्वम् । अग्निर्होता नि षसादा यजीयानुपस्थे मातुः सुरभावु लोके । युवा कविः पुरुनिष्ठः ( १ ) ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः । साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् । स आयुराऽगात्सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य । अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः । त्वे वसूनि पुर्वणीक ( २ ) होतर्दोषा वस्तो-रेरिरे यज्ञियासः । क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके । तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे । अश्याम तं काममग्ने तवोत्यश्याम रयिꣳ रयिवः सुवीरम् । अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते । श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । ( ३ ) वसो पुरुस्पृहꣳ रयिम् । स श्वितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः । यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति

भवन् । आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आऽयति परा यक्ष्मꣳ सुवामि ते । आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि ( ४ ) रक्षतादिमम् । तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम् । दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः । शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे । त्वं घृतेभिराहुतः । दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिः ( ५ ) यदेनं द्यौरजनयत्सुरेताः । आ यदिषे नृपतिं तेज आनट्शुचि रेतो निषिक्तं द्यौरभीके । अग्निः शर्धमनवद्यं युवानꣳ स्वाधियं जनयत्सूदयच्च । स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः । अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः । अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् । विश्वा यः ( ६ )

चर्षणीरभ्यासा वाजेषु सासहत् । तमग्ने पृतनासहꣳ रयिꣳ सहस्व आ भर । त्वꣳ हि सत्यो अद्भुतो दाता वाजस्य गोमतः । उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये । वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाऽज्मान्नम् । स त्वं न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः । अग्न आयूꣳषि (७) पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं मयि । अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च । स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽवह । उप यज्ञꣳ हविश्च नः । अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः । उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः (८) ॥

( पुरुनिष्ठः पूर्वणीक भराभि वयोभिर्य आयूꣳषि विप्रः शुचिश्चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

( काम्ययाज्यापुरोनुवाक्याः )

( देवस्य रक्षोहणो विभूस्त्वꣳ सोमात्यन्यानगां पृथिव्या इषे त्वाऽऽ ददे वाक्ते सं ते समुद्रꣳ हविष्मतीर्हृदे त्वमग्ने रुद्रश्चतुर्दश ॥ १४ ॥)

( देवस्य गमध्ये हविष्मतीः पवस एकत्रिꣳशत् ॥ ३१ ॥ )

हरिः ॐ ॥

# इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

---

( अथ प्रथमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः । )

---

त्वम् । अग्ने । रुद्रः । असुरः । महः । दिवः । त्वम् । शर्धः । मारुतम् । पृक्षः । ईशिषे । त्वम् । वातैः । अरुणैः । यासि । शंगय इति शं—गयः । त्वम् । पूषा । विधत इति वि—धतः । पासि । नु । त्मना । एति । वः । राजानम् । अध्वरस्य । रुद्रम् । होतारम् । सत्ययजमिति सत्य—यजम् । रोदस्योः । अग्निम् । पुरा । तनयित्नोः । अचित्तात् । हिरण्यरूपमिति हिरण्य—रूपम् । अवसे । कृणुध्वम् । अग्निः । होता । नीति । ससाद । यजीयान् । उपस्थ इत्युप—स्थे । मातुः । सुरभौ । उ । लोके । युवा । कविः । पुरुनिष्ठ इति पुरु—निष्ठः । ( १ ) ऋतावेत्यृत—वा । धर्ता । कृष्टीनाम् । उत । मध्ये । इद्धः । साध्वीम् । अकः । देववीतिमिति देव—वीतिम् । नः । अद्य । यज्ञस्य । जिह्वाम् । अवि-

दाम । गुह्याम् । सः । आयुः । एति । अगात् । सुरभिः । वसानः । भद्राम् । अकः । देवहूतिमिति देव—हूतिम् । नः । अद्य । अक्रन्दत् । अग्निः । स्तनयन् । इव । द्यौः । क्षाम । रेरिहत् । वीरुधः । समञ्जन्निति सम्—अञ्जन् । सद्यः । जज्ञानः । वीति । हि । ईम् । इद्धः । अख्यत् । एति । रोदसी इति । भानुना । भाति । अन्तः । त्वे इति । वसूनि । पुर्वणीकेति पुरु—अनीक । ( २ ) होतः । दोषा । वस्तोः । एति । ईरिरे । यज्ञियासः । क्षाम । इव । विश्वा । भुवनानि । यस्मिन् । समिति । सौभगानि । दधिरे । पावके । तुभ्यम् । ताः । अङ्गिरस्तमेत्यङ्गिरः—तम । विश्वाः । सुक्षितय इति सु—क्षितयः । पृथक् । अग्ने । कामाय । येमिरे । अश्याम । तम् । कामम् । अग्ने । तव । ऊती । अश्याम । रयिम् । रयिव इति रयि—वः । सुवीरमिति सु—वीरम् । अश्याम । वाजम् । अभीति । वाजयन्तः । अश्याम । द्युम्नम् । अजर । अजरम् । ते । श्रेष्ठम् । यविष्ठ । भारत । अग्ने । द्युमन्तमिति द्यु—मन्तम् । एति । भर । ( ३ ) वसो इति । पुरुस्पृहमिति पुरु—स्पृहम् । रयिम् । सः । श्विता‍नः । तन्यतुः । रोचनस्था

इति रोचन—स्थाः । अजरेभिः । नानदद्भिरिति नानदत्—भिः । यविष्ठः । यः । पावकः । पुरुतम इति पुरु—तमः । पुरूणि । पृथूनि । अग्निः । अनुयातीत्यनु—याति । भवन् । आयुः । ते । विश्वतः । दधत् । अयम् । अग्निः । वरेण्यः । पुनः । ते । प्राण इति प्र—अनः । एति । अयति । परेति । यक्ष्मम् । सुवामि । ते । आयुर्दा इत्यायुः—दाः । अग्ने । हविषः । जुषाणः । घृतप्रतीक इति घृत—प्रतीकः । घृतयोनिरिति घृत—योनिः । एधि । घृतम् । पीत्वा । मधु । चारु । गव्यम् । पिता । इव । पुत्रम् । अभीति । ( ४ ) रक्षतात् । इमम् । तस्मै । ते । प्रतिहर्यत इति प्रति—हर्यते । जातवेद इति जात—वेदः । विचर्षण इति वि—चर्षणे । अग्ने । जनामि । सुष्टुतिमिति सु—स्तुतिम् । दिवः । परीति । प्रथमम् । जज्ञे । अग्निः । अस्मत् । द्वितीयम् । परीति । जातवेदा इति जात—वेदाः । तृतीयम् । अप्स्वित्यप्—सु । नृमणा इति नृ—मनाः । अजस्रम् । इन्धानः । एनम् । जरते । स्वाधीरिति स्व—धीः । शुचिः । पावक । वन्द्यः । अग्ने । बृहत् । वीति । रोचसे । त्वम् । घृतेभिः । आहुत इत्या—हुतः ।

दृशानः । रुक्मः । उर्व्या । वीति । अद्यौत् । दुर्मर्षमिति दुः—मर्षम् । आयुः । श्रिये । रुचानः । अग्निः । अमृतः । अभवत् । वयोभिरिति वयः—भिः । ( ५ ) यत् । एनम् । द्यौः । अजनयत् । सुरेता इति सु—रेताः । एति । यत् । इषे । नृपतिमिति नृ—पतिम् । तेजः । आनट् । शुचि । रेतः । निषिक्तमिति नि—सिक्तम् । द्यौः । अभीके । अग्निः । शर्धम् । अनवद्यम् । युवानम् । स्वाधियमिति स्व—धियम् । जनयत् । सूदयत् । च । सः । तेजीयसा । मनसा । त्वोतः । उत । शिक्ष । स्वपत्यस्येति सु—अपत्यस्य । शिक्षोः । अग्ने । रायः । नृतमस्येति नृ—तमस्य । प्रभूताविति प्र—भूतौ । भूयाम । ते । सुष्टुतय इति सु—स्तुतयः । च । वस्वः । अग्ने । सहन्तम् । एति । भर । द्युम्नस्य । प्रासहेति प्र—सहा । रयिम् । विश्वाः । यः । ( ६ ) चर्षणीः । अभीति । आसा । वाजेषु । सासहत् । तम् । अग्ने । पृतनासहमिति पृतना—सहम् । रयिम् । सहस्वः । एति । भर । त्वम् । हि । सत्यः । अद्भुतः । दाता । वाजस्य । गोमत इति गो—मतः । उक्षान्नायेत्युक्ष—अन्नाय । वशान्नायेति वशा—अन्नाय । सोमपृष्ठायेति सोम—पृष्ठाय ।

वेधसे । स्तोमैः । विधेम । अग्नये । वज्रा । हि । सूनो इति । असि । अप्नसद्वेत्यंप्न—सद्वा । चक्रे । अग्निः । जनुषा । अज्म । अन्नम् । सः । त्वम् । नः । ऊर्जसन इत्यूर्ज—सने । ऊर्जम् । धाः । राजा । इव । जेः । अवृके । क्षेषि । अन्तः । अग्ने । आयूꣳषि । ( ७ ) पवसे । एति । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् । अग्ने । पवस्व । स्वपा इति सु—अपाः । अस्मे इति । वर्चः । सुवीर्यमिति सु—वीर्यम् । दधत् । पोषम् । रयिम् । मयि । अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया । एति । देवान् । वक्षि । यक्षि । च । सः । नः । पावक । दीदिवः । अग्ने । देवान् । इह । एति । वह । उपेति । यज्ञम् । हविः । च । नः । अग्निः । शुचिव्रततम इति शुचिव्रत—तमः । शुचिः । विप्रः । शुचिः । कविः । शुचिः । रोचते । आहुत इत्या—हुतः । उदिति । अग्ने । शुचयः । तव । शुक्राः । भ्राजन्तः । ईरते । तव । ज्योतीꣳषि । अर्चयः ( ८ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

( अथ प्रथमकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः। )

---

त्रयोदशेऽनुवाके हविर्धानशकटादधिषवणफलकयोरुपरि सोमोऽवरोहितः। अथाभिषवो वक्तव्यः। तथाऽप्यध्यापकसंप्रदायेन प्रपाठकसमाप्तिरूपत्वा-च्चतुर्दशेऽनुवाके काम्ययाज्यापुरोनुवाक्याः क्रमप्राप्ता अभिधीयन्ते।

तत्र काम्येष्टिकाण्डे राक्षोघ्नेष्टेरूर्ध्वमिष्ट्यन्तरं विधत्ते—

"अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमा वृश्चति ताजगार्तिमार्च्छति" [सं० का० २ प्र० २ अ० २] इति।

रुद्रवते घोरतनूयुक्ताय। अभिचरञ्शत्रुं मारयन्। तस्मै रुद्रवतेऽग्नये। एनं शत्रुमावृश्चति समन्ताच्छित्त्वा प्रयच्छति। ताजक् तदानीमेव॥

तत्र पुरोनुवाक्या—

त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳ शर्धो मारुतं पृक्ष ईशिषे। त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना॥, इति॥

हेऽग्ने त्वं रुद्रो घोरतनूयुक्तोऽसुरः शत्रूणां निरसिता। दिवो द्युलोकस्य मह उत्सवरूपो हविर्वहनेनोत्सवकारित्वात्। त्वं मारुतं शर्धो मरुतां संबन्धि बलं बलवत्त्वेन प्रसिद्धानां मरुद्गणानामपि त्वदनुग्रहेणैव बलं भवति। अतः पृक्ष ईशिषे मरुद्भिः संपृक्तस्तदीयं सैन्यं नियमय। किं च त्वं शंगयः सुखं प्राप्तो वायुवेगैररुणवर्णैरश्वैर्यासि। किं च पोषकस्त्वं नु त्मना स्वयमेव पासि। कान्, विधतो हविषा परिचर्यां विदधतो यजमानान्॥

अथ याज्या—

आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्य-यजꣳ रोदस्योः। अग्निं पुरा तनयित्नोर-चित्ताद्धिरण्यरूपमवसे कृणुध्वम्॥, इति॥

हे ऋत्विग्यजमाना वो युष्माकमवसे रक्षणायाग्निमाकृणुध्वं वशी कुरुत। कदा, तनयित्नोरचित्तात्, न विद्यते चित्तं यस्मिन्मरणे तदचित्तं शत्रुणा विस्तारितात्[1]वदीयमरणात्पूर्वमेव। कीदृशमग्निम्। अध्वरस्य राजानं यज्ञस्वा-

---

१ क. घ. ङ. अत्र।

मिनं, रुद्रं शत्रून्प्रति क्रूरं, होतारं फलदानाय भक्तानामाह्वातारं, रोदस्योः सत्ययजं द्युलोके भूलोके च सत्यमवश्यं कर्मफलं यजति ददातीति सत्ययजस्तं, हिरण्यरूपं तत्सदृशम् ॥

इष्ट्यन्तरं विधत्ते—

“ अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादेषा वा अस्य भेषज्या तनूर्यत्सुरभिमती तयैवास्मै भेषजं करोति सुरभिमते भवति पूतीगन्धस्यापहत्यै ” [ सं० का० २ प्र० २ अ० २ ] इति ।

सुरभिमते भेषज्यतनूयुक्ताय । यस्य यजमानस्य गावो वा भृत्या वा दैविकरोगबाहुल्येन बहवो म्रियेरन्स्वयं वा कदाचिदपमृत्योर्भीतो भवेत्तादृशो निर्वपेत्पूतीगन्धस्य शवगन्धस्य निवृत्तये सुगन्धयुक्ताय कुर्यात् ॥

तत्र पुरोनुवाक्या—

अग्निर्होता नि षसादा यजीयानुपस्थे मातुः
सुरभावु लोके । युवा कविः पुरुनिष्ठ
ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥, इति ॥

अयमग्निर्मातुरुपस्थे वेदेः समीपवर्तिनि सुरभावु लोके सुरभिगन्धयुक्त एवाऽऽहवनीयस्थाने निषसादोपविष्टः । कीदृशोऽग्निः । होता देवानामाह्वाता । यजीयान्मानुषाद्धोतुरतिशयेन यष्टा । युवा नित्यं तरुणः । कविर्मेधावी । पुरुनिष्ठः पुरुषु गार्हपत्यादिस्थानेषु स्थितः । ऋतावा सत्यवान् । कृष्टीनां धर्ता मनुष्याणां पोषकः । अपि च मध्ये मनुष्याणामुदर इद्धो जाठराग्निरूपेण दीप्तः ॥

अथ याज्या—

साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वा-
मविदाम गुह्याम् । स आयुराऽगात्सुरभि-
र्वसानो भद्रामकर्देवहूतिं नो अद्य ॥, इति ॥

अयमग्निरद्य नो देववीतिमस्माभिर्देवेभ्यो दत्तां भक्ष्यां पुरोडाशाहुतिं साध्वीमकः स्वादुमकरोत् । अतो यज्ञस्य जिह्वास्थानीयां गोप्यामग्निदेवतामविदाम वयं लब्धवन्तः । सुरभिः पुरोडाशाज्यादिसुगन्धोपेतः सोऽग्निरायुर्वसा-

नोऽस्मदीयमायुराच्छादयन्गोपायन्नागादागच्छतु। अद्य नोऽस्मदीयां देवहूतिं भद्रामकः, देवार्थं होमं यथाशास्त्रं करोतु॥

इष्ट्यन्तरं विधत्ते—

"अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्सङ्ग्रामे संयत्ते भागधेयेनैवै-नꣳ शमयित्वा परानभि निर्दिशति यमवरेषां विध्यन्ति जीवति स यं परेषां प्र स मीयते जयति तꣳ सङ्ग्रामम्" [सं० का० २ प्र० २ अ० २] इति।

क्षामवते क्षुधायुक्ताय। युद्धे प्रत्यासन्ने सति जयार्थी निर्वपेत्। स्वदत्तेनाग्निभागेन स्वविषयमग्निं शान्तं कृत्वा पराञ्शत्रूनग्नेराभिमुख्येन निर्दिशति हन्तुं प्रदर्शयति। तथा सत्यवरेषां स्वसैन्यगतानां मध्ये यं पुरुषं शत्रवो विध्यन्ति स जीवति। परेषां शत्रुसैन्यगतानां मध्ये यं पुरुषमितरे विध्यन्ति स प्रम्रियते। ततो यजमानो जयति॥

यथा जयार्थिन एषेष्टिस्तथा बहुबन्धुमरणनिवारणार्थिनोऽप्येतामिष्टिं विधत्ते—

"अभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति नैषां पुराऽऽयुषोऽपरः प्र मीयते" [सं० का० २ प्र० २ अ० २] इति।

पूर्वापरा ज्येष्ठाः कनिष्ठाश्च। अन्वञ्चो विच्छेदवर्जिताः। येषां बन्धूनां मध्ये बहवो विच्छेदमन्तरेण म्रियन्त एतानभिलक्ष्यैष क्षामवानग्निरुच्यति समवैति। कुतः, पुरुषाहुतेरेतत्प्रियत्वात्पुरोडाशेनाग्निः शाम्यति। तत एषां बन्धूनां मध्ये ज्येष्ठे जीवति सत्यपरः कनिष्ठ आयुःसंपूर्तेः पूर्वमपमृत्युना न म्रियते॥

गृहदाहादि निमित्तीकृत्यापि तामेवेष्टिं विधत्ते—

"अभि वा एष एतस्य गृहानुच्यति यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति नास्यापरं गृहान्दहति" [सं० का० २ प्र० २ अ० २] इति।

अपरं यथा भवति तथा न दहति न पुनर्दहतीत्यर्थः॥

अस्यां त्रिविधायां क्षामवतेष्ट्यौ पुरोनुवाक्यामाह—

अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वी-

१ क. ग. घ. ङ. °वतीष्टौ।

रुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः॥, इति ॥

अयमग्निरक्रन्ददस्मदनिष्टनिवारणार्थं गर्जतु । किमिव । स्तनयन्निव द्यौर्यथा द्युलोकस्थो मेघो गर्जन्सस्यशोषभीतिं निवारयति तद्वत् । किं कुर्वन् । क्षाम दाहकमस्मद्विरुद्धं रेरिहल्लेलिहानो वीरुधः समञ्जन्पुष्पलतावदस्मदनुकूलानि सम्यगभिव्यञ्जयन् । हि यस्माज्जज्ञान उत्पद्यमानः सद्य ईमिदानीमेवेद्धो दीप्तो व्यख्यद्विविधं जगत्प्रख्यापयति । रोदसी द्यावापृथिव्योरन्तर्भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते ॥

अथ याज्या—

त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः । क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके ॥, इति ॥

हे पुर्वणीकात्यन्तबहुल होतर्देवानामाह्वातर्दोषा रात्रौ वस्तोर्दिवा च यज्ञियासो यज्ञार्हाणि वसूनि हवींषि एरिर आगच्छन्ति । त्वदनुग्रहात्पूर्वं क्षामेव दग्धं पटादिकमिव विश्वा भुवनानि निःसाराणि भूत्वा पावके त्वय्यनुगृह्णाति सति पश्चात्सौभगानि संदधिरे सौभाग्यं प्राप्नुवन् । तादृशस्त्वमस्माननुगृहाणेत्यर्थः ॥

इष्ट्यन्तरं विधत्ते—

“अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदग्निमेव कामꣳ स्वेन भागधेयेनोप धावति स एवैनं कामेन समर्धयत्युपैनं कामो नमति” [ सं० का० २ प्र० २ अ० ३ ] इति ।

कामाय कामप्रदाय, कामितार्थो यं यजमानं न प्राप्नुयात्स निर्वपेत् ॥

तत्र पुरोनुवाक्या—

तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥, इति ॥

हेऽङ्गिरस्तमातिशयेनाङ्गसारोपेताग्ने सुक्षितयो वेदिरूपशोभनभूमियुक्ता विश्वाः सर्वास्ताः प्रजाः पृथक्कामयमाना विविधकामितार्थसिद्धिप्रदाय तुभ्यं येमिरे नियमं स्वीकृतवन्तः ॥

अथ याज्या—

अश्याम तं काममग्ने तवोत्यश्याम रयिꣳ
रयिवः सुवीरम्। अश्याम वाजमभि वाज-
यन्तोऽश्याम द्युम्नमजराजरं ते॥, इति॥

हेऽग्ने तवोती त्वदीयरक्षया तं काममभीष्टफलमश्याम व्याप्नुयाम। किं च, हे रयिवो हे धनवन्सुवीरं शोभनपुत्रपौत्राद्युपेतं रयिं धनमश्याम। किं च, वाजयन्तोऽन्नमिच्छन्तो वयं वाजमन्नमभितोऽश्याम। किं च, हेऽजर तव प्रसादादजरमक्षयं द्युम्नं यशोऽश्याम॥

इष्ट्यन्तरं विधत्ते—

" अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वाऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य युवते वि पाप्मना भ्रातृव्येण जयते " [सं० का० २ प्र० २ अ० ३] इति।

यविष्ठायातिशयेन वियोगकारिणे, युवते वियोजयति। यजमानः पापिना वैरिणा वियुक्तो जयति॥

एतामेवेष्टिं परप्रयुक्ताभिचारनिवारणाय विधत्ते—

" अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाणोऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षाꣳसि यवयति नैनमभिचरन्त्स्तृणुते " [सं० का० २ प्र० २ अ० ३ इति।

यवयति वियोजयति। अभिचरन्वैर्येनमिष्टिकारिणं न स्तृणुते हन्तुं न शक्नोति॥

एतस्यां द्विविधायामिष्टौ पुरोनुवाक्यामाह—

श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा
भर। वसो पुरुस्पृहꣳ रयिम्॥, इति॥

हेऽग्ने रयिमाभर धनमाहर। यविष्ठातिशयेन वियोगकारिन्। भारत ऋत्विग्भिर्भरणीय। वसो, आहुतिनिवासभूत। कीदृशं रयिं, श्रेष्ठं प्रशस्ततमं द्युमन्तं दीप्तिमन्तं पुरुस्पृहं पुरुभिर्बहुभिः स्पृहणीयं मणिमुक्तादिरूपम्॥

अथ याज्या—

स श्वितानस्तन्यतू रोचनस्था अजरेभि-

नोनदद्भिर्यविष्ठः । यः पावकः पुरुतमः
पुरूणि पृथून्यग्निरनुयाति भर्वन्॥, इति ॥

योऽग्निः पावकः शोधयिता पुरुतम आहवनीयगार्हपत्यादिनामभिर्यविष्ठादिविशेषणैश्चात्यन्तं बहुविधः पुरूणि बहूनि पृथूनि विस्तृतानि पुरोडाशादिहवींषि भर्वन्भक्षयन्ननुयाति यजमानगृहमनुदिनं गच्छति सोऽग्निर्वक्ष्यमाणगुणोपेतः । श्वितानो दीप्यमानः । तन्यतुः फलानां विस्तारयिता । रोचनस्था दीप्तिमत्सु देवयजनेष्ववस्थितः । अजरेभिर्जरारहितैर्नानदद्भिः स्तुतिं कुर्वाणैर्देवैः संयुतः । यविष्ठोऽतिशयेन वैरिवियोगकर्ता ॥

इष्ट्यन्तरं विधत्ते—

“ अग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियामित्यग्निमेवाऽऽयुष्मन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति ” [ सं० का० २ प्र० २ अ० ३ ] इति ।

आयुष्मत आयुष्प्रदाय ॥

तत्र पुरोनुवाक्या—

आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते
प्राण आऽयति परा यक्ष्मꣳ सुवामि ते॥, इति ॥

हे यजमान ते तुभ्यं वरेण्यः श्रेष्ठोऽयमग्निर्विश्वत आयुर्दधत्संपूर्णमायुर्दधातु । अपमृत्युना गृहीतोऽपि ते प्राणः पुनरस्यानुग्रहेणाऽऽयति त्वद्देहे समागच्छतु । ते तव यक्ष्मं व्याधिं परासुवामि विनाशयामि ॥

अथ याज्या—

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको
घृतयोनिरेधि । घृतं पीत्वा मधु चारु
गव्यं पितेव पुत्रमभि रक्षतादिमम्॥, इति ॥

हेऽग्ने त्वमायुर्दा एधि यजमानस्याऽऽयुष्प्रदो भव । कीदृशस्त्वम् । हविषो जुषाणः पुरोडाशं सेवमानः । घृतप्रतीको घृतोपक्रम आघारप्रयाजादीनां घृतेन हूयमानत्वात् । घृतयोनिरवसानेऽप्यनूयाजादौ घृतमेव योनिर्जन्मोत्पत्तिकारणं यस्यासौ घृतयोनिः । तादृशस्त्वं मधु स्वादुतमं चारु शोधितत्वेन निर्मलं गव्यं घृतं पीत्वा पिता पुत्रमिवेमं यजमानमभितो रक्ष ॥

(काम्ययाज्यापुरोनुवाक्याः)

इष्ट्यन्तरं विधत्ते—

"अग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकामोऽग्निमेव जातवेदसꣳ स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येव" [ सं० का० २ प्र० २ अ० ३ ] इति।

जातवेदस उत्पन्नधनाय। भवत्येव भूतिं प्राप्नोत्येव॥

तत्र पुरोनुवाक्या—

तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे। अग्ने जनामि सुष्टुतिम्॥, इति॥

विविधाश्चर्षणयो मनुष्या यजमाना यस्यासौ विचर्षणिः। हे विचर्षणे जातवेदोऽग्ने प्रतिहर्यते प्रतिदिनं यजमानगृहं गच्छते तस्मै ते शोभनां स्तुतिं जनामि जनयामि॥

अथ याज्या—

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥, इति॥

अग्निः प्रथमं दिवस्परि द्युलोकस्योपरि जज्ञे सूर्यरूपेणोत्पन्नः। अस्मत्परि अस्मदीयस्य मनुष्यलोकस्योपरि जातवेदा द्वितीयं जज्ञे प्रसिद्धमग्निरूपेण द्वितीयं जन्म प्राप्तवान्। अप्सु समुद्रे तृतीयं जज्ञे वडवानलरूपेणोत्पन्नः। अजस्रं त्रिष्वपि जन्मसु नृमणा नृषु यजमानेषु मनोऽनुग्रहबुद्धिर्यस्यासौ नृमणाः। एनमीदृशमग्निमिन्धानः पुरोडाशादिभिर्दीपयन्स्वाधीः स्वायत्तचित्तो जरते जीर्यते जरापर्यन्तं परिचरतीत्यर्थः॥

इष्ट्यन्तरं विधत्ते—

"अग्नये रुक्मते पुरोडाशमष्टाकपालं निर्वपेद्रुक्कामोऽग्निमेव रुक्मन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्रुचं दधाति रोचत एव" [ सं० का० २ प्र० २ अ० ३ ] इति।

रुक्मते कान्तिमते। रोचते कान्तिमान्भवति॥

तत्र पुरोनुवाक्या—

---

१ ख. °नादयो य°।

शुचिः पावक वन्द्योऽग्ने बृहद्वि
रोचसे । त्वं घृतेभिराहुतः ॥, इति ॥

हे पावक शोधयितरग्ने शुचिर्वन्द्यश्च त्वं घृतप्रभृतिभिर्हव्यैः समन्ताद्धुतः सन्बृहद्विरोचसे ॥

अथ याज्या—

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्ष-
मायुः श्रिये रुचानः । अग्निरमृतो अभ-
वद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥, इति ॥

दृशानो दर्शनीयरूपो रुक्मः सुवर्णसदृशोऽग्निरुर्व्या महत्या दीप्त्या व्यद्यौद्विद्योतते । किं कुर्वन् । दुर्मर्षमितरैरतिरस्कार्यमायुर्जीवनं श्रिये श्रयितुं रुचानो वाञ्छन् । तथाविधोऽग्निर्वयोभिरन्नैर्हविर्भिरमृतोऽभवत् । यद्यस्मादेनमग्निं द्यौर्द्युलोकवासी देवगणः सुरेताः सन्नजनयत्तस्मादस्यामृतत्वं युक्तम् ॥

इष्ट्यन्तरं विधत्ते—

" अग्नये तेजस्वते पुरोडाशमष्टाकपालं निर्वपेत्तेजस्कामोऽग्निमेव तेजस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्तेजो दधाति तेजस्व्येव भवति " [ सं० का० २ प्र० २ अ० ३ ] इति ।

तेजस्वते प्रभावते नियमनसामर्थ्यवते वा ॥

तत्र पुरोनुवाक्या—

आ यदिषे नृपतिं तेज आनट्शुचि रेतो
निषिक्तं द्यौरभीके । अग्निः शर्धमनवद्यं
युवानꣳ स्वाधियं जनयत्सूदयच्च ॥, इति ॥

यत्तेज इषेऽभीष्टसिद्धये नृपतिं यजमानपालकमग्निमा समन्तादानड्व्याप्नोत्, यदपि शुचि रेतः शुद्धं बीजं मातापितृभ्यां निषिक्तं तेन तेजसा तेन च बीजेन द्यौर्द्युलोकस्थोऽग्निरभीके प्रत्यासन्नकाले शर्धादिविशेषणोपेतं पुरुषं जनयदुत्पादयति, सूदयच्च विरोधिपापं नाशयत्यपि । शर्धं बलवन्तम् । अनवद्यं दोषरहितम् । युवानं तरुणम् । स्वाधियं स्वायत्तचित्तम् । अतो यजमानाय तेजो दातुमग्निः शक्नोति ॥

अथ याज्या—

स तेजीयसा मनसा त्वोत उत शिक्ष

( काम्ययाज्यापुरोनुवाक्याः )

**स्वपत्यस्य शिक्षोः। अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः॥, इति॥**

स यजमानस्त्वोतस्त्वया रक्षितः। केन साधनेन। तेजीयसाऽत्यन्ततेजोयुक्तेन मनसा। किं च हेऽग्ने स्वपत्यस्य शोभनपुत्रपौत्रादियुक्तस्य शिक्षोः शक्तुमिच्छतो नृतमस्य मनुष्यतमस्य मनुष्येषु श्रेष्ठस्य यजमानस्य रायः शिक्ष धनानि देहि। ते प्रभूतौ त्वदनुग्रहेण प्रभुत्वे सति वयं वस्वो वसुमत्तमाः सुष्टुतयश्च शोभनस्तुतियुक्ता बहुयागानुष्ठानेन स्तोत्रशस्त्रैः प्रभूता भूयास्म॥

इष्ट्यन्तरं विधत्ते—

"अग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत्सीक्षमाणोऽग्निमेव साहन्त्यꣳ स्वेन भागधेयेनोप धावति तेनैव सहते यꣳ सीक्षते" [ सं० का० २ प्र० २ अ० ३ ] इति।

साहन्त्याय सहिष्णवे वैरिणामभिभवित्रे। सीक्षमाणः सोढुमभिभवितुमिच्छुः। यं वैरिणं सीक्षते तं तेनानुगृहीतोऽभिभवति॥

तत्र पुरोनुवाक्या—

**अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम्। विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत्॥, इति॥**

हेऽग्ने द्युम्नस्यास्मदीयस्य यशसः सहन्तमभिभवितारं वैरिणं प्रासहा प्रसभमाभरास्मद्वशे समानय। रयिं तदीयं धनं चाऽऽनय। यो भवांश्चर्षणीर्मनुष्यसेना विश्वा अस्मत्प्रतिपक्षभूताः सर्वा अभिसासहदभिभवेत्। किंनिमित्तं, वाजेषु अस्मदीयेष्वन्नेषु निमित्तभूतेषु। केन साधनेन। आसा त्वत्संनिधानेन। पराभिभवाय त्वत्संनिध्यतिरिक्तप्रयत्नो नापेक्षित इत्यर्थः॥

अथ याज्या—

**तमग्ने पृतनासहꣳ रयिꣳ सहस्व आ भर। त्वꣳ हि सत्यो अद्भुतो दाता वाजस्य गोमतः॥, इति॥**

हेऽग्ने [सहस्वो बलवन्] तं पृतनासहं परकीयसेनाभिभवक्षमं रयिं धनमाभराऽऽहर। हि यस्मात्त्वं सत्यः परमार्थभूतो बाधरहितोऽद्भुत आश्चर्यचरित्रस्तस्माद्गोमतो बहुगोयुक्तस्य वाजस्यान्नस्य दाता त्वमेव॥

इष्ट्यन्तरं विधत्ते—

"अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नवान्त्स्यामित्यभि-

मेवाम्नवन्त॰ स्वेन भागधेयेनोप धावति स एवैनमन्नवन्तं करोत्यन्नवानेव भवति" [ सं० का० २ प्र० २ अ० ४ ] इति।

अन्नवते बह्वन्नयुक्ताय ॥

तत्र पुरोनुवाक्या—

उक्षान्नाय वशान्नाय सोमपृष्ठाय
वेधसे । स्तोमैर्विधेमाग्नये॥, इति ॥

अग्नये स्तोमैः स्तोत्रैर्विधेम परिचर्यां कुर्याम । कीदृशाय । उक्षान्नायं वशान्नाय । उक्षा वृषभः । वशा वन्ध्या । तत्पशुद्वयं क्वचिद्यागे हविष्ट्वेन श्रूयते— "यो भ्रातृव्यवान्त्स्यात्स स्पर्धमानो वैष्णावरुणीं वशामालभेतैन्द्रमुक्षाणम्" इति । यद्यप्यत्र देवताऽन्या तथाऽपि हविरग्नावेव हूयत इत्यग्निरुक्षान्नो वशान्नश्च । एतदन्नान्तरस्याप्युपलक्षणार्थम् । सोमयुक्तानि पृष्ठस्तोत्राणि यस्यासौ सोमपृष्ठः । अनेकस्तोत्रसत्कृतदेवतासंयुक्तः सोमोऽप्यस्यान्नमित्यर्थः । वेधसेऽन्नस्य विधात्रे ॥

अथ याज्या—

वद्मा हि सूनो अस्यद्मसद्वा चक्रे
अग्निर्जनुषाऽज्मान्नम् । स त्वं न ऊर्जसन
ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः॥, इति ॥

हे सूनो पुत्रवदभिमतकारिन्नग्ने त्वं वद्माऽसि वदत्यनयेति वद्मा वाक्तदभिमानिदेवत्वेन तद्रूपोऽसि । अस्मिन्नर्थे श्रुत्यन्तरप्रसिद्धिद्योतनाय हिशब्दः । "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति श्रुत्यन्तरम् । सोऽग्निरस्मदर्थमन्नमज्मं[1][2] च चक्रे । [अज्म गृहम् ।] तन्नामसु पाठात् । विवाहाग्निर्जायमान एव गृहाश्रमं कारयति । कीदृशोऽग्निः । अद्मसद्वा, अद्यत इत्यद्मान्नं तस्मिन्सीदतीत्यद्मसद्वा, भुक्तमन्नं जरयितुं जठराग्निरूपेणात्र सीदति । केन व्यापारेणान्नमज्म[3] [च] चक्रे । जनुषा जन्ममात्रेण न तु व्यापारान्तरेण । न हि संकल्पसिद्धस्य व्यापारापेक्षाऽस्ति । हे ऊर्जसने रसप्रद त्वं नोऽस्मभ्यमूर्जं रसं धा देहि[4] । राजेव जेः, राजा यथा जयति तद्वज्जय । वृकवद्धिंसको वृकः । अवृके हिंसादिदोषरहिते यजमाने[5] त्वमनुग्रहीतुमन्तः क्षेषि निवससि ॥

---

१ क. घ. ङ. °मन्नं चक्रे । की° । २ ख. °ज्म गृहं चक्रे । ३ क. ग. घ. ङ. °णान्नं चक्रे । ४ ख. धेहि । ५ क. ग. घ. ङ. °ने तम° ।

(काम्ययाज्यापुरोनुवाक्याः)

इष्ट्यन्तरं(रे) विधत्ते—

"अग्नयेऽन्नादाय पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामित्यग्निमेवान्नाद॑ स्वेन भागधेयेनोप धावति स एवैनमन्नादं करोत्यन्नाद एव भवत्यग्नयेऽन्नपतये पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नपतिः स्यामित्यग्निमेवान्नपति॑ स्वेन भागधेयेनोप धावति स एवैनमन्नपतिं करोत्यन्नपतिरेव भवति" [सं० का० २ प्र० २ अ० ४] इति।

अन्नमत्तीत्यन्नादस्तीव्रदीपनयुक्तः। अन्नपतिर्बह्वन्नस्वामी। अनयोरपीष्ट्योरन्नमात्रलिङ्गसाधारण्यादेव याज्यापुरोनुवाक्यायुगलं द्रष्टव्यम्। यद्वा शाखान्तरेऽन्नादलिङ्गकमन्नपतिलिङ्गकं चान्वेषणीयम्॥

इष्ट्यन्तरं हविस्त्रयोपेतं विधत्ते—

"अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन्तेन दधाति यदग्नये पावकाय वाचमेवास्मिन्तेन दधाति यदग्नये शुचय आयुरेवास्मिन्तेन दधात्युत यदीतासुर्भवति जीवत्येव" [सं० का० २ प्र० २ अ० ४] इति।

पवमानाय पापानां शोधयित्रे। पावकाय पापानां शुद्धिहेतवे। शुचये, औज्ज्वल्यहेतवे। द्वितीयतृतीयवाक्ययोरपि पुरोडाशमष्टाकपालं निर्वपेदित्यनुवर्तते। ज्योगामयावी दीर्घरोगयुक्तः। उतापि च यद्यपीतासुर्गतप्राणो भवेत्तथाऽपि जीवत्येव, तत्र नीरोगो भवतीति किमु वक्तव्यम्॥

पुनरपि तामेवेष्टिं फलान्तराय विधत्ते—

"एतामेव निर्वपेच्चक्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन्तेन दधाति यदग्नये पावकाय वाचमेवास्मिन्तेन दधाति यदग्नये शुचये चक्षुरेवास्मिन्तेन दधात्युत यद्यन्धो भवति प्रैव पश्यति" [सं० का० २ प्र० २ अ० ४] इति॥

तत्र फलभेदेन द्विविधायामस्यामिष्टौ प्रथमहविषः पुरोनुवाक्या—

**अग्न आयू॑षि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्॥**, इति॥

हेऽग्न आयूंष्यस्मदीयजीवनानि पवसे यथा वर्धन्ते तथा शोधयसे। ऊर्जं क्षीरादिरसमिषमन्नं च नोऽस्माकमासुवाऽऽभिमुख्येन प्रेरय। दुच्छुनामुपद्रवमारे दूरे नीत्वा बाधस्व विनाशय॥

अथ याज्या—

अग्ने पवस्व स्वपा अस्मे वर्चः सुवी-
र्यम् । दधत्पोषꣳ रयिं मयि ॥, इति ॥

हेऽग्ने शोभनमपः कर्म यस्यासौ स्वपाः । तादृशस्त्वमस्मे अस्मदीयं वर्चो ब्रह्मवर्चसं सुवीर्यं शोभनं सामर्थ्यं च पवस्व शोधयस्व वर्धयेत्यर्थः । पुष्टिं रयिं धनं च मयि दधत्स्थापय ॥

द्वितीयस्य हविषः पुरोनुवाक्या—

अग्ने पावक रोचिषा मन्द्रया देव
जिह्वया । आ देवान्वक्षि यक्षि च ॥, इति ॥

हेऽग्ने पावक शोधक देव द्योतनात्मक रोचिषा दीप्तिमत्या मन्द्रया श्लक्ष्णया जिह्वया वाचा देवानावक्षि यक्षि आवह यज च ॥

अथ याज्या—

स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽ
वह । उप यज्ञꣳ हविश्च नः ॥, इति ॥

हे पावक शोधक दीदिवो दीप्यमानाग्ने नोऽस्मदर्थं देवानिह कर्मण्यावह, अस्माकमिमं यज्ञं हविश्चोप देवसमीपे प्रापय ॥

तृतीयस्य हविषः पुरोनुवाक्या—

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः
कविः । शुची रोचत आहुतः ॥, इति ॥

अयमग्निः प्रथमं तावच्छुचिव्रततमः स्वत एव शुचिव्रततमोऽतिशयेन शुद्धं व्रतमाचरणं दाहपाकप्रकाशरूपं यस्यासौ तादृशः । तत ऊर्ध्वं विप्राभिमानित्वादपि शुचिः । तत ऊर्ध्वं विद्वदभिमानित्वेन शुचिः । ततोऽप्यूर्ध्वमाभिमुख्येन हुतः शुचिर्दीप्तिमान्रोचते शोभते ॥

अथ याज्या—

उदग्ने शुचयस्तव शुक्रा भ्राजन्त
ईरते । तव ज्योतीꣳष्यर्चयः ॥, इति ॥

हेऽग्ने शुचयः शुद्धास्तव शुक्रा रश्मयो भ्राजन्तः प्रकाशमाना उदीरत

( काम्ययाज्यापुरोनुवाक्याः )

उद्गच्छन्ति । तथाऽर्चयः पूजका ज्योतींषि भासकानि देवतारूपाणि प्राप्नुवन्ति ॥

अत्र विनियोगसंग्रहः—

" त्वं याज्या रुद्रवद्यागे ह्यग्निः सुरभिसंयुते ।
अक्रन्क्षामंयुजे तुभ्यं कामिनि श्रेष्ठमित्यसौ ॥ १ ॥
यविष्ठयुत आयुष्टे आयुष्मति तथोपरि ।
जातवेदयुते तस्मै शुची रुक्मयुते तथा ॥ २ ॥
आ यत्तेजोयुते ह्यग्ने साहन्त्यगुणसंयुते ।
उक्षान्नसंयुते ह्यग्ने पवमानयुते तथा ॥
अग्ने पावकवत्यग्निः शुचावष्टौ च विंशतिः ॥ ३ ॥ " इति ॥

अत्र मीमांसा नास्ति ॥

अथ च्छन्दः—

त्वमग्ने रुद्र इत्यादयः षट् । अश्याम तं स श्वितान आयुर्दा अग्ने दिवस्परि द्दशानो रुक्म आ यदिषे स तेजीयसा वग्ना हि सूनो, इति च त्रिष्टुभः । तुभ्यं ताः श्रेष्ठं यविष्ठ तस्मै ते शुचिः पावकोक्षान्नायेत्येता अग्न आयूंषीत्यादयश्च षड्गायत्र्यः । आयुष्टेऽग्ने सहन्तं तमग्ने पृतनासहमित्येता अनुष्टुभः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

---

१ ख. 'मवते तु' ।

( पात्रेषु रसग्रहणाय पूर्वमुपावहृतस्य सोमस्याभिषवः )

( अथ प्रथमाष्टके चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

आ द॑दे ग्रावा॑ऽस्यध्वर॒कृद्दे॒वेभ्यो॑ गम्भी॒रमि॒मम॑ध्व॒रं कृ॑ध्युत्त॒मेन॑ प॒विनेन्द्रा॑य॒ सोम॑ꣳ सु॒षु॑तं॒ मधु॑मन्तं॒ पय॑स्वन्तं वृष्टि॒वनि॒मिन्द्रा॑य त्वा वृत्र॒घ्न इन्द्रा॑य त्वा वृत्र॒तुर॒ इन्द्रा॑य त्वाऽभिमाति॒घ्न इन्द्रा॑य त्वाऽऽदि॒त्यव॑त॒ इन्द्रा॑य त्वा वि॒श्वदे॑व्यावते श्वा॒त्राः स्थ॑ वृत्र॒तुरो॒ राधो॑गूर्ता अ॒मृत॑स्य॒ पत्नी॒स्ता दे॑वीर्दे॒वत्रे॒मं य॒ज्ञं ध॒त्तोप॑हूताः॒ सोम॑स्य पिब॒तोप॑हूतो यु॒ष्माक॑म् (१) सोम॑ः पिबतु॒ यत्ते॑ सोम दि॒वि ज्योति॒र्यत्पृ॑थि॒व्यां यदु॒रावन्तरि॑क्षे॒ तेना॒स्मै यज॑मानायो॒रु राया कृ॒ध्यधि॑ दा॒त्रे वो॑चो॒ धिष॑णे वी॒डू स॒ती वी॑डयेथा॒मूर्जं॑ दधाथा॒मूर्जं॑ मे धत्तं॒ मा वा॑ꣳ हिꣳसिषं॒ मा मा॑ हिꣳसिष्टं प्रागपागुद॑गधरा॒क्तास्त्वा॒ दिश॒ आ धा॑वन्त्वम्ब॒ नि ष्व॑र। यत्ते॑ सोमादा॑भ्यं॒ नाम॒ जागृ॑वि॒ तस्मै॑ ते सोम॒ सोमा॑य॒ स्वाहा॑ ( २ ) ॥

( यु॒ष्माक॑ꣳ स्व॒र यत्ते॒ नव॑ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( पात्रेषु रसग्रहणाय पूर्वमुपावहृतस्य सोमस्याभिषवः )

( अथ प्रथमाष्टके चतुर्थः प्रपाठकः। )

---

( तत्र प्रथमोऽनुवाकः। )

एति। ददे। ग्रावा। असि। अध्वरकृदित्यध्वर—कृत्। देवेभ्यः। गम्भीरम्। इमम्। अध्वरम्। कृधि। उत्तमेनेत्युत्—तमेन। पविना। इन्द्राय। सोमम्। सुषुतमिति सु—सुतम्। मधुमन्तमिति मधु—मन्तम्। पयस्वन्तम्। वृष्टिवनिमिति वृष्टि—वनिम्। इन्द्राय। त्वा। वृत्रघ्न इति वृत्र—घ्ने। इन्द्राय। त्वा। वृत्रतुर इति वृत्र—तुरे। इन्द्राय। त्वा। अभिमातिघ्न इत्यभिमाति—घ्ने। इन्द्राय। त्वा। आदित्यवत इत्यादित्य—वते। इन्द्राय। त्वा। विश्वदेव्यावत इति विश्वदेव्य—वते। श्वात्राः। स्थ। वृत्रतुर इति वृत्र—तुरः। राधोगूर्ता इति राधः—गूर्ताः। अमृतस्य। पत्नीः। ताः। देवीः। देवत्रेति देव—त्रा। इमम्। यज्ञम्। धत्त। उपहूता इत्युप—हूताः। सोमस्य। पिबत। उपहूत इत्युप—हूतः। युष्माकम्।(१) सोमः। पिबतु। यत्। ते। सोम। दिवि। ज्योतिः। यत्। पृथिव्याम्। यत्। उरौ। अन्तरिक्षे। तेन। अस्मै। यजमानाय। उरु। राया। कृधि। अधीति। दात्रे। वोचः। धिषणे

( पात्रेषु रसग्रहणाय पूर्वमुपावहृतस्य सोमस्याभिषवः )

इति॑ । वी॒डू इति॑ । स॒ती इति॑ । वी॒ड॒ये॒था॒म् । ऊर्ज॑म् । द॒धा॒था॒म् । ऊर्ज॑म् । मे॒ । ध॒त्त॒म् । मा । वा॒म् । हि॒ꣳसि॒ष॒म् । मा । मा॒ । हि॒ꣳसि॒ष्ट॒म् । प्राक् । अपा॑क् । उद॑क् । अ॒ध॒राक् । ताः । त्वा॒ । दिशः॑ । एति॑ । धा॒व॒न्तु॒ । अम्ब॑ । नीति॑ । स्व॒र॒ । यत् । ते॒ । सो॒म॒ । अदा॑भ्यम् । नाम॑ । जागृ॑वि । तस्मै॑ । ते॒ । सो॒म॒ । सोमा॑य । स्वाहा॑ ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमकाण्डे चतुर्थः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयप्रपाठके प्राधान्येनाग्नीषोमीयपशुः प्रतिपादितः । तत ऊर्ध्वं वसतीवरीग्रहणं चोक्तम् । तावता सुत्यादिवसात्पूर्वदिवसेषु यत्कर्तव्यं तत्समाप्तम् । तत उपरितनेनानुवाकेन सुत्यादिवसकर्तव्यप्रारम्भाय सोमोपावहरणमुक्तम् । अथ चतुर्थप्रपाठके सुत्यादिने कर्तव्या ग्रहाः प्राधान्येन प्रतिपाद्यन्ते । तत्रानुवाकार्था विनियोगसंग्रहे दर्शिताः—

"ग्रहप्रश्नेऽनुवाकास्तु *चत्वारिंशदिहोदिताः ।
सोमाभिषव एकस्मिन्पञ्चत्रिंशत्सु (ति) तद्ग्रहाः ॥
दाक्षिणानि समिष्टाख्ययजूंष्यवभृथस्तथा ।
काम्ययाज्या इति प्रोक्ता अर्था अत्रानुवाकगाः" इति ॥

---

* चत्वारिंशदित्युक्त्या तरणिरित्यादिषडनुवाकानामस्मिन्प्रपाठके भाष्याकरणेनैतत्प्रपाठकान्तर्गतैकोनत्रिंशानुवाके त्रीनभिष्टोमेऽतिग्राह्यान्गृह्णातीत्यादिकल्पसूत्रगतसौर्यग्रहोपयुक्ततरणिरितिमन्त्रस्य व्याख्यानावसरे तृतीयमन्त्रपाटस्तु तरणिरित्यादिरारण्यके समाम्नातत्वान्नात्र व्याख्येय इति भाष्यकारोक्त्या च तरणिरित्यादिषडनुवाकानामस्मिन्प्रपाठके पाठो भाष्यकारासंमत इत्यनुमीयते ।

( पात्रेषु रसग्रहणाय पूर्वमुपावहृतस्य सोमस्याभिषवः )

प्रथमानुवाके पात्रेषु रसग्रहणाय पूर्वमुपावहृतस्य सोमस्याभिषवोऽभिधीयते।

**आ द॑दे ग्रावाऽस्यध्वरकृद्देवेभ्यो॑ गम्भी॒रमि॒मम॑ध्वरं कृ॑ध्युत्त॒मेन॑ प॒विनेन्द्रा॑य॒ सोम॑ꣳ सुषु॑तं॒ मधु॑मन्तं॒ पय॑स्वन्तं वृष्टि॒वनि॑म्—**

कल्पः—“ अथैषां ग्राव्णां यः[1] सजन्तुरिव तमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा दद इत्यादायाभिमन्त्रयते ग्रावाऽस्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमिति ” इति।

आदद इत्याम्नातो मन्त्रो देवस्य त्वेत्यनेन पूरितः। [2]हे ग्रावन्नभिषवसाधन त्वं यज्ञनिष्पादको दृढः पाषाणोऽसि। तत इमं यज्ञं देवार्थं गहनं कुरु। उत्कृष्टेन वज्रसदृशेन त्वयाऽहं सोममीदृशं करोमि। कीदृशं, सुषुतं सम्यगभिषुतं मधुमन्तं स्वादुत्वोपेतं पयस्वन्तं क्षीरवद्रसोपेतं वृष्टिवनिमाहुतिसूर्यद्वारा वृष्टिप्रदम्।

तथा च स्मर्यते—

“ अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ” इति॥

इन्द्रार्थमेव सोमं करोमि॥

विधत्ते—

“ देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै ” [ सं०का० ६ प्र० ४ अ० ४ ] इति।

ग्रावाऽसीति मन्त्र उपेक्षितः॥

**इन्द्रा॑य त्वा वृत्र॒घ्न इन्द्रा॑य त्वा वृत्र॒तुर॒ इन्द्रा॑य त्वाऽभिमाति॒घ्न इन्द्रा॑य त्वाऽऽदि॒त्यव॑त॒ इन्द्रा॑य त्वा वि॒श्वदे॑व्यावते—**

कल्पः—“ अथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपांशुसवनमभिमिमीत इन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाऽभिमातिघ्न इन्द्राय त्वाऽऽदित्यवत इन्द्राय त्वा विश्वदेव्यावत इति ” इति।

---

१ क. यः सुज°। ख. यः सुतन्तु°। २ क. घ. ङ. हेऽस्मेऽभि°।

हे सोम त्वामिन्द्रार्थं मिमे। कीदृशायेन्द्राय। वृत्रघ्ने मेघविदारयित्रे, वृत्रतुरे वृत्रासुरघातिने, अभिमातिघ्ने पापघातिने, आदित्यार्थं तृतीयसवने गृह्यमाणत्वादादित्यवते, प्रातःसवने विश्वान्देवानुद्दिश्य गृह्यमाणत्वाद्विश्वदेव्यावते ॥

विधत्ते—

"पशवो वै सोमो व्यान उपांशुसवनो यदुपांशुसवनमभि मिमीते व्यानमेव पशुषु दधाति" [ सं० का० ६ प्र० ४ अ० ४ ] इति।

पशुप्राप्तिहेतुत्वात्सोमस्य पशुत्वम्। "प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ व्यान उपांशुसवनः" इति रूपकं वक्ष्यति। अतोऽस्य व्यानत्वम्। उपांशुनामकग्रहार्थं सोमः सूयते येन पाषाणेन स उपांशुसवनः। तमभिलक्ष्य सोमो मातव्यः॥

सर्वमन्त्रेष्विन्द्रशब्दप्रयोगस्य तात्पर्यमाह—

"इन्द्राय त्वेन्द्राय त्वेति मिमीत इन्द्राय हि सोम आह्रियते" [ सं० का० ६ प्र० ४ अ० ४ ] इति।

सौमिकदेवेष्विन्द्रस्य प्राधान्यमिन्द्रपीतस्येत्यादिमन्त्रस्य च प्रसिद्धिं हिशब्दो द्योतयति॥

विधत्ते—

"पञ्च कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे" [ सं० का० ६ प्र० ४ अ० ४ ] इति।

सोमो यथा क्रीतस्तद्वद्दयमपि मातव्यः॥

श्वात्राः स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकं सोमः पिबतु—

कल्पः—"अथ मितं राजानं होतृचमसीयाभिरुपसृजति श्वात्राः स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकं सोमः पिबत्विति" इति।

हे आपो यूयमेवंविधाः स्थ। कीदृश्यः। श्वात्राः शीघ्रकारिण्यः। वृत्रतुरो वृत्रघातिन्यः। राधोऽन्नं गूर्ताः संपादयितुमुद्यताः। अमृतस्य सोमस्य पत्नीः पालयित्र्यः। तास्तथाविधा यूयं देवीर्देवतारूपा देवत्रा देवेषु इममस्मदीयं यज्ञं

स्थापयत। किं च, उपहूता अनुज्ञाताः सत्यः सोमस्यांशं पिबत। सोमश्चानुज्ञातो युष्माकमंशं पिबतु ॥

उपहूताः सोमस्य पिबतेत्यस्याभिप्रायमाह—

" श्वात्राः स्थ वृत्रतुर इत्याहैष वा अपाꣳ सोमपीथः " [ सं० का० ६ प्र० ४ अ० ४ ] इति।

अस्मिन्मन्त्रे पिबतेति यदुच्यत एतदेवाब्देवतानां सोमपानम् ॥

वेदनं प्रशंसति—

" य एवं वेद नाप्स्वार्तिमार्च्छति " [सं० का० ६ प्र० ४ अ० ४] इति।

जले मरणं न प्राप्नोति ॥

यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां
यदुरावन्तरिक्षे तेनास्मै यजमाना-
योरु राया कृध्यधि दात्रे वोचः—

बौधायनः—" अथैनं संप्रयौति यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोच इति " इति।

आपस्तम्बः—" यत्ते सोम दिवि ज्योतिरिति राजानमभिमन्त्रयते " इति।

हे सोम त्रिषु लोकेषु त्वदीयं यज्ज्योतिरस्ति तेन ज्योतिषाऽस्मै यजमानाय राया धनेनोरु समृद्धं विस्तीर्णं स्थानं कृधि कुरु। किं च—अधिकोऽयं यजमानो भक्त्येति दात्रे फलप्रदायेन्द्राय ब्रूहि ॥

दिवीत्यादेस्तात्पर्यमाह—

" यत्ते सोम दिवि ज्योतिरित्याहैभ्य एवैनं लोकेभ्यः सं भरति " [ सं० का० ६ प्र० ४ अ० ४ ] इति।

लोकत्रयेणैनं सोमं सम्यक्पोषयति ॥

धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे
धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टम्—

कल्पः—" तिरश्चर्मन्फलके[1] अभिमृशति धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टमिति " इति।

१ ख. °र्मफल°।

( पात्रेषु रसग्रहणाय पूर्वमुपावहृतस्य सोमस्याभिषवः )

हे धिषणे सोमस्य चर्मणो वा धारयित्र्यौ वीडू सती विष्टब्धे सत्यौ वीड॰येथां पुनरप्यभिषवादिघातेन विश्लेषो मा भूदिति दृढं स्तम्भयतम् । ऊर्जं सोमरसं दधाथां युवां धारयतम् । ऊर्जं मे मह्यं धत्तं प्रयच्छतम् । अहं युवां मा हिंसिषम् । युवामपि मा मा हिंसिष्टम् । मन्त्रोऽयमुपेक्षितः ॥

कल्पः—" एकग्रहायाऽऽप्त॰ राजानमुपरे न्युप्य होतृचमसेऽ॰शूनवधाय तस्मिन्ग्रावाणमुपा॰शुसवनमुपनिधाय त्रिः प्रदक्षिणमुपरि परिप्लावयन्निग्राभमुपैति प्रागपागुदगधरागिति, यां भार्यां कामयेत तां मनसा ध्यायेदम्ब नि ष्वरेति " इति ।

प्रागपागुदगधराक्तास्त्वा दिश
आ धावन्त्वम्ब नि ष्वर॥, इति मन्त्रपाठः ।

प्रागादयो या दिशस्ताः सर्वा हे सोम त्वां प्रत्याभिमुख्येन धावन्तु । हेऽम्ब मातृस्थानीय सोम निष्वरांशुभ्यो रसात्मना निर्गच्छ । प्रागादिमन्त्रः सोमनिग्रहणहेतुत्वान्निग्राभ इत्युच्यते । उपरोऽभिषवाधारः पाषाणस्तस्मिन्सोममवस्थाप्य निग्राभमन्त्रं पठेत् ॥

दिशामाधावनोक्तेस्तात्पर्यमाह—

" सोमो वै राजा दिशोऽभ्यध्यायत्स दिशोऽनु प्राविशत्प्रागपागुदगधरागित्याह दिग्भ्य एवैन॰ सं भरत्यथो दिश एवास्मा अव रुन्धे " [ सं० का० ६ प्र० ४ अ० ४ ] इति ॥

अम्ब मातरित्यादयः शब्दाः स्त्रीणामुपलालनाय प्रयुज्यन्तेऽतोऽम्बशब्दप्रयोगेणात्र ध्यानविधिः सूच्यत इत्यभिप्रेत्य व्याचष्टे—

" अम्ब नि ष्वरेत्याह " [ सं० का० ६ प्र० ४ अ० ४ ] इति ।

यस्मादम्बेत्युपलालनमाह तस्माद्ध्यायेदित्यभिप्रायः ॥

वेदनं प्रशंसति—

" कामुका एन॰ स्त्रियो भवन्ति य एवं वेद " [ सं० का० ६ प्र० ४ अ० ४ ] इति ॥

यत्ते सोमादाभ्यं नाम जागृवि तस्मै
ते सोम सोमाय स्वाहा ॥

---

१ ख. 'परि नि॰ ।

(पात्रेषु रसग्रहणाय पूर्वमुपावहृतस्य सोमस्याभिषवः)

कल्पः—" प्रतिप्रस्थाता राजन्येवांशू द्वौ द्वावपि सृजति यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति " इति।

यः सोम उपांशुग्रहाय पर्याप्त उपरे न्युप्तः श्वात्राः स्थेति मन्त्रेण वसतीवरीभिरुपसृष्टस्तस्मात्सोमादपादाय षडंशवः स्थापिताः। तथा चोक्तम्—" उपसृष्टस्य राज्ञः षडंशूनार्द्रानसंश्लिष्टानादाय चर्मणि निधाय " इति। त्रिष्वपि सवनेषु महाभिषवे[1] तेषां षण्णामंशूनां मध्ये द्वौ द्वावंशू संसृजेत्। हे सोम ते त्वदीयं यन्नाम शत्रुभिरदाभ्यमतिरस्कार्यं जागृवि जागरूकं हे सोम तस्मै सोमाय ते तादृक्सोमनामधारिणे तुभ्यमिदं सोमांशुद्वयं स्वाहा हुतमस्तु॥

सोमायेत्युक्तेरभिप्रायमाह—

" यत्ते सोमादाभ्यं नाम जागृवीत्याहैष वै सोमस्य सोमपीथः " [ सं० का० ६ प्र० ४ अ० ४ ] इति।

यथाऽग्नौ होममन्तरेणैवापां सोमपानमुक्तं तथा सोमस्याप्येष एव मन्त्रेणांशुद्वयप्रक्षेपः॥

सोमपानवेदनं प्रशंसति—

" य एवं वेद न सौम्यामार्तिमार्च्छति " [सं०का०६प्र० ४ अ०४] इति।

सोमयागविनाशं न प्राप्नोति॥

षण्णामंशूनां संघातात्पृथक्करणं विधत्ते—

" घ्नन्ति वा एतत्सोमं यदभिषुण्वन्त्यꣳशूनप गृह्णाति त्रायत एवैनम् " [ सं० का० ६ प्र० ४ अ० ४ ] इति।

अंशूनामपनयनेनाभिषवरूपाद्वधादेनं सोमं पालयति॥

महाभिषवे तत्संसर्गं विधत्ते—

" प्राणा वा अꣳशवः पशवः सोमोऽꣳशून्पुनरपि सृजति प्राणानेव पशुषु दधाति " [ सं० का० ६ प्र० ४ अ० ४ ] इति॥

त्रिषु सवनेषु पृथगंशुसंसर्गं विधत्ते—

" द्वौद्वावपि सृजति तस्माद्द्वौद्वौ प्राणाः " [सं०का०६ प्र० ४अ०४]इति।

चक्षुःश्रोत्रघ्राणेन्द्रियरूपाः प्राणाः प्रत्येकं द्वौ द्वौ भूत्वा तत्तच्छिद्रेषु वर्तन्ते॥

अत्र विनियोगसंग्रहः—

" आददेऽश्मानमादाय ग्रावाऽसीत्यभिमन्त्रयेत्।
इन्द्रा सोममिति पञ्च श्वात्रा निग्राभ्यसेचनम्॥ १॥

---

१ ख. °वेषु ते°।

(उपांशुग्रहाभिधानम्)

यत्ते सोमं मन्त्रयित्वा धिषेति फलके स्पृशेत् ।
प्राक्तिरः प्रदक्षिणाप्लावो ह्यम्ब पत्नीं विचिन्तयेत् ॥
यत्ते महत्यभिषवे ह्यंशुयोगो नवेरिताः ॥ २ ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ प्रथमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ।)

---

वाचस्पतये पवस्व वाजिन्वृषा वृष्णो अꣳशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा स्वाङ्कृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाऽष्टूर्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिः प्राणाय त्वा (१) ॥

(वाचः सप्तचत्वारिꣳशत्) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ प्रथमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ।)

---

वाचः । पतये । पवस्व । वाजिन् । वृषा । वृष्णः । अꣳशुभ्यामित्यꣳशु—भ्याम् । गभस्तिपूत इति गभस्ति—पूतः । देवः । देवानाम् । पवित्रम् । असि ।

येषाम् । भागः । असि । तेभ्यः । त्वा । स्वाकृतः । असि । मधुमतीरिति मधु—मतीः । नः । इषः । कृधि । विश्वेभ्यः । त्वा । इन्द्रियेभ्यः । दिव्येभ्यः । पार्थिवेभ्यः । मनः । त्वा । अष्टु । उरु । अन्तरिक्षम् । अन्विति । इहि । स्वाहा । त्वा । सुभव इति सु—भवः । सूर्याय । देवेभ्यः । त्वा । मरीचिपेभ्य इति मरीचि—पेभ्यः । एषः । ते । योनिः । प्राणायेति प्र—अनाय । त्वा । (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ।)

---

प्रथमेऽनुवाक उपांशुग्रहणाय सोमाभिषवसंनाहोऽभिहितः । अथ द्वितीये तूपांशुग्रहोऽभिधीयते ।

वाचस्पतये पवस्व वाजिन्वृषा वृष्णो अꣳशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा—

बौधायनः—“अन्तर्दधाति प्रतिप्रस्थाता प्रथमाभ्यामंशुभ्यामानयत्यध्वर्युर्वाचस्पतये पवस्व वाजिन्नित्यन्तर्दधाति प्रतिप्रस्थाता मध्यमाभ्यामंशुभ्यामानयत्यध्वर्युर्वृषा वृष्णो अꣳशुभ्यां गभस्तिपूत इत्यन्तर्दधाति प्रतिप्रस्थातोत्तमाभ्यामंशुभ्यामानयत्यध्वर्युर्देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वेति” इति ।

---

१ क. ग. घ. ङ. °भ्यामवन° ।

आपस्तम्बस्त्वेकमन्त्रतामाह—" अष्टौ (१)कृत्वोऽग्रेऽभिषुणोत्यथ प्रतिप्रस्थातोपांशुपात्रं धारयन्नुपात्तानामुपरि द्वावंशू अन्तर्दधाति तस्मिन्नभिषुतमध्वर्युरञ्जलिना गृह्णाति वाचस्पतये पवस्व वाजिन्नित्येवं विहितो द्वितीयस्तृतीयश्चापि वैकादशकृत्वो द्वितीयमभिषुणोति द्वादशकृत्वस्तृतीयम् " इति ।

हे वाजिन्नन्नप्रद सोम पतये पालकदेवार्थं वाचः संबन्धिना मन्त्रेण पवस्व शुद्धो भव । वृषा रसरूपत्वेन वर्षणसमर्थस्त्वं गभस्तिपूतः पूर्वमरण्ये सूर्यरश्मिभिः पूत इदानीं तु वृष्णो वर्षणसमर्थस्य सोमस्यांशुभ्यामन्तर्धापिताभ्यां पवस्व । किं च त्वमपि देव एव सन्देवानां सोमपां पवित्रं शुद्धिहेतुरसि । येषां देवानां भागोऽसि तेभ्यस्त्वा गृह्णामि ॥

विधत्ते—

" प्राणो वा एष यदुपाꣳशुर्यदुपाꣳश्वग्रा ग्रहा गृह्यन्ते प्राणमेवानु प्र यन्ति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ।

यज्ञस्य प्राणस्थानीय उपांशुः । अपानवागादिस्थानीयास्त्वन्तर्यामैन्द्रवायवादयः । अतः प्राणत्वेन मुख्यत्वात्प्रथमतस्तद्ग्रहणं युक्तम् ॥

त्रिषु पर्यायेषु विलक्षणसंख्याविशिष्टमभिषवं विधत्ते—

" अरुणो ह स्माऽऽहौपवेशिः प्रातःसवन एवाहं यज्ञꣳ सꣳ स्थापयामि तेन ततः सꣳस्थितेन चरामीत्यष्टौ कृत्वोऽग्रेऽभि षुणोत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाऽऽप्नोत्येकादश कृत्वो द्वितीयमेकादशाक्षरा त्रिष्टुप्त्रैष्टुभं माध्यंदिनं सवनं माध्यंदिनमेव सवनं तेनाऽऽप्नोति द्वादश कृत्वस्तृतीयं द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाऽऽप्नोत्येताꣳह वाव स यज्ञस्य सꣳस्थितिमुवाचास्कन्दायास्कन्नꣳ हि तद्यद्यज्ञस्य सꣳस्थितस्य स्कन्दति " [ सं० का० ६ प्र० ४अ० ५ ] इति ।

उपवेशस्य पुत्रः कश्चिदरुणनामा यथोक्तत्रिविधाभिषवरूपामेव यज्ञस्य समाप्तिमुवाच । तदेतदविनाशाय संपद्यते । समाप्तस्य यज्ञस्य संबन्धि यद्वस्तु नश्यति तदविनष्टमेव ॥

त्रिष्वपि पर्यायेष्वष्टसंख्यैवेति पक्षान्तरं विधत्ते—

" अथो खल्वाहुर्गायत्री वाव प्रातःसवने नातिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति य एवं वेद तस्मादष्टावष्टौ कृत्वोऽभिषुत्यम् " [ सं० का० ६ प्र० ४ अ० ५ ] इति ।

---

१ क. ग. घ. ङ. °यन्नपा° । २ ख. °नाऽभिगृ° ।

( उपांशुग्रहाभिधानम् )

अतिवादे गायत्र्येव न वर्तते । त्रिष्टुब्जगत्यौ तु वर्तेते । अधिकाक्षरयुक्ततया पठ्यमानत्वमतिवादः । न चासावल्पाक्षरा[1]यां गायत्र्यां संभवति । यद्यपि प्रातःसवने छन्दोन्तराण्यपि संभवन्ति तथाऽपि गायत्र्येवाभिमानिदेवता । गायत्र्या अतिवादाभावं यो वेद तं प्रति शत्रुरप्यनतिवादुको भवति, अनिन्दको भवतीत्यर्थः । यस्माद्गायत्र्येव सवनमभिमन्यते तस्मात्तदीययैव संख्यया प्रातःसवने त्रिष्वपि पर्यायेष्वभिषोतव्यम् ॥

मन्त्रस्य प्रथमभागे वाक्शब्दतात्पर्यमाह—

" ब्रह्मवादिनो वदन्ति पवित्रवन्तोऽन्ये ग्रहा गृह्यन्ते किंपवित्र उपाꣳशुरिति वाक्पवित्र इति ब्रूयाद्वाचस्पते पवस्व वाजिन्नित्याह वाचैवैनं पवयति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ।

उपांशुव्यतिरिक्ता ग्रहा दशापवित्रनामकेन वस्त्रेण शोधिता गृह्यन्ते न तूपांशुः । तस्य किं शोधकमिति प्रश्नः । मन्त्र एव शोधकमित्युत्तरम् ॥

भागान्तराणामर्थः प्रसिद्ध इत्याह—

" वृष्णो अꣳशुभ्यामित्याह वृष्णो ह्येतावꣳशू यौ सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येनं पवयति देवो देवानां पवित्रमसीत्याह देवो ह्येष सन्देवानां पवित्रं येषां भागोऽसि तेभ्यस्त्वेत्याह येषाꣳ ह्येष भागस्तेभ्य एनं गृह्णाति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ॥

## स्वांकृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः—

बौधायनः—" अथ प्रतिप्रस्थातुर्ग्रहमादत्ते स्वांकृतोऽसीत्यथैनमवेक्षते मधुमतीर्न इषस्कृधीत्यथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति " इति ।

आपस्तम्बस्त्वेकमन्त्रतामाह—" स्वांकृतोऽसीत्यध्वर्युर्ग्रहमादाय " इति ।

हे उपांशुग्रह त्वं स्वांकृतोऽसि मया स्वीकृतोऽसि । मधुमतीरिषो मधुराण्यन्नानि नोऽस्मदर्थं कृधि कुरु । देवजन्मनि मनुष्यजन्मनि च स्थितेभ्यः सर्वेभ्य इन्द्रियेभ्यो हिताय त्वां स्वी करोमि । स्वांकृतशब्देन प्राणरूपस्य ग्रहस्य स्वाधीनत्वं विवक्षितम् । मधुमतीशब्देन स्वादुत्वम् ॥

दिव्यपार्थिवशब्देन जन्मद्वयमिति दर्शयति—

"स्वांकृतोऽसीत्याह प्राणमेव स्वमकृत मधुमतीर्न इषस्कृधीत्याह सर्वमेवास्मा

---

१ ख. °राया गायत्र्याः सं° ।

इद९ स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान्दधाति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ॥

मनस्त्वाऽष्टूर्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यः—

बौधायनः—" उपोत्तिष्ठति मनस्त्वाऽष्ट्वित्युर्वन्तरिक्षमन्विहीत्येत्याऽऽहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा त्वा सुभवः सूर्यायेति " इति ।

आपस्तम्बः—" उर्वन्तरिक्षमन्विहीति दक्षिणेन होतारमतिक्रामति येन वा होता प्रतिपादयेन्मनस्त्वाऽष्ट्विति दक्षिणतोऽवस्थाय दक्षिणपरिधिसंधिमन्ववहृत्य स्वाहा त्वा सुभवः सूर्यायेति दक्षिणतः प्राञ्चमृजुं संततं दीर्घं हुत्वा देवेभ्यस्त्वा मरीचिपेभ्य इति मध्यमे परिधौ लेपं निमार्ष्टि " इति ।

हे प्राणरूपोपांशुनामक ग्रह त्वां मनोऽष्टु व्याप्नोतु । विस्तीर्णमन्तरिक्षमनुसृत्य त्वमाहवनीयदेशे गच्छ । हे सुभवः शोभनं भवः सद्भावो मध्यावस्थितिलक्षणो यस्य प्राणस्य सोऽयं सुभवाः । हे प्राण त्वा त्वद्रूपं ग्रहं सूर्याय बहिष्प्राणरूपाय स्वाहा जुहोमि । सूर्यस्य प्राणरूपत्वमाथर्वणैराम्नातम्—" आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णाति नः " इति । हे लेप त्वां मरीचिपालकदेवार्थं परिधौ मार्ज्मि ॥

क्रमेण मन्त्रान्व्याचष्टे—

" मनस्त्वाऽष्ट्वित्याह मन एवाश्नुत उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो हि प्राणः स्वाहा त्वा सुभवः सूर्यायेत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोक्षं जुहोति देवेभ्यस्त्वा मरीचिपेभ्य इत्याहाऽऽदित्यस्य वै रश्मयो देवा मरीचिपास्तेषां तद्भागधेयं तानेव तेन प्रीणाति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ।

स्वभवसः स्वशरीरेऽवस्थिता देवाः प्राणवायवः । तत्र प्राणेभ्यः स्वाहेत्युक्ते तेषां प्रत्यक्षहोमो भवतीति तत्परित्यज्य सूर्यायेत्युक्तत्वादयं परोक्षहोमः । यद्वा स्वभवस इति वक्तव्ये सति सुभवस इत्युक्त्वा परोक्षत्वम् । रश्मिनामकाश्चेतना देवा अचेतनानां मरीचीनां पालकाः ॥

लेपमार्जने हस्तस्याधोमुखत्वमूर्ध्वमुखत्वं च फलभेदेन विधत्ते—

" यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचा हस्तेन नि मृज्याद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्युत्तानेन नि मृज्याद्वृष्टिमेवोद्यच्छति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ॥

( उपांशुग्रहाभिधानम् )

वैरिणं प्रत्यभिचरता पुरुषेण होमात्पूर्वं पाठ्यं मन्त्रविशेषमुत्पादयति—

" यद्यभिचरेदमुं जह्यथ त्वा होष्यामीति ब्रूयादाहुतिमेवैनं प्रेप्सन्हन्ति " [ सं० का० ६ प्र० ४ अ० ९ ] इति।

हे प्राणरूप सूर्यामुं देवदत्तनामकं वैरिणं प्रथमतो मारय पश्चात्त्वां प्रति होष्यामीति ब्रूयात्। एतन्मन्त्रं श्रुत्वा देव आहुतिमपेक्षमाण एनं वैरिणं मारयत्येव॥

वैरिणो दूरदेशवर्तित्वे सत्यभिचरतोऽनुष्ठानविशेषं विधत्ते—

" यदि दूरे स्यादा तमितोस्तिष्ठेत्प्राणमेवास्यानुगत्य हन्ति " [ सं० का० ६ प्र० ४ अ० ९ ] इति।

आ तमितोरा ग्लानेर्यावन्तं कालं निरुच्छ्वासः स्थातुं शक्नोति तावत्तिष्ठेत्। ततोऽयं निरोधोऽस्य वैरिणः प्राणमनुगत्य मारयत्येव॥

## एष ते योनिः प्राणाय त्वा॥

बौधायनः—" अथ प्रदक्षिणमावृत्याऽऽग्रयणस्थाल्यां ग्रहस्य संस्रावमवनयति एष ते योनिरित्यथैतस्मिन्नुपांशुपात्रेऽशुं प्रास्याथैनं दक्षिणत उपांशुसवनेन संस्पृष्टं सादयति प्राणाय त्वेति " इति।

आपस्तम्बः—" सर्वमाग्रयणस्थाल्यां संपातमवनीय, एष ते योनिः प्राणाय त्वेति रिक्तं पात्रमायतने सादयित्वा तस्मिन्नंशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयात् " इति।

हे संस्राव संपात, एष आग्रयणाख्यस्ते तव योनिः स्थानम्। अथ वा हे उपांशुपात्रैष खरस्य दक्षिणांसप्रदेशस्ते स्थानम्। अतः प्राणदेवतासंतोषार्थं त्वामत्र सादयामि। खरो नाम दक्षिणस्य हविर्धानस्य पुरस्तान्मृदं प्रक्षिप्य निष्पादितो देशः पात्रप्रयोगार्थः। तथा च सूत्रम्—" खरे पात्राणि प्रयुनक्त्यग्निर्देवतेति दक्षिणेंऽस उपांशुपात्रं सोमो देवतेत्युत्तरेंऽसेऽन्तर्यामस्य बृहन्नसीति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्यां तमपरेण प्रत्यञ्चि द्विदेवत्यपात्राणि " इत्यादि। एष ते योनिः प्राणाय त्वेत्येष मन्त्र उपेक्षितः॥

अभिचरतः पात्रासादनाय मन्त्रान्तरमुत्पादयति—

" यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादयेदसन्नो वै प्राणः प्राणमेवास्य सादयति " [ सं० का० ६ प्र० ४ अ० ९ ] इति।

---

१ ख. °मावृत्याऽऽग्र°। २ ख. प्रास्यत्वथैनद्दक्षि°।

हे उपांशुपात्र प्राणरूपं त्वाममुष्य वैरिणः प्राणे स्थापयामीत्युक्ते सत्यसन्नो विनाशरहितो यजमानप्राणो वैरिणः प्राणं सादयति विनाशयति ॥

अभिषुतः सोमरसः प्रतिप्रस्थातृहस्तगत उपांशुपात्रे यदा गृह्यते तदा ग्रहान्तरवद्दशेण शोधनं न भवति किं त्वंशुभिरिति विधत्ते—

" षड्भिरꣳशुभिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ।

नात्र षण्णामंशूनां युगपत्प्रयोगः किं तु त्रिषु पर्यायेष्विति विधत्ते—

" त्रिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति " [ सं० का० ६ प्र० ४ अ० ५ ] इति ॥

नात्र वक्ष्यमाणग्रहेष्विव दशापवित्रनाभिस्रुतया धारया ग्रहणं किं तु त्रिष्वपि पर्यायेष्वध्वर्योरञ्जलिनेति विधत्ते—

" ब्रह्मवादिनो वदन्ति कस्मात्सत्यात्त्रयः पशूनाꣳ हस्तादाना इति यत्त्रिरुपाꣳशुꣳ हस्तेन विगृह्णाति तस्मात्त्रयः पशूनाꣳ हस्तादानाः पुरुषो हस्ती मर्कटः " [ सं० का० ६ प्र० ४ अ० ५ ] इति ।

गोमहिषादयः सर्वे पशवो मुखादानाः । एते तु त्रयो हस्तादानाः । पुरुषोऽपि " ब्रह्मणे ब्राह्मणमालभते " इत्यादावालभ्यत्वात्पशुः ॥

अत्र विनियोगसंग्रहः—

" वाचो ह्युपांशुग्रहणं स्वामादत्तेऽन्यहस्ततः ।
उरु गत्वा मनस्त्वेति वेदेर्दक्षिणतः स्थितिः ॥ १ ॥
स्वाहा जुहोति देवेभ्यो मध्यमे परिधौ तथा ।
लेपं निमार्ष्ट्येष पात्रं सादयेत्सप्त वर्णिताः " ॥ २ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि

---

१ क. घ. ङ. तदा ।

( अन्तर्यामग्रहाभिधानम् )

सोमंमुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावांपृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषां देवैरवंरैः परैश्चान्तर्यामे मंघवन्मादयस्व स्वांकृतोऽसि मधुंमतीर्न इषस्कृधि विश्वेभ्यस्त्वे-न्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनंस्त्वाऽष्टु-र्वन्तरिंक्षमन्विहि स्वाहां त्वा सुभवः सूर्याय देवेभ्यंस्त्वा मरीचिपेभ्यं एष ते योनिरपानाय त्वा ( १ ) ॥

( देवेभ्यंः सप्त चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

उपयामगृंहीत इत्युंपयाम—गृहीतः । असि । अन्तः । यच्छ । मघवन्निति मघ—वन् । पाहि । सोमंम् । उरुष्य । रायंः । समिति । इषंः । यजस्व । अन्तः । ते । दधामि । द्यावांपृथिवी इति द्यावां—पृथिवी । अन्तः । उरु । अन्तरिंक्षम् । सजोषा इति स—जोषांः । देवैः । अवंरैः । परैः । च । अन्तर्या-म इत्यन्तः—यामे । मघवन्निति मघ—वन् । माद-यस्व । स्वांकृतः । असि । मधुंमतीरिति मधुं—मतीः ।

नः। इषः। कृधि। विश्वेभ्यः। त्वा। इन्द्रियेभ्यः। दिव्येभ्यः। पार्थिवेभ्यः। मनः। त्वा। अष्टु। उरु। अन्तरिक्षम्। अन्विति। इहि। स्वाहा। त्वा। सुभव इति सु—भवः। सूर्याय। देवेभ्यः। त्वा। मरीचिपेभ्य इति मरीचि—पेभ्यः। एषः। ते। योनिः। अपानायेत्यप—अनाय। त्वा (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

(अथ प्रथमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः।)

द्वितीयेऽनुवाक उपांशुग्रहोऽभिहितः। अथ तृतीयमारभ्य षट्त्रिंशान्तेष्वनुवाकेष्वन्तर्यामादिकाः षोडश्यन्ता ग्रहा अभिधीयन्ते। तत्र पौर्वापर्ये पाठ एव नियामकः।

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व—

कल्पः—"उदित आदित्येऽन्तर्यामं गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्वेति" इति।

अतिपवमानस्य दशापवित्रेणात्यन्तशुद्धस्य। हे सोमरस त्वमुपयामगृहीतोऽसि। उपयामः पृथिवी। "इयं वा उपयामः" इति श्रुतेः। पृथिव्यामुत्पन्नं दारुमयमन्तर्यामसंज्ञकं पात्रमन्तर्यामशब्देनोच्यते। हे मघवन्नन्तर्यच्छ, इदं

१ ख. °त्रमुपयाम°।

पात्रमस्माकं भ्रातृव्येभ्योऽन्तर्धानं यथा भवति तथा नियमय । ततः सोमं पालय । रायो धनानि उरुष्य रक्ष । समिषः समीचीनान्यन्नानि यजस्व देहि । द्यावापृथिव्यौ तवानुग्रहादन्तर्दधामि व्यवधायिके करोमि । विस्तीर्णमन्तरिक्षमप्यन्तर्दधामि । हे मघवन्नवरैः परैश्च सर्वैर्देवैः सजोषाः सह [ प्रीयमाणः सेवमानो वा ] अस्मिन्नन्तर्यामग्रहे मादयस्व । त्वं हृष्टः सन्नन्यानपि हर्षय ॥

अन्तर्यामपात्रे सोमरसग्रहणं विधत्ते—

" देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपाꣳशौ यज्ञꣳ सꣳस्थाप्यमपश्यन्तमुपाꣳशौ समस्थापयन्तेऽसुरा वज्रमुद्यत्य देवानभ्यायन्त ते देवा बिभ्यत इन्द्रमुपाधावन्तानिन्द्रोऽन्तर्यामेणान्तरधत्त तदन्तर्यामस्यान्तर्यामत्वं यदन्तर्यामो गृह्यते भ्रातृव्यानेव तद्यजमानोऽन्तर्धत्ते " [ सं० का० ६ प्र० ४ अ० ६ ] इति ।

देववद्यज्ञमनुतिष्ठतामसुराणां व्यामोहार्थमुपांशुग्रहे यज्ञं समापनीयं मत्वा रहसि देवास्तं तथा चक्रुः । तं प्रकारमज्ञात्वा क्रुद्धानसुरानिन्द्रोऽन्तर्यामग्रहेणान्तर्हितानकरोत् । ततो भ्रातृव्यान्तर्धानायान्तर्यामो ग्रहीतव्यः ॥

मन्त्रभागे द्यावापृथिव्युक्तेः प्रयोजनमाह—

" अन्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते " [ सं० का० ६ प्र० ४ अ० ६ ] इति ॥

सजोषा इत्यादेः प्रयोजनमाह—

" ते देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन्मघवन्ननु न आ भजेति सजोषा देवैरवरैः परैश्चेत्यब्रवीद्ये चैव देवाः परे ये चावरे तानुभयानन्वाभजत्सजोषा देवैरवरैः परैश्चेत्याह ये चैव देवाः परे ये चावरे तानुभयानन्वाभजति " [ सं० का० ६ प्र० ४ अ० ६ ] इति ।

यदैश्वर्यं प्राप्तुं वयमिच्छावन्तः स्म इदं सर्वमिन्द्र एवाभूत्प्राप्तवानिति मत्वा ते देवा अब्रुवन् । हे मघवंस्त्वामन्वस्मानपि भागिनः कुर्विति । तत इन्द्रः सजोषा इत्यादि वाक्येनानुजज्ञौ । तयाऽनुज्ञया ये चोत्कृष्टा देवा ये च निकृष्टास्तान्सर्वान्भागिनोऽकरोत् । अतोऽत्रापि सजोषा इत्याद्युक्त्या सर्वान्भागिनः करोति ॥

मादयस्वेत्यत्र यथा भागलाभेन देवानां हर्षस्तथा यज्ञविघ्नाभावेन यजमानस्यापि हर्षं द्योतयति—

" अन्तर्यामे मघवन्मादयस्वेत्याह यज्ञादेव यजमानं नान्तरेति " [ सं० का० ६ प्र० ४ अ० ६ ] इति ॥

मन्त्रोपक्रमगतस्य गृहीतशब्दस्य प्रयोजनमाह—

“ उपयामगृहीतोऽसीत्याहापानस्य धृत्यै ” [ सं० का० ६ प्र० ४ अ० ६ ] इति ।

अपानदेवताया अन्तर्यामाभिमानितया तस्मिन्गृहीते प्राणिनामपानो धृतो भवति ॥

नात्रोपांशोरिवाञ्जलिना ग्रहणं किं तु दशापवित्रे[१]णाभिस्रुतया धारयेत्यभिप्रेत्याऽऽह—

“ यदुभावपवित्रौ गृह्येयातां प्राणमपानोऽनु न्यृच्छेत्प्रमायुकः स्यात्पवित्रवानन्तर्यामो गृह्यते प्राणापानयोर्विधृत्यै ” [सं० का० ६ प्र० ४अ०६] इति ।

प्राणवृत्तिः स्वभावतो बहिर्गच्छत्यतः प्राणरूपस्योपांशोः पवित्रेण नियमनं नापेक्षितम् । यद्यन्तर्यामोऽपि तद्वदपवित्रः स्यात्तर्ह्यनियमितत्वात्तद्रूपोऽपानोऽपि निर्गच्छन्तं प्राणमनु निर्गच्छेत् । ततः प्राणापानयोरभावान्म्रियेत । पवित्रेण नियमिते त्वपानेऽग्रे तदविनाभूतः प्राणो निर्गच्छन्नपि नात्यन्तं देहं परित्यजेत् । तस्मादुभयोर्धारणाय दशापवित्रेणान्तर्यामं गृह्णीयात् । तत्प्रकारः सूत्रेऽभिहितः—“ अदा[२]भ्यांशुमु(भ्यो)पांशुपा(स)वनौ चापिसृज्य सर्वेऽध्वर्यवो दिग्भ्यो महाभिषवमभिषुण्वन्ति अभिषुतमध्वर्युरञ्जलिना संसिञ्चति तमुन्नेताऽन्तरेषणो(चो)द्धृत्योत्तरत आधवनीयेऽवनयति उद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीचीनं दशापवित्रं वितन्वन्ति पवित्रस्य यजमानो नाभिं कृत्वा तस्मिन्होतृचमसेन धारां स्रावयत्युदञ्चनेनोन्नेताऽऽधवनीयाद्धोतृचमस आनयति संतता धारा स्रावयितव्या धा[३]राया अन्तर्यामं गृह्णाति सर्वांश्चातो ग्रहानाध्रुवात् ” इति । ग्रहणादूर्ध्वमन्तर्यामस्योपांशुवत्स्वांकृतादिमन्त्रप्रयोगः कर्तव्यः ॥

स्वांकृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाऽष्टूर्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिरपानाय त्वा ॥ , इति ॥

एते मन्त्रा उपेक्षिताः ॥

---

१ क. घ. ङ. °त्रगतधा° । २ क. °दाभ्योपांशु° । ३ घ. ङ. धारया ।

( ऐन्द्रवायवग्रहाभिधानम् )

उपांश्वन्तर्यामपात्रयोरासादने मध्यगतेनोपांशुसवनेन सह स्पर्शं विधत्ते—

" प्राणापानौ वा एतौ यदुपा॑ श्वन्तर्यामौ व्यान उपा॑शुसवनो यं कामयेत प्रमायुकः स्यादित्यस॑स्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ वि च्छिनत्ति ताजक्प्र मीयते यं कामयेत सर्वमायुरियादिति स॑स्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ सं तनोति सर्वमायुरेति " [ सं० का० ६ प्र० ४ अ० ६ ] इति ।

अत्र सूत्रम्—" सर्वमाग्रयणस्थाल्यां संपातमानीयैष ते योनिरपानाय त्वेति रिक्तं पात्रमायतने सादयति व्यानाय त्वेति ते अन्तरेण ग्रावाणमुपांशु-सवनं दक्षिणामुखं संस्पृष्टं पात्राभ्याम् " इति ॥

अत्र विनियोगसंग्रहः—

" उपान्तर्यामकस्तत्र स्वाकृतादि तु पूर्ववत् ॥ १ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-दीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

आ वा॑यो भूष शुचिपा उप॑ नः सहस्रं॑ ते नियुतो॑ विश्ववार । उपो॑ ते अन्धो॒ मद्य॑मयामि यस्य॑ देव दधिषे पूर्वपेय॑म् । उपयामगृ॑हीतोऽसि वायवे त्वेन्द्र॑वायू इमे सुताः । उप प्रयो॑भिरा गतमिन्द॑वो वामुशन्ति हि । उपयामगृ॑हीतोऽ-सीन्द्रवायुभ्यां॑ त्वैष ते योनिः॑ सजोषा॑भ्यां त्वा ( १ ) ॥

( आ वा॑यो त्रिच॑त्वारि॑शत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ ख. °दयित्वा व्या° ।

( अथ प्रथमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

एति । वायो इति । भूष । शुचिपा इति शुचि—पाः । उपेति । नः । सहस्रम् । ते । नियुत इति नि—युतः । विश्ववारेति विश्व—वार । उपो इति । ते । अन्धः । मद्यम् । अयामि । यस्य । देव । दधिषे । पूर्वपेयमिति पूर्व—पेयम् । उपयामगृहीत इत्युपयाम—गृहीतः । असि । वायवे । त्वा । इन्द्रवायू इतीन्द्र—वायू । इमे । सुताः । उपेति । प्रयोभिरिति प्रयः—भिः । एति । गतम् । इन्दवः । वाम् । उशन्ति । हि । उपयामगृहीत इत्युपयाम—गृहीतः । असि । इन्द्रवायुभ्यामितीन्द्रवायु—भ्याम् । त्वा । एषः । ते । योनिः । सजोषाभ्यामिति स—जोषाभ्याम् । त्वा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

कल्पः—" ऐन्द्रवायवं गृह्णात्या वायो भूष शुचिपा इत्यनुद्रुत्योपयामगृहीतोऽसि वायवे त्वेति गृहीत्वोपयम्येन्द्रवायू इमे सुता इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्रवायुभ्यां त्वेति गृहीत्वा पवित्रदशाभिः परिमृज्यैष ते योनिः सजोषाभ्यां त्वेति सादयति " इति ।

( ऐन्द्रवायवग्रहाभिधानम् )

मन्त्रास्त्वेवं पठ्यन्ते—

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् । उपयामगृहीतोऽसि वायवे त्वेन्द्रवायू इमे सुताः । उप प्रयोभिरा गतमिन्दवो वामुशन्ति हि । उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वैष ते योनिः सजोषाभ्यां त्वा ॥ , इति ॥

हे वायो त्वमागत्य ग्रहान्भूषालंकुरु । हे शुचिपाः शुद्धसोमपास्त्वं नोऽस्मा-नुपागच्छ[1] । हे विश्ववार विश्वव्यापक ते सहस्रं नियुतः सन्ति । नियुच्छब्देन वायुवाहनभूता अश्वा उच्यन्ते । तवान्धः सोमरसरूपमन्नं मद्यं हर्षकरं तस्मा-दुपो समीपे त्वामयामि प्राप्नोमि । हे देव यस्य सोमस्य संबन्धि रसद्रव्यं पूर्वपेयं प्रथममेव पातव्यमिति मनो दधिषे धृतवानसि तादृशेन सोमेन त्वामुप (पा)-यामीत्यन्वयः । हे सोमरस त्वमुपयामेन पृथिवीरूपदारुपात्रेण गृहीतोऽसि । त्वां वायवे गृह्णामि । हे इन्द्रवायू इमे सोमाः सुता अभिषुता अतो युवां प्रयो-भिरेतैः सोमरसरूपैरन्नैर्निमित्तभूतैरुप समीप आगतमागच्छतम् । हि यस्मादि-न्दवः सोमरसा वामुशन्ति युवां कामयन्ते । हे सोम दारुपात्रेण गृहीतोऽसि । इन्द्रवायुभ्यां त्वा गृह्णामि । हे पात्रैष स्वरस्यैकदेशस्ते योनिस्तव स्थानम् । अतोऽत्र सजोषाभ्यां समानप्रीतिभ्यामिन्द्रवायुभ्यामिन्द्रवाय्वर्थं त्वां साद-यामि । एते मन्त्रा उपेक्षिताः ॥

द्विदेवत्यग्रहेष्वस्य प्राथम्यं विधत्ते—

" वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्र यन्ति " [ सं० का० ६ प्र० ४ अ० ७ ] इति ।

ऐन्द्रवायवमैत्रावरुणाश्विनग्रहाणामभिमानिदेवता वाक्चक्षुःश्रोत्राभिधाः । तस्मादैन्द्रवायवो वागित्युच्यते । तस्य प्राथम्ये सति वाचं पुरतः प्रयतीं चक्षु-रादयोऽनु प्रयन्ति ॥

तत्प्राथम्यं प्रकारान्तरेण प्रशंसति—

" वायुं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मदग्रा

१ ख. °नुपग° ।

एव वो ग्रहा गृह्यान्ता इति तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्ते तमघ्नन् " [ सं० का० ६ प्र० ४ अ० ७ ] इति ।

अभिषवः सोमदेवताया हननम् ॥

तदेव प्राथम्यं द्रढयितुं पुनरपि वायुं प्रशंसति, अथ वा वायुस्तुत्या वायवे गृह्णीयादिति विधिरुन्नेयः—

" सोऽपूयत्तं देवा नोपाधृष्णुवन्ते वायुमब्रुवन्निमं नः स्वदयेति सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते तमेभ्यो वायुरेवास्वदयत्तस्माद्यत्पूयति तत्प्रवाते वि षजन्ति वायुर्हि तस्य पवयिता स्वदयिता " [ सं० का० ६ प्र० ४ अ० ७ ] इति ।

अयं सोमो हतः सन्नपूयद्दुर्गन्धोऽभवत् । नोपाधृष्णुवन्स्वादुं कर्तुं नाशक्नुवन् । मैत्रावरुणाश्विनादीन्यपि ग्रहपात्राणि वायव्यानीत्युच्यन्ते । अत एवाऽऽम्नातम्—" आग्राण आवायव्यानि " इति । लोके यद्वस्तु द्रवाधिक्यात्पूतिगन्धोपेतं भवति तच्छोषयितुं प्रकृष्टे वायौ विषजन्ति प्रसार्य स्थापयन्ति । अतस्तादृशस्य वस्तुनो वायुः शोधयिता स्वादुकर्ता च ॥

सर्वग्रहसाधारणमुपयामगृहीतोऽसीत्यमुं मन्त्रं व्याचष्टे—

" तस्य विग्रहणं नाविन्दन्त्साऽदितिरब्रवीद्वरं वृणा अथ मया वि गृह्णीध्वं मद्देवत्या एव वः सोमाः सन्ना असन्नित्युपयामगृहीतोऽसीत्याहादितिदेवत्यास्तेन यानि हि दारुमयाणि पात्राण्यस्यैतानि योनेः संभूतानि यानि मृन्मयानि साक्षात्तान्यस्यै तस्मादेवमाह " [ सं० का० ६ प्र० ४ अ० ७ ] इति।

विविधदेवतार्थत्वेन गृह्यते येन मन्त्रेण तादृशं मन्त्रं नालभन्त । अदितिः पृथिवी । मया भूमिप्रतिपादकमन्त्रेण । ये युष्माकं सोमास्ते सर्वेऽपि होमकाले युष्मद्देवत्यत्वेऽप्यासादनकाले मद्देवत्याः सन्त्विति भूमेर्वचः[1] । उपयामगृहीतोऽसीत्येतादृशं मन्त्रं भूमिराह । उपयामेन भूमिसंबन्धिपात्रेण गृहीत इति मन्त्रार्थः । तेनैतन्मन्त्रप्रयोगेण पूर्वोक्तवरेण च सोमा अदितिदेवत्याः । द्विविधानि सोमपात्राणि दारुमयाणि ग्रहरूपाणि मृन्मयानि चाऽऽग्रयणस्थाल्यादीनि । तत्रास्या भूमेः संबन्धिनी या वृक्षरूपा योनिस्तस्याः संभूतानि ग्रहादीनि, स्थाल्यादीनि तु साक्षादेव भूमेः कार्याणि । तस्मादुपयामगृहीत इत्येवं मन्त्रो ब्रूते ॥

---

१ ख. °र्वैरः । उ° ।

( ऐन्द्रवायवग्रहाभिधानम् )

ऐ(इ)न्द्रवाय्वोरेकस्मिन्पात्रे सह ग्रहणं विधत्ते—

"वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते" [सं० का० ६ प्र० ४ अ० ७] इति ।

येयं वैदिकमन्त्ररूपा वाक्सा पूर्वं पराची समुद्रघोषवदेकरूपेण दण्डायमाना तस्यां वाच्येतावदेकं वाक्यं तस्मिन्वाक्येऽप्येतावदेकं पदं तस्मिन्पदेऽपीयं प्रकृतिरयं प्रत्यय इत्येवं विभज्य सर्वतः करणं व्याकरणं तद्रहितत्वादव्याकृतैवावदत्प्रवृत्ता । तामिन्द्रो मध्यतोऽवक्रम्य वाक्यपदादिरूपेण तत्र तत्र विच्छिद्य विभिन्नां कृतवान् ॥

ऐन्द्रवायवग्रहणमुपसंहरति—

"तस्मात्सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे द्वौ हि स वराववृणीत" [सं० का० ६ प्र० ४ अ० ७] इति ।

यस्मादिन्द्र एकमेव सहग्रहणरूपं वरमवृणोत्तस्मात्सकृदेवेन्द्रस्य सोमग्रहणम् । यस्माच्च वाचं मध्यतो विभक्तवांस्तस्मादुभयोर्वाय्वर्थग्रहणयोर्मध्य इन्द्रार्थं ग्रहणम् । आ वायो भूषेति केवलस्य वायोरादौ ग्रहणम्, इन्द्रवायू इमे सुता इत्यत्र वायुः पश्चात्पठ्यते । तस्मादिन्द्रस्य मध्ये स्थानम् । तस्माद्वायोर्ग्रहाग्रत्वमेको वरः । सर्वपात्राणां वायव्यत्वं द्वितीयो वरः । तस्मात्तस्य द्विः सोमग्रहणम्[1] ॥

इत आरभ्य विनियोगसंग्रहः षट्त्रिंशानुवाकस्यान्त उदाहरिष्यते ॥

अथ मीमांसा ।

दशमाध्यायस्य पञ्चमपादे चिन्तितम्—

"पुरोपांशोरुत स्वस्य स्थाने स्यादैन्द्रवायवः ।
आद्योऽग्रत्वविधेर्मैवं धारायुक्ताग्रतोक्तितः" इति ॥

ज्योतिष्टोमे श्रूयते—"ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इति । मन्त्रकाण्डविधिकाण्डयोर्ग्रहाणामयं पाठक्रमः—उपांशुग्रहः प्रथमः । अन्तर्यामग्रहो द्वितीयः । ऐन्द्रवायवग्रहस्तृतीयः । मैत्रावरुणग्रहश्चतुर्थ इत्यादि । तत्रैन्द्रवायवस्याग्रत्वविधानादुपांशुग्रहात्पूर्वमेव ग्रहणमिति पूर्वः पक्षः । नैतद्युक्तम्[2] । अग्रत्वस्य धाराग्रहापेक्षत्वात् । ऐन्द्रवायवादयो धाराग्रहाः, तद्वाक्ये धारया गृह्णातीति

१ क. घ. ङ. °म् । वि° । २ क. ख. घ. ङ. °युक्तोऽग्र° ।

श्रुतत्वात् । एवं सति पाठक्रमो न बाध्यते । तस्मादैन्द्रवायवः स्वस्यैव स्थाने ग्रहीतव्यः ॥

तत्रैवान्यच्चिन्तितम्—

" सर्वादौ स्वस्य वा स्थाने काम्यः स्यादैन्द्रवायवः ।
पुनर्विधेरादिमोऽन्त्यः कामायैतद्विधानतः " इति ॥

ज्योतिष्टोम एव श्रूयते—" ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन् " इति । सोऽयं काम्य ऐन्द्रवायवः सर्वेषामुपांशुप्रभृतीनां ग्रहाणामादौ स्यात् । कुतः । धाराग्रहादित्वस्य पूर्वमेव सिद्धौ सत्यां पुनरप्यग्रताविधानादिति प्राप्ते ब्रूमः—नात्र सर्वाग्रत्वं विधातुं शक्यम् । धाराग्रहाणां प्रकृतत्वात् । अतो यथाप्राप्ताग्रत्वोपेतानां धाराग्रहाणां कामसंयोगोऽत्र विधीयत इति स्वस्थान एवायमैन्द्रवायवग्रहः ।

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

" रथंतरं साम सोमे भवेत्तद्वद्बृहज्जगत् ।
ऐन्द्रवायवशुक्राग्रयणाग्राश्च ग्रहाः श्रुताः ॥
रथंतरादिसंयुक्तमन्यत्कर्माथ वा गुणः ।
गायत्रादियुतात्पूर्वादन्यद्यावृत्तितो[१] गुणैः ॥
सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके ।
ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परम् " इति ॥

ज्योतिष्टोमप्रकरणे श्रूयते—" यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् [ग्रहान्] गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान्यदि जगत्सामाऽऽग्रयणाग्रान् " इति । तत्र सोमशब्देन सोमलतासाधनको यागोऽभिधीयते । तस्मिंश्च यागे माध्यंदिनसवने पृष्ठस्तोत्रे रथंतरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि । अभि त्वा शूरेत्यस्यां योनावुत्पन्नं रथंतरम् । त्वामिद्धि हवामह इत्यस्यामुत्पन्नं बृहत् । जगतीछन्दस्कायामुत्पन्नं जगत् । ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुव इत्यादयो ग्रहाः प्रातःसवने गृह्यन्ते । दारुपात्रेषु सोमरसस्य ग्रहणाद्ग्रहा भवन्ति । सोमयागस्य रथंतरसामोपेतत्वपक्षे तेषु ग्रहेष्वैन्द्रवायवः प्रथमं ग्रहीतव्यः । बृहत्सामोपेतत्वपक्षे शुक्रः प्राथमिकः । जगत्सामोपेतत्वपक्ष आग्रयणः प्राथमिक इति विषयवाक्यार्थः । तत्र प्रकृतो ज्योतिष्टोमो गायत्रादिसामोपेतः । तद्व्यावृत्त्यर्थमिह

१ क. घ. ङ. °यत्त्यादि° ।

( मैत्रावरुणग्रहाभिधानम् )

रथंतरादयो गुणाः कीर्त्यन्ते । तस्मादैन्द्रवायवाग्रत्वादिगुणोपेतानि कर्मान्तराणि विधीयन्त इति प्राप्ते ब्रूमः—यदि रथंतरसामा सोमः स्यादित्युक्तौ यः सोमशब्दस्तेन प्रकरणेन चात्र ज्योतिष्टोमः समर्प्यते । तस्मिन्समर्पिते ग्रहाग्रत्वं गुणो विधीयते । न च रथंतरादिगुणानुवादेन ज्योतिष्टोमस्य व्यावृत्तिः संभवति । तस्य प्रातःसवनादौ गायत्रादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथंतरादियोगस्यापि संभवात् । किं तर्हि व्यावर्त्येत इति चेत्, रथंतरबृहज्जगतां परमार्थतो व्यावृत्तिरिति वक्ष्यामः । रथंतरादयः पृष्ठस्तोत्रे विकल्पिताः । तत्र रथंतरानुवादेनेतरौ पक्षौ व्यावर्त्येते । एवमितरत्रापि । तस्मादयं गुणविधिः । ननु यः प्रकृतो ज्योतिष्टोमः सोऽन्येषां सोमयागानां प्रकृतिः । न हि प्रकृतौ जगत्यामुत्पन्नं साम विहितमस्ति । अत एव दशमाध्याये पञ्चमपादस्य पञ्चदशाधिकरणे प्रथमवर्णके 'यदि जगत्सामा' इतिवाक्योक्तमाग्रयणाग्रत्वं विकृतौ विषुवनामके मुख्येऽहनि व्यवस्थापितम् । बाढं, तथाऽपि नात्र कश्चिद्विरोधः । आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधायकं, किं त्वन्येन विहिते सोमयागे यत्र जगत्साम संभवति तत्र गुणविधायकमित्येतावत एवात्र प्रतिपाद्यत्वात् ।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" ऐन्द्रवायवशेषस्य सकृद्भक्ष उतासकृत् ।
पूर्वन्यायात्सकृद्भक्षो द्विर्भक्षो वचनाद्भवेत् " इति ॥

ज्योतिष्टोमे योऽयमैन्द्रवायवग्रहस्तत्र संस्कार्यस्य सोमस्यैकत्वात्सकृदेव शेषकार्यमिति चेन्मैवम् । द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करोतीति वचनाद्द्विर्भक्षणम् ॥

अथ च्छन्दः—

आ वायो भूषेति त्रिष्टुप् । इन्द्रवायू इति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

---

अयं वां मित्रावरुणा सुतः सोम ऋता-

वृधा। ममेदिह श्रुतꣳ हवम्। उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा (१)॥

(अयं वां विꣳशतिः।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥५॥

(अथ प्रथमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः।)

अयम्। वाम्। मित्रावरुणेति मित्रा—वरुणा। सुतः। सोमः। ऋतावृधेत्यृत—वृधा। मम। इत्। इह। श्रुतम्। हवम्। उपयामगृहीत इत्युपयाम—गृहीतः। असि। मित्रावरुणाभ्यामिति मित्रा—वरुणाभ्याम्। त्वा। एषः। ते। योनिः। ऋतायुभ्यामित्यृतायु—भ्याम्। त्वा। (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥५॥

(अथ प्रथमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः।)

कल्पः—"अयं वां मित्रावरुणेति मैत्रावरुणं[१] गृहीत्वा श्रृतशीतेन पयसा श्रीत्वा, एष ते योनिर्ऋतायुभ्यां त्वेति सादयति" इति।

मन्त्रपाठस्तु—

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा।

१ क. ग. घ. ङ. 'णं शृ'।

(मैत्रावरुणग्रहाभिधानम्)

मर्मेदिह श्रुतꣳ हवम्। उपयामगृहीतोऽसि मित्रा-
वरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा॥, इति॥

हे ऋतावृधा सत्यस्य वर्धकौ मित्रावरुणौ युवयोः सोमः सुतोऽभिषुतः। इदिति हेतौ। यस्मादभिषुतस्तस्मादिह कर्मणि मम हवं मदीयमाह्वानं श्रुतं युवां शृणुतम्। ऋतायुभ्यां सत्यमिच्छद्भ्यां मित्रावरुणाभ्याम्। स्पष्टमन्यत्॥

मन्त्रानुपेक्ष्य गृहीतस्य सोमरसस्य क्षीरमेलनं विधित्सुः प्रस्तौति—

"मित्रं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीन्नाहꣳ सर्वस्य वा अहं मित्रमस्मीति तमब्रुवन्हनामैवेति सोऽब्रवीद्वरं वृणै पयसैव मे सोमꣳ श्रीणन्निति तस्मान्मैत्रावरुणं पयसा श्रीणन्ति तस्मात्पशवोऽपाक्रामन्मित्रः सन्क्रूरमकरिति" [ सं० का० ६ प्र० ४ अ० ८ ] इति।

हनाम त्वया सहिता वयमित्यर्थः। नाहं सोमं हन्मीति शेषः। सर्वमित्रत्वमहनने हेतुः। अत एवास्माकमपि मित्रत्वाद्धनामैवास्मदीयं कार्यं हननरूपं त्वया सहैव कुर्मः। श्रीणन्मिश्रयेयुः। क्रूरं सोमवधं कृतवतस्तस्मान्मित्राद्भीताः पशवोऽपक्रान्ताः॥

विधत्ते—

"क्रूरमिव खलु वा एष करोति यः सोमेन यजते तस्मात्पशवोऽप क्रामन्ति यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेव तन्मित्रꣳ समर्धयति पशुभिर्यजमानम्" [ सं० का० ६ प्र० ४ अ० ८ ] इति।

तत्तेन श्रयणेन मित्रदेवयजमानयोः पशुसमृद्धिर्भवति॥

अस्तु यजमानस्य पशुसमृद्धिर्मित्रस्य तु कुतस्त्येत्याशङ्क्य तदर्थमेव च तस्य वृतत्वादित्याह—

"पुरा खलु वावैवं मित्रोऽवेदप मत्क्रूरं चक्रुषः पशवः क्रमिष्यन्तीति तस्मादेवमवृणीत" [सं० का० ६ प्र० ४ अ० ८ ] इति।

क्रूरं सोमवधं कृतवतो मत्तोऽपक्रमिष्यन्तीत्यमुमर्थं मित्रः सोमवधात्पुरैव खल्ववेद्विदितवान्। तस्मादेव कारणात्पशुसमृद्धिहेतुं क्षीरमिश्रणमवृणीत॥

अथ मित्रावरुणयोरेकेनैव पात्रेण ग्रहणं विधत्ते—

"वरुणं देवा अब्रुवन्त्वयाऽꣳशभुवा सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मह्यं चैवैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणः सह गृह्यते तस्माद्राज्ञा राजानमꣳशभुवा घ्नन्ति वैश्येन वैश्यꣳ शूद्रेण शूद्रम्" [ सं० का० ६ प्र० ४ अ० ८ ] इति।

अंशं द्रव्यभागं भवते प्राप्नोतीत्यंशभूर्दायादः। सोमो वरुणश्च परस्परं दायादौ। इन्द्रो वरुणः सोमो रुद्र इत्यादिना बृहदारण्यके क्षत्रियत्वेनैककुलवर्तित्वस्य समाम्नातत्वात्। यस्मादंशभुवा वरुणेन सह सोमं हनामेति देवैरुक्तं तस्माल्लोकेऽपि तथा कुर्वन्ति। तद्यथा रामो विभीषणेनांशभुवा सहितो रावणं जघान। वैश्यशूद्रयोरप्युदाहार्यम् ॥

मैत्रावरुणस्यैन्द्रवायवानन्तर्यं विधत्ते—

" न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदं नो वि वासयतमिति तावब्रूतां वरं वृणावहा एक एवाऽऽवत्पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्रवायवः पूर्वो मैत्रावरुणाद्गृह्यते " [ सं० का० ६ प्र० ४ अ० ८ ] इति।

इदं कालस्वरूपमव्यावृत्तमविभक्तं पूर्वमासीत्। एतावदहरिति दिवा नाऽऽसीत्। एतावती रात्रिरिति नक्तं नाऽऽसीत्। इदमविभक्तं कालस्वरूपं नोऽस्मदर्थं विवासयतं विभज्य स्थापयतम्। आवदावाभ्यामस्मदीयग्रहादित्यर्थः ॥

ननूपांश्वन्तर्यामावपि मैत्रावरुणात्पूर्वमेव गृहीतावित्याशङ्क्याऽऽह—

" प्राणापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ " [ सं० का० ६ प्र० ४ अ० ८ ] इति ॥

प्राणापानयोः सतोः पश्चादितरेन्द्रियस्थितिरिति तयोः पूर्वभावित्वमविवादम्। इतरेषु तु ग्रहेष्वैन्द्रवायव एक एव मैत्रावरुणात्पूर्वः। वरं लब्ध्वाऽहोरात्रयोर्विभागमजनयतामित्याह—

" मित्रोऽहरजनयद्वरुणो रात्रिं ततो वा इदं व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै " [ सं० का० ६ प्र० ४ अ० ८ ] इति।

सूर्योदयमारभ्य तदस्तमयपर्यन्तं कालोऽहरित्येवं मित्रः कल्पयामास। तदूर्ध्वं पुनः सूर्योदयपर्यन्ता रात्रिरित्येतद्वरुणस्य कल्पनम्। तत आरभ्योभयकालस्वरूपं व्यौच्छद्विभक्तमासीत्। व्युष्ट्या अहोरात्रविभागाय ॥

अथ च्छन्दः—

अयं वामित्येषा गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

१ ख. तत ऊर्ध्वं।

( अथ प्रथमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

या वां कशा मधुमत्यश्विना सूनृतावती ।
तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्य-
श्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ( १ ) ॥

( या वामष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहिताया प्रथमाष्टके
चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ प्रथमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

या । वाम् । कशा । मधु—मतीति मधु—मती ।
अश्विना । सूनृतावतीति सूनृता—वती । तया ।
यज्ञम् । मिमिक्षतम् । उपयामगृहीत इत्युपयाम—
गृहीतः । असि । अश्विभ्यामित्यश्वि—भ्याम् । त्वा ।
एषः । ते । योनिः । माध्वीभ्याम् । त्वा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ प्रथमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छ-
तम् । अस्य सोमस्य पीतये । उपयामगृ-

हीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा (१) ॥

(प्रातर्युजावेकान्नविꣳशतिः ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ प्रथमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ।)

---

प्रातर्युजाविति प्रातः—युजौ । वीति । मुच्येथाम् । अश्विनौ । एति । इह । गच्छतम् । अस्य । सोमस्य । पीतये । उपयामगृहीत इत्युपयाम—गृहीतः । असि । अश्विभ्यामित्यश्वि—भ्याम् । त्वा । एषः । ते । योनिः । अश्विभ्यामित्यश्वि—भ्याम् । त्वा (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ प्रथमकाण्डे चतुर्थप्रपाठके षष्ठसप्तमानुवाकौ ।)

---

कल्पः—" आश्विनं गृह्णाति या वां कशेति ग्रहणसादनौ द्रोणकलशादधाराग्रहाः परिप्लवया गृह्यन्ते वचनादन्यतः " इति ।

पाठस्तु—

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा॥, इति ॥

(आश्विनग्रहाभिधानम्)

हेऽश्विनाऽश्विनौ देवौ वां युवयोर्या कशा या वाक्तया यज्ञं मिमिक्षतं सेक्तुमिच्छतं निष्पादयतमित्यर्थः। कशासमानया जिह्वयोत्पन्नत्वाद्वागेवात्र कशा। कीदृशी। मधुमती परुषशब्दरहिता। सूनृतावती प्रियवचनोपेता। मधुना पूर्णा (र्णो) दृतिर्माध्वी। तादृशीभ्यामश्विंमूर्तिभ्यां त्वां सादयामि॥

आश्विनग्रहायान्यो विकल्पितो मन्त्र एवमाम्नायते—

प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छतम्। अस्य सोमस्य पीतये। उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा॥, इति॥

हेऽश्विनौ युवां प्रातर्युजौ प्रातःकाल एवानेन यजमानेन युक्तौ सन्तावितरैर्यजमानैर्विमुच्येथाम्। इह कर्मण्यागच्छतम्। किमर्थम्। अस्य सोमस्य पीतये पानाय। स्पष्टमन्यत्॥

एतान्मन्त्रानुपेक्ष्याऽऽश्विनग्रहणं विधत्ते—

"यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रति धत्तमिति तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेतमाश्विनमगृह्णन्ततो वै तौ यज्ञस्य शिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै" [सं० का० ६ प्र० ४ अ० ९] इति।

यज्ञपुरुषः पुरा कदाचिद्देवानां वस्तु गृहीत्वा देवैः सह योद्धुं सज्यं धनुर्वामहस्ते धृत्वा धनुष एकां कोटिं भूमौ द्वितीयां कोटिं गले प्रतिष्कभ्यातिष्ठत्। तदानीमुपदीकानामभिजन्तुभिर्भूमिष्ठे ज्याभागे भक्षिते सति त्रुटितज्याकस्य धनुष ऊर्ध्वकोटिः स्वयमुद्गच्छन्ती यज्ञस्य शिरोऽपि च्छित्त्वा स्वात्मना सहोर्ध्वमुदगमयत्। सोऽयं वृत्तान्तः प्रवर्ग्यब्राह्मणे समाम्नातः—"तस्य धनुर्विप्रवमाण॰ शिर उदवर्तयत्" इति। तदिदमत्र संगृह्यते—यज्ञस्य शिरोऽच्छिद्यतेति। अत्राप्यग्निष्टोमेऽप्यावयोर्ग्रह एव ग्रहीतव्यः। यद्यप्याश्विनं द्विकपालमाश्विनं धूम्रललाममालभेतेतीष्टिपश्वोरस्त्यावयोर्हविस्तथाऽप्यग्निष्टोमे पूर्वं नास्ति। तत्रापि लेपमार्जनादिना नाऽऽवयोः परितोषः किं तु ग्रहेणैवेत्यभिप्रायः। तस्मादाश्विनग्रहणं यज्ञस्य निष्कृत्यै भवति॥

आश्विनग्रहणस्य स्तोत्रादूर्ध्वकालं विधत्ते—

"तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ भिषजाविति तस्माद्ब्राह्मणेन

---

१ घ. ङ. °श्विपूतिभ्यां। २ ख. त्वां सोमं सा°। ३ ख. घ. °विप्लवमानशि°।

भेषजं न कार्यमपूतो ह्येषोऽमेध्यो यो भिषक्तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन्तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते " [ सं० का० ६ प्र० ४ अ० ९ ] इति ।

छन्दोगानामुत्तराग्रन्थोपक्रमे सूक्तत्रयमुपास्मै गायता नर इत्यादिकमाम्नातं तच्च गायत्रसाम्ना गातव्यम् । तदिदं बहिष्पवमानस्तोत्रम् । यावश्विनौ चिकित्सारूपेण मनुष्यचारित्वेन युक्तत्वादपूतौ तयोः स्तोत्रेण शुद्धत्वात्तत्स्तोत्रादूर्ध्वं तदीयग्रहस्य कालः ॥

विधत्ते—

" तस्मादेवं विदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयते " [ सं० का० ६ प्र० ४ अ० ९ ] इति ।

एवं विदुषा स्तोत्रस्य शुद्धिहेतुत्वं जानतोपसद्योऽनुष्ठेयः ।

तत्प्रकारः सूत्रे दर्शितः—" उदञ्चः प्रह्वा बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्त्यध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः " इत्यादिः ॥

अत्र प्रसङ्गाल्लौकिकचिकित्सायामदृष्टोपकारजनकं किंचिदङ्गं विधत्ते—

"तयोस्त्रेधा भैषज्यं वि न्यदधुरग्नौ तृतीयमप्सु तृतीयं ब्राह्मणे तृतीयं तस्मादुदपात्रमुपनिधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्याद्यावदेव भेषजं तेन करोति समर्धुकमस्य कृतं भवति " [ सं०का० ६ प्र० ४ अ० ९ ] इति ।

अग्न्युदकब्राह्मणेष्वदृष्टद्वारेणोपकारकं यद्भैषज्यं त्रेधा स्थितं तद्देवास्तयोरश्विनोः स्थापितवन्तः । तस्मादश्विनोरनुग्रहाय लौकिको भिषगुदकुम्भं समीपे निधाय ब्राह्मणमुपवेश्याग्निं चोपसमिध्य भैषज्यं कुर्यात् । तथा सति यावदङ्गजातमावश्यकं तेन सर्वेण सह कृतत्वात्समृद्धं भैषज्यं भवति ॥

अत्र द्विदेवत्यानामैन्द्रवायवमैत्रावरुणाश्विनग्रहाणां तत्तत्प्रतिनिग्राह्यपात्रैः सह होमविधिमर्थवादेनोन्नेतुकामः प्रश्नमुत्थापयति—

" ब्रह्मवादिनो वदन्ति कस्मात्सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति " [ सं० का० ६ प्र० ४ अ० ९ ] इति ।

ग्रहणकाले सोमानामेकैकपात्रत्वमुक्तरीत्या द्रष्टव्यम् । होमकाले द्विपात्रत्वं सूत्रे दर्शितम्—"हविर्धानं गच्छन्संप्रेष्यति वायव इन्द्रवायुभ्यामनुब्रूहीति, उपयामगृहीतोऽसि वाक्षसदसीत्यादित्यपात्रेण प्रतिप्रस्थाता द्रोणकलशादैन्द्रवा-

१ ख. 'त्तरग्र' । २ ख. वार्क्षस' ।

यवस्य प्रतिनिग्राह्यं गृहीत्वा सादयत्यैन्द्रवायवमादायाध्वर्युर्द्रोणकलशाच्च परिप्लवया राजानमुभौ निष्क्रम्य दक्षिणतोऽवस्थाय दक्षिणं परिधिसंधिमन्ववहृत्याध्वरो यज्ञोऽयमस्तु देवा इति परिप्लवयाऽऽघारमाघारयत्याश्राव्य प्रत्याश्राविते संप्रेष्यति वायव इन्द्रवायुभ्यां प्रेष्येति वषट्कृते[1] जुहुत एवमुत्तराभ्यां ग्रहाभ्यां प्रचरतः " इति ॥

प्रश्नस्योत्तरं दर्शयति—

"यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद्द्वौद्वौ बहिष्टात्प्राणाः " [ सं० का० ६ प्र० ४ अ० ९ ] इति ।

चक्षुरादिप्राणानामन्तरेकात्मकत्वाद्बहिर्द्वारभेदेन द्वित्वात्तत्साम्यायैकपात्रत्वं द्विपात्रत्वं च कुर्यादित्यर्थः ॥

अत्र सवनीयपुरोडाशानां स्विष्टकृति हुते सति द्विदेवत्यग्रहप्रचारो विहितः । पुरोडाशसंबन्धिन इडोपाह्वानस्यापि स्विष्टकृदनन्तरभावी चोदकप्राप्तः कालस्तं बाधित्वा द्विदेवत्यशेषभक्षणादूर्ध्वमुपाह्वानस्योत्कर्षं विधत्ते—

" प्राणा वा एते यद्द्विदेवत्याः पशव इडा यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद्द्विदेवत्यान्भक्षयित्वेडामुप ह्वयते प्राणानेवाऽऽत्मन्धित्वा पशूनुप ह्वयते " [सं० का० ६ प्र० ४ अ० ९] इति ।

द्विदेवत्यशेषभक्षणेभ्यः प्रागिडायाः पशुरूपाया उपाह्वाने प्राणानां व्यवहितत्वाद्यजमानो म्रियेत, पश्चादाह्वाने तु नायं दोषोऽस्ति ॥

भक्षणे विशेषं विधत्ते—

" वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात्पुरस्ताद्वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात्पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात्सर्वतः श्रोत्रेण शृणोति " [ सं० का० ६ प्र० ४ अ० ९ ] इति ।

पुरस्तादग्रतो यथागृहीतमेवेत्यर्थः । सर्वतः परिहारं शिरः प्रदक्षिणीकृत्येत्यर्थः ॥

पात्राणां सादने पुरोडाशशकलादिसहितत्वं विधत्ते—

" प्राणा वा एते यद्द्विदेवत्या अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञ[2]

---

१ ख. °ते जुहोति पुनर्वषट्कृते जु° । २ ख. प्राणैर्व्यर्व° ।

रक्षाꣳस्यत्र चरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय " [ सं० का० ६ प्र० ४ अ० ९ ] इति।

शकलादियोगः सूत्रे दर्शितः—" पुरोडाशशकलमैन्द्रवायवस्य पात्रेऽवदधाति पयस्यां मैत्रावरुणस्य धाना आश्विनस्य " इति। अन्तरतः प्राणानामरिक्तत्वं नामाऽऽर्द्रस्थानोपेतत्वम्। पात्राणामरिक्तत्वेन यज्ञे विस्मृतमप्यङ्गं क्रियमाणमेव संतिष्ठत इति रक्षसां संचारद्वारं नास्ति॥

सादनस्थानं विधत्ते—

" दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयति वाच्येव वाचं दधाति " [ सं० का० ६ प्र० ४ अ० ९ ] इति।

उत्तरस्य चक्रस्य मार्गे सादयेत्। वर्त्मरूपायां वाच्येव ग्रहरूपां वाचं स्थापयति॥

सादितानां ग्रहाणामवस्थानावधिं विधत्ते—

" आ तृतीयसवनात्परि शेरे यज्ञस्य संतत्यै " [ सं० का० ६ प्र० ४ अ० ९ ] इति।

शेरे वसन्तीत्यर्थः॥

अथ मीमांसा।

पञ्चमाध्यायस्य चतुर्थपादे चिन्तितम्—

" आश्विनो दशमः पाको यवाग्वा ऐच्छिकः क्रमः।
नियतो वाऽग्रिमः पाठश्रुत्यर्थानां समत्वतः॥
पाठात्क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः।
क्लृप्तिर्न शक्तिमुल्लङ्घ्य श्रुत्यर्थौ प्रबलौ ततः " इति॥

ज्योतिष्टोम ऐन्द्रवायवादिग्रहेष्वाश्विनग्रहस्तृतीयस्थाने पठितः। तस्य च दशमस्थानत्वं वाचकेनैव शब्देनाऽऽम्नायते—"आश्विनो दशमो गृह्यते" इति। तत्र क्रमबोधकौ श्रुतिपाठौ समबलौ। तथाऽग्निहोत्रहोमादूर्ध्वं यवागूपाकः पठितः। स चार्थवशात्पूर्वं प्राप्तः। तत्रार्थपाठौ समबलौ। तस्मादुभयत्रैच्छिकः क्रम इति प्राप्ते ब्रूमः—पाठो हि न क्रमस्याभिधायकः, किं त्वन्यथाऽनुपपत्त्या क्रमं कल्पयति। दशम इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते। ततः पाठादपि श्रुतिः प्रबला। अतः पाठः क्रमं कल्पयन्वस्तुसामर्थ्यमनुसृत्यैव कल्पयति। असामर्थ्यं च यवाग्वाः पूर्वमग्निहोत्रं निष्पत्तुं, द्रव्यमन्तरेण होमासंभवात्।

१ ख. असमर्थ।

( शुक्रामन्थिग्रहयोरभिधानम् )

तस्मात्पाठेन वस्तुसामर्थ्यलक्षणोऽर्थ उपजीव्य इत्यर्थस्य पाठात्प्राबल्यम्। श्रुत्यर्थौ पाठं बाधित्वा क्रमं नियच्छतः ॥

या वां कशा प्रातर्युजावित्येते गायत्र्यौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके षष्ठसप्तमानुवाकौ ॥ ६ ॥ ७ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाꣳ संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि ( १ ) ॥

( अयं वेनः पञ्चविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

अयम् । वेनः । चोदयत् । पृश्निगर्भा इति पृश्नि—गर्भाः । ज्योतिर्जरायुरिति ज्योतिः—जरायुः । रजसः । विमान इति वि—माने । इमम् । अपाम् । संगम इति सं—गमे । सूर्यस्य । शिशुम् । न । विप्राः । मतिभिरिति मति—भिः । रिहन्ति । उपयामगृहीत

इत्युंपयाम—गृहीतः । असि । शण्डाय । त्वा । एषः । ते । योनिः । वीरताम् । पाहि ( ८ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ सुवर्विदं प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ( १ ) ॥

( तꣳ षड्विꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

तम् । प्रत्नथा । पूर्वथा । विश्वथा । इमथा । ज्येष्ठतातिमिति ज्येष्ठ—तातिम् । बर्हिषदमिति बर्हि—सदम् । सुवर्विदमिति सुवः—विदम् । प्रतीचीनम् । वृजनम् । दोहसे । गिरा । आशुम् । जयन्तम् । अन्विति । यासु । वर्धसे । उपयामगृहीत इत्युंपयाम—गृहीतः । असि । मर्काय । त्वा ।

( शुक्रामन्थिग्रहयोरभिधानम् )

ए॒षः । ते॒ । योनिः॑ । प्र॒जा इति॑ प्र–जाः । पा॒हि॒ ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टमनवमानुवाकौ । )

---

कल्पः—" अयं वेनश्चोदयदिति शुक्रं गृहीत्वा हिरण्येन श्रीत्वैष ते योनिर्वीरतां पाहीति सादयति " इति ।

पाठस्तु—

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाꣳ संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि ॥ , इति ॥

अयमितीन्द्रो निर्दिश्यते। वेनः कान्तोऽभीष्टः। विन कान्तावित्यस्माद्धातोरुत्पन्नत्वात्। पृश्निरादित्यस्तस्य गर्भभूता आपः। तथा चान्यत्र प्रश्नोत्तराभ्यामयमर्थः श्रूयते—"केमा आपो निविशन्ते। यदितो यान्ति संप्रति।" इति प्रश्नः। " आपः सूर्ये समाहिताः। अभ्राण्यपः प्रपद्यन्ते। " इत्युत्तरम् । अयं वेनः पृश्निगर्भाश्चोदयत् । अपो वर्षतीत्यर्थः । कीदृशोऽयम् । ज्योतिर्जरायुः । विद्युल्लक्षणं तेजो जरायुवद्वेष्टनं यस्यासौ ज्योतिर्जरायुः। कुत्रायं वर्षति । रजसो विमाने। धूलेर्विशेषेण निर्माणं यस्मिञ्शुष्के भूप्रदेशे तत्र वर्षति । अपां सूर्यगर्भीभावः कथं संपन्न इति चेत्। अत्रोच्यते—विप्रा ऋत्विजः सूर्यस्यापां च संगमे निमित्तभूते सतीममिन्द्रं शिशुं स्तनंधयं शिशुमिव लालयन्ते( न्तो ) मतिभिर्मन्त्रसहिताभिराहुतिभी रिहन्ति यजन्तीत्यर्थः । आहुतिदेवताभिरिमा आपो नीयन्ते। एतदेवाभिप्रेत्य श्रूयते—" भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः " इति । हे शुक्रग्रह दारुपात्रेण गृहीतोऽसि । शुक्रपुत्राय शण्डाय त्वां गृह्णामि। एष खरैकदेशस्ते योनिः स्थानम् । तादृशस्त्वं यजमानस्य वीरतां कर्मशूरत्वं पालय ॥

कल्पः—तं प्रत्नथेति मन्थिनं गृहीत्वा सक्तुभिः श्रीणाति एष ते योनिः प्रजाः पाहीति सादयति " इति ।

पाठस्तु—

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ सुवर्विदं प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ॥ , इति ॥

इन्द्रायाजुहवुरिति ब्राह्मणादयं मन्त्र ऐन्द्रः । तमिन्द्रं स्तुम इति शेषः । प्रत्नथेत्यादौ थाप्रत्यय उपमार्थः । प्रत्नाः पुरातना भृग्वादयो यथा त्वामस्तुवंस्तथा वयमपि त्वां स्तुमः । पूर्वथा पित्रादय इव । विश्वथाऽतीताः सर्वे यजमाना इव । इमथा वर्तमाना इमे यजमाना इव । कीदृशमिन्द्रम् । ज्येष्ठतातिम् । स्वार्थे तातिप्रत्ययः । बर्हिषदं यागे संनिहितत्वेन तिष्ठन्तम् । सुवर्विदं यजमानाय दातव्यत्वेन स्वर्गं वेत्तीति सुवर्वित्तम् । हे इन्द्र यस्त्वं प्रतीचीनं प्रतिगमनमस्मत्प्रतिकूलं वृजनं वर्जनीयमालस्याश्रद्धादि दोहसे रिक्ती करोषि विनाशयसि तादृशं त्वां स्तुमः । क्व पुनः स्तुमः । यासु क्रियासु त्वमाशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तरादतिशयेनोपेतं यजमानमनु सोमपानेन स्तुत्या च वर्धसे तासु क्रियासु तमिन्द्रं स्तुमः । हे मन्थिग्रह त्वमुपयामगृहीतोऽसि शुक्रपुत्राय मर्कनामकाय त्वां गृह्णामि । एष खरप्रदेशस्तव स्थानम् । त्वं यजमानस्य प्रजाः पालय ॥

मन्त्रानुपेक्ष्य ग्रहौ विधत्ते—

" बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तोऽसुरास्तेऽन्योऽन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नावत्रापि गृह्येतामिति ताभ्यामेतौ शुक्रामन्थिनावगृह्णन्ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति " [ सं० का० ६ प्र० ४ अ० १० ] इति ।

ब्रह्मण्वन्तः पुरोहितानुष्ठितमन्त्रसामर्थ्योपेताः । उपामन्त्रयन्त रहस्युपच्छन्दितवन्तः । यद्यप्यन्यत्र शण्डामर्कयोरावयोर्यज्ञभागो नास्ति तथाऽप्यत्राप्यग्निष्टोमे सोऽस्तु । तत्रापि ग्रहावेव न तु लेपादिः । अत्र गृह्येतामित्येताव-

( शुक्रामन्थिग्रहयोरभिधानम् )

देव शण्डामर्काभ्यां वृतं न तु हूयेतामिति । ततो देवा ग्रहणमात्रेण स्वकार्यं साधितवन्तः ॥

अथार्थवादेन ग्रहयोरधस्ताल्लग्नानां पांसूनामपध्वंसनं विधातुं विधिमुन्नयति—

"तौ देवा अपनुद्याऽऽत्मन इन्द्रायाजुहवुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्याद्यमेव द्वेष्टि तेनैनौ सहाप नुदते" [ सं० का० ६ प्र० ४ अ० १० ] इति ।

देवाः स्वकार्यसिद्धेरूर्ध्वं तौ शण्डामर्कावपसार्य स्वकीयायेन्द्राय तौ शुक्रामन्थिग्रहावजुहवुः । तस्माद्ग्रहयोरधोलग्नां धूलिमपध्वंसयन्नन्यत्र समाम्नातमपनुत्ताविति मन्त्रं ब्रूयात् । अमुनेत्यत्र द्वेष्यस्य द्वेष्टुश्च नाम ध्यायेत् । अत्र सूत्रम्—"तौ प्रोक्षिताभ्यां शकलाभ्यामपिधायाप्रोक्षिताभ्यामधस्तात्पांसूनपध्वंसयतोऽपनुत्तौ शण्डामर्कौ सहामुनेत्यपनुत्तः शण्ड इति वाऽध्वर्युर्द्वेष्यं मनसा ध्यायन्नपनुत्तो मर्क इति[1] तं प्रतिप्रस्थाता" इति ॥

अन्यत्राऽऽम्नातेन मन्त्रेण ग्रहहोमस्य विधिमर्थवादेनोन्नयति—

"स प्रथमः संकृतिर्विश्वकर्मेत्येवैनावात्मन इन्द्रायाजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचरत्" [ सं० का० ६ प्र० ४ अ० १० ] इति ।

मन्त्रपाठस्तु—"स प्रथमः संकृतिर्विश्वकर्मा । स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वान् । तस्मा इन्द्राय सुतमा जुहोमि" इति ।

स इन्द्रः प्रथमो देवानां मुख्यः सर्वाधिपतित्वात् । समीचीना कृतिर्निर्माणं यस्यासौ संकृतिः । तादृशो विश्वकर्मनामको देवोऽपि स इन्द्र एव । मित्रो वरुणोऽग्निः स एव । चिकित्वानभिज्ञो बृहस्पतिरपि स एव । तादृशायेन्द्रायाभिषुतं सोमं सर्वतो जुहोमि । यस्मादिन्द्र एतानि विश्वकर्मत्वादीनि रूपाणि करिक्रदत्यर्थं कुर्वञ्जगदचरत्तस्मात्तत्प्रतिपादकेनानेनैव मन्त्रेण होमो युज्यते ॥

होमात्पुरा ग्रहावादायाऽऽच्छाद्याध्वर्युप्रतिप्रस्थातारौ प्राङ्मुखौ निर्गच्छेतामिति विधत्ते—

"असौ वा आदित्यः शुक्रश्चन्द्रमा मन्थ्यपिगृह्य प्राञ्चौ निष्क्रामतस्तस्मात्प्राञ्चौ यन्तौ न पश्यन्ति" [ सं० का० ६ प्र० ४ अ० १० ] इति ।

पश्चिमदिश्यस्तं गत्वा पुनरुदयाय प्राङ्मुखतया गच्छन्तौ सूर्याचन्द्रमसौ द्रष्टुं केऽपि न शक्नुवन्ति । तस्माद्ग्रहयोराच्छादनं युक्तम् ॥

---

1 ख. °ति प्र° ।

होमाय प्रत्यङ्मुखत्वं विधत्ते—

" प्रत्यञ्चावावृत्य जुहुतस्तस्मात्प्रत्यञ्चौ यन्तौ पश्यन्ति " [ सं० का० ६ प्र० ४ अ० १० ] इति ।

उदयादूर्ध्वं प्रत्यङ्मुखतया गच्छन्तौ सूर्याचन्द्रमसौ सर्वे पश्यन्ति । अतो ग्रहयोराच्छादनमपनीय प्रत्यङ्मुखत्वेनाऽऽवृत्तिर्होमार्था युक्ता ॥

उत्तरवेदेरभितः परिक्रमणं विधत्ते—

" चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य जुहुतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्वतः परि क्रामतो रक्षसामपहत्यै " [ सं०का० ६ प्र० ४ अ० १० ] इति ।

अत्र सूत्रम्—" उत्तरवेदिं परिक्रामतः सुवीराः प्रजाः प्रजनयन्परीहि । शुक्रः शुक्रशोचिषेति दक्षिणेनाध्वर्युः प्रतिपद्यते सुप्रजाः प्रजाः प्रजनयन्परीहि । मन्थी मन्थिशोचिषेत्युत्तरेण प्रतिप्रस्थाता " इति । तदेतत्सर्वतः परिक्रमणं रक्षोवधाय संपद्यते ॥

अत्र चमसहोमे प्राङ्मुखत्वं ग्रहहोमे प्रत्यङ्मुखत्वं च विधत्ते—

" देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्र णुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते " [ सं० का० ६ प्र० ४ अ० १० ] इति ।

अत्र सूत्रम्—" पुरस्तात्प्रत्यञ्चावध्वर्यू जुहुतः पश्चात्प्राञ्चश्चमसैश्चमसाध्वर्यवो जुह्वति " इति । वाक्यं तु धिष्ण्यप्रस्तावेऽपि गतम् ॥

सूत्रकारेणोदाहृतौ परिक्रमणमन्त्रौ प्रदेशान्तर आम्नाताविह व्याचष्टे—

" शुक्रामन्थिनौ वा अनु प्रजाः प्र जायन्तेऽत्त्रीश्चाऽऽद्याश्च सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषा सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेत्याहैता वै सुवीरा या अत्त्रीरेताः सुप्रजा या आद्याः" [सं० का० ६ प्र० ४ अ० १० ] इति ।

अत्त्रीर्भोक्त्र्य उत्तमजातयो ब्राह्मणादय आद्या भोग्या नीचजातयो भृत्यकर्मकरादयः । मन्त्रार्थस्तु—शोभना वीरा उत्तमा यासां ताः सुवीराः । शोभनाः सेवाकुशलाः प्रजाः पुत्रादयो यासां ताः सुप्रजाः । हे शुक्रग्रह त्वं

१ क. घ. ङ. अतः प्रत्यङ्मुखतया प्र॰ ।

( शुक्रामन्थिग्रहयोरभिधानम् )

यजमानस्य शोभनभोक्तृयुक्ताः प्रजा उत्पादयन्नुत्तरवेदेर्दक्षिणतः परीहि। शुक्रग्रहस्त्वं शुक्रदेवतासंबन्धिना तेजसा रक्षसामपघातं कुर्विति शेषः। हे मन्थिग्रह त्वं यजमानस्य शोभनसेवकरूपाः प्रजा उत्पादयन्नुत्तरवेदेरुत्तरतः परीहि। मन्थिग्रहस्त्वं मन्थिदेवतासंबन्धिना तेजसा रक्षांस्यपजहि। एता वै सुवीरा इत्यादिकं मन्त्रव्याख्यानम् ॥

वेदनं प्रशंसति—

" य एवं वेदात्त्यस्य प्रजा जायते नाऽऽद्या " [ सं० का० ६ प्र० ४ अ० १० ] इति।

मन्थिपात्रस्य विकङ्कतवृक्षत्वं सक्तुमेलनं च विधत्ते—

" प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तद्विकङ्कतं प्राविशत्तद्विकङ्कते नारमत तद्यवं प्राविशत्तद्यवेऽरमत तद्यवस्य यवत्वं यद्वैकङ्कतं मन्थिपात्रं भवति सक्तुभिः श्रीणाति प्रजापतेरेव तच्चक्षुः सं भरति " [ सं०का०६ प्र०४ अ०१० ] इति।

सक्तवो यवपिष्टानि ॥

आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीति वचनादितरपात्रवन्मन्थिपात्रस्यापि सदःप्रवेशः प्राप्नोति तन्निषेधं प्रश्नोत्तराभ्यामुन्नयति—

" ब्रह्मवादिनो वदन्ति कस्मात्सत्यान्मन्थिपात्रꣳ सदो नाश्नुत इत्यार्तपात्रꣳ हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्यादार्तिमार्च्छेत्तस्मान्नाश्नुते " [ सं० का० ६ प्र० ४ अ० १० ] इति।

आर्तपात्रं रोगयुक्तचक्षुःस्वरूपमिदं पात्रम् ॥

अथ मीमांसा।

दशमाध्यायस्य पञ्चमे पादे चिन्तितम्—

" स्वस्थाने प्रतिकर्षो वा शुक्रादेः पूर्ववद्भवेत्।
स्थाने मैवं तदग्रत्वाप्राप्तेः स प्रतिकृष्यताम् " इति ॥

ज्योतिष्टोमे श्रूयते—"शुक्राग्रान्गृह्णीयादभिचरतो मन्थ्यग्रान्गृह्णीयादभिचर्यमाणस्य " इत्यादि। ऐन्द्रवायवन्यायेन शुक्रादीनां स्वस्थाने ग्रहणमिति प्राप्ते ब्रूमः—ऐन्द्रवायवस्य धाराग्रहाग्रत्वं स्वस्थाने पाठादेव प्राप्तम्। शुक्रादीनां तु नेति वैषम्यम्। तथा सति विधीयमानमग्रत्वं पाठक्रमबाधमन्तरेणानुपपन्नत्वात्प्रतिकृष्यते।

---

१ क. घ. ङ. 'वृक्षं स' :

तत्रैवान्यच्चिन्तितम्—

" स सर्वादावैन्द्रवायवादौ वाऽत्राविशेषतः ।
सर्वादावाश्रयादैन्द्रवायवादौ धृतेरपि " इति ॥

स पूर्वोक्तः प्रतिकर्षः सर्वेषामुपांश्वादीनां ग्रहाणामादौ युक्तः । कुतः । विशेषाश्रवणात् । सामान्यतः श्रुतमग्रत्वमनपेक्षितत्वात्सर्वादौ मुख्यम् । नैतदेवम् । प्राकृतान्धाराग्रहानाश्रित्य फलाय शुक्राग्रत्वविधानात् । किं च " धारयेयुस्तं यं कामाय गृह्णीयुरैन्द्रवायवं गृहीत्वा सादयेत् " इति श्रूयते । तत्र काम्यस्य शुक्रादेर्धारणाद्वाऽनन्तरमैन्द्रवायवग्रहणं विवक्षितार्थे लिङ्गम् । तस्मादैन्द्रवायवादौ प्रतिकर्षः ।

तत्रैवान्यच्चिन्तितम्—

" नापकर्षोऽपकृ[१]ष्टा वा सादनस्याश्रुतत्वतः ।
न मैवं ग्रहशेषत्वात्तच्चाशक्ते[३]र्ग्रहान्तरे " इति ॥

सर्वत्र ग्रहो गृहीत्वा साद्यते । तथा सति यत्र काम्यस्य ग्रहस्यापकर्षस्तत्र सादनस्यापकर्षो न शङ्कनीयः[४] । अश्रुतत्वात् । शुक्राग्रानित्यत्र(ग्र)शब्देन यथा ग्रहस्यापकर्षः श्रूयते न तथा सादनापकर्षप्रतिपादकः कश्चिच्छब्दोऽस्ति । तस्मान्नापकर्षः । नैतद्युक्तम् । सादनस्य ग्रहशेषत्वात्[५] । तच्च शेषत्वमशक्तेरवगम्यते । न हि पूर्वं ग्रहमसादयित्वा ग्रहान्तरं ग्रहीतुं शक्यम् । अतोऽत्र ग्रहाणामपकर्षे तच्छेषभूतं सादनमप्यपकृष्यते ॥

अथ च्छन्दः—

अयं वेन इति त्रिष्टुप् । तं प्रत्नथेति जगती ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टमनवमानुवाकौ ॥ ८ ॥ ९ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

## ये दे॑वा दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थाप्सुषदो॑ महि॒नैका॑दश॒स्थ ते दे॑वा

---

१ ख. °म् । प्रकृ° । २ क. ख. °क्राद्यग्र° । ३ घ. ङ. °क्ते ग्रहा° । ४ ख. °यः । कुतः । अ° । ५ क. °षत्वम° ।

( आग्रयणग्रहाभिधानम् )

यज्ञमिमं जुषध्वमुपयामगृंहीतोऽस्याग्रयणोऽसि
स्वांग्रयणो जिन्वं यज्ञं जिन्वं यज्ञपंतिमभि
सवंना पाहि विष्णुस्त्वां पांतु विशं त्वं पांही-
न्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः (१) ॥

( ये देवास्त्रिचत्वारिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

ये । देवाः । दिवि । एकादश । स्थ । पृथि-
व्याम् । अधीति । एकादश । स्थ । अप्सुषद इत्यं-
प्सु—सदः । महिना । एकादश । स्थ । ते । देवाः ।
यज्ञम् । इमम् । जुषध्वम् । उपयामगृंहीत इत्युंप-
याम—गृहीतः । असि । आग्रयणः । असि । स्वाग्र-
यण इति सु—आग्रयणः । जिन्वं । यज्ञम् । जिन्वं ।
यज्ञपंतिमिति यज्ञ—पतिम् । अभीति । सवंना ।
पाहि । विष्णुः । त्वाम् । पातु । विशंम् । त्वम् ।
पाहि । इन्द्रियेणं । एषः । ते । योनिः । विश्वेभ्यः ।
त्वा । देवेभ्यः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ प्रथमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

त्रिꣳशत्त्रयश्च गणिनो रुजन्तो दिवꣳ रुद्राः पृथिवीं च सचन्ते एकादशासो अप्सुषदः सुतꣳ सोमं जुषन्ताꣳ सवनाय विश्वे । उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ( १ ) ॥

( त्रिꣳशद्विचत्वारिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

त्रिꣳशत् । त्रयः । च । गणिनः । रुजन्तः । दिवम् । रुद्राः । पृथिवीम् । च । सचन्ते । एकादशासः । अप्सुषद इत्यप्सु—सदः । सुतम् । सोमम् । जुषन्ताम् । सवनाय । विश्वे । उपयामगृहीत इत्युपयाम—गृहीतः । असि । आग्रयणः । असि । स्वाग्रयण इति सु—आग्रयणः । जिन्व । यज्ञम् । जिन्व । यज्ञपतिमिति यज्ञ—पतिम् । अभीति । सवना ।

त्वाम् । पातु । विशम् । त्वम् । पाहि । इन्द्रियेण । एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमकाण्डे चतुर्थप्रपाठके दशमैकादशानुवाकौ । )

---

कल्पः—" ये देवा दिवीत्युपरिष्टादुपयामया पुरस्तादुपयामेन वा यजुषा द्वाभ्यां धाराभ्यां स्थाल्यामाग्रयणं[1] गृह्णाति एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा " इति ।

पाठस्तु—

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वमुपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥, इति ॥

अप्सुषदोऽबुपलक्षितेऽन्तरिक्षे सीदन्तीत्यप्सुषदः । महिना स्वमहिम्ना तत्र सीदन्ति । हे देवा ये यूयं त्रिषु लोकेषु प्रत्येकमेकादशावस्थितास्ते सर्वे यज्ञमिमं सेवध्वम् । हे सोम त्वमुपयामेन स्थालीरूपेण पार्थिवपात्रेण गृहीतोऽसि । आग्रयणनामाऽसि । सुष्ठु अग्रं श्रैष्ठ्यं तस्य प्रापकः स्वाग्रयणः । तादृशस्त्वं यज्ञं प्रीणय यजमानं च प्रीणय । सवनान्याभिमुख्येन पालय । विष्णुना रक्षितस्त्वं यजमानस्य प्रजामिन्द्रियेण सामर्थ्यप्रदानेन पालय । एष स्थरं[2]स्ते तत्र स्थानं, विश्वेभ्यो देवेभ्यस्त्वां सादयामि । ये देवा आग्रयणोऽ-

---

१ ख. 'यणग्रहं गृ' । २ ख. 'रप्रदेशस्तत्र ।

· तयोर्मन्त्रयोर्देवस[illegible]म । [illegible]त्वा [illegible] ग्रहीतुमित्याह—

"देवा दिव्येकादश स्थ । [illegible]वतावै देवतास्ताभ्य एवैनं सर्वाभ्यो गृह्णाति " [ सं० का० ६ प्र० ४ अ० ११ ] इति ॥

सादनमन्त्रे विश्वेभ्य इत्यभिधानं युक्तमित्याह—

" एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष देवतया " [ सं० का० ६ प्र० ४ अ० ११ ] इति ॥

वाग्विसर्गं विधत्ते—

" वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत साऽमन्यत वागन्तर्यन्ति वै मेति साऽऽग्रयणं प्रत्यागच्छत्तदाग्रयणस्याऽऽग्रयणत्वम् । तस्मादाग्रयणे वाग्विसृज्यते यत्तूष्णीं पूर्वे ग्रहा गृह्यन्ते " [ सं० का० ६ प्र० ४ अ० ११ ] इति ।

केनापि निमित्तेन वाग्देवता यज्ञार्थं स्वकीयं रूपमप्रकाशयन्ती देवेभ्योऽपक्रम्य देवैर्विगृहीतैस्तूष्णीमेव गृहीतेषु सा वागित्थममन्यत—ते देवा वरदानादिना मां न समादधते किं तु मयि निरपेक्षा एव स्वकार्यं कुर्वन्तो मामन्तर्यन्ति परित्यजन्त्येवेति । ततो देवैरनाहूता सा वागाग्रयणं प्रति स्वयमागच्छत् । तस्मादग्रमभिमुखमेति गच्छति वागित्यग्रायणं (यस्य सोऽग्रायणः ।) तत्र दीर्घव्यत्ययादाग्रयणं (ण)नाम संपन्नम् । यद्यस्मात्पूर्वे तूष्णीं गृहीता वाक्चेदानीमागता तस्माद्वाचोऽस्मिन्काले समागमादाग्रयणे गृहीते वाचं विसृजेत्तु पूर्वग्रहवदुत्तरग्रहांस्तूष्णीं गृह्णीयात् । ननु पूर्वग्रहेष्वपि प्रतिग्रहं मन्त्राणामाम्नातत्वात्कथं तूष्णीं ग्रहणम् । एवं तर्हि तूष्णींशब्दवाग्विसर्गशब्दाभ्यामुपांशूच्चौ ध्वनी विवक्ष्येयाताम् । अत एवोपानुवाक्यकाण्डे समाम्नायते— " यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपांशु गृह्णीयाद्यानूर्ध्वांस्तानुपब्दिमतः " इति ॥

ध्वनिद्वयं लौकिकदृष्टान्तेन विशदयति—

" यथा त्सारीयति म आख इयति नाप रात्स्यामीत्युपावसृजत्येवमेव तदध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं वि सृजते " [ सं० का० ६ प्र० ४ अ० ११ ] इति ।

---

१ ख. घ. ङ. °खमयति(ते) ।

ते । उक्थायुव इत्युंक्थ—युवे । यत् । ते । इन्द्र ।
बृहत् । वयः । तस्मै । त्वा । विष्णवे । त्वा । एषः ।
ते । योनिः । इन्द्राय । त्वा । उक्थायुव इत्युं-
क्थ—युवे ॥ (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ प्रथमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः)

---

कल्पः—"स्थाल्योक्थ्यं गृह्णाति उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत इति प्रसादनौ" इति ।

पाठस्तु—

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते
वयस्वत उक्थायुवे यत्त इन्द्र बृहद्व-
यस्तस्मै त्वा विष्णवे त्वैष ते योनि-
रिन्द्राय त्वोक्थायुवे ॥ इति ॥

हे सोमोपयामेन स्थाल्या गृहीतोऽसि, इन्द्राय त्वां गृह्णामि । कीदृशाय । बृहद्वते बृहत्सामप्रियाय । तत्सामयोन्यामृचि त्व०। वृत्रेष्विन्द्र सत्पतिमिति यदि श्रुतम् । वयस्वते वयोऽन्नं सोमरूपं तद्वते तत्प्रियाय । उक्थं शस्त्रं तदात्मन इच्छतीत्युक्थायुस्तस्मै ते । इन्द्र यत्ते तव बृहद्वयो महदन्नं सोमरूपं तस्मै तत्पालनार्थं त्वां गृह्णामि इति शेषः । हे सोम विष्णवे त्वां गृह्णामि । एष खर- स्थानम् । उक्थशस्त्रप्रियायेन्द्राय त्वां खरे सादयामि ॥

अर्थवादव्याख्यानायाऽऽदावुक्थ्यग्रहणं विधत्ते—

"इन्द्रो वृत्राय वज्रमुदयच्छत्स वृत्रो वज्रादुद्यतादबिभेत्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यं प्रायच्छत्तस्मै द्वितीयमुदयच्छत्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत्ते प्र दास्या- मीति तस्मा उक्थ्यमेव प्रायच्छत्तस्मै तृतीयमुदयच्छत्तं विष्णुरन्वतिष्ठत जहीति

व[illegible]तीत्येष [illegible] यन्निये वत्सो यदाग्रयणस्य[illegible] वर्[illegible]णि सवनानि [illegible]स्माद्वत्समपाकृतं गौरभि नि वर्तते [illegible] काo ६ प्रo ४ अo [illegible] इति ।

अल्पाक्षर[illegible]कनिष्ठा । प्रातःसवन[illegible]बहिष्पवमानसूक्त[illegible] गाय[illegible]त्यादीनां छन्दो गायत्री । माध्यंदिनसवने [illegible]नपवमानसू[illegible]स्योवा जातमन्धस इत्यस्य गायत्री । [illegible]स्याऽऽर्भवपवमानसूक्तस्य स्वादि[illegible]येत्यस्य गायत्री । एव[illegible]हृत[illegible]या गौरपाकृतं स्वीयं वत्समभिलक्ष्य तृणादि[illegible]पि परित्यज्य निवर्तते [illegible] गायत्री स्ववत्सम्[illegible]ग्रयणमभिलक्ष्य पुनः पुनर्निवर्त्य(वृत्य) सवनानि निर्वहति । ये देवास्त्रिश्शावेत्येते [illegible] ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके दशमैकादशावनुवाकौ ॥ १० ॥ ११ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

---

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे ( १ ) ॥

( उपयामगृहीतो द्वाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ।

---

उपयामगृहीत इत्युपयाम—गृहीतः । असि । इन्द्राय । त्वा । बृहद्वत इति बृहत्—वते । वय-

त्र सूत्रम्—" उपयामगृहीतोऽसि मित्रावरुणा... ...ो देवायुवमुक्थ्येभ्य उक्थायुवमित्युक्थ्यात्तृतीयो ... ...णाभ्यां त्वेति सादयित्वा पुनर्हविरसीति स्थालीम... एवं विहिता... ...वुत्तरौ पर्यायौ ताभ्यां प्रतिप्रस्थाता चरति " इति ॥

उक्थ्यहोमचमसहोमान्विधत्ते—

" चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यस्तस्मादुक्थ्यꣳ हुतꣳ ... अन्वायन्ति तस्मादात्मा चक्षुरन्वेति तस्मादेकं यन्तं बहवोऽनुयन्ति तस्मादेको बहूनां भद्रो भवति तस्मादेको बह्वीर्जाया विन्दते यदि कामयेताध्वर्युरात्मानं यज्ञयशसेना-र्पयेयमित्यन्तराऽऽहवनीयं च हविर्धानं च तिष्ठन्नव नयेदात्मानमेव यज्ञयश-सेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नव नयेद्यजमानमेव यज्ञयशसेनार्पयति " [ सं० का० ६ प्र० ... अ० १ ] इति ।

चक्षुःस्थानीय उक्थ्ये हुते सत्यनन्तरमेवेतरस्थानीयाश्चमसा होतव्याः । आत्मा सर्वावयवसंघातरूपः पुरुषः । अवयवेषु मुख्यस्य चक्षुषो दृष्टि पुरतो मार्गे प्रसरति । ततः संघातरूप आत्माऽनुगच्छति । एकं मुख्यं परिगच्छन्तं बहवो भृत्या अनुगच्छन्ति । एको मुख्यश्चक्षुरिव ज्ञापक आचार्यो बहूनां शिष्याणां मध्ये भद्रः पूज्यो भवति । एको मुख्यः स्वतन्त्रः पुरुषः परतन्त्रा बह्वीर्जाया लभते । एभिर्दृष्टान्तैश्चमसानामुक्थ्यानन्तरं होमो युक्तः ।

अत्र सूत्रम्—" ग्रहमध्वर्युरादत्ते चमसांश्चमसाध्वर्यव आश्राव्य प्रत्याश्राविते संप्रेष्यति उक्थशा यज सोमानामिति वषट्कृतानुवषट्कृते जुह्वति ... न्हरन्ति " इति ॥

मुख्यचमसे संपातस्यावनयनं विधत्ते—

" यदि कामयेत सदस्यान्यज्ञयशसेनार्पयेयमिति सद आलभ्याव ... त्सदस्यानेव यज्ञयशसेनार्पयति " [ सं० का० ६ प्र० ५ अ० १ ] इति ।

यज्ञयशसं यज्ञफलम् । आलभ्य प्रविश्य । अत्र सूत्रम्—" देवे... देवायुवं पृणज्मि यज्ञस्याऽऽयुष इति मुख्ये संपात नयति यदि काम... र्युरात्मानं यज्ञयशसेनार्पयेयमित्युक्तम् " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-दीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके

द्वादशोऽनुवाकः ॥ १२ ॥



---

१ क. ख. °मुक्थ्ये... °।